6.1

श्रीभट्टवादीन्द्रप्रणीतं

# महाविद्याविडम्बनम्

## संस्कृत-हिन्दी-व्याख्योपेतम्

कुलपतेः प्रो. वेम्पटिकुटुम्बशास्त्रिणः प्रस्तावनया विभूषितम्

सम्पादको हिन्दीव्याख्याकारश्च
प्रो. रामकिशोरत्रिपाठी

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी

यदध्यापनलब्धसामर्थ्योऽहमेतद्ग्रन्थरत्नटीकाकरणे
क्षमस्तत्काशीपण्डितमण्डलमण्डितानां राष्ट्रपतिसम्मा-
नाद्यनेकोपाधिविभूषितानां तर्कवागीशानां पूज्य-
पादपण्डित वशिष्ठत्रिपाठिगुरुचरणानां करकमलयोः
सादरं समर्पयामि।

[illegible]
13-7-2010.

GAṄGĀNĀTHAJHĀ-GHRANTHAMĀLĀ
[ 30 ]

# MAHĀVIDYĀVIḌAMBANAṂ

OF

**ŚRĪ BHAṬṬA VĀDĪNDRA**

**With the Sanskrit Commentary**
**By**
**ŚRĪ BHUVANASUNDARA SŪRI**
**&**
**Hindi Commentary 'CANDRIKĀ'**
**By**
**PROF. RĀMAKIŚORA TRIPĀṬHĪ**

*FOREWORD BY*
**PROF. VEMPATY KUTUMBA SASTRY**
VICE-CHANCELLOR

*EDITED BY*
**PROF. RĀMAKIŚORA TRIPĀṬHĪ**
Head, Faculty of Darśana
Sampurnanand Sanskrit University, Varanasi




**VARANASI**
**2010**

*Research Publication Supervisor*—
**Director, Research Institute**
Sampurnanand Sanskrit University
Varanasi.

ISBN : 81-7270-235-3



*Published by*—
**Prof. Narendranath Pandey**
*Director, Academic, Research & Publication Institute*
Sampurnanand Sanskrit University
Varanasi-221002.



*Available at*—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002.



**First Edition,** 500 Copies

**Price** : Rs. 558.00



*Printed by*—
**Shreejee Printers**
Nati Imli, Varanasi-221002

गङ्गानाथझा-ग्रन्थमाला

[३०]

श्रीभट्टवादीन्द्रप्रणीतं

# महाविद्याविडम्बनम्

श्रीभुवनसुन्दरसूरिकृतया संस्कृतव्याख्यया

प्रो. रामकिशोरत्रिपाठिकृतया 'चन्द्रिका'-हिन्दीव्याख्यया

*कुलपतेः प्रो. वेम्पटिकुटुम्बशास्त्रिणः प्रस्तावनया च विभूषितम्*

*सम्पादकः*

**प्रो. रामकिशोरत्रिपाठी**

अध्यक्षः, दर्शनसङ्कायस्य

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणस्याम्




**वाराणस्याम्**

**२०६७ तमे वैक्रमाब्दे १९३२ तमे शकाब्दे २०१० तमे ख्रैस्ताब्दे**

ISBN : 81-7270-235-3

*अनुसन्धान-प्रकाशन-पर्यवेक्षकः—*
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी।

❒

*प्रकाशकः—*
**प्रो. नरेन्द्रनाथपाण्डेयः**
**निदेशकः, शिक्षण-शोध-प्रकाशन-संस्थानस्य**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी - २२१००२

❒

*प्राप्तिस्थानम्—*
**विक्रय-विभागः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी - २२१००२

❒

**प्रथमं संस्करणम्** - ५०० प्रतिरूपाणि
**मूल्यम्** - ५५८.०० रूप्यकाणि

❒

*मुद्रकः—*
**श्रीजी प्रिण्टर्स**
नाटी इमली, वाराणसी।

# प्रस्तावना

दर्शनानि हि स्वसिद्धान्तदिशा तथ्यातथ्यविवेचनपुरस्सरमात्मतत्त्वं प्रतिपादयन्ति। तदेव लक्ष्यं दर्शनशास्त्राणाम्। आत्मतत्त्वपरिज्ञानेनैव निःश्रेयसभूतमोक्षस्य प्राप्तिर्भवति। स च मोक्षः सिद्धः सन् पूर्वाधिगत एवाविद्यावशादनधिगत इव प्रतिभाति। अत एवोक्तं भगवत्पादशङ्कराचार्येण— 'प्राप्यप्रापणं मोक्षः। स चाविद्यास्तमयः। अविद्यास्तमयो मोक्षः। सा च बन्ध उदाहृतः'। यद्वा ज्ञातत्वोपलक्षित आत्मा मोक्षः, निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षित इति वचनेन प्रथितो वर्तते। अत्र मोहपदमविद्यार्थकम्, तथा च श्रुतिः—'तरति शोकमात्मवित्'। 'विद्वान् नामरूपाद्विमुक्तः'। ज्ञानस्याज्ञाननिवर्तकत्वात् शोकोऽत्र अविद्यैव। अविद्यायाः सकलानर्थप्रयोजकत्वात् तत्प्रहाणमेवोपनिषदां प्रयोजनम्, अविद्यानिवृत्तिमन्तरा भेदबुद्धेरनिवृत्तेः। भेदबुद्धिरेव तापत्रये हेतुः। तन्निमित्तमविद्या, अतोऽविद्यानिवृत्त्युपायो चिन्तनीयः। यद्विषयकमज्ञानं भवति, तद्विषयकज्ञानेनैव निवर्त्यते। सकलानर्थमूलमज्ञानं जीवात्मपरमात्मनोरभेदविषयकमस्ति। तदेव मायाऽविद्याप्रकृतिरित्यादिपदैरभिधीयते। तस्यैव जगत्कारणत्वम्, तस्य निवृत्तौ जगन्निवृत्तिः।

अविद्यानिवृत्तौ हेतुरात्मसाक्षात्कारः, स च जीवात्मपरमात्मनोरभेदविषयकोऽस्ति। आत्मस्वरूपप्रतिपादकत्वेन तत्साधनप्रतिपादकत्वेन चोपनिषदः प्रवृत्ताः सन्ति। उपनिषत्पदेनात्मविद्याऽभिधीयते, तत्प्रतिपादकत्वेन ग्रन्था अपि उपनिषत्पदवाच्या भवन्ति। उपनिषदेव वेदान्तपदाभिधेया भवति। वेदस्य अन्तो निर्णय इति व्युत्पत्त्या सर्वेषां वेदानामद्वैते ब्रह्मणि तात्पर्याद् उपनिषद्वेदान्तशब्दयोः समानार्थकत्वमस्ति। तद्वाक्यानामेव सङ्गतिपुरस्सरं शारीरकमीमांसायामनुगुम्फनमस्ति। तद्व्याख्यानभूतेषु चित्सुखी-(तत्त्वप्रदीपिका) प्रभृतिग्रन्थेषु महाविद्यानुमानानां बहुधा दिग्दर्शनमस्ति। महाविद्यानुमानस्य मूलग्रन्थः श्रीवादीन्द्रपण्डितप्रणीतश्चिरात्प्रकाशितत्वादिदानीमनुपलब्ध इवास्ति। परिच्छेदत्रयात्मकेऽत्र ग्रन्थे पण्डितप्रवरेण श्रीभट्टवादीन्द्रमहाशयेन **प्रथमपरिच्छेदे** महाविद्यानुमानस्वरूपं सलक्षणं सप्रयोगञ्च निरूपितम्। **द्वितीयपरिच्छेदे** केवलान्वयिस्वरूपं निराकृतम्। **तृतीयपरिच्छेदे** तु महाविद्यानुमाने व्यभिचारादिहेत्वाभासाः प्रदर्शिताः सन्ति। अतो मन्ये ग्रन्थकारः श्रीभट्टवादीन्द्रो महाविद्यानुमानपक्षधरो नास्ति, तथापि प्रथमे परिच्छेदे महाविद्यानुमानस्वरूपं

प्रत्यपादयत्। तच्च अपरिज्ञाय महाविद्यास्वरूपं निराकृतमिति शङ्कां परिहातु-कामनया। महाविद्यास्वरूपप्रतिपादनविधौ महाविद्यात्वमनुमाने कीदृशमिति प्रथमपरिच्छेदे प्रतिपादितम्। व्यभिचारादिहेत्वाभासशून्यत्वमेव महाविद्यात्वम्। केवलान्वयिस्वरूपानुमाने सर्वस्यापि सपक्षत्वाद्विपक्षाभावात् साध्याभावाधि-करणस्याप्रसिद्ध्या साध्याभाववद्वृत्तित्वरूपो व्यभिचारो न सम्भवति। साध्याभावस्याप्रसिद्धतया साध्याभावसाधकत्वे प्रकृतहेतोरसत्त्वाद् विरोधोऽपि परिहृतः। तेनैव सत्प्रतिपक्षस्य परिहारः।

इत्थं वादिना प्रतिवादिविजयाय स्वसिद्धान्तप्रतिपत्तौ चान्वयिव्यतिरेकि-प्रयोगविधौ व्यभिचारादिदोषशून्यं महाविद्यानुमानं प्रयुज्यते।

**'अन्वयिव्यतिरेकित्वोपेतमूलानुमाविधौ।**
**महाविद्याऽनुमानं तु प्रयोज्यं केवलान्वयि'।।**

अस्य महाविद्यानुमानस्य प्रथमप्रयोगविषयो भाट्टमीमांसकैः सह योग-शास्त्रविदां शास्त्रार्थकाल इति केचित्। तथा हि दर्शनेषु शब्दस्य नित्यत्वानित्यत्वविषये बहुविवादो वर्तते। तत्र भाट्टमीमांसका शब्दस्य नित्यत्वं वेदस्यापौरुषेयत्वं च स्वीकुर्वन्ति। योगशास्त्रविदो हि शब्दस्यानित्यत्वं स्वीकुर्वन्ति। द्वावपि स्वसिद्धान्तसिद्धये परपक्षनिरासाय चानुमानं प्रयुञ्जाते। तत्र शब्दानित्यत्वसाधनविधौ प्रथमं महाविद्यानुमानप्रयोगः शब्दानित्यत्ववादिना योगाचार्येण कृतः। तथा चोक्तं महाविद्याटिप्पणे—

**भाट्टा नित्यं शब्दं योगाद्या वादिनस्त्वनित्यं च।**
**प्रतिजानते ततोऽयं जातस्तेषां विवादोऽत्र।।**
**तत्तस्यानित्यत्वं प्रतिपादयितुं तु भाट्टवादीन्द्रान्।**
**योगाचार्यो वर्यः कृतवानेतां महाविद्याम्।।**

मूलग्रन्थे महाविद्याविडम्बने शब्दानित्यत्वमभिलक्ष्यैव महाविद्याप्रयोगो दृश्यते। एतत्प्रतिच्छायाभूतानि स्वप्रकाशविधौ ज्ञानस्यावेद्यत्वसाधकानि तत्त्वप्रदीपिका-(चित्सुखी)प्रभृतिग्रन्थेषु प्रयुक्तानि महाविद्यानुमानानि।

अस्य ग्रन्थरत्नस्य **भुवनसुन्दरसूरिविरचिता संस्कृतटीका**ऽतिप्राचीना ग्रन्थतात्पर्यबोधिका ग्रन्थानुगततया प्रकाशितेति महान् प्रमोदः। एतादृशानुमानानां पूर्वं बहुधा प्रयोग आसीत्। यतश्च तत्र तत्र दर्शनग्रन्थेषु पूर्वपक्षत्वेन कुत्रचित् सिद्धान्तरूपेण समुपलभ्यन्ते, महाविद्यानुमानेन सिद्धसिद्धान्तस्य साध्यस्य वा महाविद्यानुमानेनैवासिद्धिदर्शनात्। नैतानि

महाविद्यानुमानानि सिद्धान्तत्वेनाभिमतानि। अतो न्यायादिप्रमाणशास्त्रेषु एतत्स्वरूपप्रतिपादनं न दृश्यते। एतादृशानुमानानां 'महाविद्या' इति संज्ञाकरणे प्रथमप्रयोक्तुर्महाविद्योपासना हेतुः। एतादृशानुमानानि शास्त्रार्थविधौ महदुपयोगीनीति कृत्वा सिद्धान्ततोऽस्वीकृतान्यपि शास्त्रकृद्भिरेतादृशानुमानानि स्वपक्षस्थापनविधौ प्रयुक्तानि।

महाविद्यानुमानप्रयोगे तत्खण्डने वा सामर्थ्यं **महाविद्याविडम्बन-**ग्रन्थाध्ययनमन्तरा न सम्भवति। अतोऽस्य ग्रन्थस्य दर्शनपरम्परायामति-महत्त्वमस्ति। ग्रन्थोऽयं विषयगाम्भीर्यात् प्रतिपादनशैलीगम्भीर्याद् भाषा-काठिन्याच्च सहजतया बोधविषयो न भवति। समुपलब्धा **भुवनसुन्दर-सूरिविरचिता संस्कृतटीका**ऽपि सहजतया बोधगम्या नास्तीति कृत्वा पण्डितप्रवरेण **प्रो. रामकिशोरत्रिपाठिना** राष्ट्रभाषान्वितया **चन्द्रिकाख्यया** टीकयाऽयं सामान्यजनावबोधाय सुसम्पादित इति प्रमोदस्य विषयः। तदर्थं प्रो. त्रिपाठिमहोदयाय साधुवादप्रदानपुरस्सरं ग्रन्थस्यास्य सौष्ठवपूर्वकं प्रकाशनार्थं शिक्षण-शोध-प्रकाशन-संस्थानस्य निदेशकेभ्यः **प्रो. नरेन्द्रनाथपाण्डेय-**महोदयेभ्योऽप्यभिनन्दनानि समर्पयन् ग्रन्थममुं विदुषां करकमलेषूपायनीकरोमि।

**वाराणस्याम्**
वसन्तपञ्चम्याम्,
२०६६ तमे वैक्रमाब्दे
(२०.०१.२०१० ई.)

**(प्रो. वेम्पटिकुटुम्बशास्त्री)**
कुलपतिः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

**प्रो. पारसनाथद्विवेदी**
(राष्ट्रपति सम्मानित)
पूर्व आचार्य एवं अध्यक्ष
वेदान्तविभाग
सम्पूर्णानन्द संस्कृत विश्वविद्यालय
वाराणसी




दूरभाष : (0542) 2366134
मोबाइल : 09389084961

# प्रशस्तिः

श्रीवादीन्द्रपण्डितविरचितो महाविद्याविडम्बनग्रन्थः श्रीभुवनसुन्दरसूरि-विरचितवृत्तिविलसितोऽत्यन्तं महत्त्वपूर्णः न्यायभाषाशैल्या प्रणीतः क्लेशेन विदुषाधिगन्तव्यो महापण्डितेन श्रीमता व्याकरणवेदान्तन्यायादिशास्त्र-निष्णातधिया अस्मच्छिष्येण आयुष्मता चन्द्रिकोपाह्वेन श्रीरामकिशोरत्रिपाठिना राष्ट्रभाषाटीकया सम्भूष्य प्रकाशतां नीयत इति महाप्रमोदविषयः। विदुषा महता सवृत्तिकस्य 'महाविद्यानुमानदूषणपरस्यास्याद्भुतग्रन्थस्य ग्रन्थग्रन्थिसमुद्घाटिनी ग्रन्थहृदयप्रकाशिनी सुबोध्या रहस्यभावोद्भेदिनी हिन्दीव्याख्या अतिस्फुटा प्रणीतेति कस्य विदुषश्चेतो न चमत्करोति। इतः पूर्वं न कोऽपि विद्वान् एतादृशं दुरूहं ग्रन्थमस्पृशत्। अपूर्वेयं व्याख्या श्रीमतः श्रमयत्नाभ्यां गुरूणां सकाशात् श्रवणमनननिदिध्यासनसमुपलब्धविलक्षणप्रमावत्या प्रज्ञया च निर्मिता। कठिनस्थलानि च स्वाद्भुतप्रज्ञया अपूर्वेण धैर्येण च विविच्य सरलीकृतानि अनेन महाप्रज्ञावता शास्त्राध्येत्रध्यापकवर्गे महदुपकृतमनेनाभ्युदयवता कलार्कमण्डलाभासेन श्रीमता रामकिशोरेण।

महाविद्या' अमोघफलसर्वातिशालिन्यः दश प्रसिद्धा—

**काली तारा महाविद्या षोडशी भुवनेश्वरी।**
**भैरवी छिन्नमस्ता च विद्या धूमावती तथा।।**
**बगला सिद्धविद्या च मातङ्गी कमलात्मिका।**
**एता दश महाविद्या सिद्धविद्याः प्रकीर्तिताः।।**

केवलान्वयिनि व्यापके प्रवर्तमानो हेतुः पक्षे व्यापक-प्रतीत्यपर्यवसानबलात् अन्वयव्यतिरेकिसाध्यविशेषं वाद्यभिमतं साधयन् महाविद्येत्युच्यते। असिद्ध्यादिसकलदोषशून्यत्वमेव महाविद्यात्वम्। महाविद्या प्रयोग इवोपचरितत्वमनुमानप्रयोगे।

प्रथमपरिच्छेदे ग्रन्थकारः महाविद्यानुमानखण्डनात् पूर्वं महाविद्यानुमानस्य महद्व्याख्यानं कृतम्। तच्च अविज्ञाय खण्डनमित्याक्षेपनिरासाय। अपि च 'इति गूढमहाविद्याव्याख्याकौतूहलच्छलाद् दूरे निरस्तमस्माभिरज्ञानं प्रतिवादिनः'। इति ग्रन्थकारवचनेन प्रतिवादिनामज्ञानमपि दूरीकृतम्। द्वितीयपरिच्छेदे च महाविद्यानुमानभङ्गं चिकीर्षता ग्रन्थकारेण केवलान्वयिहेतोरेव खण्डनं कृतम्। केवलान्वयिहेतुत्वासम्भवे केवलान्वयिहेतुकमहाविद्यानुमानस्य खण्डनं भवति। तृतीये च महाविद्यानुमानेषु उपाधिं प्रदर्श्य व्याप्यत्वासिद्धिरुक्ता। एवं विरुद्धत्वादयोऽन्येऽपि हेत्वाभासाः प्रदत्ताः। महाविद्यानुमानप्रयोगेन हेत्वाभाससाधकैः महाविद्यानुमानं तृतीये दूषितम्। यदुक्तम्—

**अथ प्रबन्धादादिष्टं यद्धेत्वाभासपञ्चकम्।**
**तत्प्रत्युक्तमहाविद्याबलात्तस्यां प्रपञ्च्यते।।१६।।**

**किञ्च सव्यभिचारमुल्लयति प्रोन्मीलत्यात्मनः**
**सोपधित्वमुदाहरत्यभिमतव्याप्यकत्वभङ्गं निजम्।**
**आचष्टे प्रतिपक्षमात्मविषयं बाधां समुन्मुद्रय-**
**त्याधत्ते स्थितिविप्लवं च भजते प्रत्यर्थितामात्मनः।।१७।।**

एवं महाविद्यानुमानस्य विडम्बनं ग्रन्थकारेण कृतम्। तत्र केवलान्वयिहेतुत्वं 'घटो वाच्यः प्रमेयत्वादित्यादौ तार्किकैरङ्गीकृतं प्रमेयत्वे। वाच्यत्वप्रमेयत्वादयः केवलान्वयिधर्माः सर्वानुभूताः।

किञ्च महाविद्यानुमानस्य खण्डनं ग्रन्थकृता महाविद्यानुमानैरेव व्यभिचारादिहेत्वाभासानुपदर्शयद्भिः कृतम्। तत्र च ये एव दोषा महाविद्यानुमानाङ्गीकर्तृषु प्रदत्ताः, तैरेव दोषैः हेत्वाभासप्रदर्शकानि-महाविद्यानुमानान्यपि निरस्तानि। न च ते दोषाः ग्रन्थकारप्रदर्शितमहाविद्यानुमानं परिहृत्यान्यत्रैव प्रवृत्ता इति शक्यते वक्तुम्। एवं स्थितिविप्लवमपि तत्रापतत्येव। तथापि त्वत्प्रक्रिययैव त्वत्प्रक्रिया पराहतेति प्रदर्शनं ग्रन्थकारस्याभिप्रायः।

महाविद्यानुमानप्रयोगः षोडशविधः कुलार्कपण्डितेन व्युत्पादितः, सोऽपि अत्र ग्रन्थे प्रदर्शितः।

तत्र श्रीभुवनसुन्दरसूरिरचितं टिप्पणमपि षोडशलक्षणमहाविद्याप्रयोगस्य व्युत्पादकमत्र ग्रन्थे सङ्गृहीतम्। एतदप्यतिमहत्त्वपूर्णम्। महाविद्याप्रयोगः वेदान्तकल्पतरुचित्सुख्यादिग्रन्थेषु बहुधा अद्वैतवेदान्तशास्त्रेऽपि उपलभ्यते। तथा हि—ज्ञानसामान्यस्य स्वतस्त्वसाधने कल्पतरौ—

इयं रूपप्रमा अर्थप्रयोगत्वानधिकरणैतच्चक्षुर्गतगुणजन्या न भवति प्रमात्वात् श्रोत्रजप्रमावत्।

चित्सुख्यामवेद्यत्वप्रसिद्धौ—अयं घट: एतद्घटान्यत्वे सति वेद्यत्वानधिकरणान्य: पदार्थत्वाद् पटवत्। नयनप्रसादिन्याञ्च तद्व्याख्यायाम्—

वेद्यत्वं स्वस्वेतरवृत्तित्वानधिकरणात्यन्ताभावप्रतियोगिवृत्तिधर्माधिकरणं मेयत्वाद् घटवदित्युक्तम्। तथा तमसो भावसाधने नयनप्रसादिन्यामुक्तम्—मनस्त्वं स्पर्शवदवृत्तिवेगवद्वृत्तिजात्यन्यद् मेयत्वात् घटवदिति।

एवञ्चाद्वैतशास्त्रे बहुधा महाविद्याप्रयोगा: उपलभ्यन्ते। अस्य प्रकाश्यमानस्य ग्रन्थस्य न केवलं महाविद्यानुमानविडम्बन एवोपयोग:, अपि तु महाविद्यानुमानप्रयोगसमन्वयेऽपि महानुपयोग:। सरलीकृतश्चानेन ग्रन्थेन महाविद्यानुमानप्रयोगस्य पन्था:।

पुनश्चाहं पण्डितप्रवरं काशीपण्डितमण्डलमण्डनं श्रीरामकिशोरत्रिपाठिनं बहुधा प्रशंसन् दीर्घायुष्यारोग्यमङ्गलसमृध्यादिभि: आशीर्वचोभि: संवर्धयन् तदभ्युदयादिकञ्च भवानीविश्वनाथौ सप्रणामं प्रार्थयमान: प्रमोदमावहन् विरमामि।

**वाराणसी**

**पारसनाथद्विवेदी**
पूर्वाचार्योऽध्यक्षश्च
वेदान्तविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

**प्रो. वशिष्ठ त्रिपाठी** B 30/252, नगवा
(राष्ट्रपति सम्मानित) वाराणसी
पूर्व न्यायवैशेषिकविभागाध्यक्ष
सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी

# शुभासंशनम्

श्रीभुवनसुन्दरसूरिप्रणीतव्याख्यया सम्बलितो महाविद्याविषयकोऽयं वादीन्द्रविरचितो महाविद्याविडम्बनाख्यो ग्रन्थोऽतिदुरूहत्वेन सर्वजनग्राह्यो नास्ति। ग्रन्थोऽयं विदुषां कृते महदुपकारक इति विचिन्त्य पण्डितप्रवरेण व्याकरणवेदान्तन्यायादिशास्त्रेषु कृतभूरिपरिश्रमेण श्रीमता रामकिशोरत्रिपाठिना सर्वजनसौलभ्याय चन्द्रिकाऽऽख्यराष्ट्रभाषाटीकाया निर्माणं विधाय ग्रन्थोऽयं प्रकाशितः। कार्यमिदं सर्वजनहितकरं भविष्यतीति मे विश्वासः। चन्द्रिकाख्यभाषाटीका ग्रन्थग्रन्थिसमुद्घाटने क्षमेति मे मतिः। एतट्टीकामाध्यमेन सर्वजनवेद्यविषयो भवविष्यति **'महाविद्याविडम्बनम्'** ग्रन्थः।

मानाधीना मेयसिद्धिरिति वाक्यानुसारं प्रमाणबलेनैव प्रमेयं साधयितुं शक्यते। इदमपि चिन्तनीयं यत् ऐहिकामुस्मिकः सर्वोऽपि साध्यसाधनभावः प्रमाणमूलक एव भवति। प्रमाणञ्च प्रमाकरणत्वरूपं तद्घटकप्रमात्वन्तु अनधिगताबाधितविषयकज्ञानत्वरूपं वेदान्तमतेन। वेदान्तदिशा सर्वस्यापि प्रपञ्चस्य संसारदशायां बाधाभावात् संसारावस्थायां प्रपञ्चस्य व्यावहारिक-सत्यत्वमेव अभ्युपेयम्। सा च प्रमा प्रत्यक्षानुमानशाब्दादिभेदेन विविधा। तत्र प्रत्यक्षप्रमा चैतन्यमेव। यतो हि वृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्नाभिन्नत्वमेव घटांशे घटज्ञानस्य प्रत्यक्षत्वम्। विषयस्य, प्रमातृचैतन्यसतातिरिक्तसत्ता-कत्वाभावत्वमेव प्रत्यक्षत्वम्। अनुमित्यादिस्थलेषु चक्षुरादीनामसम्बन्धनेन अन्तःकरणस्य वह्न्यादिदेशगमनरहिततया विषयान्तःकरणयोरभेदासम्भवेन नहि प्रत्यक्षत्वम्, अपि तु व्याप्तिज्ञानादिजन्या परोक्षवृत्तिरेव जायते।

महाविद्याया उल्लेखो यद्यपि स्वस्वविरचितग्रन्थेषु वेदान्तशास्त्र-मर्मज्ञैर्विद्वद्वरण्यैः कृतोऽस्ति। दशमहाविद्याया उल्लेखोऽप्यन्यत्रोपलभ्यते।

**काली तारा महाविद्या षोडशी भुवनेश्वरी**
**भैरवी छिन्नमस्ता च विद्या धूमावती तथा।**
**बगला सिद्धविद्या च मातङ्गी कमलात्मिका**
**एता दश महाविद्या सिद्धविद्याः प्रकीर्तिताः।।**

इत्थं प्रकारेण दशविधमहाविद्यायाः स्वरूपं शास्त्रेषु दृश्यते। परन्तु वादीन्द्रविरचितेऽस्मिन् ग्रन्थे अनुमानप्रयोगरूपत्वेन महाविद्याया अन्यलक्षणं विहितम्।

**अन्वयिव्यतिरेकित्वोपेतमूलानुमाविधौ।**
**महाविद्याऽनुमानं तु प्रयोज्यं केवलान्वयि।।**

महाविद्यानुमानस्वरूपं यथात्र ग्रन्थे प्रतिपादितं तादृशमन्यत्र नोपलभ्यते। यद्यपि शास्त्रेषु स्वार्थानुमानपरार्थानुमानभेदेन एवं केवलान्वयि केवलव्यतिरेकि अन्वयव्यतिरेकिभेदेन अनुमानस्य विविधाः प्रकारा उपलभ्यन्ते। एतादृशमहाविद्यानुमानस्य सर्वत्र चर्चा नास्ति। अत्र ग्रन्थे पक्षं पक्षीकृत्य महाविद्यायाः त्रिंशद्भेदाः प्रदर्शिताः, एवं विपक्षं पक्षीकृत्य द्वादशभेदाः प्रदर्शिताः। इत्थं प्रकारेण महाविद्याया अनेकानि स्वरूपाणि प्रतिपादितानि। प्रथमपरिच्छेदे।

द्वितीयपरिच्छेदे तु केवलान्वयि अनुमानस्य खण्डनं कृतमस्ति। अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वं सर्वत्र विद्यमानत्वं वा केवलान्वयित्वमित्यपि निराकृतम्। ग्रन्थेऽस्मिन् केवलान्वयिहेतुकानुमानखण्डनेन नव्यन्यायसादृश्यमस्ति। अत्र ग्रन्थे यद्यपि साध्याभाववदवृत्तित्वाभावरूपा व्याप्तिरभिमता तथापि केलवान्वयिव्याप्तिमधिगत्य महाविद्यास्वरूपं प्रतिपादितम्।

अत्र ग्रन्थे व्याप्तिप्रदर्शनपुरःसरं हेतुदोषस्य हेत्वाभासस्यापि सम्यक्प्रतिपादनमस्ति। अस्य ग्रन्थस्याध्ययनेन वेदान्तशास्त्रे प्रसिद्ध-महाविद्यानुमानानां सम्यक् परिज्ञानं भविष्यति। अतिदुरूहस्यास्य ग्रन्थस्य सामान्यजनैरेतदर्थविषयकज्ञानमशक्यमिति कृत्वा पण्डितप्रवरैः श्रीरामकिशोर-त्रिपाठिमहाशयैः सटीकस्यास्य ग्रन्थस्य ग्रन्थिविस्फोरणपुरःसरं यद्राष्ट्रभाषया व्याख्यानं विहितं तदतिसमीचीनं लोकोपकारकञ्चास्ति। अनेन व्याख्यानेन वेदान्तादिग्रन्थेषु समुपलब्धमहाविद्यानुमानानां परिज्ञानं भविष्यति। एतत्कार्यं शास्त्रोपकारकं विदुषां मोदाय च भविष्यतीति मे द्रढीयान् विश्वासः। अन्ते श्रीमतो रामकिशोरत्रिपाठिनः सादुवादैः सभाजयन् विरमामि।

**वाराणसी**

**वशिष्ठत्रिपाठी**
आचार्यचरोऽध्यक्षश्च
न्यायवैशेषिकविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# किमप्यस्मदीयम्

**यत्सङ्गात्पतितं रजो विधुनुते विघ्नं सुसेवावृतां**
**यत्सेवाजनितप्रभाविगलितं ध्वान्तं मनोदूषकम्।**
**यत्स्पर्शश्च पुनाति मानववपुः पापार्द्रपङ्काङ्कितं**
**तच्छ्रीशङ्करपादपद्मयुगलं वन्दामहे तापहम्।।**

गतासु नैकयोनिषु कृतसुकृतफलचयवशात् कश्चन क्वचन मानवत्वेनावतरति। इदञ्च मानवजन्म न भोगाय, न जन्मान्तरसंवृद्धये, न च लोकान्तरलाभाय, न च भवति समृद्धये। एतज्जन्मोद्देश्यं हि अहंत्वममत्वरूप-सकलानर्थभूतजन्मजरामृत्युनिमित्ताविद्यानिवृत्तिः। तच्च सम्भवति तत्त्वज्ञानात् 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽनयाय' (श्वेता. ६.१५, ३.८) तत्त्वज्ञानञ्चात्र जीवात्मपरमात्मनोरभेदप्रत्ययः। स च निश्चीयते श्रुतिसम्मतदर्शनशास्त्रपरिचिन्तनेन। भेदबुद्धिरेवानर्थहेतुः 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् (बृ. ४.५.१५) भेदबुद्धौ निवृत्तायां तत्परिकलितसकलानर्थमूलं सदसद्विलक्षणत्वाद-निर्वचनीयं जगन्निवर्तते।

प्राणिनामदृष्टवशादप्रियमपि प्रियरूपम्, असदपि सद्रूपं परिच्छिन्न-मप्यनन्तरूपम्, असास्वतमपि सास्वतमिवाधिष्ठानात्मतादात्म्यादवभासते। इदमेव भ्रममूलं यन्न निवर्तते तत्त्वज्ञानमन्तरेण। अथ चेह जगति किं तथ्यं किमतथ्यमिति दर्शनशास्त्रेणैव निर्णीयते। अविद्यावशात् शुभाशुभकर्माण्येव भोगभोक्तृरूपजगदात्मना परिणमन्ते। यावत्तत्त्वज्ञानं चेमानि लोकलोकान्तरात्म-नाऽनुवर्तमानानि जनिस्थितिविनाशहेतवो भवन्ति। तत्त्वज्ञानेन कर्मक्षये जन्ममृत्युभयात् प्रमुच्यते।

**कर्मणा बध्यते जन्तुः विद्यया च विमुच्यते।**
**तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः।।**

(महा.भा., शा. २४१-६)

कर्मैव बन्धस्तन्निवृत्तिश्च ज्ञानेन सम्भवति। 'ब्रह्मविदाप्नोति परम् (तैत्ति. २-१) ऋते ज्ञानान्न मुक्तिः, "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा (गीता ४-३९) इति श्रुतिस्मृतिवचनात् ज्ञानमेव मोक्षसाधनम्। तच्चोपपद्यत

आत्मविद्यया अत आत्मविद्याप्रतिपादकानां दर्शनशास्त्राणां परममहत्त्वं श्रेष्ठत्वञ्चास्ति।

दुःखनिवृत्तौ सुखावाप्तौ प्राणिमात्रस्य प्रवृत्तिदर्शनात् आत्यान्तिकदुःख-निवृत्तेरन्यथोपायेनादर्शनात्। ईप्सितप्राप्त्यनीप्सितनिवृत्तिरूपलौकिकसुखस्य जन्यतया परिच्छिन्नतयाऽनित्यत्वात्, उत्तरोत्तरसुखप्रभूत्युत्कण्ठाप्रयोजकत्वाच्च न सास्वतिकत्वम्। त्रिविधं हि दुःखम् आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकम्, आध्यात्मिकञ्चात्र शारीरं मानसिकञ्च आधिदैविकन्तु पशुपक्ष्यादि जनितम्, आधिदैविकञ्च ग्रहभूतादिजनितम्। न ते स्वतो निवर्तन्ते, न च ज्ञानान्तरोपायेन तेषां सास्वतिकी निवृत्तिः। आत्यन्तिकदुःखनिवृत्तिर्मोक्ष उच्यते। 'अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः' (सा.सू. १.१.१) आध्यात्मिक-योर्मध्ये शारीरस्य भैषजादिना कथञ्चित् क्वचित् यावदौषधफलमास्थिरा सभ्यवत्यपि निवृत्तिः, मानसिकस्य त्वसम्भवैव। इतरयोश्च मन्त्रानुष्ठानादिना कथञ्चित् क्वचिच्चास्थायित्वेन निवृत्तेः सम्भवेऽपि न तन्निवृत्तेरात्यन्तिकत्वम्। आत्यन्तिकदुःखनिवृत्तिस्तु तत्त्वज्ञानेनैव भवति। तच्च तत्त्वज्ञानं जीवात्मपरमात्मनोरैक्यरूपम्।

अथ च चन्दनसृग्वनितासंसर्गजन्यैन्द्रियकसुखस्येन्द्रियसंयोगेन जन्यतया विषयेन्द्रियश्लेषाश्लेषयोरनित्यतया तज्जन्यसुखस्याप्यनित्यत्वम्। उत्तरोत्तरा-भिलाषानियतत्वाच्चासास्वतिकत्वम्। तदेव नित्यं सुखं यदुत्तरं सुखं नापेक्ष्यते। सुषुप्त्युत्तरजायमाने सुखे कथञ्चिदुत्तरसुखाकाङ्क्षा न भवति, तथापि तस्याविद्यावृत्तिजन्यतयाऽनित्यत्वमस्त्येव। नित्यं सास्वतं च सुखम् आत्मरूपम्। 'आनन्दं ब्रह्मणो विद्वान् न विभेति कुतश्चन' (तैति. २.९) भयञ्चात्र जन्ममरणादिनिमित्तं तच्च यावदाविद्यं द्वैतबुद्धिजन्यम्। 'द्वितीयाद्वै भयं भवति' (बृ. १.४.२) इति श्रुतेः। भयनिवृत्तिश्च जीवात्मपरमात्मनोरभेदज्ञानेन 'आत्माऽगृह्यो नहि गृह्यतेऽशीर्यो न हि शीयतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्यभयं वै जनक प्राप्तोऽसि, (बृ. ४.२.४) इति श्रुत्या सर्वविकल्पातीतासङ्गात्मज्ञानं भयनिवृत्तिरूपमोक्षसाधनं प्रतिपादितं तच्च सम्भवति सकलानर्थमूलाविद्यानिवर्तकमौपनिषदात्मज्ञानेन।

अर्थ्यते=काम्यते अर्थःसुखम् पुरुषस्य अर्थः पुरुषार्थः मानवसुखम्। यद्यपि धर्मार्थकामादयोऽपि सुखानि तथापि न तेषां सास्वतिकत्वम्, उपभोगक्षयशीलत्वात्। कर्मजन्यं स्वर्गादिरूपमपि सुखमनित्यं कर्मजन्यत्वात् कृष्यादिफलवत्। अत्र च 'तद्यथेह कर्मचितो लोकः क्षीयत एवममुत्र कर्मचितःलोकःक्षीयते (छा. ७.६.१) मोक्षाख्यपुरुषार्थातिरिक्तधर्मार्थकामाख्या-

नामनित्यत्वावगमात् मोक्षस्य च नित्यत्वावगमात् परमत्वं महत्त्वं श्रेष्ठत्वञ्चास्ति मोक्षाख्यपुरुषार्थस्येति। मोक्षस्य नित्यत्वे 'न च पुनावर्तते' (छा. ८.१५.१) इति श्रुतिर्मानम्। मोक्षस्वरूपं प्रतिपादितं वार्तिककारेण 'अविद्यास्तमयो मोक्षः स बन्ध उदाहृतः (भा.वा.) 'निवृत्तिरात्मा मोहस्य ज्ञानत्वेनोपलक्षितः (भा.वा.) प्रथमेन अविद्यारूपबन्धशून्यत्वस्य मोक्षपदार्थत्वमुक्तम्। द्वितीयेन हि मोक्षपदार्थमोहनिवृत्तिपदार्थभूततादृशशून्यत्वस्य ज्ञातात्मतारूपत्वोक्त्या आत्मनो मोक्षपदार्थत्वं तादृशशून्यत्ववत्ता च बोध्यते।

अत्र विद्यास्तमयत्वं नाम संस्कारादिकार्यरूपेणाप्यनवस्थानत्वम्। अविद्यासामान्यास्तमयत्वस्य मोक्षघटकत्वायाविद्यासामान्यस्य बन्धत्वमाह। अविद्या स्थूलरूपा संस्कारादिरूपा च। अतो विशेषं विहाय सामान्यत्वेनास्तमयत्वस्त मोक्षत्वमाह। तत्तदविद्यास्तमयत्वे न मोक्षत्वमन्यस्या विद्यमानत्वात्। तथा चोक्तम् 'विदेहताकालीनोऽस्तमय एव मुख्यो मोक्षः। ज्ञातत्वोपलक्षित आत्मापि विदेहकालीन एव जीवन्मुक्तिकालीनस्य ज्ञातत्वोपहितत्वस्यापि कदाचित् सम्भवेन ज्ञात्वेनोपलक्षिततत्वस्य सर्वदा असम्भवात्' (अ.सि.लघुचन्द्रिका) एवञ्च वार्तिकद्वयेनाविद्यास्तमयत्वेन मोक्षनिवृत्तिरूपेण वा सकलबन्धशून्य आत्मा मोक्षपदार्थ उक्तः। मोक्षनिवृत्तिः अविद्यास्तमयो वा तत्त्वज्ञानेन सम्भवति। 'तरति शोकमात्मवित्' (छा. ६.७.३) 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मु. २.२.८) 'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मु. ३.२.८) इत्यादिश्रुतय आत्मज्ञानमेव बन्धनिवृत्तिनिमित्तत्वेनामनन्ति। तच्चात्मज्ञानं जीवात्मपरमात्मनोरभेदरूपं श्रुतिसम्मतदर्शनशास्त्रेण प्रतिपाद्यते।

दर्शनानि हि आत्मतत्त्वं निरूपयन्ति तथ्यातथ्यमपि विवेचयन्ति। दृश्यते आत्मतत्वं येन, यद्वा दृश्यते=तथ्यातथ्यं विविच्यते येनेत्युभयथा व्युत्पत्तिदर्शनात्। अतो दर्शनानि स्वस्वसिद्धान्तदिशाऽऽत्मतत्वं निरूपयन्ति तथ्यातथ्यविवेकद्वारा आत्यन्तिकसुखस्वरूपं जन्मस्थितिवृद्धिह्रासमृत्युनिवृत्तिरूपं मोक्षस्वरूपञ्च निर्दिशन्ति। तत्र कानिचित् वेदप्रामाण्यानुरोधित्वात् क्रतुजन्यस्वर्गरूपफलानुगमाच्च। आस्तिकत्वेन। अस्तिपरलोकः वेदप्रामाण्यं च येषां मतिः तानि आस्तिकानि। 'अस्ति नास्ति दिष्टं मातिः (पा.सू. ४.४.६) इतिसूत्रेण अस्ति नास्ति शब्दाभ्यां ठक् प्रत्यये सति आस्तिक नास्तिकशब्दयोः सिद्धिदर्शनात्। न तु अस्ति परमेश्वरो येषां मतिः नास्ति परमेश्वरो येषां मतिरिति व्युत्पत्तिः। आस्तिकेष्वपि पूर्वमीमांसासांख्यदर्शनयोः सर्वज्ञत्वसर्वकर्तृत्व-रूपेणेश्वरास्वीकारात्।

नास्तिकानि हि तत्त्वालोचनविधौ येन केनापि तत्त्वनिरूपणं कुर्वन्त्येव। तत्र प्रतिपादिततत्त्वमेव परमोत्कृष्टतयेश्वरतत्त्वमिति। भौतिकवस्तूनामुत्पत्ति-विनाशमूलं किमपि कूटस्थमविकारि नित्यस्वरूपं सर्वैरभ्युपेयं तदैव तेषां दर्शनत्वम्। तत्र कानिचित् शरीरमेवात्मत्वेनाभ्युपगच्छन्ति। कानिचित् शरीरपरिमितत्वेनात्मानं स्वीकुर्वन्ति। कानिचित् क्षणिकविज्ञानमेवात्मरूपेण प्रतिपादयन्ति। कानिचिच्च शून्यमेवात्मेति मन्यन्ते। अस्थिरपदार्थस्योत्पत्ति-स्थितिलयाश्रयत्वेन किमपि तत्त्वमभ्युपेयम्। अतः सर्वाण्यपि स्वस्वपद्धत्या स्वीकुर्वन्ति। स्वीकृतं हि मूलतत्त्वमेव तत्तद्दर्शनेषु तत्तन्नाम्ना प्रसिद्धमात्मतत्त्वमिति।

परन्तु ते वेदस्य प्रामाण्यं यज्ञादिजन्याष्टरूपस्वर्गं न स्वीकुर्वन्ति। उभथाऽस्वीकारे तेषां नास्तिकत्वम्। अन्यतरस्वीकारे चास्तिकत्वम्। अन्यतर स्वीकारे यदि नास्तिकत्वं मन्येत? तदा शब्दाप्रामाण्यवादिनो वैशेषिकदर्शनस्यापि नास्तिकत्वमापद्येत।तत्रापि शब्दस्य कानिचित् नित्यत्ववादीनि कानिचिच्चानित्यत्ववादीनि। नास्तिकानि तावत् 'न्यायः, वैशेषिकम्, योगः, सांख्यम्, पूर्वमीमांसा, उत्तरमीमांसा (वेदान्तः) नास्तिकानि हि चतुर्धा विभक्तं तथागतमतं जैनदर्शनं चार्वाग्दर्शनञ्च। प्रकृतग्रन्थोऽयं महाविडम्बनाख्यः महाविद्यानुमानखण्डनपर इति ग्रन्थसंज्ञाकरणादेवावगम्यते। तत्र खण्डनीयवस्तुस्वरूपज्ञानमन्तरा खण्डनायोगात् पूर्वमवतरणपुरःसरं महाविद्यास्वरूपमुच्यते।

**महाविद्याऽवतरणम्**

अस्ति तावदास्तिकदर्शनेषु शब्दस्य नित्यत्वानित्यत्वविषये विवादः। वेदस्यापौरुषेयत्वं मन्यमाना भाट्टमीमांसकाः शब्दस्य नित्यत्वमभ्युपगच्छन्ति। यौगाद्यास्तु शब्दस्यानित्यत्वं संगिरन्ते। उभावपि स्वस्वसिद्धन्तप्रतिपत्तावनुमानं प्रत्यपादयताम्। तत्र शब्दस्य नित्यत्वं निरूपयद्भिः 'शब्दः नित्योऽजन्यत्वात् आकाशवत् इत्यन्वयव्यतिरेकिरूपमनुमानम्, यद्वा वेदोऽनादिरपौरुषेयत्वात्, यन्नैवं तन्नैवं यथा घटादिरिति केवलव्यतिरेकिरूपमनुमानं प्रत्यपादिषाताम् शब्दस्यानित्यत्वं मन्यमानाः प्रतिवादिनो यौगाद्या हि 'शब्दोऽनित्यः कृतकत्वात् घटवदित्यनित्यत्वसाधकमन्वयव्यतिरेकि अनुमानं प्रायुजन्। ततश्च तयोर्विवाद समभवत्। तथा चोक्तं श्रीभुवनसुन्दरसूरिकृतमहाविद्याविवरणटिप्पणे—

**भाट्टा नित्यं शब्दं यौगाद्या वादिनस्त्वनित्यं च।**
**प्रतिजानते ततोऽयं जातस्तेषां विवादोऽत्र।।**

**तत्तस्यानित्यत्वं प्रतिपादयितुं तु भाट्टवादीन्द्रान्।**
**यौगाचार्यो वर्यः कृतवानेतां महाविद्याम्।।**

अयमभिसन्धिः शब्दोऽनित्यः कृतकत्वादित्यन्वयव्यतिरेक्यनुमाने साध्याभावसिद्ध्या व्यभिचारादिहेत्वाभासाः सभाव्यन्ते, तद्भिया केवलान्वयिरूपमनुमानं प्रतिवादिभिः प्रयुक्तम्। केवलान्वयिस्वरूपानुमाने हि सर्वस्यापि सपक्षत्वाद्विपक्षाभावात् साध्याभावाधिकरणस्याप्रसिद्ध्या साध्याभाववद्वृत्तित्वरूपो व्यभिचारो न सम्भवति। साध्याभावस्याप्रसिद्धा साध्याभावसाधकत्वं प्रकृतहेतोर्नास्तीति विरुद्धत्वपरिहारः। तदप्रसिद्ध्यैव साध्याभावसाधक तुल्यहेत्वन्तराभावान्न सत्प्रतिपक्षत्वम्। एवमुपाध्यादिहेत्वाभासा न सम्भवन्ति।

**महाविद्यानामकरणविचारः**

अस्तु तावत् प्रतिवादिविजयाय स्वसिद्धान्तस्थापनाय च व्यभिचारादिदोषशून्यस्यान्वयिव्यतिरेकिप्रतिपत्तौ केवलान्वयिरूपानुमानस्य प्रयोगः। परञ्चात्र महाविद्यानामकरणे को हेतुरिति न पश्यामि। तत्र केचिच्छास्त्रविदः प्रतिपादयन्ति, शक्त्युपासकोऽयमाचार्यः स्वपरिकल्पितानुमानस्य महाविद्येति संज्ञां व्यदधात्। यतश्च महाविद्येतिपदेन शक्तेः स्वरूपाभिधानं दृश्यते तन्त्रशास्त्रेषु।

**काली तारा महाविद्या षोडशी भुवनेश्वरी।**
**भैरवी छिन्नमस्ता च विद्या धूमावती तथा।।**
**बगला सिद्धविद्या च मातङ्गी कमलात्मिका।**
**एता दश महाविद्याः सिद्धविद्याः प्रकीर्तिताः।।**

सिद्ध्यन्ति विद्या यासामुपासनया तास्तथोक्तस्वरूपा दश महाविद्येति नाम्ना प्रसिद्धाः सन्ति। अतोऽत्र मन्ये स्वविद्यासिद्ध्यर्थं पण्डितवरः कुलार्काचार्योऽपि तासामुपासनं चकार। तदुपासनालब्धप्रखरवैदुष्योऽयमेतादृशानुमानं प्रायुजत्। यदनुमानप्रयोगेन शब्दस्य नित्यत्ववादिनो भाट्टाः स्वसिद्धान्तस्थापनेऽक्षमाः पराबभूवुः। यदुपासनयैतादृशं वैदुष्यमध्यगमत् तन्नामकीर्तनमुचितमेव प्रतिभाति। अथ चेष्टदेवतानामकीर्तनात्तत्स्तुतिरूपं मङ्गलमप्यभवत्। अत्रानुमानप्रयोगे नाहं किञ्चिद्रूपेणास्मि पराशक्तिर्महाविद्यैव सर्वं व्यदधादित्याचार्यस्य स्वाराध्यदेवतां प्रति सर्वसमर्पणमपि ख्याप्यते।

**महाविद्यास्वरूपलक्षणविचारः**

सकलदोषशून्यशब्दानित्यत्वसाधकानुमानस्य महाविद्यानामकरणे महाविद्याया लक्षणनिरूपणपुरःसरं हेतुरुक्तो ग्रन्थकारेण। अतो नोपास्यदेवता-

संकीर्तनमात्रपरं महाविद्यानामकरणमपितु पारिभाषिकमपि। परिभाषा च महाविद्याविडम्बनग्रन्थस्य महाविद्याविडम्बनवृत्तिरित्याख्यटीकाकृता श्रीभुवन-सुन्दरसूरिणा स्वयमेव कृता—

**अन्वयिव्यतिरेकित्वोपेतमूलानुमाविधौ।**
**महाविद्याऽनुमानं तु प्रयोज्यं केवलान्वयि।।**

यत्र हि मूलानुमानं पूर्वप्रकृतमुख्यानुमानमन्वयिव्यतिरेकिरूपं स्यात्तत्र प्रयुक्तं केवलान्वयिरूपं विशिष्टानुमानं महाविद्येति व्यपदिश्यते। यत्पक्षकयत्साध्यकं पूर्वप्रकृतानुमानमन्वयव्यतिरेकिरूपं तत्पक्षकतत्साध्यक-मेवोत्तरमनुमानं यदि केवलान्वयिरूपं प्रयुज्यते, तन्महाविद्यानाम्ना लोके व्यपदिश्यते। तथा हि 'शब्दोऽनित्यः कृतकत्वात् घटवत्' इत्यत्रान्वयव्यतिरेकिणि मूलानुमाने केवलान्वयिरूपं महाविद्याऽनुमानम् 'अयं शब्दः स्वस्वेतरवृत्तित्वानधिकरणानित्यनिष्ठाधिकरणं मेयत्वाद् घटवत्' अत्र केवलान्वयिरूपेऽनुमानेऽसिद्धत्वादिसकलदोषशून्यत्वमेव महाविद्यात्वम्।

प्रकृतकेवलान्वयिरूपमहाविद्याऽनुमानस्य मेयत्वहेतोः सकलमेयपदार्थ-वृत्तितया पक्षीकृतशब्देऽपि सत्त्वात् स्वरूपासिद्धिर्निराकृता। सोपाधिको हेतुः व्याप्यत्वासिद्धः। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वमित्युपाधे-र्लक्षणम्। केवलान्वयिनोऽनुमानस्य साध्याभावाप्रसिद्धौ साध्याभावाधिकरण-रूपस्य विपक्षस्य व्यावर्त्यासम्भवेन यः कश्चिद्धर्म उपाधित्वेनाभिधीयते स पक्षेतरत्वतुल्यो भविष्यति। पक्षेतरत्वं पक्षेतरत्वतुल्यो वा नोपाधिः, तथा रूपाधित्वपरिकल्पने सकलानुमानविच्छेदापत्तेः। उपाधिमन्तरेण व्याप्यत्वा-सिद्धत्वासम्भवात्। एतस्य केवलान्वयितया साध्याभावाप्रसिद्ध्या साध्याभाववन्मात्रवृत्तित्वरूपविरुद्धस्य साध्याभाववद्वृत्तित्वरूपानैकान्तिकत्वस्य साध्याभावसाधकसमानबलरूपसत्प्रतिपक्षस्य साध्याभावसाधकाधिकबलरूपस्य बाधस्य चानुपपत्तेः। इति सकलदोषकलङ्कपङ्कानाङ्कितत्वमेव महाविद्यात्व-मनुमानस्य।

एतन्महाविद्यानुमानं श्रीमता कुलार्कपण्डितवर्येण दशकारिकाभिर्निबद्धम्। एतत्कारिकानिबद्धस्य षोडशमहाविद्यानुमानस्य त्रिंशत् स्वरूपाणि परिकल्प्य प्रतिपादनमत्र महाविद्याविडम्बनग्रन्थकृता विहितमस्ति। यतश्चैतदनुमानं केवलान्वयिरूपम्, अतोऽन्वयव्यतिरेकिभूतस्य शब्दोऽनित्यः कृतकत्वाद् घटवत्, इत्यस्य सपक्षविपक्षसाध्यसाध्याभावाः पक्षसपक्षविपक्षसाध्य-साध्याभावधर्माश्च पक्षत्वेनाभिमताः सन्ति। तत्र घटादिसपक्षं पक्षत्वेनाधिकृत्य द्वाविंशतिरनुमानानि परिकल्पितानि। गगनादिविपक्षं पक्षत्वेनाभिगम्य

द्वादशानुमानरूपाणि परिकल्पितानि। पूर्वप्रकृतानुमानस्यानित्यत्वरूपं साध्यं पक्षत्वेनाधिकृत्यानुमानद्वयमूहितम्। साध्याभावं नित्यत्वं पक्षीकृत्य प्रवृत्तमनुमानमेकमिति।

पक्षनिष्ठधर्मं पक्षीकृत्य प्रवृत्तमेकमनुमानम्। सपक्षनिष्ठधर्मं पक्षीकृत्य प्रवृत्तमेकमनुमानम्। विपक्षनिष्ठधर्मं च पक्षीकृत्य प्रवृत्तमेकमनुमानम्। यद्यपि यावन्ति अनुमानानि पक्षमधिकृत्य, प्रवृत्तानि न तावन्ति सपक्षविपक्षसाध्य-साध्याभावानधिकृत्य प्रवृत्तानि। अथ च न पक्षसपक्षविपक्षसाध्य-साध्याभावधर्मानधिकृत्य प्रवृत्तानि दृश्यन्ते। तथापि प्रकृतपक्षमधिकृत्य यान्यनुमानानि प्रवृत्तानि दृश्यन्ते तानि सर्वाण्यपि सपक्षविपक्ष-साध्यसाध्याभावान् पक्षीकृत्य तद्धर्मांश्च पक्षीकृत्य सम्भवन्ति। उक्तञ्च ग्रन्थकारेण 'यावत्यश्च महाविद्या मूलानुमानपक्षं पक्षीकृत्य प्रवृत्तास्तावत्यः साध्याभावमपि पक्षीकृत्य प्रयोक्तव्याः।

तेषामत्र प्रदर्शनं नानर्थकम्। मूलानुमानपक्षातिरिक्तान् सपक्षविपक्ष-साध्यसाध्याभावान् पक्षसपक्षविपक्षसाध्यसाध्याभावधर्मांश्चाधिकृत्य प्रवृत्तान्यपि अनुमानानि शब्दस्यानित्यत्वमेव साधयन्ति। अतो न निर्मूलानि। तानि हि स्वस्वपक्षेषु परिकल्पितमहाविद्यासाध्यं साधयन्ति शब्दे पारिशेष्यादनित्यत्वं निश्चिन्वन्ति। अतः सर्वेषां महाविद्यानुमानानामेकमेवोद्देश्यं शब्देऽनित्यत्व-साधनम्।

महाविद्यानुमानखण्डने प्रवृत्त आचार्यः खण्डनात् प्राक् प्रथमपरिच्छेदे महाविद्यास्वरूपं सम्यक् प्रतिपाद्य द्वितीयतृतीयपरिच्छेदयोस्तत्स्वरूपं सयुक्ति अखण्डयत्। तेनाज्ञात्वा खण्डितमिति कथनस्यावसरो नास्ति। अतः प्रथम परिच्छेदे सप्रपञ्चं महाविद्याऽनुमानस्वरूपं निरूपितम्। एतेन महाविद्याऽनुमानखण्डकारेण तत्स्वरूपाणि कथं प्रतिपादितानि, इत्यपि निरस्तं वस्तुस्वरूपावगतिमन्तरा खण्डनायोगात्।

**केवलान्वयिस्वरूपनिरासः**

द्वितीयपरिच्छेदे हि केवलन्वयिस्वरूपं निराकृतम्। केवलान्वयि-स्वरूपानिष्पतावन्वयव्यतिरेक्युनुमाविधौ केवलान्वयित्वेन प्रयुज्यमान-महाविद्याऽनुमानस्य का कथा। तथोक्तं वादीन्द्रचन्द्रेण 'केवलान्वयिहेतोरेव निर्वक्तुमशक्यात्' केवलान्वस्वरूपखण्डनविधौ . कल्पद्वयमुपस्थाप्य निराकृतम्। किं केवलान्वयित्वाधारो हेतुः केवलान्वयी? किं वा केवलान्वयित्वाधारव्याव्यः। नाद्यः परमाणुः प्रत्यक्षः द्रव्यत्वात् घटवदिति आकाशम् अभिधेयं नित्यत्वात्

गोत्ववदित्यादीनामसंग्रहप्रसङ्गात्। नापि द्वितीयः केवलान्वयिस्वरूपस्य निरूपणात् प्राक् तदधारव्याप्यस्य निरूपणमशक्यम्। इत्थं पूर्वं केवलान्वयिनः स्वरूपं निरस्य तदनन्तरं केवलान्वयिविषयकं प्रमाणं निराकरोति।

**केवलान्वयिविषयकप्रमाणनिरासः**

केवलान्वयिधर्मसत्तायां नापि किमपि मानम्। केवलान्वयित्वं नाम अत्यन्ताभावाप्रतियोगित्वं सकलवस्तुनिष्ठत्वं वा तच्च प्रमेयत्वादीनां सकलपदार्थवृत्तित्वं न प्रत्यक्षप्रमावेद्यं सकलवस्तुविषयकप्रत्यक्षाप्रसिद्धेः। नाप्यनुमानं तथा हि यदि मेयत्वं पक्षीकृत्य सकलवस्तुनिष्ठत्वं साध्यते? तदा सकलवस्तुनिष्ठत्वस्याद्याप्यसिद्धतया साध्याप्रसिद्धिदोषापत्तेः। यदि च सकलवस्तुनिष्ठत्वं पक्षीकृत्य प्रमेयत्वादिनिष्ठत्वं साध्यते, तदाऽपि सकलवस्तुनिष्ठत्वस्याप्रसिद्ध्याऽऽश्रयासिद्धेर्दुर्धरत्वात्। सकलवस्तूनि पक्षीकृत्य प्रमेयत्वाधारत्वं साध्यते? इति चेन्न सकलवस्तूनां पक्षकोटौ प्रविष्टतया दृष्टान्ताप्रसिद्धेः। नापि शाब्दं प्रमाणं प्रक्रमते, केवलान्वयिस्वरूपं बोधयितुम्। प्रत्यक्षानुमानाभ्यामसिद्धविषयकस्य वन्ध्यापुत्रादिविषयकशब्दज्ञानस्येवालीक-विषयत्वात्।

न च प्रत्यक्षानुमाभ्यामवेद्यब्रह्मविषयकश्रुतेः प्रमाण्यमिव केवलान्वयि-विषयकशब्दस्य प्रामाण्यं स्यादिति वाच्यम्, ब्रह्मणोऽहमितिप्रत्यक्ष-प्रत्ययवेद्यत्वात्। यत्साक्षादपरोक्षाद्ब्रह्म' (बृहदा. ३.४.१) इति श्रुत्या ब्रह्मण एव प्रत्यक्षबोधनाच्च। न हि प्रत्यक्षादिज्येष्ठप्रमाणनिर्पेक्षस्य श्रुतिप्रमाणस्य साम्यं मनागपि भजते, केवलान्वयिविषयकं शब्दमानम्। 'तत्त्वमसि' (छा. ६.८.७) अहं ब्रह्मास्ति (बृह. १.४.१०) इति श्रुतिप्रतिबोधितं ज्ञानं निर्विकल्पक-प्रत्यक्षत्वेनामनन्ति तत्वविदः। अतस्तत्त्वावेदकश्रुतिप्रमाणेन साम्यं नास्ति कस्यचिदन्यशब्दप्रमाणस्येति।

न च 'प्रमेयत्वादयः सम्प्रतिपन्नैतद्धर्मत्वरहिताधिकरणं वस्तुत्वात् घटवदिति महाविद्याऽनुमानेन प्रमेयत्वादीनां केवलान्वयित्वं साधयितुं शक्यत? इति चेन्न महाविद्याया वक्ष्यमाणोपाध्यादिदोषदूषितत्त्वात्। एतेनोदयनादि-पूर्णाचार्याणां घटादिनिष्ठमत्यन्ताभावप्रतियोगित्वमङ्गीकृत्य अत्यन्ताभाव-प्रतियोगित्वं कुतश्चिद्व्यावृत्तमित्यादिप्रयोगोऽपि निरस्तः। यदि अत्यन्ताभावा-प्रतियोगित्वरूपो धर्म्येव नास्ति, तदा कं पक्षत्वेनाधिकृत्य कुतश्चिद्व्यावृत्तत्वं साधयेत्। अत्यन्ताभावाप्रतियोगित्वरूपो यदि धर्म; स्यात्तदा तं पक्षत्वेनाश्रित्य कुतश्चिद्व्यावृत्तत्वं साधयेत्। धर्माधारो हि धर्मीति व्यवस्थितेः। अथ च

अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् अत्यन्ताभावस्याप्रसिद्ध्या तत्प्रतियोगित्वाप्रतियोगित्वयोरप्रसिद्धेः।

**अत्यन्ताभावविषयकप्रमाणनिरासः**

लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः। अत्यन्ताभाववस्तुविषयकं न किमपि लक्षणं न वा मानम्। अत्यन्ताभावप्रतियोगित्वाभाववत् केवलान्वयीति उक्तम्। अन्योन्याभावप्रागभावप्रध्वंसाभावव्यतिरिक्तसंसृज्यमानप्रतियोगिनिरूप्येहघटो नास्तीत्यादिप्रतीतिसाक्षिकस्यात्यन्ताभावस्याप्रसिद्धेः। ननु इह घटो नास्तीति प्रत्यक्षप्रमाणसिद्धोऽत्यन्ताभाव इति चेन्न इह घटो नास्तीत्यत्र एतद्घटैतद्भूतलाश्रयाश्रयिभावस्यैव प्रतीतेः।

**अत्यन्ताभावविषयकार्थापत्तिप्रमाणनिरासः**

अथ यदीह भूतले घटाभावाभावस्तर्हि घटः स्यादित्यर्थावत्तिप्रमाणेन घटात्यन्ताभावः संसाध्यते। यतश्च घटाभावेऽपोद्यमाने हि घटभाव एवाशिष्यते। घटस्याभावो घटाभावः, तस्याप्यभावो घटाभावाभावो घट इत्यर्थः। द्वौ नञौ समाख्यातौ पूर्वोक्तमेवार्थं गमयतः इति न्यायात्। तदोच्यते 'उपपाद्यज्ञानेनोपपादकल्पनमर्थापत्तिः। उपपाद्यज्ञानत्वावच्छिन्नोपपाद्यज्ञनिष्ठोपपादकज्ञानीयजन्यतानिरूपितजनकतानिरूपितजन्यतावदुपपादकज्ञानमित्यर्थः। तत्रोपपाद्यज्ञानमापादकम् उपपादकज्ञानञ्चोपपाद्यं भवति। अत्र च घटाभावाभावज्ञानेन एतद्घटैतद्भूतलसंसर्ग आपाद्यते, क्वचिद् भूतलादौ घटो वा? नाद्यः यदीह भूतले घटाभावाभावस्तर्हि एतद्घटैतद्भूतलसंसर्गः स्यादित्यत्र तर्के आपाद्यासिद्धिनामकतर्कदुषणस्य सत्त्वात्। द्वितीयकल्पस्येष्टत्वात्। स्वीक्रियते हि अस्माभिर्घटाभावाभावे सति क्वचिद्भूतलादौ घटसत्त्वम्।

अथ च यद् घटाभावाभावज्ञानमापादकं तद्विषयीभूतो द्वितीयोऽभावः किं घटप्रागभावस्याभावः, किं वा घटप्रध्वंसाभावस्याभावः, किं वा घटान्योन्याभावस्याभावः? त्रयमपि न सम्भवति, घटप्रागभावप्रध्वंसाभावान्योन्याभाववति घटे घटस्याविद्यमानत्वेन आपाद्यापादकयोर्व्याप्तिभङ्गात्। एतन्त्रितयाभावप्रतियोगिकाभावव्यतिरिक्ताभावो नास्ति, येन भूतले घटः, एतद्घटैतद्भूतलसंसर्गो वा आपाद्येत।उपपाद्योपादकयोर्व्याप्त्या भाव्यम्। उपपाद्यञ्चात्र घटाभावाभावज्ञानम्, उपपादकञ्च एतद्घटैतद्भूतलसंसर्गः, घटसत्त्वं वा। उपपाद्यं सर्वत्र व्याप्यम् उपादकञ्च व्यापकं भवति। व्यापकाभाववति व्याप्यस्य वृत्तौ व्याप्तेर्व्यभिचारात्। तथा हि यदा कयाचिन्मन्त्रशक्त्या केनापि पुरुषेण गगने घटः स्थापितस्तदा घटैतद्भूतलसंसर्गरूपव्यापकस्याकाशेऽसत्यपि घटात्यन्ताभावाभावस्य सत्त्वेन व्यभिचारात्।

**केवलान्वयित्वधर्मनिरासः**

अथेदानीम् अत्यन्ताभावाप्रतियोगित्वरूपं केवलान्वयित्वधर्मं निराकरोति। तथा हि प्रमेयत्वादिकं स्वस्मिन् वर्तते न वा? पक्षद्वयेऽपि दोषमाह। स्वस्मिन् स्वस्य केनापि सम्बन्धेन वृत्तिताऽभावात्। न हि प्रमेयत्वे प्रमेयत्ववृत्तिःसम्भवा, आत्माश्रयरूपदोषात्। अभिधेयत्वादिकं यत्प्रयेयत्वेनाश्रितं यच्च घटादिकं प्रमेयं प्रमेयत्वधर्माश्रयस्तत्प्रमेयत्वं न भवत्येव। अयमाशयः—अभिधेयत्वादिधर्मेषु घटादिप्रमेयेषु च प्रमेयत्वं वर्तते। परन्त्वभिधेयत्वादिकं प्रमेयं न प्रमेयत्वस्वरूपम्। तेनाभिधेयत्वप्रमेयत्वादौ प्रमेणत्वस्य वृत्तावपि प्रमेयत्वरूपत्वाभावात् प्रमेयत्वे प्रमेयत्वस्य वृत्तिर्नास्त्येव। अत एवोक्तम् **'स्वस्मिन् वृत्तिरवर्तनेन सहिता व्याघात संत्रासिता'**। यथा या माता सा बन्ध्या न भवतीति नियमः। तथा यत् प्रमेयत्वाश्रितम् अभिधेयत्वादिकं प्रमेयं यच्च प्रमेयत्वाश्रयः तत् प्रमेयत्वं न भवत्येवेति नियम उभयत्रापि व्याघातदोषतुल्यत्वात्।

**केवलान्वयिव्याप्तिनिरासः**

इत्थं केवलान्वयिधर्मस्वरूपं निरस्याथेदानीं केवलान्वयिधर्मेण सह-व्याप्तिं निराकरोति। साध्याभाववद्वृत्तित्वाभावो हि व्याप्तिः। व्याप्यत्वञ्चा-विनाभाव इति चोच्यते। तस्यैवान्वयव्यतिरेकाभ्यां धूमादिनिष्ठस्यानु-मित्याङ्गताऽवधारणात्। न हि केवलान्वयिना धर्मेण सह कस्यचिदपि हेतोः साध्याभाववद्वृत्तित्वाभावरूपा व्याप्तिः शक्याऽवगन्तुम्। केवलान्वयिनि साध्याभाववदप्रतीतौ तद्वृत्तित्वाभावस्य दुरधिगमात्। अत आह—

**साध्याभाववदाश्रितत्त्वविरहो धूमादिलब्धस्थितिः।**
**व्याप्तिः सा न हि केवलान्वयवता धर्मेण संगच्छते।।**

इत्थं द्वितीयपरिच्छेदे केवलान्वपिधर्मं निरस्य तद्घटितमहाविद्याऽनुमानं निरस्तम्।

तृतीयपरिच्छेदे हि महाविद्याऽनुमाने व्यभिचारादिहेत्वाभासदोषान् दर्शयति। अत्र पूर्वं हेत्वाभासस्वरूपं सप्रपञ्चोपवर्णितम्। तदनु उपाध्यादिदोषान् महाविद्यानुमाने निरूपयति। तत्रादावुपाधिदोषं दर्शयति।

**महाविद्याऽनुमान उपाधिदोषदर्शनम्**

साध्यव्यापके सति साधनाव्यापकत्वम् उपाधित्वम्। साध्यश्चात्र तदेवय द्विप्रतिपन्नं परं प्रति मेयत्वादिहेतुना पक्षीभूते शब्दे बोधयितुमीष्टम्। 'अयं शब्दः

स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वात् घटवत्' इत्यनुमानेन शब्देऽनित्यत्वं परं प्रति बोधयितुममिप्रेतम्। तच्चानित्यत्वं घटपटाद्यनित्येषु सिद्धं तत्राश्रावणत्वमप्यस्तीति साध्यव्यापकं मेयत्वं शब्दे शब्दधर्मे शब्दत्वे चास्ति, तत्राश्रावणत्वं नास्तीति साधनाव्यापकम् अश्रावणत्वस्य। अत उक्तम्—

**यो भङ्गिस्थनिवृत्तिमत्वरहितो यद्वर्जिते मेयता।**
**मेयत्वे श्रुतिगोचरत्वविरहः स स्यादुपाधिर्ध्रुवः।।**

अश्रावणत्वोपाधिपक्षे पूर्वपक्षत्वेन यावतो दोषानुपस्थाप्य निराकरोत् स्वयमेव ग्रन्थकारः। अयञ्चाश्रावत्वोपाधिः सपक्षविपक्षादीन् पक्षीकृत्य प्रवर्तमान-महाविद्याऽनुमानेष्वप्यस्ति। उक्तञ्च **'सर्वत्रैवमुपाधिरप्रतिहतः'** यदि च मेयत्वहेतुके महाविद्याऽनुमानेऽश्रावणत्वं नोपाधिस्तदा 'अयं शब्दोऽनित्यः सामान्यवत्त्वे सति अस्मद्बाह्यप्रत्यक्षत्वादित्यत्रापि अश्रावणत्वमुपाधिर्न भविष्यति, उभयोः, समत्वादविशेषादित्याह—'नो चेन्न हेत्वन्तरे'।

**महाविद्याऽनुमाने विरुद्धहेत्वाभासनिरूपणम्**

मेयत्वादिहेतुर्यथा पक्षीकृतशब्दे स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधि-करणत्वं महाविद्यासाध्यं साधयन् पक्षे साध्यप्रतीत्यपर्यवसानाद्वाद्यभिमतमनित्वं साधयति। तथैव प्रतिवाद्यभिमतं तदत्यन्तान्ताभावं नित्यत्वमपि स्वस्वेतरवृत्तित्वरहितानित्यत्वात्यन्ताभाववन्निष्ठाधिकरणत्वं महाविद्यासाध्यं साधयन् पक्षे साध्यप्रतीत्यपर्वसानान्नित्यत्वमपि साधयति। हेतुभेदाभावेन तुल्यबलः साध्याभावसाधकोऽभीष्टविरुद्धः, इति लक्षणात्, अत एवोक्तम्—

**किञ्चिद्व्यापकमीप्सितं तदपरं भेदस्तयोःकीदृशः।**
**साध्यत्वे तदभावसाधकतया लोके विरुद्धस्थितिः।।**

शिवादित्यभिश्रस्तु विरुद्धं न हेत्वाभासान्तरत्वेनाभिमन्यते। सत्प्रतिपक्षमेव विरुद्धत्वेनाभिजनाति। तन्मतं दूषयन्नाह—साध्याभावसाधको यः पूर्वहेतोस्तुल्यबलो द्वितीयहेतुस्तत्रैव पूर्वाचार्याणां सत्प्रतिपक्षव्यवहारः। यत्र च प्रकृतहेतुरेव साध्याभावसाधकत्वेन प्रवृत्तस्तत्र विरुद्धत्वव्यवहार एवोचितः। साध्याभावसाधकमात्रेण यदि विरुद्धत्वे सत्प्रतिपक्षत्वव्यवहारस्तदा तत्साम्यात् सत्प्रतिपक्षत्वेऽपि विरुद्धत्वव्यवहार आपाद्येत। एवमेव सपक्षविपक्षादीन् पक्षीकृत्य प्रवर्तमानमहाविद्याऽनुमानेष्वपि अनित्यत्वपदस्थाने अनित्वात्यन्ताभावपदं प्रक्षिप्य साध्यप्रतीत्यपर्यवसानादनित्यत्वात्यन्ताभावसाधकत्वमुपपाद्य अभीष्टविरुद्धता द्रष्टव्या।

**महाविद्याऽनुमाने व्यभिचारदोषप्रदर्शनम्**

महाविद्याऽनुमाने व्यभिचारदोषोऽप्यस्ति। तथाहि सर्वं वस्तु स्वनिष्ठात्यन्ताभावप्रतियोगीति नियमः। स्वस्मिन् स्वस्य केनापि सम्बन्धेन वृत्तित्वाभावात्। महाविद्यासाध्यस्य स्वस्मिन् केनापि सम्बन्धेन वृत्तित्वायोगात् तस्यापि च मेयतया मेयत्वस्य वर्तमानत्वात्,साध्याभाववति मेयत्वस्य वृत्तित्वं सपन्नम् उक्तञ्च—

**त्वत्साध्यं स्वभिदान्यमेयनिहिताऽभावान्वितत्वाश्रयः**
**मेयत्वादिति केवलान्वयिमतेऽस्माकं तु तद्भेदतः।**
**यद्वा मेयनिवृत्तताधिकरणं साध्यं त्वदीयं ततो**
**भिन्नत्वादिति साध्यवर्जिततनौ लब्धास्थितिर्मेयता।।**

**महाविद्याऽनुमाने सत्प्रतिपक्षत्वप्रदर्शनम्**

महाविद्यासाध्यात्यन्ताभावसाधकस्तुल्यबलो हेत्वन्तरोऽपि चिन्तनीयः। अतो महाविद्याऽनुमाने सत्प्रतिपक्षरूपहेत्वाभासोऽप्यस्ति उक्तञ्च—

**अथ सत्प्रतिपक्षत्वं पक्षिराजस्य पक्षतिः।**
**पराभवति दुर्वारमहाविद्याभुजङ्गान्।।**

पक्षीभूते शब्दे महाविद्यासाध्याभावसाधकं तुल्यबलं हेत्वन्तरं परिचिन्तयन् अनुमानप्रयोगं रचयति। 'अयं शब्दः एतदितरवृत्तित्वरहितानित्य-निष्ठाधिकरणात्यन्ताभाववान् एतदन्यत्वरहितत्वात्, यत्पुनरेतदितरवृत्तित्व-रहितानित्यनिष्ठाधिकरणत्वात्यन्ताभाववान् न तदेतदन्यत्वरहितं न यथा घटः। इति केवलव्यतिरेक्यनुमानप्रयोगद्वारा महाविद्यासाध्याभावसाधकं हेत्वन्तरं पर्यकल्पयत्। एतदन्यत्वरहितत्वघटकैतत्पदेन पक्षीकृतशब्दो गृह्यते। तदन्यत्वं भेदः शब्दातिरिक्तेषु सकलेषु, तद्रहितत्वं पक्षीभूते शब्दे सत्वात्। घटादिषु एतच्छब्दान्यत्वमेवाप्ति नान्यत्वरहितत्वमिति अनुमानप्रयोगसङ्गतिः।

अत्र महाविद्याऽनुमानवादी स्वानुमानप्रयोगं सर्वदोषकलङ्कानाकुलषितं मत्वाऽऽशङ्कते। महाविद्याऽनुमानसाध्याभावेन सह एतदन्यत्वरहितत्वस्य व्याप्तिरेव नास्ति। तथा हि 'साध्यभाववद्वृत्तित्वरहितत्वे सति साध्यवद्वृत्तित्वं साध्यव्याप्यत्वं (व्याप्तिः) लक्षणघटकसाध्यस्वरूपज्ञानमन्तरेण निरूपयितुम-शक्यत्वात्। स्वप्रयोगमपतितं दोषं निराकुर्वन्नाह महाविद्याऽनुमानखण्डनकारः। साध्याभाववद्वृत्तित्वरहितत्वमात्रेण व्याप्यत्वसिद्ध्यानुमानोपपत्तौ साध्यवद्वृत्ति-त्वस्य वैयर्थ्येन व्याप्यकोटावनिवेशात्। ननु साध्याभाववद्वृत्तित्वरहित्वमात्रस्य

व्याप्यत्वे गगनाद्यवृत्तिपदार्थानामपि प्रकृतसाध्यव्याव्यत्वप्रसङ्गः, तेषामप्यनाश्रितत्वेन प्रकृतसाध्याभाववदाश्रितत्त्वविरहात्। तथा सति गगनादीनां प्रकृतसाध्यानुमापकत्वप्रसङ्ग इति चेन्न। तेषां व्याप्यत्वेऽपि क्वचिदाश्रितत्वरहितत्वेन पक्षधर्मत्वानुपपत्तेः। व्याप्यस्य पक्षवृत्तित्वमन्तरेणानुमितेरुत्पादाभावात्। अत एवोक्तम्—

**धर्मी च त्वदभीष्टसाध्यरहितः साध्यस्तदेकाश्रितैः**
**साध्याभाववदाश्रितत्वरहितैः साध्यप्रसिद्धिः पुनः।**
**साध्यं ते स्वभिदान्यजन्यनिघनाऽनाक्रान्तभावस्फुर**
**द्भेदस्य प्रतियोगितत्वविरहादित्यादिभिर्जायते।।**

न च प्रकृतमहाविद्यसाध्याभावाप्रसिद्ध्याऽप्रसिद्धविशेषणता महाविद्यासाध्याभावसाधकानुमाने, पक्षीकृतशब्दतदितरवृतित्वरहितानित्यनिष्ठाधिकरणत्वं स्वान्योन्याभावव्यतिरिक्तप्राक्प्रध्वंसाभावत्वरहिताभावप्रतियोगित्वाश्रयः स्वान्योन्याभावव्यतिरिक्तप्राक्प्रध्वंसाभावत्वरहिताभावप्रतियोगित्वात् घटवत्, इत्यादिना साध्यप्रसिद्धेः।

**महाविद्याऽनुमाने महाविद्याऽनुमानद्वारा हेत्वाभासनिरूपणम्**

अथ च महाविद्याऽनुमानेषु महाविद्याऽनुमानद्वाराऽपि सप्रतिक्षतादिहेत्वाभासदोषाणां निरूपणं शक्यते। पूर्वं महाविद्यासाद्ये महाविद्यासाध्यस्य केनापि सम्बन्धेन वृत्तित्वाभावात्। तत्र च मेयत्वस्य वर्तमानत्वात् साध्याभाववद्वृत्तितया मेयत्वे व्यभिचारदोषः प्रदत्तः।

अथेदानीं प्रकृतमहाविद्यासाध्यं पक्षीकृत्य महाविद्याऽनुमानप्रयोगद्वारा प्रकृतमहाविद्यासाध्ये महाविद्यासाध्यस्याभावं निरूप्य तत्र च मेयत्वहेतोर्वृत्तितामाकलय्य व्यभिचारः प्रतिपाद्यते। अनुमानप्रयोगश्चेत्थम् 'एतच्छब्दैतच्छब्देतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं वा महाविद्यासाध्यं स्वस्वेतरवृत्तित्वरहितमेयत्ववन्निष्ठात्यन्ताभावप्रतियोगिनिष्ठाधिकरणं मेयत्वात्। एवमेव सत्प्रतिपक्षत्वादिदोषा अपि शक्यन्ते।

**व्यवस्थाभङ्गरूपविप्लावकत्वदोषः**

महाविद्याऽनुमानस्वीकारे व्यवस्थारहितत्वरूपो महान् दोषः। महाविद्याऽनुमानेन यथा शब्दे पारिशेष्यात् अनित्यत्वं साध्यते। तद्वत् गगनादिनित्येष्वपि महाविद्याऽनुमानद्वाराऽनित्यत्वं साधयितुं शक्यते। अथ च नित्यज्ञानेच्छावतीश्वरे महाविद्याऽनुमानद्वाराऽनित्यज्ञानेच्छादिमत्त्वं साधयितुं शक्यते। तेन महद्विप्लावकत्वं व्यवस्थारहितत्त्वं स्यात्। अतो महाविद्याऽनुमानस्वरूपमस्वीकार्यम्।

उक्तञ्च—

'किञ्च स्वव्यभिचारमुल्लयति प्रोमीलयत्यात्मनः
स्वोपाधित्वमुदाहरत्यभिमतव्याप्यभङ्गं निजम्।
आचष्टे प्रतिपक्षमात्मविषयं बाधां समुन्मुद्रय
त्याधत्ते स्थितिविलवं च भजते प्रत्यर्थितामात्मनः।।

**व्याप्त्यभावरूपो दोषः**

अथ च साध्याभाववद्वृत्तित्वाभावनिश्चय एवानुमानाङ्गम्। हेतुमन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यरूपव्याप्तेरस्वीकारात्। सा चात्र केवलान्वयिरूपमहाविद्याऽनुमाने न सम्भवति। व्याप्तिलक्षणस्य साध्याभावघटितत्वेन केवलान्वयिरूपे साध्याभावानिश्चयात्। एवञ्च पक्षीभूते शब्दे सिद्ध्यतु नाम स्वस्वेतवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरूपं महाविद्यासाध्यम् अनित्यत्वं कथं सिद्ध्यति। प्रतित्यपर्यसानादिति चेन्न, भवदभिमतप्रतीत्यपर्यसाने मानाभावात्। महाविद्याऽनुमानवादी पृच्छति चेत्, महाविद्या प्रमा अप्रमा वा? प्रमेति पक्षे महाविद्यास्वरूपस्वीकृतिः। अप्रमेतिपक्षे तत्स्वरूपं प्रतिपाद्य खण्डनं कथम्। तदुच्यते नास्माकं महाविद्याप्रमा न वा अप्रमा तत्स्वरूपप्रतिपादनं तु शिष्याणां परिज्ञानाय। महाविद्याऽनुमानं न प्रमाणं हेत्वाभासतुल्यत्वात्, अतो वादिविजयाय प्रमाणत्वेनावगम्य न प्रयोज्यमिति स्वशिष्यप्रबोधाय खण्डनात् प्राक् तत्स्वरूपं प्रतिपादितम्। इत्थं तृतीयपरिच्छेदे महाविद्याऽनुमानस्वरूपं सर्वतोभावेन निराकृतम्। खण्डनप्रकारः संक्षेतोऽत्र वर्णितः विस्तरो ग्रन्थे द्रष्टव्यः।

**महाविद्याकर्तृत्वकालत्वविचारः**

महाविद्योपाख्यानं नैकदर्शनग्रन्थेषु दृश्यते। तद्यथा—पत्युरसामञ्जस्यात् (ब्र.सू. २.२.३७) इति सूत्रस्थशाङ्करभाष्यभामतीटीकाटीकायाममलानन्दयतिकृतकल्पतरौ 'एवं सर्वा महाविद्यास्तच्छाया वान्ये प्रयोगाः खण्डनीयाः' चित्सुखाचार्यकृततत्वप्रदीपिकायान्तु बहुशो महाविद्याप्रयोगा दृश्यन्ते। यथा ज्ञानस्य स्वप्रकाशत्वसाधनविधाववेद्यत्वप्रतिपत्तौ महाविद्याप्रयोगः 'अथवा अयं घटः एतद्घटान्यत्वे सति वेद्यत्वानधिकरणान्यः पदार्थत्वात् पटवत्' एवं द्रव्यत्वप्रमाणनिराकरणप्रकरणेऽपि 'तदेवं जातौ व्यञ्जकप्रमाणयोरसम्भवेनाकाशवृत्तिसत्तावान्तरजातियोगि, क्रियासमानाधिकरणसत्तावान्तरजातियोगि संयोगवद्वृत्तिसत्तावान्तरजातियोगि द्रव्यमित्येवमादीनि जातिपुरस्कारप्रवृत्तानि

महाविद्यालक्षणानि निरस्तानि वेदितव्यानि' एवं नयनप्रसादिन्याख्य-तत्त्वप्रदीपिकाटीकायामपि बहुशो महाविद्याऽनुमानमुपवर्णितमस्ति। तद्यथा 'अवीतपदचार्यैरकार्यान्वयगोचरा: महाविद्या: पुनर्दिव्या दीप्यन्त्यत्रानिवारितम्। तथा विमतं ज्ञानमेतज्ज्ञानविज्ञानविषयत्वे सति वेद्यत्वरहितज्ञानविषय: पदविषयत्वात् घटवदित्यादिमहाविद्याभिरपि समर्थनीयं स्वप्रकाशत्वम्।

आनन्दज्ञानविरचिते तर्कसंग्रहेऽपि आत्मत्वं स्पर्शवदवृत्तिज्ञानवद्-वृत्तिजात्यन्यत् जातित्वात् आभाससमानता इति चेत् तर्हि सर्वास्वेव महाविद्यासु एवमाभाससमानतासम्भवादुच्छिन्नसंकथास्ता: स्यु:, श्रीमद्वेङ्कटनाथवेदान्ताचार्य-प्रणीते न्यायपरिशुद्धिग्रन्थेऽपि 'अत एव महाविद्यादिरूपकेवलान्वयि-नामप्यनकाश: अव्याहतसाध्यविपर्ययत्वात्। अन्यथा तेषां सर्वसाधकत्व-सामर्थ्याभ्युपगमभङ्गप्रसङ्गात्। श्रीनिवासाचार्यकृतन्यायसाराख्यन्यापरिशुद्धि-टीकायामपि 'अव्याहतसाध्यविपर्ययत्वादेव कुदृष्टिभि: स्वाभिमतसाधनत्वे-नोत्प्रेक्षितानि महाविद्याऽनुमानानि आभासीकृतानीत्याह, तत्त्वमुक्ताकलापे च 'अतो वक्रानुमानं केवलान्वयिरूपमपि साधनजातिरेव स्वव्याघातात्। जातिर्द्विविद्या साधनजातिर्दूषणजातिश्च। तत्र साधनजातिमहाविद्या दूषणजाति: प्रतिधर्मसमाधिरिति विचक्षणानां निर्णय:, एतत्सर्वं विडम्बने विस्तरेण द्रष्टव्यम्। अतो वक्रानुमानस्य नानुमानप्रसङ्ग इति।

माधवाचार्यकृते सर्वदर्शनसंग्रहाख्यग्रन्थेऽपि "एवं च कर्तृव्यावृत्ते-स्तदुपहितसमस्तकारणव्यावृतावकारणककार्योत्पादप्रसङ्ग इति स्थूल: प्रमाद:। तथा निरटङ्कि शङ्करकिङ्करेण अनुकूलेन तर्केण सनाथे सति साधने। साध्यव्यापकताभङ्गात् पक्षेनोपाधिसम्भव:"। अथ च शेषसार्ङ्गधरकृताया न्यायमुक्तावल्या लक्षणावलीटीकायाञ्च 'नच केवलान्वयित्वेन सत्प्रतिपक्षत्वा सम्भव:। केवलान्वयित्वस्यैवात्रासम्भवात्। दशश्लोकीविडम्बने तद निरुक्तेरक्तत्वात्।

यत्रापि ग्रन्थे महाविद्याऽनुमानस्य चर्चा विद्यते तत्र सर्वत्रापि महाविद्याविडम्बनस्य नामोल्लेख: यद्वा दशश्लोकीग्रन्थनामोल्लेखो विद्यते। एतेन ज्ञायते, यदुक्तग्रन्थेषु महाविद्याविडम्बनग्रन्थप्रतिपादितं महाविद्याऽ-नुमानमेवान्वितम्। इत: पूर्वमपि महाविद्याऽनुमानसदृशानुमानां प्रचारप्रसार आसीदिति विप्रतिविषय:। तथापि निर्मूलस्य निर्बीजस्य च प्रस्थानस्य प्रसारान्यथानुपपत्या किञ्चिन्मूलं बीजं वा मृग्यते।

यत: स्वसिद्धान्तप्रतिपत्तये परमतनिरासाय च प्रमाणव्यवस्थाया अवश्यं-भावितया स्वपक्षासक्तो वादी काञ्चिदपि प्रमाणव्यवस्थामङ्गीकरोति। तत्र यदि

सदनुमानेन विजयं न पश्यति। तदाऽसदनुमानमाश्रयते। अतो महाविद्याऽनुमानां बीजं पूर्वमपि आसीत्। कारिकाभिरनुबन्धनं श्रीमता कुलार्कपण्डितेन कृतम्। विस्तरेण पल्लवनं महाविद्याविडम्बनग्रन्थे पण्डितप्रवरेण श्रीमता वादीन्द्रेन, महाविद्याविडम्बनटीकाकारेण श्रीभुवनसुन्दरसूरिमहाशयेन च कृतम्।

यथा नव्यन्याप्रवर्तकाद्याचार्यत्वेन गङ्गेशोपाय एव सर्वैरभिमत:। तत: पूर्वं नव्यन्यायशैली आसीदेव नहि इति न। चिन्तामणिग्रन्थोदयात् प्रागपि प्राच्यग्रन्थेषु अनुमितिस्वरूपं तत्कारणीभूतव्याप्तिज्ञानस्वरूपं हेत्वाभासस्वरूपं चोपलभ्यते। यथावस्थितरूपेण विस्तरेण च सम्यक्तयेयं शैली गङ्गेशोपाध्यायेन प्रतिपादितेत्येव तथ्यम्। उक्तानुक्तलक्षणदोषनिरासपुर:सरं प्रमाणप्रयोगाणां यथोक्तस्वरूपप्रतिपादनं सविस्तरं गङ्गेशोपाध्यायेन कृतमिति, आद्यकर्तृत्वेनाभिमत: सर्वैरित्येव तथ्यम्।

अध्ययनाध्यापनविधौ तत्त्वप्रदीपिकादिग्रन्थेषु बहुशो महाविद्याऽनुमानान्यालोक्य, कोऽयं महाविद्याऽनुमानप्रतिपादको मूलग्रन्थ इति जिज्ञासाऽजायत। चिरात् प्रकाशितोऽयं महदायासेन कथंचिदधिगत:। अयं ग्रन्थ इत: प्राग्विंशत्युत्तरैकोनविंशतितमे (१९२०) खीष्टाब्दे बारोदानगरे गुजरातप्रान्ते प्रकाशित:। इदानीं पुस्तकविक्रयस्थानेषु नोपलभ्यते। अतोऽस्य प्रकाशनमावश्यकमासीत्। अतिदुरूहस्यास्य राष्ट्रभाषया व्याख्यानमशक्यमासीत्। तथापि नव्यन्यायतर्कवागीशानां स्वाध्यापनकौशलेन विहितानेकाप्रतिमप्रतिभाकशिष्याणां देशे विदेशे च प्रथितधवलकीर्तीनां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये न्यायवैशेषिकविभागाध्यक्षचरणां राष्ट्रपतिपुरस्कारमाजां पूज्यपाद **पं. श्री वशिष्ठत्रिपाठि**गुरुचरणानामध्यापनाधिगतसमर्थोऽहमस्य ग्रन्थस्य भाषाटीकाकरणे सफलोऽभवहम्।

अथ च लेखे यत्किमपि शास्त्रसम्मतं विद्वन्मनोरञ्जकञ्च तत्त्वं तत् सर्वं व्याकरणवेदान्ताद्यनेकशास्त्रतलस्पर्शिपाण्डित्यानां तप:स्वाध्यायप्रवचनैर्निर्जितसकललोकवासनानां दयाकारुण्योदारसमेधितान्त:करणानां छात्रकल्याणैकवृत्तीनाम् अधिसम्पूर्णानन्दसंस्कृतविश्वविद्यालयं वेदान्तविभागाध्यक्षचराणां राष्ट्रपतिसम्मानभाजां **प्रो. पारसनाथद्विवेदि**गुरुचरणानामध्यापनफलम्। याश्चात्र त्रुट्यस्ता: सर्वा मम जडताफलरूपा: सन्ति। श्रीमद्गुरुचरणकमलेषु सश्रद्धं प्रणतिं निवेद्य, ग्रन्थप्रवृत्तिप्रयोजकानां कृतज्ञां ज्ञापयामि।

कृतज्ञताज्ञापनविधौ सर्वप्रथमं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिपदमलङ्कुर्वतां वेदान्ताद्यनेकदर्शनशास्त्रनिष्णातानां साहित्यशास्त्रेऽप्रतिमप्रतिभाभाजां कविवराणां विद्याविनयविद्योतितान्त:करणानां प्रशासन-

**पक्षेतरवृत्तिधर्मेषु पक्षेतरवृत्तित्वं धर्मः, एवं ये पक्षे तदितरस्मिंश्च वर्तन्ते धर्माः तेषु पक्षतदिरवृत्तित्वं नाम धर्मः। तदत्यन्ताभावश्च स्वस्वेतर-वृत्तित्वानाक्रान्तत्वम्। तद्वांश्च स्वस्वेतरवृत्तित्वानाक्रान्तः। स चासावनित्य-निष्ठश्च। तेन स्वस्वेतरवृत्तित्वात्यन्ताभाववदनित्यनिष्ठधर्मवान्पक्ष इति प्रतिज्ञार्थः स्यात्। तथा च न व्याघातः। पक्षमात्रवृत्त्यनित्य-**

---

सिद्धिः, अपरथा पक्षमात्रवृत्तेरनित्यनिष्ठधर्मत्वासिद्धेरिति भावः। पक्षस्या-नित्यत्वसिद्धेः प्रागेवंभूतधर्माप्रसिद्ध्या अप्रसिद्धविशेषणत्वमत्राह—**न चेति।**

**भुवन.**—उक्तदूषणपरिहारमाह—**तदयुक्तमिति।** स्ववृत्तित्वेन विशिष्टं यत् स्वेतरवृत्तित्वं तदत्यन्ताभावः स्वस्वेतरवृत्तित्वानाक्रान्तत्वमिति न विवक्षितं, किन्तु स्ववृत्त्या विशिष्टा या स्वेतरवृत्तिः तदत्यन्ताभावस्तथा विवक्षित इति। यथेत्यादि दृष्टान्तोपन्यासपूर्वकं दार्ष्टान्तिकमाह—**एवं ये पक्षे तदित-रस्मिंश्चेति।** अयमभिप्रायः—केवलं स्ववृत्तित्वानाक्रान्तत्वं केवलं स्वेतर-वृत्तित्वानाक्रान्तत्वं च यस्यानित्यवृत्तेर्धर्मस्य स्यात् स शब्दे न निषिध्यते, किन्तूभयवृत्तिर्निषिध्यते। स च सत्त्वप्रमेयत्वादिः। प्रतिज्ञापर्यवसानमाह—**तेन स्वस्वेतरवृत्तित्वात्यन्ताभावेत्यादि।** स्वस्वेतरयुगले वृत्तिर्येषां धर्माणां सत्त्वप्रमेयत्वादीनां तेषु स्वस्वेतरवृत्तित्वं नाम धर्मः, तस्य योऽत्यन्ताभावः, तद्वान् यः कश्चनानित्यनिष्ठो धर्मः श्रावणत्वकृतकत्वादिः, तद्वान्पक्ष इति प्रतिज्ञार्थः स्यादित्यर्थः। तथा च न व्याघातः। अत्र हेतुमाह—**पक्षमात्रेति।**

---

में पक्षेतरवृत्तित्वरूप धर्म है। जो धर्म पक्षवृत्ति तथा पक्षेतरवृत्ति है, उन धर्मों में पक्षतदितरवृत्तित्वरूप धर्म है। पक्षपक्षेतरवृत्तित्वधर्म का अत्यन्ताभाव ही स्वस्वेतरवृत्तित्वानाक्रान्तत्व है, एतादृशधर्मवाला स्वस्वेतरवृत्तित्वानाक्रान्तधर्म कहलाता है। एतादृशधर्म कैसा होना चाहिए जो अनित्यवृत्ति हो यानी अनित्यद्रव्यों में रहता हो। इस प्रकार **'स्वस्वेतरवृत्तित्वात्यन्ताभाववदनित्य-निष्ठधर्मवान् पक्षः'** प्रतिज्ञार्थनिष्पन्न हुआ। अर्थात् पक्ष में रहते हुए पक्षेतर में रहने वाले पक्षपक्षेतरवृत्तिसत्त्व प्रमेयत्वादिधर्मों में स्वस्वेतरवृत्तित्व नाम का धर्म है। स्वस्वेतरवृत्तित्व धर्म का अत्यन्ताभाव जिसमें है, ऐसा अनित्यद्रव्य-वृत्तिधर्म श्रावणत्वकृतकत्वादि हुआ जो शब्दरूपपक्ष में साधनीय है।

इस प्रकार न तो व्याघात दोष होगा, न तो साध्याप्रसिद्धि दोष, तथा पक्षमात्रवृत्ति अनित्यनिष्ठधर्म साधन में प्रतिज्ञा वाक्य भी उपपन्न हो जायेगा। यह दोनों दोष इस लिए नहीं होंगे, कि पक्षमात्रवृत्तिधर्म शब्दत्वश्रावणत्व

**निष्ठधर्मसिद्ध्यापि प्रतिज्ञावाक्यार्थस्योपपन्नत्वादिति। न चाप्रसिद्धविशेषणत्वम्। पक्षमात्रनिष्ठधर्मात्यन्ताभावपक्षान्योन्याभावयोः पक्षव्यतिरिक्तनित्यानित्यनिष्ठयोरुक्तरूपयोरुभयवादिसिद्धत्वादिति। एवं महाविद्यान्तरेष्वपि व्याघताप्रसिद्धविशेषणत्वे परिहरणीये।**

---

पक्षमात्रवृत्तिर्योऽनित्यनिष्ठो धर्मस्तत्साधनेनापि प्रतिज्ञावाक्यार्थस्योपपन्नत्वादित्यर्थः। अप्रसिद्धविशेषणत्वमप्यत्र पक्षे न स्यादित्याह—**न चेति।** अत्र हेतुं ब्रूते—**पक्षमात्रनिष्ठधर्मात्यन्ताभावेति।** पक्षमात्रनिष्ठा ये धर्माः शब्दत्वश्रावणत्वादयः, तेषामत्यन्ताभवश्च पक्षान्योन्याभावश्च। तयोः किंविशिष्टयोः। पक्षव्यतिरिक्तनित्यानित्यनिष्ठयोः। पक्षः शब्दः, तद्व्यतिरिक्ता ये नित्या आत्मादयोऽनित्याश्च घटादयः, तन्निष्ठयोः तद्वर्तिनोः। पुनः किंरूपयोः उक्त रूपयोः स्वस्वेतरवृतित्वानाक्रान्तानित्यनिष्ठयोः। वादिप्रतिवादिनोरुभयोरपि सिद्धत्वादित्यर्थः।

---

आदि होंगे, उनका अत्यन्ताभाव तथा पक्षान्योन्याभाव पक्षव्यतिरिक्त नित्यद्रव्य आत्मा आदि में है। तथा अनित्य द्रव्य घट आदि में है। पक्षव्यतिरिक्त नित्यवृत्ति तथा अनित्यवृत्तिधर्म को स्वस्वेतरवृत्तित्वानाक्रान्त अनित्यनिष्ठ वादी प्रतिवादी दोनों मानते हैं।

जो लोग अयं पद पक्ष का विशेषण न बना कर सीधे शब्दमात्र को पक्ष बनाकर प्रतिज्ञावाक्य **'शब्दः शब्दतदितरवृत्तित्वानाक्रान्तानित्यनिष्ठाधिकरणं मेयत्वात्'** प्रयोग करते हैं। उनके मत में स्पष्ट व्याघातदोष है। अनित्यवृत्तित्वेन साधनेच्छया शब्दवृत्तिधर्मशब्दत्व सभी शब्दों में रहता है। किसी शब्दविशेष को पक्ष बना कर शब्दतदितरवृत्तित्वानाक्रान्तानित्यनिष्ठाधिकरणत्व साधन करेंगे तो स्पष्ट व्याघात दोष होगा। जैसे घटशब्द को पक्ष बना कर प्रतिज्ञा वाक्य प्रयोग करें **'घटशब्दः शब्दतदितरवृत्तित्वानाक्रान्तानित्यनिष्ठाधिकरणं मेयत्वात्'** यहाँ पर घटशब्द में रहने वाले शब्दत्वधर्म तदितर पटशब्द में भी शब्दत्व है। अतः शब्दत्व धर्म एवं श्रावणत्व शब्दतदितरवृत्तित्वानाक्रान्त नहीं हुआ। शब्दतदितरवृत्तित्वानाक्रान्त (शब्द तथा शब्देतर में न रहने वाला) धर्म को ही अनित्यवृत्तित्वेन (अनित्य में रहना) साध्य बनाया है। अतः अयं पद पक्षविशेषण बनाया गया है। अयं पद पक्ष का विशेषण बना देने पर एतत् शब्दवृत्ति (इस शब्द में रहने वाला) धर्म अनित्यवृत्तित्वेन साध्य होगा। अतः व्याघात दोष नहीं होगा। प्रथम कल्प इसलिए है, कि घटादिविशेषशब्द को पक्षकोटि में रख कर शब्दतदितर-

**ये तु सामान्यतः शब्दः शब्दतदितरवृत्तित्वानाक्रान्तानित्यनिष्ठाधिकरणमिति प्रतिजानते, तेषां स्पष्टो व्याघातः। यस्य कस्यचिदपि शब्दधर्मस्य**

---

**आनं.**—अयमिति पक्षविशेषणं हित्वा शब्दमात्रं धर्मीकृत्य प्रयुज्यतां लाघवादित्यत आह—**ये त्विति।** आकाशविशेषणत्वादेः शब्दमात्रवृत्तेः शब्दतदितरवृत्तित्वाभावात्कथं व्याघातस्तत्राह—**यस्य कस्यचिदिति।** शब्दत्वाधिकरणप्रतियोगिकेतरेतराभावाधिकरणनिष्ठत्वाभावात् कथं शब्देतरवृत्तित्वमत्राह—**यस्य कस्यचिदपि शब्दस्येति।**

**भुवन.**—ननु पक्षमात्रनिष्ठधर्मात्यन्ताभावपक्षान्योन्याभाववत्तयोः स्थाने यथानुक्रमं पक्षमात्रनिष्ठधर्मान्योन्याभावपक्षात्यन्ताभावयोरपि ग्रहणे को दोषः। उच्यते। पक्षमात्रनिष्ठधर्मान्योन्याभावस्य वैशेषिकादीनां मते धर्मधर्मिणोर्भिन्नत्वेन शब्देऽपि वर्तमानत्वात् स्वस्वेतरवृत्तित्वेन तद्वृत्तित्वानधिकरणत्वानुपपत्तिः। पक्षात्यन्ताभावस्य चाकाशाऽवृत्तित्वेन दृष्टान्तत्वानुपपत्तेः केवलान्वयित्वव्याघातश्च स्यादिति न तयोर्ग्रहणम्। एवमग्रेऽपि सर्वत्र महाविद्यानुमानादौ पक्षमात्रनिष्ठधर्मात्यन्ताभावपक्षान्योन्याभावयोर्ग्रहणे कारणं ज्ञेयम्।

**तेषां स्पष्टो व्याघात इति।** अयमर्थः। अत्रायमितिपदं विना सामान्येन शब्द इत्युच्यमानेऽनित्यवृत्तित्वेन सिषाधयिषितस्य शब्दत्वश्रावणत्वादेः सर्वशब्दधर्मस्य यस्मिन्कस्मिंश्चिदपि घटेत्यादिरूपे पक्षीकृतशब्दे पक्षीकृतशब्दादितरस्मिन् पटलकुटेत्यादिरूपे शब्दान्तरे च वर्तमानत्वेन शब्दतदितरवृत्तित्वेन तदनाक्रान्तत्वं नोपपद्यते। अत्र चानित्यवृत्तित्वेन सिषाधयिषितः शब्दत्वादिः सर्वशब्दधर्मः शब्दतदितरवृत्तित्वानाक्रान्तो विलोक्यते। अतः स्पष्ट एव व्याघातः। अयमित्युच्यमाने तु एतच्छब्दत्वादिरेव धर्मः अनित्यवृत्तित्वेन विशेषितः सिषाधयिषितः। स चैतच्छब्द एव वर्तते न त्वन्यत्रेति न तत्र व्याघात इति। व्याघातमेव 'यस्य कस्यचिदपि' इत्यादिना स्पष्टयति—**यस्य कस्यचिदपीति।** शब्दत्वश्रावणत्वाकाशविशेषगुणत्वादेः शब्दधर्मस्येत्यर्थः।

---

वृत्तित्वानाक्रान्तानित्यनिष्ठाधिकरणत्व साध्य की सिद्धि करें। उसी दृष्टान्त से अन्य शब्दों में भी साध्य सिद्ध हो जायेगा।

दूसरा कल्प हैं कि प्रत्येक शब्द को पक्ष बनाने पर यदि गौरव हो रहा है, तो शब्द सामान्य को पक्ष बना कर प्रतिज्ञा वाक्य **'शब्दः शब्दशब्दत्वरहितनिष्ठत्वानाक्रान्तानित्यनिष्ठाधिकरणं मेयत्वात्'** यहाँ पर साध्य

**शब्दतदितरवृत्तित्वेन शब्दतदितरवृत्तित्वानाक्रान्तत्वस्यासम्भवात्। यस्य कस्यचिदपि शब्दस्य शब्दत्वाश्रयत्वेन शब्दत्वात्, शब्दान्तरापेक्षया च शब्देतरत्वादिति।**

**तस्मादेकैकमेव शब्दादिकं धर्मिणं निष्कृष्य पक्षीकृत्य सर्व-महाविद्याप्रयोगो द्रष्टव्यः। यद्वा शब्दः शब्दशब्दत्वरहितनिष्ठत्वानाक्रान्ता-नित्यनिष्ठधर्माधिकरणमिति सामान्यतः प्रयोक्तव्या प्रतिज्ञा।**

**ये तु अयं शब्दः स्वस्वेतरवृत्तिव्यतिरिक्तानित्यनिधर्माधिकरणमिति**

---

**आनं.**—शब्दविशेषस्यानित्यत्वं प्रसाध्य तद्दृष्टान्तेन इतरशब्दानां तत्साधने गौरवादेकः प्रयोगः सर्वशब्दानित्यत्वविषयः इत्यत आह—**यद्वेति शब्दशब्देतरेति** शब्दशब्देन शब्दत्वाधिकरणस्य तदितरशब्देन शब्दत्वानधि-करणस्य विवक्षितत्वान्न प्राक्तनदोषानुषङ्ग इति भावः।

**भुवन.—तस्मादेकैकामिति।** अयं विवक्षितो घटपटादिशब्द इत्येवं विश्वादेकैकं शब्दं पृथक् पक्षीकृत्य विवक्षितानित्यत्वसाधनेन तद्दृष्टान्तावष्टम्भेन सर्वशब्दानामनित्यत्वं प्रसाध्यमिति भावः। सर्वशब्दानामनित्यत्वप्रसाधनाय प्राह—**यद्वा शब्दः शब्दशब्दत्वेति।** शब्दः शब्दत्वाधिकरणं सर्वशब्दः। शब्दत्वरहितं शब्दत्वानधिकरणं सर्वं विश्वं, तत्र यत् निष्ठत्वं तेन अनाक्रान्तो यः कश्चनानित्यनिष्ठो धर्मस्तथाधिकरणं शब्द इत्यर्थः। अत्र शब्दशब्देन शब्दत्वाधिकरणस्य, शब्दत्वरहितशब्देन च शब्दत्वानधिकरणस्य विवक्षि-तत्वान्न प्राचीनदोषानुषङ्ग इत्यभिप्रायः।

**आनं.**—एकदेशीयप्रयोगमनुवदति—**ये त्विति।** स्वस्मिन्स्वेतरेषु च

---

कोटि में प्रविष्ट शब्दपद शब्दत्वाधिकरणपरक है। तथा शब्दत्वरहितपद शब्दत्वानधिकरण परक है। शब्दत्वाधिकरण हुआ शब्द, शब्दत्वानधिकरण शब्दातिरिक्तसकलविश्व तन्निष्ठ (उसमें रहने वाले) धर्म से अनाक्रान्त अनित्यवृत्ति (अनित्य में रहने वाला) धर्म है, उसका अधिकरण शब्द है। इस प्रकार शब्द में शब्दत्वाधिकरण शब्दत्वानधिकरण में रहने वाले धर्म से अनाक्रान्त अनित्यपदार्थवृत्ति (अनित्य में रहने वाले) अनित्यत्व धर्म की सिद्धि हुई।

जो लोग **'अयं शब्दः स्वस्वेतरवृत्तिव्यतिरिक्तानित्यनिष्ठाधर्माधिकरणं**

**प्रतिजानते, तेषां सिद्धसाधनं स्पष्टम्। स्वस्वेतरवृत्त्यभिधेयत्वादिव्यतिरिक्त-स्वस्वेतरवृत्त्यनित्यनिष्ठप्रमेयत्वादिधर्माणां पक्षनिष्ठत्वेन वादिप्रतिवादिभ्या-मङ्गीकृतत्वादिति। तस्मात्सर्वत्र तव्द्यतिरिक्तादिपदस्थाने तत्त्वानाक्रान्त-त्वादिपदं प्रयोक्तव्यमिति।**

---

वृत्तिर्यस्य स स्वस्वेतरवृत्तिः, तस्माव्द्यतिरिक्तोऽनित्यनिष्ठो यो धर्मस्तदाश्रय इत्यर्थः। कृत्यं पूर्ववत्। दूषयति—**तेषामिति**। तदुपपादयति—**स्वस्वेतरेति**।

**भुवन.**—एकदेशीयप्रयोगमनुवदति—**ये तु अयं शब्द इति**। स्वस्मिन् स्वेतरेषु च वृत्तिर्यस्य स स्वस्वेतरवृत्तिरभिधेयत्वादिः, तव्द्यतिरिक्तोऽनित्यनिष्ठो धर्मः सत्त्वप्रमेयत्वादिः तदाश्रय इत्यर्थः। अत्र तत्त्वानाक्रान्तपदस्थाने तव्द्यतिरिक्तेति पदं प्रयुक्तमित्येतदेव वैचित्र्यम्। शेषं तु पूर्ववदेव ज्ञेयम्। अनूद्य दूषयति—**तेषामित्यादि**। सिद्धसाधनतामेवाह—**स्वस्वेतरेति**। स्वस्वेतरवृत्तिर-भिधेयत्वादिधर्मः, तस्माव्द्यतिरिक्ता ये स्वस्वेतरवृत्तय एवानित्यनिष्ठाः प्रमेयत्वादयो धर्मास्तेषां पक्षनिष्ठत्वेनोभयोरपि सिद्धत्वात् स्पष्टैव सिद्ध-साध्यतेत्यर्थः। अत्र च विवादपदापन्नः पक्षमात्रनिष्ठत्वे सत्यनित्यनिष्ठ एव धर्मो न तु सत्त्वप्रमेयत्वादिः, तस्य घटाद्यनित्यनिष्ठत्वेनानित्यनिष्ठत्वात्पक्ष-मात्रनिष्ठत्वानुपपत्तेः। तस्मादनिष्ठार्थापत्त्या व्यतिरिक्तेति पदं न प्रयोज्यम्। **तत्त्वानाक्रान्तेति**। शब्दतदितरवृत्तित्वानाक्रान्त इत्येवं पदं प्रयोज्यम्।

---

**मेयत्वात् प्रतिज्ञावाक्य** प्रयोग करते हैं। उनके मत में सिद्ध साधन दोष स्पष्ट है। स्ववृत्ति (अपने यानी शब्द में रहने वाला) स्वेतरवृत्ति (यानी शब्दातिरिक्त में रहने वाला) अभिधेयत्वादिधर्म; तदतिरिक्तसत्त्वप्रमेयत्वादिधर्म शब्द में उभयवादि अभिमत है। अतः सिद्धसाधनदोष स्पष्ट है।

अतः तद्व्यतिरिक्त के स्थान में शब्दतदिरवृत्तित्वानाक्रान्तपद का प्रयोग किया गया है। शब्दतदितरवृत्तित्वानाक्रान्तपद साध्य विशेषण कर देने पर सिद्धसाधन नहीं होगा। इसलिए कि सत्त्व प्रमेयत्वादिधर्म शब्दतदितरवृत्तित्व से आक्रान्त ही हैं। उस से अनाक्रान्त धर्म अनित्यत्वादि होंगे जो अनुमान प्रयोग से पूर्ण वादिप्रतिवादि सम्मत शब्द में सिद्ध नहीं हैं।

**अयं च प्रमेयत्वादिहेतुः स्वस्वेतरवृत्तित्वानाक्रान्तानित्यनिष्ठधर्मवत्त्वं व्यापकं पक्षे साधयन्ननित्यत्वमन्तर्भाव्य गमयति। न हि पक्षेऽनित्यत्व-मनधिगम्य पक्षमात्रनिष्ठधर्मस्यानित्यनिष्ठत्वं शक्याधिगमम्। नापि पक्षे पक्षमात्रनिष्ठानित्यनिष्ठधर्मवत्त्वमनधिगम्य पक्षतदितरवृत्तित्वानाक्रान्तानित्य-**

---

**आनं.**—प्रथमप्रयोगात्पक्षमात्रनिष्ठधर्मसिद्धावपि कथमनित्यत्वसिद्धि-रत्राह—**अयं चेति**। स्वस्वेतरवृत्तित्वानाक्रान्तानित्यनिष्ठस्ववृत्तिरहितो वा स्वमात्रवृत्त्यनित्यनिष्ठो वा। आद्यो व्याहत इति द्वितीयः सिध्येत्। तस्या-नित्यत्वं विना कानुपपत्तिरत्राह—**नहीति**। पक्षमात्रनिष्ठधर्मात्यन्ताभावस्योक्त-रूपत्वेऽपि न तेन साध्यपर्यवसानं शक्यशङ्कमित्याह—**नापीति**। हेतुमाह—**पक्षेति**। प्रमेयत्वादिकं पक्षे स्वव्यापकं साधयंस्तदपर्यवसानेन वाद्यभिमतं साधयतीति महाविद्यावादिनः सङ्गिरन्ते। त्वया पुनर्व्यापकप्रतीतेरनित्य-त्वादिकमनालम्ब्य अनुपपत्तिरन्यैवोक्तेत्यत आह—**तदिदमिति**।

**भुवन.**—प्रथमप्रयोगात्पक्षमात्रनिष्ठधर्मसिद्धावपि कथं नित्यत्वसिद्धिर-त्राह—**अयं चेति**। स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठः स्ववृत्तित्वरहितो वा स्वमात्रवृत्त्यनित्यनिष्ठो वा। प्रथमो विकल्पः पक्षे व्याहत इति द्वितीयः सिध्येत्। अनित्यत्वं विना तस्य कानुपपत्तिरित्यत आह—**न हीति**। पक्षे शब्देऽनित्यत्वमज्ञात्वा पक्षमात्रनिष्ठस्य शब्दत्वादेर्नानित्यनिष्ठत्वं परिज्ञातुं शक्यमित्यर्थः। पूर्वमनित्यत्वं विनाऽनित्यनिष्ठत्वं नोपपद्यते इत्युक्तं, इदानीं

---

यदि आशङ्का हो कि पक्षीभूत शब्द में स्वस्वेतरवृत्तित्वानाक्रान्तानित्य-निष्ठाधिकणत्वरूप साध्य की सिद्धि हो जाने पर भी शब्द में अनित्यत्व कैसे सिद्ध हो गया। इसका उत्तर है, कि प्रमेयत्वादि हेतु स्वस्वेतरवृत्तित्वाना-क्रान्तानित्यनिष्ठधर्मवत्त्वरूप स्वव्यापक की पक्ष में सिद्धि, अनित्यत्वधर्म का अन्तर्भाव करके ही करता है। शब्द में अनित्यत्वधर्म का अन्तर्भाव किये विना तादृशसाध्य की सिद्धि असम्भव है। स्वस्वेतरवृत्तित्व रहितानित्यनिष्ठत्व साध्य है। उसमें दो कल्प, हो सकते हैं? प्रथम स्ववृत्तित्वरहित (यानी पक्षीभूत शब्द में न रहना) दूसरा स्वमात्रवृत्त्यनित्यनिष्ठ (ऐसा धर्म जो पक्षीभूत शब्द मात्र में रहने वाला अनित्यत्व) प्रथम कल्प में व्याघात है। क्योंकि पक्ष में न रहने वाले धर्म को पक्ष में सिद्ध करना व्याघात दोष स्पष्ट है। अतः द्वितीय कल्प ही मान्य है।

स्वमात्रवृत्त्यनित्यनिष्ठत्वसाध्य की सिद्धि शब्द में अनित्यत्वज्ञान के

**निष्ठधर्मवत्त्वं शक्याधिगमम्। पक्षव्यतिरिक्तमात्रवृत्तिधर्मस्य पक्षे व्याघातेनोपसंहर्तुमशक्यत्वात्। तदिदं व्यापकप्रतीतेरनित्यत्वादिकमनालम्ब्यानुपपत्तिरूपमपर्यवसानमाहुः।**

---

पक्षमात्रवृत्तिधर्मस्यानित्यनिष्ठत्वं विना पक्षतदितरवृत्तित्वानाक्रान्तानित्यनिष्ठत्वमपि नोपपद्यत इत्याह—**नापि पक्षे पक्षमात्रेति।** अयं पक्षमात्रनिष्ठो धर्मः शब्दत्वादिरनित्यनिष्ठ इत्येवमज्ञात्वा पक्षतदितरवृत्तित्वानाक्रान्तानित्यनिष्ठधर्मवत्त्वं पक्षे नैव शक्यमधिगन्तुमित्यर्थः।

ननु सपक्षमात्रवृत्तीनां घटत्वादिधर्माणां सपक्षमात्रवृत्तित्वेन युगलावृत्तित्वात् यथोक्तलक्षणोपपन्नानां सम्भवात्ते एव पक्षे साधयिष्यन्ते, किं पक्षमात्रनिष्ठानित्यनिष्ठधर्मेत्यादिचिन्तयेत्याशङ्क्य हेतुमाह—**पक्षव्यतिरिक्तेति।** केवलसपक्षवृत्तिधर्मस्य घटत्वाकाशत्वादेः। पक्षे शब्दे। **उपसंहर्तुमिति।** उपपादयितुमशक्यत्वादितिभावः। **तदिदमित्यादि।** स्वस्वेतरेत्यादेर्व्यापकस्य साध्यस्य प्रतीतेः अनित्यत्वादिकमनालम्ब्य अनित्यत्वं विना। **अपर्यवसानमाहुरिति।** अनित्यत्वं विना एवंविधसाध्यस्य विश्रान्तिर्न भवतीति भावः॥१॥

---

विना सम्भव नहीं है, अतः शब्द अनित्य है। क्योंकि पक्ष शब्द में अनित्यत्वज्ञान के विना पक्ष मात्र में रहने वाले शब्दत्व आदि धर्मों में अनित्यनिष्ठत्व (अनित्य में रहना) नहीं सिद्ध हो सकता।

एवं पक्षमात्र वृत्तिधर्म का अनित्य में रहना जब तक सिद्ध नहीं हो जाता, तब तक पक्ष तदितरवृत्तित्वानाक्रान्तानित्यनिष्ठत्वरूप (शब्द तथा शब्द से अन्य में न रहता हुआ अनित्यपदार्थ में रहना? साध्य की सिद्धि नहीं हो सकती। इस प्रकार महाविद्यानुमान द्वारा विशिष्टसाध्यसिद्धि द्वारा शब्द में प्रकारान्तर से अनित्यत्व सिद्ध होता है।

यदि आशङ्का करें, कि सपक्षघटादिवृत्ति (सपक्षघटादि में रहने वाले) घटत्वादिधर्मों को युगलगावृत्तित्वेन (पक्ष शब्द सपक्ष घटादि में न रहने से) स्वस्वेतरवृत्तित्वानाक्रान्तत्वेन पक्ष शब्द में सिद्ध करना चाहे? तो नहीं कर सकते, इसलिए कि केवलसपक्षवृत्ति (सपक्षमात्र में रहने वाले) धर्मको साध्य बनाने पर व्याघात दोष का निवारण असम्भव हो जायेगा। इस प्रकार अनित्यत्व के विना एतादृश साध्य की सिद्धि नहीं हो सकती, अतः शब्द अनित्य है। यह प्रथम महाविद्यानुमान द्वारा शब्द में अनित्यत्व साधन किया गया॥१॥

**२ अयं शब्दः अनित्यत्वात्यन्ताभाववद्वृत्त्येतद्धर्मत्वानाक्रान्ताधिकरणं मेयत्वादिति। अस्यां वक्ष्यमाणासु च महाविद्यासु घटो दृष्टान्तः। अत्र चानित्यत्वात्यन्ताभाववद्वृत्तयो ये एतद्धर्मास्तेष्वनित्यत्वात्यन्ताभाववद्-**

---

**२ आनं.**—प्रयोगान्तरमाह—**अयमिति**। अनित्यत्वात्यन्ताभावो यस्य सोऽनित्यत्वात्यन्ताभाववान्, तत्र वृत्तिर्येषां तेऽनित्यत्वात्यन्ताभाववद्वृत्तयः, ते एवैतत्पक्षीकृतशब्दधर्माः अनित्यत्वात्यन्ताभाववद्वृत्त्येतद्धर्मास्तेषु तथात्वं धर्मः तदत्यन्ताभाववान्, तदनाक्रान्तः तस्याधिकरणमाश्रय इत्यर्थः। शब्द उक्तसाध्यवानित्युक्तपक्षान्योन्याभावस्य पक्षवृत्तित्वाभावादनित्यत्वात्यन्ताभाववद्वृत्त्येतद्धर्मत्वानाक्रान्तत्वमस्ति, तदधिकरणं च शब्दान्तरमिति भागे सिद्धसाधनता, अत उक्तम्—**अयमिति**।

अयं शब्दोऽधिकरणमित्युक्ते प्रमेयत्वादिना अर्थान्तरता, अत उक्तम्—**एतद्धर्मत्वानाक्रान्तेति**। यथोक्ते व्याघातः स्यादत उक्तम्—**अनित्यत्वात्यन्ताभाववद्वृत्त्येतद्धर्मत्वानाक्रान्तेति**। अनित्यत्वात्यन्ताभाववद्वृत्तित्वानाक्रान्ताधिकरणमित्युक्तौ नित्येषु साध्यासिद्धिः। नहि नित्यानामुक्तधर्माधिकरणत्वं, नित्यत्वस्यैवानित्यत्वात्यन्ताभावत्वादत उक्तम्—**एतद्धर्मानाक्रान्तेति**। अनित्यत्वात्यन्ताभाववद्वृत्त्येतद्धर्मत्वानाक्रान्त एतद्धर्मत्वरहितो वा अनित्यत्वात्यन्ताभाववद्वृत्तित्वरहितो वा। आद्यः पक्षे व्याहतो, द्वितीयस्त्वनित्यत्वमन्तर्भाव्य सिध्यति। पक्षस्यानित्यत्वाभ्युपगममात्रेण प्रतिज्ञार्थस्योपपत्तेरिति महाविद्यार्थः। संक्षेपतो व्याचष्टे—**अत्र चेति**। तथापि कथमनित्यत्वमत्राह—

---

इसके बाद दूसरा महाविद्यानुमान का प्रयोग कर रहे हैं। **'अयं शब्दः अनित्यत्वान्ताभाववद्वृत्त्येतद्धर्मत्वानाक्रान्ताधिकरणं मेयत्वात्'** एतत् शब्द पक्ष है, अनित्यत्वान्ताभाववद्वृत्त्येतद्धर्मत्वानाक्रान्ताधिकरणत्व साध्य है, हेतु पूर्ववत् मेयत्व ही है। यह अनुमान **'विच्छिद्य वाऽभाववदन्वितेन'** इस कारिकांश अभिप्रेत अर्थ को लेकर हुआ है। यहाँ पर पक्ष में रहने वाले धर्म नित्यवृत्तित्व (नित्य मे रहने) के अत्यन्ताभाव का अधिकरणत्व सिद्ध किया जाता है। साध्याभावाधिकरण से अन्वित पक्षावृत्ति धर्म की सिद्धि उद्देश्य है।

अनित्यत्व के अत्यन्ताभाव वाले नित्यपदार्थ आकाशादि होंगे। उन नित्य पदार्थों में रहने वाले धर्म अनित्यत्वात्यन्ताभाववद्वृत्ति धर्म होंगे। वे ही धर्म पक्षवृत्तित्वेन (पक्ष में रहना) अभिमत है। अर्थात् अनित्यत्वात्यन्ताभाववन्नित्यवृत्तिधर्म पक्षवृत्तिधर्म है। उन धर्मों में तथात्व रूप का धर्म अनित्यत्वात्यन्ताभाववन्नित्यवृत्तिधर्म है, उससे अनाक्रान्त धर्म का अधिकरण शब्द है।

**वृत्त्येतद्धर्मत्वं नाम धर्मः। तदत्यन्ताभाववान् धर्मः पक्षे साध्यते। स च पक्षेऽनित्यत्वमनधिगम्य न शक्योऽधिगन्तुम्। शब्दस्यानित्यत्वरहितत्वे सर्वेषामपि शब्दधर्माणामनित्यत्वात्यन्ताभाववद्वृत्त्येतद्धर्मत्वेन तदनाक्रान्तत्वानुपपत्तेः। पक्षेऽनित्यत्वाभ्युपगममात्रेण प्रकृतसाध्यार्थस्योपपन्नत्वेन न व्याघातः। पक्षवृत्तित्वाभावेन अनित्यत्वात्यन्ताभाववद्वृत्तिपक्षवृत्तित्व-**

---

**स एवेति।** एतदेव कुतोऽत्राह—**शब्दस्येति।** एतद्धर्मत्वानाक्रान्तस्यैतस्मिन्साधने व्याघातोऽत्राह—**पक्ष इति।** पक्षस्य नित्यत्वे पक्षनिष्ठस्यानित्यत्वात्यन्ताभाववद्वृत्तित्वाभावेन तद्विशिष्टैतद्धर्मत्वानाक्रान्तत्वमुपपन्नमित्यर्थः। शब्दस्यानित्यत्वसिद्धेः प्रागुक्तरूपधर्मासिद्धेरप्रसिद्धविशेषणताऽह—**पक्षेति।** पक्षवृत्तित्वाभावे सत्यनित्यत्वात्यन्ताभाववद्वृत्त्येतद्वृत्तित्वं नास्ति। विशेष्यैतद्धर्मत्वाभावेऽपि विशिष्टाभावसाध्यसिद्धिरित्यर्थः। तथापि कथमप्रसिद्धविशेषणतापरिहारोऽत्राह—**पक्षवृत्तित्वरहितयोरिति।** शब्दो नित्यत्वव्यतिरिक्तैतद्धर्मत्वरहिताधिकरणमित्युक्ते पक्षीकृतशब्दमात्रनिष्ठधर्मात्यन्ताभावस्यानित्यत्वव्यतिरिक्तत्वादेतद्धर्मत्वराहित्याच्च शब्दान्तरतदधिकरणमिति भागे सिद्धसाधनतापरिहारायोक्तमयमिति।

**२ भुवन.**—अथ महाविद्यान्तरमाह—**अयं शब्दः अनित्यत्वात्यन्ताभावेत्यादि।** इयं च महाविद्या **'विच्छिद्य वाभाववदन्वितेन'** इति कारिकापदं महाविद्यास्थितं समाश्रित्य पक्षपक्षीकरणेन प्रवृत्ता। अनित्यत्वस्य अत्यन्ता-

---

समन्वय प्रकार अनित्यत्व के अत्यन्ताभाव वाले नित्यपदार्थों में रहने वाले धर्म मेयत्व सत्त्व आदि धर्म हैं। वह धर्म पक्ष में भी रहता है। उस धर्म में एतद्धर्मत्व नाम का धर्म है, तदाक्रान्तधर्म एतद्धर्म हुआ तदनाक्रान्त अनित्यत्व धर्म हुआ। उसका अधिकरण शब्द हो गया। अनित्यत्वात्यन्ताभाववद्वृत्त्येतद्धर्धत्वात्यन्ताभावरूप धर्म की सिद्धि शब्द को अनित्य माने विना सम्भव नहीं है, अतः शब्द में अनित्यत्व सिद्ध हुआ। सकल महाविद्यानुमानों में दृष्टान्त घटादि अनित्य पदार्थ तथा आकाशादि नित्य पदार्थ होते हैं। केवलान्वयी अनुमान का कोई विपक्ष नहीं होता। घटरूप दृष्टान्त में साध्य का समन्वय इस प्रकार है, अनित्यत्वाभाववद्वृत्ति शब्द में रहने वाले मेयत्व आदि धर्म हुए। उनमें एतद्धर्मत्व नाम का धर्म है। उसका अधिकरण मेयत्व आदि धर्म होंगे, उसका अत्यन्ताभाव घटत्वधर्म में उसका अधिकरण घट है। इसी प्रकार नित्यपदार्थ आकाश आदि में

**रहितयोः पक्षमात्रनिष्ठात्यन्ताभावपक्षान्योन्याभावयोः पक्षव्यतिरिक्तसकल-वस्तुनिष्ठयोरुक्तरूपोपपन्नयोः प्रसिद्धत्वेन नाप्रसिद्धविशेषणतापि। एवं महाविद्यान्तरेष्वपि यथासम्भवं पक्षमात्रनिष्ठात्यन्ताभावपक्षान्योन्याभावा-वुपादायाप्रसिद्धविशेषणत्वं निरसनीयम्।**

---

भावोऽनित्यत्वात्यन्ताभावो नित्यत्वं, तद्विद्यते यस्य सोऽनित्यत्वात्यन्ताभाववान् नित्यपदार्थः, तत्र वृत्तिर्येषां तेऽनित्यत्वात्यन्ताभाववद्वृत्तयः, त एवैतत्पक्षी-कृतशब्दधर्मा अनित्यत्वात्यन्ताभाववद्वृत्त्येतद्धर्माः, तेषु तथात्वं धर्मः, तदना-क्रान्तः तदत्यन्ताभाववान्, तस्याधिकरणमाश्रय इत्यर्थः।

अयं भावः—ये नित्यपदार्थवर्तिनः शब्दस्य धर्मा मेयत्वादयस्तेषां भवस्तत्त्वं, तदत्यन्ताभाववान् धर्मः शब्दे साध्यते। स च शब्दत्वश्रावणत्वादिः शब्दस्य नित्यत्वेऽङ्गीक्रियमाणे नित्यवृत्त्येतद्धर्मत्वानाक्रान्तो न भवेत्। तस्माच्छब्दस्यानित्यत्वमङ्गीकरणीयमेवेति। अयमितिपदं विना सामान्येन शब्दः उक्तसाध्यवानिति प्रतिज्ञायां सर्वशब्दपक्षीकरणे परेण च दूषणार्थमेकस्यैव कस्यचिच्छब्दस्य पक्षत्वे शङ्किते परविवक्षितपक्षान्योन्याभावस्य पक्षवृत्तित्वा-भावादनित्यत्वात्यन्ताभाववद्वृत्त्येतद्धर्मत्वानाक्रान्तत्वमस्ति, तदधिकरणं च शब्दान्तरमिति भागे सिद्धसाधनता स्यात्।

अत उक्तमयमिति। इयं च व्यावृत्तिरग्रेऽपि सर्वत्र ज्ञेया। ग्रन्थकृता तु ग्रन्थगौरवभयान्नोक्ता। अयं शब्दोऽधिकरणमित्युक्ते मेयत्वादिना अर्थान्तरता, तदुक्तमेतद्धर्मत्वानाक्रान्तेति। तथोक्ते च व्याघातः। अत उक्तमनित्यत्वात्यन्ता-भाववद्वृत्त्येतद्धर्मत्वानाक्रान्तेति। अनित्यत्वात्यन्ताभाववद्वृत्तित्वानाक्रान्ताधि-

---

समन्वय करना है। अनित्यत्वात्यन्ताभाववद्वृत्ति एतद्धर्म मेयत्व उसमें एतद्धर्मत्व नाम धर्म है। उसका अधिकरण एतद्वृत्तिधर्म मेयत्व उसका अत्यन्ताभाव आकाशत्व धर्म में उसका अधिकरण आकाश।

यदि शब्द को अनित्य न मानेंगे तो शब्दवृत्ति सकल शब्दत्व श्रावणत्व आदि धर्म नित्यवृत्ति एतद्धर्मत्व से आक्रान्त ही होंगे अनाक्रान्त नहीं होंगे। अतः शब्द को अनित्य मानना आवश्यक है। पक्ष शब्द में अनित्यत्व मानने पर प्रकृतसाध्य की सिद्धि हो जाती है। व्याघात दोष नहीं होता।

यदि शब्दः अनित्यत्वात्यन्ताभाववद्वृत्त्येतद्धर्मत्वानाक्रान्ताधिकरणम् प्रतिज्ञा करें, तो पक्षान्योन्याभाव पक्ष में नहीं रहता, उस पक्षान्योन्याभाव को अनित्यत्वात्यन्ताभाववन्नित्यवृत्ति एतद्धर्मत्वानाक्रान्तत्व मानकर उसका

करणमित्युक्ते च न नित्येषु साध्यप्रसिद्धिः। न हि नित्यानामुक्तधर्माधिकरणत्वम्, नित्यवृत्तेर्यस्य कस्यचिदपि नित्यत्वादेर्धर्मस्यानित्यत्वात्यन्ताभाववद्वृत्तित्वेन तदनाक्रान्तत्वस्यासम्भवात्। अत उक्तमेतद्धर्मत्वानाक्रान्तेति। अनित्यत्वात्यन्ताभाववद्वृत्त्येतद्धर्मत्वानाक्रान्त एतद्धर्मत्वरहितो वा, अनित्यत्वात्यन्ताभाववद्वृत्तित्वरहितो वा। आद्यः पक्षे व्याहतः सपक्षे चोपयोगी। द्वितीयस्त्वनित्यत्वमन्तर्भाव्य सिद्ध्यतीति शब्दस्यानित्यत्वसिद्धिरिति। **अस्यां वक्ष्यमाणासु च महाविद्यासु घटो दृष्टान्त इति।** उपलक्षणं चैतत्। तेन पक्षं पक्षतुल्यं च मुक्त्वाऽन्ये सर्वेऽपि पदार्था घटाकाशादयः सर्वमहाविद्यासु दृष्टान्तीकार्याः। **अत्र चेत्यादिना** संक्षेपतः प्रयोगार्थं व्याचष्टे। अत्र च कथमनित्यत्वमित्यत आह—**स चेति।** अत्र हेतुमाह—**शब्दस्येति।** एतद्धर्मत्वानाक्रान्तस्यैतस्मिन् साधने व्याघातः स्यादिति तत्परिहारमाह—**पक्षेऽनित्यत्वाभ्युपगमेति।**

पक्षस्यानित्यत्वे पक्षनिष्ठस्याप्यनित्यत्वात्यन्ताभाववद्वृत्तित्वाभावेन अनित्यत्वात्यन्ताभाववद्वृत्त्येतद्धर्मत्वानाक्रान्तत्वमुपपन्नमेवेति न व्याघातः। अप्रसिद्धविशेषणतां परिहरति—**पक्षवृत्तित्वाभावेनेति।** पक्षमात्रनिष्ठानां शब्दत्वादीनां योऽत्यन्ताभावः, पक्षस्य शब्दस्य योऽन्योन्याभावश्च, तयोः पक्षव्यतिरिक्तसकलभावनिष्ठयोः प्रसिद्धत्वेन नाप्रसिद्धविशेषणतेति सम्बन्धः। तयोर्धर्मयोः किंविशिष्टयोः। अनित्यत्वात्यन्ताभाववद्वृत्तिपक्षवृत्तित्वरहितयोः। अनित्यत्वात्यन्ताभाववान् नित्यः पदार्थः, तत्र वृत्तिः, पक्षे शब्दे च वृत्तिः।

---

अधिकरण शब्दान्तर हो जायेगा। अतः भाग में सिद्ध साधनाता दोष होगा। अतः अयं पद पक्ष का विशेषण बनाया गया। अयं पद विशेषण देने पर एतत् शब्द वृत्तिधर्म को ही अनित्यत्वात्यन्ताभाववन्नित्यवृत्तित्वेन लेना है, अतः पक्षैकदेश में सिद्ध साधना दोष नहीं होगा। अयं शब्दः अधिकरणम् प्रतिज्ञा करें तो मेयत्व आदि धर्म का अधिकरण शब्द होने अर्थान्तरतादोष होगा।

यदि साध्य का स्वरूप अनित्यत्वात्यन्ताभाववद्वृत्तित्वानाक्रान्ताधिकरणम्, रखें तो नित्यपदार्थों में साध्य सिद्ध न होने से साध्यवैकल्यदोष होगा। नित्यपदार्थ अनित्यन्ताभाववद्वृत्तित्व से अनाक्रान्त के अधिकरण नहीं हो सकते। नित्यपदार्थ ही अनित्यत्वान्ताभाववान् है, अतः अनित्यत्वान्ताभाववद् वृत्तित्व आक्रान्त धर्म के अधिकरण होंगे अनाक्रान्तधर्म के अधिकरण नहीं होंगे। महाविद्यानुमान के केवलान्वयी होने के कारण नित्य अनित्य सभी पदार्थ सपक्ष हैं। सपक्ष में साध्य के न रहने पर साध्य वैकल्य दोष होता है।

**३ अयं शब्दः अनित्यत्वव्यतिरिक्तैतद्धर्मत्वरहिताधिकरणं मेयत्वा-**

---

अनित्यत्वात्यन्ताभाववद्वृत्तिश्च पक्षवृत्तिश्च अनित्यत्वात्यन्ताभाववद्वृत्ति-पक्षवृत्ती। तयोर्भावस्तत्त्वम्। तेन रहितयोः। केन हेतुना। पक्षवृत्तित्वाभावेन। पक्षे या वृत्तिः तत्त्वाभावेन। न हि तौ धर्मौ पक्षे वर्तेते। पक्षमात्रनिष्ठानामेव पक्षे वर्तनात्। तदत्यन्ताभावस्य तु पक्षादन्यत्रैव वर्तनात्। पक्षान्योन्याभावस्यापि च पक्षादन्यत्रैव वृत्तेः। न हि पक्षान्योन्याभावः पक्षे वर्तते। स्वान्यत्वरूपस्य स्वान्योन्याभावस्य स्वस्मिन्नवृत्तेरिति भावः। पुनः किंरूपयोः। उक्तरूपोपपन्नयोः। अनित्यत्वात्यन्ताभाववद्वृत्त्येतद्धर्मत्वानाक्रान्ताख्योपपन्नयो-रित्याशयः।

यद्यप्येवंविधरूपयोराकाशादौ नित्ये वर्तनादनित्यत्वात्यन्ताभाव-वद्वृत्तित्वाक्रान्तत्वं नास्ति, तथाप्येतद्विशिष्टैतद्धर्मत्वानाक्रान्तत्वं विद्यत एव। शब्दे तयोरवर्तनात्। तथा च सति एवं विधाभावयोः सर्वसपक्षे वर्तनादप्रसिद्धविशेषणत्वमपि परिहृतमित्यर्थः॥२॥

**३ आनं.**—अयं शब्दः एतद्धर्मत्वरहिताधिकरणमित्युक्ते बाधोऽत उक्तम्—**अनित्यत्वव्यतिरिक्तेति।** अनित्यत्वव्यतिरिक्ताधिकरणमित्युक्ते मेय-

---

एतादृशसाध्य प्रमाणान्तर से कही प्रसिद्ध होना चाहिए अन्यथा साध्याप्रसिद्धिदोष होगा। उक्त साध्य की प्रसिद्धि इस प्रकार है। पक्ष शब्दमात्र में रहने वाले धर्म शब्दत्व आदि का अत्यन्ताभाव एवं पक्ष शब्द का अन्योन्याभाव पक्षातिरिक्तसकलभावपदार्थों में प्रसिद्ध है। उन धर्मों को अनित्यत्वात्यान्ताभाववद्वृत्ति पक्षवृत्तित्वरहित मानकर, उनमें अनित्यत्वा-त्यन्ताभाववद्वृत्तिपक्षवृत्तित्वरहितत्व धर्म है, उससे आक्रान्त शब्द में रहने वाले शब्दत्व का अत्यन्ताभाव, वा पक्षशब्द का अन्योन्याभाव होगा। उससे अनाक्रान्त अनित्यत्व उसका अधिकरण शब्द होगा।

यद्यपि शब्दवृत्तिश्रावणत्व का अत्यन्ताभाव तथा शब्द का अन्योन्याभाव आकाशादि नित्यपदार्थों में है, और वह अनित्यत्वात्यन्ता-भाववद्वृत्तित्व से अनाक्रान्त नहीं है। आक्रान्त ही है। फिर भी पक्षशब्दवृत्तित्व से आक्रान्त तो है ही। इसी प्रकार अन्य महाविद्यानुमानों में भी पक्षमात्र में रहने वाले का अत्यन्ताभाव तथा पक्षायोन्याभाव को लेकर साध्य प्रसिद्धि करना चाहिए॥२॥

तीसरा महाविद्यानुमान का प्रयोग **'अयं शब्दः' अनित्यत्व व्यतिरिक्तै-तद्धर्यत्वरहिताधिकरणं मेयत्वात्'** अयं शब्दः पक्ष है, अनित्यत्वव्यतिरिक्तै-तद्धर्यत्वरहिताधिकरणत्व साध्य है, मेयत्व हेतु है। महाविद्यानुमान केवलान्वयी

**दिति। अत्र चानित्यत्वव्यतिरिक्तैतद्धर्मेषु अनित्यत्वव्यतिरिक्तैतद्धर्मत्वं नाम धर्मः, तद्रहितश्च पक्षावृत्तिर्वा अनित्यत्वं वा। तत्र प्रथमः पक्षे नोपसंहर्तुं शक्यः। पक्षावृत्तिः पक्षे वर्त्तते इति व्याघातात्। तस्माद्द्वितीयमनित्यत्वं पक्षे सिध्यति।।**

---

त्वादिनार्थान्तरता, अत उक्तम्—**एतद्धर्मत्वरहितेति**। अनित्यत्वस्यानित्यत्व-व्यतिरिक्तत्वाभावादनित्यत्वव्यतिरिक्तत्वे सत्येतद्धर्मत्वरहितत्वमस्ति, तेन प्रमेयत्वहेतुरनित्यत्वं पक्षे गमयतीति भावः। अनुमानार्थमाह—**अत्रेत्यादिना**।

३ **भुवन.**—प्रयोगान्तरमाह—**अयं शब्दः अनित्यत्वेत्यादि**। इयं च '**पक्षोऽथवा साध्यविनाकृतेन**' इति कारिकापदमुद्दिश्य प्रवृत्ता। अनित्यत्व-व्यतिरिक्ता ये एतद्धर्माः शब्दधर्माः, तेष्वनित्यत्वव्यतिरिक्तैद्धर्मत्वं नाम धर्मः। तत्त्वेन रहितानां धर्माणामधिकरणमाधार इत्यर्थः। अत्र च कथमनित्यत्व-सिद्धिरित्याह—**तद्रहितश्चेति**। अनित्यत्वव्यतिरिक्तैतद्धर्मत्वरहितश्च पक्षावृत्तिर्वा-ऽनित्यत्वं वा। तत्र प्रथमः पक्षावृत्तिर्घटत्वपटत्वाकाशत्वादिः पक्षे शब्दे व्याघातेन नोपसंहर्तुं शक्यः। तस्मादनित्यत्वं शब्दे सिध्यतीति भावः।।३।।

---

है, अत अनित्य घटादि तथा नित्य आकाशादि पदार्थ दृष्टान्त है। यह अनुमान '**पक्षेऽथवा साध्यविनाकृतेन**' इस कारिकांश को लेकर प्रवृत्त है। पक्ष शब्द में अनित्यत्व से भिन्न, पक्ष में रहने वाले धर्मों से भिन्न, धर्म की सिद्धि उद्देश्य है। अनित्यत्वातिरिक्त शब्दवृत्ति (शब्द में रहने वाले) धर्म शब्दत्व श्रावणत्व आदि उनमें अनित्यत्वव्यतिरिक्तैतद्धर्मत्व नामक धर्म रहेगा, तद्रहित अनित्यत्व धर्म होगा, उसका अधिकरण शब्द है। दृष्टान्तभूत घटादिपदार्थों में अनित्यत्वव्यतिरिक्त घटत्व आदि धर्म है, उनमें एतद्धर्मत्व नामक धर्म है, उसका अभाव अनित्यत्व में उसका अधिकरण घट है।

यहाँ पर अनित्यत्वव्यतिरिक्तैतद्धर्मत्वाभाव का अधिकरणत्व साध्य है। विचारणीय प्रश्न यह है, कि अनित्यत्वव्यतिरिक्तैतद्धर्मत्वाभाव को पक्ष में न रहने वाले को ले? या अनित्यत्व को। प्रथम कल्प में न रहने वाले धर्म की पक्ष में सिद्धि करना स्पष्ट व्याघात है। अतः अनित्यत्व का शब्दवृत्ति (शब्द में रहना) सिद्ध हुआ।।३।।

**४ अयं शब्दः सम्प्रतिपन्नैतद्धर्मत्वानाक्रान्ताधिकरणं मेयत्वादिति। अत्र च सम्प्रतिपन्नैतद्धर्मेषु सम्प्रतिपन्नैतद्धर्मत्वं नाम धर्मः। तेनाक्रान्तश्चै-तच्छब्दवृत्तित्वरहितो वा विप्रतिपन्नमनित्यत्वं वा। प्रथमो व्याहतत्वान्न पक्षे सिध्यति। तेन पक्षे विप्रतिपन्नानित्यत्वसिद्धिरिति।।४।।**

---

**आनं.**—अयं शब्दोऽधिकरणमित्युक्ते मेयत्वादिनार्थान्तरता, अत उक्तम्—**एतद्धर्मत्वानाक्रान्तेति**। एतद्धर्मत्वानाक्रान्ताधिकरणमित्युक्ते व्याघात-परिहाराय सम्प्रतिपन्नेति विशेषणम्। सम्प्रतिपन्नैतद्धर्मत्वानाक्रान्तश्च पक्षावृत्तिर्वा विप्रतिपन्नमनित्यत्वं वा। प्रथमो व्याहत इति द्वितीयम नित्यत्वं सिध्यतीत्यर्थः।

**भुवन.**—अथ **'पक्षेषु ये सन्ति विवादहीनाः' विहाय तानन्यतरः प्रसाध्यः।।'** इति कारिकार्धमाश्रित्य प्रवृत्तां महाविद्यामाह—अयं शब्दः सम्प्रतिपन्नेतिं। अत्र सम्प्रतिपन्नाः शब्दधर्माः शब्दत्वप्रमेयत्वादयः, तेषां भावः तत्त्वम्। तेनाक्रान्तानां धर्माणामाश्रयः इत्यर्थः। शब्दानित्यत्वसिद्धिमाह—**तदनाक्रान्तश्चेत्यादिना**। सुगममेवैतत्।।४।।

---

चौथा महाविद्यानुमान प्रयोग **'अयं शब्दः संप्रतिपन्नैतद्धर्मत्वा-नाक्रान्ताधिकरणं मेयत्वात्'**—

**पक्षेषु ये सन्ति विवादहीनाः। .**
**विहाय तानन्यतरः प्रसाध्यः।।**

इस कारिका के अर्थ को लेकर उक्त महाविद्यानुमान प्रवृत्त है। शब्दादि पक्षों में उभयवादि अभिमत शब्दत्वादि को छोड़ कर अन्य धर्मों की सिद्धि शब्दादिरूपपक्ष में करना चाहिए। सम्प्रतिपन्न एतद्धर्म शब्द में रहने वाले शब्दत्वादिधर्म उनमें एतद्धर्मत्व नामक धर्म है। उससे आक्रान्त सम्प्रति पन्नैतद्धर्म हुआ, अनाक्रान्त अनित्यत्व धर्म हुआ, उसका अधिकरण शब्द है। दृष्टान्तघटादि में भी सम्प्रतिपन्न शब्दत्व में रहने वाले एतद्धर्मत्व से अनाक्रान्त अनित्यत्व धर्म उसका अधिकरण घटादि अनित्यपदार्थ तथा आकाशादि नित्य पदार्थ भी है। अतः साध्यवैकल्यदोष नहीं है। एतद्धर्धत्वाना-क्रान्ताधिकरणं कहने पर व्याघात दोष आवश्यंभावी है. अत; सम्प्रतिन्नै-तद्धर्मत्वानाक्रान्ताधिकरण कहा है। सम्प्रतिपन्नैतद्धर्मत्वानाक्रान्त पक्ष में न रहने वाले को लें? कि विवादास्पद अनित्यत्व को, प्रथय पक्ष में व्याघात है। अतः द्वितीय पक्ष अनित्यत्व को लेंगें उसका अधिकरण शब्द है।।४।।

**५ अयं शब्दः अनित्यत्वात्यन्ताभावव्यतिरिक्तैतन्निष्ठात्यन्ताभावप्रतियोगित्वरहितात्यन्ताभावाधिकरणं मेयत्वादिति। अत्र चानित्यत्वात्यन्ताभावव्यतिरिक्ताश्च ते एतन्निष्ठात्यन्ताभावप्रतियोगिनश्चेति विग्रहः। तेषु चानित्यत्वात्यन्ताभावव्यतिरिक्तैतन्निष्ठात्यन्ताभावप्रतियोगिषु अनित्यत्वा-**

---

**५ आनं.**—अयं शब्दः इत्यादि। अनित्यत्वस्यात्यन्ताभावोऽनित्यत्वात्यन्ताभावः तस्माव्द्यतिरिक्तश्च पक्षनिष्ठो योऽत्यन्ताभावः, तत्प्रतियोगित्वरहितश्च, अनित्यत्वात्यन्ताभावव्यतिरिक्तैतन्निष्ठात्यन्ताभावप्रतियोगित्वरहितो यो धर्मस्तदत्यन्ताभावाधिकरणमित्यर्थः। मेयत्वादिनार्थान्तरतां परिहर्तुमत्यन्ताभावाधिकरणमित्युक्तम्। तथापि गन्धरसादीनामत्यन्ताभावाधिकरणतया सिद्धसाधनता, अत उक्तम्—**एतन्निष्ठात्यन्ताभावप्रतियोगित्वरहितेति।** एतन्निष्ठात्यन्ताभावप्रतियोगित्वरहितात्यन्ताभावाधिकरणमित्युक्ते व्याघातपरिहारायोक्तम्—**अनित्यत्वात्यन्ताभावव्यतिरिक्तेति।** नैवं व्याघातः। अनित्यत्वात्यन्ताभावस्य अत्यन्ताभावाधिकरणतया साध्यसिद्धेरिति भावः। अनुमानार्थान्तरमाह—**अत्र चेति।**

**५ भुवन.**—**'असाध्यान्यवियुक्तान्यव्यावृत्तिर्वा प्रसाध्यते'** एतत्कारिकार्धमाश्रित्य पक्षं पक्षयित्वा या प्रवृत्ता तामाह—**अयं शब्दः अनित्यत्वेति।** यः एतन्निष्ठः शब्दनिष्ठोऽत्यन्ताभावः, तस्य ये प्रतियोगिनो विश्वपदार्थाः। ते किंविशिष्टाः। अनित्यत्वस्य अत्यन्ताभावोऽनित्यत्वात्यन्ताभावः नित्यत्वं, तस्माव्द्यतिरिक्ता भिन्ना इत्यर्थः। तेषां भावस्तत्त्वम्। तेन रहितोऽनित्यत्वा-

---

पाञ्चवा महाविद्यानुमान का प्रयोग है **'अयं शब्दः अनित्यत्वात्यन्ताभावव्यतिक्तैतन्निष्ठात्यन्ताभावप्रतियोगित्वरहितात्यन्ताभावाधिकरणं मेयत्वात्।** इस अनुमान में भी अयं शब्दः पूर्ववत् पक्ष है, अनित्यत्वात्यन्ताभावव्यतिरिक्तैतन्निष्ठात्यन्ताभावप्रतियोगित्वरहितात्यन्ताभावाधिकरणत्व साध्य है। मेयत्व हेतु है। अनित्यत्व के अत्यन्ताभाव से व्यतिरिक्त जो पक्षवृत्ति अत्यन्ताभाव (पक्ष में रहनेवाला अत्यन्ताभाव) उसके प्रतियोगित्व से रहित जो अत्यन्ताभाव उसका अधिकरणत्व पक्षीभूत शब्द में साध्य है।

साध्य का समन्वय इस प्रकार, पक्ष में रहने वाला जो अत्यन्ताभाव है, उसका प्रतियोगी सकल विश्व होगा, वह प्रतियोगी विश्व कैसा है, अनित्यत्व के अत्यन्ताभाव वाले नित्यत्व धर्म से व्यतिरिक्त है। उसमें नित्यत्वव्यतिरिक्तत्व नामक कोई धर्म है। तद्रहित यानी अनित्यत्वात्यन्ताभाव से व्यतिरिक्त पक्ष में

**त्यन्ताभावव्यतिरिक्तैतन्निष्ठात्यन्ताभावप्रतियोगित्वं नाम धर्मः। तद्रहितश्च पक्षावृत्तिर्वा स्यात्, अनित्यत्वात्यन्ताभावो वा। आद्यस्यात्यन्ताभावः पक्षे व्याहतः, तेन अनित्यत्वात्यन्ताभावात्यन्ताभावः पक्षे सिध्यति। स चानित्यत्वमेवेत्यनित्यत्वं पक्षे सिध्यति।।५।।**

---

त्यन्ताभावव्यतिरिक्तैतन्निष्ठात्यन्ताभावप्रतियोगित्वरहितो यो धर्मो नित्यत्वादिः, तदत्यन्ताभावाधिकरणमित्यर्थः। मेयत्वादिनाऽर्थान्तरतापरिहाराय अत्यन्ताभावाधिकरणमित्युक्तम्। तथापि घटत्वादीनामत्यन्ताभावाधिकरणतया सिद्धसाध्यता। तदुक्तमेतन्निष्ठात्यन्ताभावप्रतियोगित्वरहितेति। एतन्निष्ठात्यन्ताभावप्रतियोगित्वरहितात्यन्ताभावाधिकरणमित्युक्ते व्याघातः स्यात्। ततस्तदपोहार्थमनित्यत्वात्यन्ताभावव्यतिरिक्तेति। न चैवं व्याघातः। अनित्यत्वात्यन्ताभावस्य अत्यन्ताभावाधिकरणतया पक्षे शब्दे साध्यसिद्धेः। इति व्यावृत्तिचिन्ता।। अयमाशयः—शब्दव्यतिरिक्तविश्वस्य अत्यन्ताभावः शब्देऽस्ति। अतस्तत्प्रतियोगित्वं विश्वस्यैवास्ति। तेन रहितं च साध्यधर्मपक्षे नित्यत्वमेव। तस्य अनित्यत्वात्यन्ताभावव्यतिरिक्तेतिपदेन विश्वात् पृथक्कृतत्वात्, तदत्यन्ताभावाधिकरणं अनित्यत्वाधिकरणं शब्द इत्यर्थः। **आद्यस्यात्यन्ताभावः पक्षे व्याहत इति।** पक्षवृत्तिः शब्दत्वादिधर्मो यद्यप्यनित्यत्वात्यन्ता-

---

रहने वाले प्रतियोगित्व से रहित जो धर्म है, वह नित्यत्व है। उसका अत्यन्ताभाव अनित्यत्व उसका अधिकरण शब्द अनित्य सिद्ध हुआ।

यद्यपि अनित्यत्व का अत्यन्ताभाव अनित्य से अतिरिक्त सभी में है। तथापि यहाँ पर जो साध्य विवक्षित है। वह अनित्यत्व के अत्यन्ताभाव से अतिरिक्त पक्ष में रहने वाले अत्यन्ताभाव के प्रतियोगित्व रहित अत्यन्ताभाव का अधिकरणत्व है। अतः अनित्यत्व के अत्यन्ताभावपद से नित्यत्वधर्म लेना है। अनित्यत्व का अत्यन्ताभाव जैसे नित्यपदार्थों में है, उसी प्रकार नित्यत्व में भी है। उससे व्यतिरिक्त पक्षमें रहने वाला धर्म अत्यन्ताभाव का प्रतियोगी हुआ। उसमें अनित्यत्वात्यन्ताभावव्यतिरिक्तैतन्निष्ठात्यन्ताभावप्रतियोगित्व धर्म हुआ। अनित्यत्वात्यन्ताभावव्यतिरिक्तैतन्निष्ठाधिकरणत्व साध्य रखे तो मेयत्वादिधर्म को लेकर अर्थान्तर होगा। अनित्यत्व का अत्यन्ताभाव जैसे नित्य में है, वैसे ही मेयत्व में भी है। मेयत्वधर्म को शब्दवृत्तित्वेन (शब्द में रहना) माने उसका अधिकरण शब्द को तब तो पक्ष शब्द में मेयत्वाधिकरणत्व सिद्ध होगा न कि अनित्यत्वाधिकरणत्व। अनित्यत्व के अत्यन्ताभावाधिकरणत्वेन शब्द को

**६ अयं शब्दः स्वेतरानित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहितानेतन्निष्ठाधिकरणं मेयत्वादिति। अनित्यवृत्तित्वे सति नित्यवृत्तयो ये धर्मास्तेष्वनित्यनित्यवृत्तित्वं धर्मः। तद्रहितस्तदत्यन्ताभाववान्। अनेकेषु**

---

भावव्यतिरिक्तैतनिष्ठात्यन्ताभावप्रतियोगित्वरहितो वर्तते, परं तस्यात्यन्ताभावे शब्दमध्ये साध्यमाने व्याघातः स्यात्। तस्मात्पारिशेष्यान्नित्यत्वस्यैवात्यन्ताभावः शब्दे साध्यते इति भावः। शब्दमात्रवृत्तिशब्दत्वादीनामत्यन्ताभावः सर्वत्र सपक्षे धर्मो ज्ञेयः॥५॥

**आनं.**—स्वेतरानित्यनित्येत्यादि। पक्षीकृतशब्दादितरे येऽनित्याः नित्याश्च तेषु वृत्तिर्यस्य धर्मस्य तस्य स्वेतरानित्यनित्यवृत्तित्वं धर्मः, तदत्यन्ताभाववांश्च अनेकेषु नित्येषु वृत्तित्वरहितश्च, अयमेतन्निष्ठः पक्षीकृतशब्दादन्यनिष्ठश्चेति स्वेतरानित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहितानेतन्निष्ठस्तस्याधिकरणमित्यर्थः। अयं शब्दोऽधिकरणमित्युक्ते पक्षीकृतशब्दव्यतिरिक्तत्वात्यन्ताभावेन पक्षमात्रनिष्ठेन अर्थान्तरता, अत उक्तम्—अनेत-

---

अनित्यसिद्ध करना उद्देश्य है, न कि जिस किसी धर्म का अत्यन्ताभाव।

अब प्रश्न है, कि अनित्यत्वात्यन्ताभावव्यतिरिक्तैतन्निष्ठात्यन्ताभावप्रतियोगित्वरहित, अत्यन्ताभाव शब्दावृत्ति लें? या अत्यन्ताभाव सामान्य लें? यदि शब्दावत्ति (शब्द में न रहने वाले) को लेंगे तो स्पष्ट व्याघात होगा। क्योंकि जो शब्द में नहीं रहने वाला धर्म है, उसको शब्द में सिद्ध किया जा रहा है। अतः एतादृश अत्यन्ताभाव सामान्य को लेंगें जो शब्द को अनित्य माने विना सिद्ध नहीं होगा। अनित्यत्वात्यन्ताभावव्यतिरिक्तैतन्निष्ठात्यत्यन्ताभावप्रतियोगित्वरहित, शब्द में रहने वाले धर्म शब्दत्वादि हैं। उसका अत्यन्ताभाव सभी शब्दातिरिक्त में सिद्ध है। अतः न तो साध्याप्रसिद्धि है, न तो साध्यवैकल्पदोष है॥५॥

छठवाँ महाविद्यानुमान प्रयोग **'अयं शब्दः स्वेतरानित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहितानेतन्निष्ठाकरणं मेयत्वात्'** यह अनुमान प्रयोग **'अपक्षसाध्यवद्वृत्तिविपक्षान्वयवर्जितः। नानाविपक्षवृत्यन्यभिन्नधर्मोऽस्ति पक्षिते'**। इस कारिका के तात्पर्य पर आधारित है। जो धर्म सपक्ष और विपक्ष में न रहता हुआ नाना पदार्थों में न रहाता हो, तथा पक्षीभूतशब्द से भिन्न का धर्म हो, उसे शब्द में सिद्ध करना है। ऐसा धर्म अनित्यत्व ही होगा, उसका अधिकरण शब्द अनित्य सिद्ध होगा।

**वर्त्तन्ते ये धर्मास्तेष्वनेकनित्यवृत्तित्वं धर्मः। तद्रहितस्तदत्यन्ताभाववान्। अनेतन्निष्ठः पक्षीकृतशब्दान्यनिष्ठः। अनित्यनित्यवृत्तित्वरहितश्चासावनेक-नित्यवृत्तित्वरहितश्च स चासावनेतन्निष्ठश्च। तदधिकरणं तदाश्रय इत्यर्थः।**

---

न्निष्ठेति। अनेतन्निष्ठाधिकरणमित्युक्ते मेयत्वादिनार्थान्तरता, अत उक्तम्—नित्यवृत्तित्वरहितेति। नित्यवृत्तित्वरहितानेतन्निष्ठाधिकरणमित्युक्ते आकाश-व्यतिरिक्तनित्यान्यत्वेन शब्दनित्यत्वेऽप्युपपद्यमानेन आकाशव्यतिरिक्तनित्येषु वृत्तिहीनेन अर्थान्तरता, अत उक्तम्—**अनेकनित्यवृत्तित्वरहितेति**। पक्षीकृत-शब्दनित्यत्वे तस्यानेकनित्यवृत्तित्वेन तद्रहितत्वानुपपत्तिः। अनेकनित्यवृत्तित्व-रहितानेतन्निष्ठाधिकरणमित्युक्तौ नित्यत्वेन अर्थान्तरता, अत उक्तम्—**अनेकनित्यवृत्तित्वरहितेति।** स्वेतरेति पदं स्पष्टीकरणार्थम्। अनित्यनित्य-वृत्तित्वरहितानेकनिष्ठश्चानित्यमेव पक्षे पर्यवस्यतीति भावः। पक्षव्यतिरिक्ते सर्वत्र स्वान्यत्वाधिकरणप्रतियोगिकः एकैकधर्मिकोऽन्योन्याभावोऽस्तीति व्याप्तिसिद्धिः। अनुमानविवरणग्रन्थो व्याख्यातार्थः।

**भुवन.**—अथ **'अपक्षसाध्यवद्वृत्तिविपक्षान्वयवर्जितः। नानाविपक्ष-वृत्त्यन्यभिन्नधर्मोऽस्ति पक्षिते'** इति कारिकामाश्रित्य या प्रवृत्ता तां दर्शयति—अयं शब्दः स्वेतरानित्यनित्यवृत्तित्वरहितेति। स्वस्मादितरे येऽनित्या नित्याश्च तेषु वृत्तिर्यस्य धर्मस्य तस्य स्वेतरानित्यनित्यवृत्तित्वं, तदत्यन्ताभाव-वांश्चासौ, अनेकेषु वृत्तित्वरहितश्चायम्, अनेतनिष्ठः पक्षीकृतशब्दान्यनिष्ठश्चेति स्वेतरानित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहितानेतन्निष्ठः, तस्याधिकरण-मित्यर्थः। न एषः अनेषः। अनेतस्मिन् पक्षीकृतशब्दादन्यस्मिन्निष्ठा यस्य सोऽनेतन्निष्ठः। नन्वेवंविधविशेषणविशिष्टोऽपि शब्दे सिषाधयिषितो धर्मो यद्यनेतनिष्ठः, कथं तर्ह्येतस्मिन् शब्दे साध्यते, व्याघातप्रसंगात्, पटादौ

---

पक्षीकृतशब्द से भिन्न जो अनित्यपदार्थ तथा जो नित्यपदार्थ उन नित्यानित्यपदार्थों में रहने वाले धर्म में स्वेतरानित्यनित्यवृत्तित्वनामक धर्म है। स्वेतरानित्यवृत्तित्व धर्म का अत्यन्ताभाव है, जिसमें तथा जो अनेकनित्यों में नहीं रहता, तथा जो पक्षीकृतशब्द से भिन्न में रहता है, वह धर्म स्वेतरानित्य-नित्यवृत्तित्वरहितानेकनित्यवृत्तिरहितानेतन्निष्ठ धर्म हुआ अनित्यत्व, उसका अधिकरण शब्द अनित्य होगा।

यदि 'अनेकनित्यवृत्तित्वरहितानेतन्निष्ठाधिकरणम्' साध्य बनाये तो भी शब्द में एतादृशधर्म सिद्ध हो सकता है। अनेकनित्यों में न रहने वाला

**अनेकनित्यवृत्तित्वरहितानेतन्निष्ठाधिकरणनित्युक्ते पक्षीकृतशब्दव्यतिरिक्तनित्यत्वात्यन्ताभावादिना अनेकनित्यवृत्तित्वरहितानेतन्निष्ठेन शब्दनित्यत्वेऽप्युपपद्यमानेनार्थान्तरता स्यात्। तन्निवृत्यर्थमनित्यनित्यवृत्तित्वरहित-**

---

घटत्वादिसाधनवत् इति चेत्। न अर्थापरिज्ञानात्। अनेतन्निष्ठ इत्यस्य ह्ययमर्थः, शब्दे सिषाधयिषितोऽनित्यत्वादिको धर्मो घटे घटत्ववन्न केवले शब्दे एव वर्तते, किन्तु शब्दादन्यत्र घटादौ च स वर्तते एव। तस्मात्तस्यानेतन्निष्ठत्वमुपपन्नमेवेति भावः।

**आनं.—आद्य इति।** अनित्यनिष्ठो धर्मः पक्षीकृतशब्दे भवन्। अस्य नित्यत्वेऽनित्यानित्यवृत्तिरिति तद्रहितत्वव्याघात इत्यर्थः।

**भुवन.**—अथ पश्चानुपूर्व्या व्यावृत्तिचिन्तामुखेन अनुमानार्थे व्याख्यानयन्नाह—**अनेकनित्यवृत्तित्वेत्यादि। पक्षीकृतशब्दव्यतिरिक्तेति।** पक्षीकृतशब्दात् व्यतिरिक्ता ये आकाशादयः तेषु यन्नित्यत्वं तस्यात्यन्ताभावः तेन **अनेकनित्यवृत्तित्वरहितेनेति।** नित्यत्वात्यन्ताभावस्य नित्येष्ववर्तनात्। **अनेतन्निष्ठेनेति।** पक्षीकृतशब्दव्यतिरिक्तनित्यत्वात्यन्ताभावस्य अनित्येष्वपि वर्तमानत्वेन केवले शब्दे एव अवर्तनादनेतन्निष्ठत्वमितिभावः। **शब्दनित्यत्वेऽप्युपपद्यमानेनेति।** शब्दनित्यत्वेऽपि साध्येऽस्य धर्मस्योपपद्यमानत्वात्

---

तथा शब्दातिरिक्त अनित्यों में रहने वाला धर्म अनित्यत्वधर्म उसका अधिकरण शब्द हो जायेगा। परन्तु 'अनेकनित्यवृत्तित्वरहितानेतन्निष्ठाधिकरणम्, साध्य करने पर अर्थान्तर दोष होगा।

पक्षीकृतशब्द से अतिरिक्त जो आकाशादि नित्यपदार्थ है। उनमें नित्यत्वधर्म है। उसका अत्यन्ताभाव नित्यत्वात्यन्ताभाव किसी नित्यपदार्थ में नहीं है। अनेकनित्यवृत्तित्वरहित धर्म शब्दातिरिक्त अनित्यपदार्थों में विद्यमान है। अर्थान्तर दोष इसलिए हो रहा है, कि तत् व्यक्तिनिष्ठनित्यत्व धर्म (किसी एक नित्यद्रव्य में रहने वाला नित्यत्वधर्म) किसी एक में रहने के कारण अनेकनित्यवृत्तित्वरहित है, तथा पक्षीभूतशब्दातिरिक्त में रहने के कारण अनेतन्निष्ठ भी है। ऐसा धर्म तत् तत् व्यक्तिनिष्ठ (एक एक नित्य पदार्थों में रहने वाला) नित्यत्व धर्म होगा। जो शब्द को नित्य माने पर भी सिद्ध हो सकता है। शब्द में अनित्यत्व सिद्ध करना था, परन्तु सिद्ध हो गया एक नित्य में रहने वाला नित्यत्व यही अर्थान्तरता है। जब स्वेतरानित्यनित्यवृत्तित्वरहित साध्य विशेषण बना दिया गया, तो अर्थान्तरता दोष नहीं होगा

**ग्रहणम्। पक्षीकृतशब्दनित्यत्वे पक्षीकृतशब्दव्यतिरिक्तनित्यत्वात्यन्ताभावादीनामनित्यनित्यवृत्तित्वेन तद्रहितत्वानुपपत्तेः। अनित्यनित्यवृत्तित्वरहितानेतन्निष्ठाधिकरणमित्युक्ते नित्यानित्यवृत्तित्वरहितेन अनेतन्निष्ठेन नित्यत्वादिनार्थान्तरता स्यात्। तन्निवृत्यर्थमनेकनित्यवृत्तित्वरहितग्रहणम्। अनित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहिताधिकरणमित्युक्ते पक्षीकृतशब्दमात्रनिष्ठैः पक्षीकृतशब्दान्यत्वात्यन्ताभावादिभिरर्थान्तरता स्यात्।**

---

अर्थान्तरतेति साधयितुमनित्यत्वमुपक्रान्तम्। अनया च युक्त्या नित्यत्वमप्युपपद्यते। तस्मादर्थान्तरता। **अनित्यनित्यवृत्तित्वेन तद्रहितत्वानुपपत्तेरिति।** पक्षीकृतशब्दनित्यत्वे पक्षीकृतशब्दव्यतिरिक्तनित्यत्वात्यन्ताभावस्य अनित्येषु घटादिषु नित्ये शब्दे च वर्तमानत्वात् अनित्यनित्यवृत्तित्वरहितत्वं न स्यादित्यर्थः। अथानेकनित्यवृत्तित्वरहितेति पदं त्यक्त्वा व्यावृत्तिं करोति- **अनित्यनित्येत्यादि।** तथा च युगलावृत्तित्वादनित्यवृत्तित्वरहितेन नित्यत्वादिना अर्थान्तरं स्यात्, ततोऽनेकनित्यवृत्तित्वरहितेतिग्रहणम्। अथ अन्त्यं विशेषणं परित्यज्य व्यावृत्तिं करोति **अनित्यनित्येत्यादि। पक्षीकृतशब्दमात्रनिष्ठैः पक्षीकृतशब्दान्यत्वात्यन्ताभावादिभिरिति।** पक्षीकृतशब्दादन्यद्विश्वं, तत्र पक्षीकृतशब्दान्यत्वं नाम धर्मः, तस्यात्यन्ताभावः शब्दे एवास्ति। तेनोक्तं

---

क्योंकि एक नित्य में रहने वाला भी नित्यत्वधर्म अनित्यनित्यवृत्तित्वरहित नहीं होगा। वह नित्यवृत्ति है।

यदि अनित्यनित्यवृत्तित्वरहितानेतन्निष्ठाधिकरणम्, साध्य रहे तब भी अर्थान्तरता दोष होगा। नित्य में रहता हुआ भी नित्यत्व, नित्य अनित्य उभय में नित्यत्व नहीं रहता, अतः अनित्यनित्यवृत्तित्वरहित हुआ, तथा शब्द में न रहने के कारण अनेतन्निष्ठ भी हो गया। उसका अधिकरण शब्द नित्य सिद्ध होगा। इसलिए अनेकनित्यवृत्तित्वरहित कहा। नित्यत्वधर्म अनेकनित्यवृत्ति ही है। साध्यकोटि में प्रविष्ट अनेतन्निष्ठ पद को यदि हटा दें तो साध्य का स्वरूप होगा 'अनित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहिताधिकरणम् तो अर्थान्तरता होगी। जो धर्म अनित्य तथा नित्य में न रहता हो एवं अनेक नित्यों में न रहता हो ऐसा धर्म, जिस प्रकार अनित्यत्व है, उसी प्रकार पक्षीकृतशब्दान्यत्वात्यन्ताभाव होगा। वह धर्म भी अनित्यनित्यवृत्तित्वरहित (अनित्यनित्योभय में न रहता हुआ) अनेकनित्यवृत्तित्वरहित (अनेकनित्यों में नहीं रहता) है। पक्षीभूत शब्द से अन्य में पक्षीकृतशब्दान्यत्व नामकधर्म है। उसका अत्यन्ताभाव पक्षीभूतशब्द में साक्षात् है। शब्द में

**तन्निवृत्यर्थमनेतन्निष्ठग्रहणम्। पक्षीकृतशब्दनित्यत्वे तत्रानेतन्निष्ठो धर्मो भवन् अनेतदनित्यनिष्ठो वा, अनेतन्नित्यनिष्ठो वा। आद्ये नित्यानित्यवृत्तित्व-रहितत्वव्याघातः। द्वितीये अनेकनित्यवृत्तित्वरहितत्वव्याघातः। तेन पक्षे नित्यत्वाभावरूपानित्यत्वसिद्धिरिति। स्वेतरानित्यवृत्तित्वरहितेत्यत्र स्वेतर-**

---

पक्षीकृतशब्दमात्रनिष्ठैरिति। साधयितुमिष्टं चात्रानित्यत्वम्। एवं चोभयोरप्य-विवादापन्नाः शब्दान्यत्वात्यन्ताभावादयोऽपि सिध्यन्तीत्यर्थान्तरता। अत्र शब्दस्य अनित्यत्वसिद्धिमाह—**पक्षीकृतशब्दनित्यत्वे तत्रानेतन्निष्ठो धर्मो भवन्नित्यादि।** पक्षीकृतशब्दस्य यदि नित्यत्वमङ्गीक्रियते तदाऽनेतदनित्यनिष्ठ इत्याद्ये विकल्पे नित्यानित्यवृत्तित्वरहितत्वव्याघातः। तस्य धर्मस्य नित्ये शब्देऽनित्ये च घटादौ वर्तनात्। **द्वितीयेऽनेकनित्यवृत्तित्वरहितत्वव्याघात इति।** अनेतन्नित्यनिष्ठ इति द्वितीये कल्पे तस्य धर्मस्य नित्ये गगनादौ नित्ये एव च शब्दे वर्तमानत्वेन अनेकनित्यवृत्तित्वात् तद्रहितत्वव्याघातः स्फुट एवेति। **तेन पक्षे नित्यत्वेति।** तेन कारणेन पक्षे शब्दे नित्यत्वाभावरूपस्य अनित्यत्वस्य सिद्धिः। एवंविधश्च धर्मः शब्दे विचारितः सन् अनित्यत्वं वा, विश्वप्रतियोगिको घटशब्दान्योन्याभावादिर्वा। पूर्वोक्तसर्वविशेषणैः सह तस्य संवादात्। तस्य च शब्दे नित्ये स्वीक्रियमाणेऽनित्ये घटे नित्ये च शब्दे वर्तनात् नित्यानित्यवृत्तित्वरहितत्वं न स्यात्। तस्माच्छब्दस्यानित्यत्वं

---

अनित्यत्व सिद्धि ईप्सित है, उस शब्द में पक्षीकृतशब्दान्यत्वात्यन्ताभाव सिद्ध होगा। अतः अर्थान्तर दोष है। तथा तादृशधर्म पक्षीभूत शब्द में पूर्व से ही सिद्ध है, उसका साधन करने पर सिद्ध साधन दोष होगा। अनेतन्निष्ठ साध्य का घटक बना देने पर अर्थान्तरता दोष नहीं होगा। पक्षीकृत-शब्दान्यत्वात्यान्ताभावधर्म शब्द में रहता है, अतः एतन्निष्ठ होगा, अनेतन्निष्ठ नहीं होगा। इस प्रकार न तो अर्थान्तरतादोष होगा न तो सिद्धसाधनता।

अनित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहितानेतन्निष्ठ धर्म की सिद्धि शब्द को नित्यमान कर सम्भव नहीं है। एतादृश अनेतन्निष्ठ (पक्षीभूतशब्द से भिन्न में रहने वाला) धर्म शब्दातिरिक्त अनित्य में रहता है? कि शब्दातिरिक्त नित्यपदार्थ में? यदि अनित्य में रहना माने तो व्याघात दोष होगा। जो धर्म नित्यानित्यवृत्तित्वरहित (नित्य एवं अनित्य में नहीं रहता) है, उसे अनित्य में रहना कहना तो व्याघात है। यदि द्वितीय पक्ष स्वीकार करके नित्य में रहना माने तो अनेकनित्यवृत्तित्वरहित (अनेकनित्यों में रहना)

**ग्रहणस्य प्रयोजनं न पश्यामः। कुलार्कपण्डितैस्तु केनाभिप्रायेणं स्वेतरपदं प्रयुक्तमिति चिन्त्यम्। अत्र चैकैकनित्यनिष्ठैकैकानित्यनिष्ठनित्यत्वानित्यत्वादीन्युपादाय साध्यप्रसिद्धेरप्रसिद्धविशेषणत्वं निरसनीयम्।।६।।**

---

स्वीकार्यमेवेति। **कुलार्कपण्डितैस्तु केनाभिप्रायेणेति।** सोऽभिप्रायः कुशलतरैश्चिन्त्यः। एतच्च **महाविद्याविवरणटिप्पने**ऽस्माभिरेवं सप्रपञ्चं प्रपञ्चितमिति नात्र प्रपञ्च्यते। यद्वा स्वेतरेति पदं स्पष्टीकरणार्थमेवेति ज्ञेयम्। **अत्र चैकैकनित्यनिष्ठैकैकानित्यनिष्ठेत्यादि।** एकैकनित्याः आकाशपरमाण्वादयः, तन्निष्ठास्तन्नित्यत्वाकाशत्वपरमाणुत्वादयः। एकैकानित्या घटपटादयः, तन्निष्ठास्तदनित्यत्वघटत्वपटत्वादयः। ते च युगलावृत्तित्वेन नित्यानित्यवृत्तित्वरहिताः नानानित्यावृत्तयश्च, तथा अनेतन्निष्ठाः शब्दादन्यत्र वर्तमानाश्च विद्यन्त एवेति तेषां सपक्षे प्रसिद्धत्वादप्रसिद्धविशेषणत्वमपि नास्तीति भावः। **नित्यत्वानित्यत्वादीन्युपादायेति।** अत्रादिपदेन तत्तन्नित्यमात्रनिष्ठतत्तदनित्यमात्रनिष्ठाकाशत्वघटत्वादिधर्मग्रहः।।६।।

---

अंश में व्याघात होगा। नित्यवृत्तिधर्म जब हो ही गया, तब अनेक नित्यवृत्तित्व रहित उसे कहना व्याघात दोष है। अतः शब्द को अनित्यमान कर नित्यत्व के अभावस्वरूप अनित्यत्व की सिद्धि की जाती है। वह अनित्यत्वधर्म, अनित्यवृत्ति (अनित्य मे रहना) तो है, किन्तु नित्यवृत्ति (नित्य में रहना) नहीं है। अतः अनित्यनित्यवृत्तित्वरहित है। तथा किसी नित्य में नहीं रहता। अतः अनेकनित्यवृत्तित्वरहित भी है। तथा शब्द से अन्य में रहने के कारण अनेतन्निष्ठ भी है।

साध्यघटकस्वेतरपद मुलार्कपण्डित ने किस अभिप्राय से किया इसका स्पष्टतया प्रयोजन दृष्टिगोचर नहीं होता।

उक्त साध्य की अप्रसिद्धि भी नहीं है। साध्य प्रसिद्धि इस प्रकार करेंगे। एक-एक नित्य पदार्थ आकाश परमाणु आदि को लेंगें उनमें रहने वाला नित्यत्वधर्म आकाशत्व परमाणुत्व आदि है। एक-एक अनित्य पदार्थ घट पटादि उनमें अनित्यत्वधर्म घटत्व पटत्व आदि है। ये दोनों धर्म नित्य तथा अनित्य दोनों में एक साथ नहीं रहते। अतः नित्यानित्यवृत्तित्वरहित हैं। एवं अनेक नित्यों में भी नहीं रहते। अतः अनेकनित्यवृत्तित्वरहित भी है। तथा पक्षीभूतशब्द से अन्य में रहते हैं, इसलिए अनेतन्निष्ठ भी हैं। ऐसा धर्म सपक्ष में प्रसिद्ध है। महाविद्यानुमान केवलान्वयी होता है। अतः सभी नित्यपदार्थ एवं अनित्यपदार्थों में साध्य, उक्त नियम से सिद्ध करेंगे।।६।।

**७ अयं शब्दः स्वेतरानित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहितानेकनिष्ठाधिकरणं मेयत्वादिति। अनेतन्निष्ठपदस्थाने अनेकनिष्ठपदमेव पूर्वमहाविद्यावैलक्षण्यम्। अनित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहितानेकनिष्ठाधिकरणमित्युक्ते नित्येषु व्यभिचारः। अनित्यनित्यवृत्तित्वरहितस्य**

---

**आनं.**—**अयं शब्दः स्वेतरानित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहितानेकनिष्ठाधिकरणमित्यत्रापि** नित्यत्वात्यन्ताभावरूपमनित्यत्वं पक्षे सिध्यतीति भावः। ध्वनिभागेषु सिद्धसाधनत्वनिवृत्त्यर्थमयमित्युक्तम्। पक्षमात्रनिष्ठेन अर्थान्तरत्वं वारयति—**अनेकनिष्ठेति।** नित्यत्वेनार्थान्तरत्वनिरासाय—**अनेकनित्यवृत्तित्वरहितेति।** पक्षव्यतिरिक्तनित्यत्वात्यन्ताभावेनार्थान्तरतां वारयति—**नित्यानित्यवृत्तित्वरहितेति।** पक्षीकृतशब्दनित्यत्वे तस्य नित्यानित्यवृत्तित्वेन तद्रहितत्वानुपपत्तिः। नित्येषु साध्यसिद्ध्यर्थं स्वेतरेत्युक्तम्। शब्देतरनित्यानित्यवृत्तित्वरहितानेकनिष्ठो धर्मः एकैकस्मिन्नित्ये शब्दैकैकनित्यान्यत्वात्यन्ताभावशब्दैकैकनित्यवृत्तिरनेकनिष्ठोऽस्तीति भावः। स्वेतरविशेषणकृत्यमुपपादयति—**नित्यानित्यवृत्तित्वेत्यादिना।**

**भुवन.**—अथ पुनरप्येतदेवानुमानं अनेतन्निष्ठपदस्थाने अनेकनिष्ठपदग्रहणेनाह—**अयं शब्दः स्वेतरानित्यनित्यवृत्तित्वेत्यादि।** अत्रापि नित्यत्वात्यन्ताभावरूपमनित्यत्वं पक्षे सिध्यतीति भावः। अत्र चानित्यपदार्थेष्वनित्यत्वादिना साध्यसिद्धिर्द्रष्टव्या, न त्वेकैकानित्यनिष्ठघटत्वादिना। तस्यानेकनिष्ठत्वाभावात्। नित्यानां च पक्षतुल्यत्वार्थं स्वेतरपदसाफल्यं दर्शयति—

---

सप्तम महाविद्यानुमान 'अयं शब्दः स्वेतरानित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहितानेकनिष्ठाधिकरणम्, इस अनुमान में भी अयं शब्दः पक्ष स्वेतरानित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहितानेकनिष्ठाधिकरणत्व साध्य है, मेयत्व हेतु है।

छठवें महाविद्यानुमान से सातवें महाविद्यानुमान के साध्य में पूर्णतया साम्य है। पूर्वमहाविद्यानुमान में अनेतन्निष्ठ तथा इसमें अनेकनिष्ठ पद हैं! इस अनुमान से भी नित्यत्वात्यन्ताभावरूप अनित्यत्व शब्द में सिद्ध होता है। अनित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तिरहितानेकनिष्ठाधिकरण साध्य रखने पर नित्यपदार्थों में व्यभिचार होगा। केवलान्वयिसाध्यकानुमान में सभी सपक्ष होते हैं। नित्यपदार्थों में मेयत्व हेतु है, अनित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहितानेकनिष्ठाधिकरणत्वरूप साध्य नहीं है। जो धर्म अनित्य में रहता

**अनित्यमात्रवृत्तेर्नित्येषु व्याहतत्वात्। नित्यमात्रवृत्तेरनित्येषु व्याहतत्वात्। नित्यमात्रवृत्तेश्च अनेकनिष्ठस्य अनेकनित्यवृत्तित्वग्रहणेन निरस्तत्वात्। एकैकनित्यवृत्तेश्चानेकनिष्ठग्रहणेन व्युदासात्। अतो नित्यानां विपक्षत्व-व्युदासेन पक्षतुल्यत्वार्थे स्वेतरग्रहणम्। शेषं पूर्ववत्।।७।।**

---

**अनित्यनित्यवृत्तित्वरहितेत्यादिना। अनित्यमात्रवृत्तेरिति।** अनित्यत्वादेर्धर्मस्य नित्येषु व्याहतत्वात्। **नित्यमात्रवृत्तेश्चेति।** नित्यत्वादेर्धर्मस्य। **एकैक-नित्यवृत्तेश्चेति।** आत्मत्वाकाशत्वादेर्धर्मस्येति। **पक्षतुल्यत्वार्थमिति।** पक्षः शब्दः तत्तुल्याः तत्समाः। सर्वेऽपि नित्या इत्यर्थः। अयं भावः। यथा शब्दं पक्षीकृत्य एवमेतदनुमानं प्रयुज्यते, तथा नित्यं गगनादिकमपि विपक्षं पक्षीकृत्य प्रयोक्तव्यम्। अत एव विपक्षपक्षीकरणप्रवृत्तासु महाविद्यासु एतदनुमानं दर्शयिष्यतीति।।७।।

---

हुआ नित्य में नहीं रहता तथा अनेकनित्यों में नहीं रहता। तथा अनेक में रहता है। ऐसा धर्म अनित्यत्व हुआ उसका अधिकरण नित्यपदार्थ नहीं हो सकता, मेयत्व हेतु नित्यपदार्थ में भी है। साध्य के अभाववाले में हेतु रह गया। अतः व्यभिचार होगा।

अतः साध्य का विशेषण स्वेतर पद को बनाया। शब्देतरत्वविशिष्ट अनित्यनित्यवृत्तित्वरहित तथा अनेकनित्यवृत्तित्वरहित एवं अनेक में रहने वाला धर्म शब्देतरत्व होगा। वह शब्द नित्यत्वपक्ष में, शब्द अनित्यत्वपक्ष में, शब्द में न रहने के कारण अनित्यनित्यवृत्तिरहित है। अनेकनित्यवृत्तिधर्म नित्यत्व है। उसका अत्यन्ताभाव शब्देतरत्व में, एवं शब्देतरत्व शब्दातिरिक्त नित्य एवं अनित्यपदार्थों में रहता है। अतः अनेकनिष्ठ भी है। अनित्यत्व धर्म अनित्यमात्र में रहता है। अतः अनित्य एवं नित्य में एक साथ नहीं रहता। उसे नित्य में सिद्ध करना चाहे तो व्याघात दोष है। एवं ऐसे धर्म को नित्यवृत्तित्वेन साध्य बनाये तो अनित्यों में व्याघात होगा। साध्य कोटि में अनेकनित्यवृत्तित्वरहित प्रविष्ट है, अतः नित्यत्व धर्म भी नहीं लिया जा सकता। नित्यत्व अनेकनित्यवृत्ति ही है। वृत्तित्वरहित नहीं है। एक-एक नित्यवृत्ति धर्म आकाशत्व आदि को भी नहीं ले सकते, क्योंकि साध्यकोटि में अनेकनिष्ठ पद प्रविष्ट है। इसलिए नित्यों के विपक्षत्व निराश के लिए एवं पक्ष के समान बनाने के लिए स्वेतरपद दिया। समन्वय आदि छठवें महाविद्या अनुमान की भाँति करना चाहिए।।७।।

**८ अयं शब्दः एतदाकाशवृत्तित्वरहितनित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितनित्यत्वाव्याप्यनित्यनिष्ठत्वरहिताधिकरणं मेयत्वादिति। एतस्मिन्नाकाशे च वर्तन्ते ये धर्मास्तेषु एतदाकाशवृत्तित्वं धर्मः। नित्यत्वव्यतिरिक्तनित्यत्वव्याप्येषु नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वं धर्मः। नित्य-**

---

**आनं.**—महाविद्यान्तरमाह—**एतदाकाशेति।** एतस्मिन्पक्षे आकाशे च वृत्तिरहित एतदाकाशवृत्तिरहितः, स चायं नित्यत्वव्यतिरिक्तत्वे सति नित्यत्वव्याप्यत्वरहितश्च, स चासौ नित्यत्वाव्याप्यत्वे सति नित्यनिष्ठत्वरहितश्च इत्येतदाकाशवृत्तित्वरहितनित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितनित्यत्वाव्याप्यनित्यनिष्ठत्वरहितः, तस्याधिकरणमित्यर्थः। अयं शब्दोऽधिकरणमित्युक्ते मेयत्वादिनार्थान्तरतात आह—**नित्यनिष्ठत्वरहितेति।** नित्यनिष्ठत्वरहिताधिकरणमित्युक्ते व्याप्तिभङ्गः, नित्येषु साध्यासिद्धेरत आह—**नित्यत्वाव्याप्येति।** नित्यत्वं नित्यव्याप्यमिति वक्ष्यति।

तेन नित्यत्वस्य नित्यनिष्ठत्वरहितत्वाभावेऽपि नित्यत्वाव्याप्यत्वे सति यन्नित्यनिष्ठत्वं तन्नास्तीति नित्यत्वमेव नित्येषूक्तरूपमस्तीति साध्यसिद्धिः। नित्यत्वाव्याप्यनित्यनिष्ठत्वाधिकरणमित्युक्तौ नित्यत्वेन अर्थान्तरता, अत आह—**नित्यत्वाव्याप्यत्वरहितेति।** नित्यत्वव्याप्यत्वरहितनित्यत्वाव्याप्यनित्यनिष्ठत्वरहिताधिकरणमित्युक्ते पुनरपि नित्येषु साध्यासिद्धिः। नित्यत्वस्य नित्यत्वव्याप्यत्वान्नित्यत्वव्याप्यत्वरहितत्वे सतीति विशेषणाभावादत आह—**नित्यत्वव्यतिरिक्तेति।** नित्यत्वस्य नित्यत्वव्यतिरिक्तत्वे सति यन्नित्यत्वा-

---

अष्टम महाविद्यानुमान **'अयं शब्दः एतदाकाशवृत्तित्वरहितनित्यत्वव्यतिरिकानित्यत्वव्याप्यत्वरहितनित्यत्वाव्याप्यनित्यनिष्ठत्वरहिताधिकरणं मेयत्वात्'** इस अनुमान में भी पक्ष एवं हेतु पूर्ववत् है। साध्य को तीन विशेषणों से विशेषित किया है। प्रथमविशेषण एतदाकाशवृत्तित्वरहित अर्थात् जो शब्द और आकाश दोनों में एक साथ न रहता हो, द्वितीय विशेषण जो नित्यत्व के अतिरिक्त नित्यत्व व्याप्यत्व रहित हो। तृतीयविशेषण जो नित्यत्व का व्याप्य न रहते हुए नित्य निष्ठत्वरहित हो उसका अधिकरण शब्द है।

शब्द एवं आकाश दोनों में रहने वाले धर्मों में एतदाकाशवृत्तित्व नामक धर्म है। उसका अत्यन्ताभाव जिस धर्म में है, अर्थात् जो शब्द तथा आकाश में एक साथ नहीं रहता। नित्यत्व से अतिरिक्त नित्यत्वव्याप्यों में नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वनामक धर्म है। उसका अत्यन्ताभाव

**त्वाव्याप्यनित्यनिष्ठेषु च नित्यत्वाव्याप्यनित्यनिष्ठत्वं धर्मः। एतदाकाशवृत्तित्वरहितश्चासौ नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितश्च। स चासौ नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितश्च, तदाश्रय इत्यर्थः।**

---

व्याप्यत्वं तन्नास्तीति नित्येषु साध्यसिद्धिः। नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितनित्यत्वाव्याप्यनित्यनिष्ठत्वरहिताधिकरणमित्युक्तौ नित्यत्वे न अर्थान्तरता, तां वारयति—**आकाशवृत्तित्वरहितेति।** आकाशवृत्तित्वरहितेत्यादि साध्योक्तौ व्याप्तिभङ्गः। नित्येषु तदभावादत उक्तम्—**एतदाकाशेति।** शब्दस्य नित्यत्वसंदेहान्नित्यत्वस्यैतदाकाशवृत्तित्वं निश्चितं नास्तीति नित्येषु नित्यत्वमुक्तरूपमस्ति। अनित्येषु पुनरनित्यत्वमेवोक्तरूपमिति व्याप्तिसिद्धिः। पक्षस्य नित्यत्वे पक्षमात्रनिष्ठधर्मस्य नित्यत्वव्याप्तत्वान्नित्यत्वव्याप्तत्वरहितत्वव्याघातादनित्यत्वं पक्षे सिध्यतीति भावः। विवृणोति—**एतस्मिन्नित्यादिना।**

**भुवन.**—महाविद्यान्तरमाह—**अयं शब्दः एतदाकाशवृत्तित्वरहितनित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितनित्यत्वाव्याप्यनित्यनिष्ठत्वरहिताधिकरणं मेयत्वात् घटवदिति।** अतः परं च पक्षं पक्षीकृत्य प्रवृत्तानां महाविद्यानामर्थसंग्राहिकाः कारिका महाविद्यान्तरेभ्यो ज्ञातव्याः। एष चाकाशश्च एतदाकाशौ। तयोर्युगलत्वेन वृत्तिर्येषां धर्माणां ते एतदाकाशवृत्तयः, तेषु तद्वृत्तित्वं नाम धर्मः, तेन रहितः। नित्यत्वेन व्यतिरिक्ता नित्यत्वव्यतिरिक्ताः। नित्यत्वेन व्याप्यन्ते इति नित्यत्वव्याप्याः। नित्यत्वव्यतिरिक्ताश्च ते नित्यत्वव्याप्याश्च। तेषु नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वं धर्मः। तद्रहितश्च। नित्यत्वेन अव्याप्याः नित्यत्वाव्याप्याः। नित्येषु निष्ठा अवस्थानं येषां ते नित्यनिष्ठाः। नित्यत्वेनाव्याप्याश्च ते नित्यनिष्ठाश्च। तेषु नित्यत्वाव्याप्यनित्यनिष्ठत्वं नाम धर्मः। तद्रहितः। अत्र विशेषणत्रये पूर्वप्राच्यविशेषणद्वयस्य द्वन्द्वः। ततो द्विपदः कर्मधारयः। एतद्विशेषणत्रयविशेषिता ये शब्दत्वश्रावणत्वादयः तेषामाश्रयः पक्षीकृतः शब्द इत्यर्थः। अथैतस्यानुमानस्य व्याख्या। एतस्मिन् पक्षीकृतशब्दे

---

अनित्यत्व में है। नित्यत्व से अव्याप्य नित्य में रहने वाले धर्मों में नित्यत्वाव्याप्यनित्यनिष्ठत्व नाम धर्म है। उसका अत्यन्ताभाव भी अनित्यत्व में है। अनित्यत्व शब्द में तो रहता है; परन्तु आकाश में नहीं रहता। अतः एतदाकाशवृत्तित्वरहित है। वह शब्द में साध्यत्वेन ईप्सित है। जो शब्द को अनित्य माने विना सम्भव नहीं है। अतः शब्द अनित्य है।

आकाशे च या वृत्तिः तत्त्वेन रहिताः पक्षे शब्दत्वश्रावणत्वादयो व्योम्नि अवर्तनात् शब्दे वर्तनाच्च युगलावृत्तयो विद्यन्ते एव। दृष्टान्ते च घटादौ स्वस्वनिष्ठा घटत्वादयः शब्दाकाशद्वयावर्त्तित्वात् युगलावर्तिन एव। नित्यानां च पक्षतुल्यत्वं वक्ष्यति। न तेन तेषु साध्यप्रसिद्धिर्विचार्या। अथ द्वितीयं विशेषणं व्याख्यायते। नित्यत्वेन व्याप्या आत्मत्वाकाशत्वपरमाणुत्वादयः।

**'व्याप्यं गमकमादिष्टं व्यापकं गम्यमिष्यते।**
**व्यापकं तदतन्निष्ठं व्याप्यं तन्निष्ठमेव हि।।'**

इति वचनात्, यत्र यत्र आत्मत्वादयः, तत्र तत्र नित्यत्वम्। एवमात्मत्वादीनां नित्यत्वव्याप्यत्वोपपत्तेः। अत्र नित्यत्वं व्यापकम्, आत्मत्वादयो व्याप्याः, यथा अग्निर्व्यापको धूमश्च व्याप्यः। एवं नित्यत्वमपि यत्र यत्र नित्यत्वं, तत्र तत्र नित्यत्वात्यन्ताभाववद्वृत्तित्वरहितत्वमिति व्याप्त्या नित्यत्वव्याप्यमस्ति। परं नित्यत्वव्यतिरिक्तेति ग्रहणात् केवलनित्यनिष्ठ-धर्मेभ्यस्तत्पृथक्कृतम्। नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहिताश्च केवलानित्य-निष्ठा घटत्वपटत्वादयः, साधारणाश्च सत्त्वप्रमेयत्वादयो, नित्यत्वस्य

---

इसी प्रकार शब्दत्व श्रावणत्व आदि धर्म भी साध्यत्वेन अभिमत है। शब्दत्व या श्रावणत्व शब्दमात्र में रहता है। आकाश में तो रहता नहीं। अतः शब्द एवं आकाश में एक साथ नहीं रहता। शब्दत्व या श्रावणत्व नित्यत्वातिरिक्त भी है, तथा नित्यत्व व्याप्य भी नहीं है। तथा नित्यपदार्थों में रहता भी नहीं है। शब्दत्व श्रावणत्व धर्म भी तीन विशेषणों से विशेषित शब्द को अनित्य मानने पर ही सिद्ध होंगे। प्रथमविशेषण शब्द और आकाश में एक साथ न रहना। यदि शब्दत्व या श्रावणत्व नित्यवृत्तिधर्म होते तो आकाश नित्यपदार्थ में रहते, आकाश में नहीं रहते, अतः अनित्य के धर्म है। द्वितीय साध्यविशेषण नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहित, यदि शब्द वृत्ति धर्म नित्यवृत्ति (नित्य में रहना) होता तो नित्यत्वव्यतिरिक्त नहीं होता। एवं नित्यनिष्ठ रहित नहीं होता। अतः शब्द अनित्य है।

इसी प्रकार घटत्व आदि शब्द एवं आकाश में तो रहते नहीं तथा नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यरहित भी है। एवं नित्यत्व से अव्याप्य नित्यनिष्ठ भी नहीं है। नित्यपदार्थ पक्षसम है, अतः उनमें साध्यप्रसिद्ध करना आवश्यक नहीं है। अपने में व्याप्य व्यापक होने के कारण, नित्यत्व का नित्यत्व व्याप्य भी है। अतः नित्यत्वव्यतिरिक्त पद नित्यत्वव्याप्यत्व में

**नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितनित्यत्वाव्याप्यनित्यनिष्ठत्वरहिताधिकरणमित्युक्ते नित्यत्वेनार्थान्तरता स्यात्। नित्यत्वस्य नित्यत्वव्याप्यत्वेऽपि**

---

पृथक्कृतत्वात् नित्यत्वं च। अथ तृतीयं विशेषणं व्याख्यायते। **नित्यत्वाव्याप्यनित्यनिष्ठेति।** नित्यनिष्ठा धर्मा द्विधा—नित्यत्वव्याप्या नित्यत्वाव्याप्याश्च। तत्र नित्यत्वव्याप्या आकाशत्वादयः। नित्यत्वाव्याप्याश्च सत्त्वादयः। तत्र आद्या द्वितीयविशेषणेन निषिद्धाः सत्त्वादयश्चानेन विशेषणेन निषिद्धाः। तेषां नित्यत्वाव्याप्यनित्यनिष्ठत्वेन तद्रहितत्वानुपपत्तेः। नित्यत्वाव्याप्यनित्यनिष्ठत्वरहिताश्च अनित्यमात्रनिष्ठा घटत्वादयो, नित्यमात्रनिष्ठा आकाशत्वादयश्च। तत्र आकाशत्वादयो द्वितीयविशेषणेन निरस्ता एव। उद्धरिताश्च घटत्वपटत्वादयो धर्मा घटादिदृष्टान्तोपयोगिनः। शब्दघटान्यतरत्वादयः पक्षीकृतशब्दोपयोगिनः।

अत्र च द्वितीयतृतीयविशेषणद्वयविशिष्टं नित्यत्वमप्युद्धरितमस्ति। परं शब्दनित्यत्वेऽङ्गीक्रियमाणे तस्य एतदाकाशवृत्तित्वरहितत्वं न स्यात्। शब्दे चानित्येऽङ्गीक्रियमाणे विशेषणत्रयविशिष्टं तदाकाशादौ दृष्टान्ते उपकारकृत् ज्ञेयम्। एवंविधाश्च धर्मा अत्र घटशब्दान्यतरत्वादयो नित्यत्वाव्याप्यनित्यनिष्ठत्वादयो रहिताः शब्दे तदैव घटन्ते, यदि शब्दस्यानित्यत्वमङ्गीक्रियेत। तस्माच्छब्दस्यानित्यत्वमङ्गीकार्यम्। व्यावृत्तिर्ग्रन्थकृतैव कृतेति न क्रियते। अनुमानार्थमाविष्करोति—**एतस्मिन्नित्यादिना। एतस्मिन्निति।** पक्षीकृतशब्दे।

**आनं.**—विशेषणकृत्यमाह—**नित्यत्वव्यतिरिक्तेति।** नित्यत्वस्य नित्यत्वव्याप्यत्वरहितेति विशेषणाभावान्नार्थान्तरतेत्यत आह—**नित्यत्वस्येति।**

---

विशेषण बनाया। नित्यत्वव्याप्यत्वं नाम नित्यत्वात्यन्ताभाववदवृत्तित्वम् (नित्यत्व का जहाँ पर अभाव हो वहां पर न रहना) नित्यत्व का जहाँ पर अभाव होता है, वहाँ पर नित्यत्व नहीं रहता अतः नित्यत्व नित्यत्व का व्याप्य है। एवं नित्यत्व, नित्यत्व का व्यापक भी है। नित्यत्व के अधिकरण में नित्यत्व का अत्यन्ताभाव नहीं होता। तीन विशेषण देने पर नित्यत्व अतिरिक्त साध्य होगा जो शब्द को अनित्य माने बिना सिद्ध नहीं होगा।

यदि एतदाकाशवृत्तित्वरहित साध्य का विशेषण न रखवें 'नित्यत्वव्यतिरिक्त नित्यत्वव्याप्यत्वरहितनित्यत्वाव्याप्यनित्यनिष्ठत्वरहिताधिकरण साध्य बनाये तो नित्यत्वधर्म को लेकर अर्थान्तरतादोष होगा। यद्यपि नित्यत्व धर्म

**नित्यत्वव्यतिरिक्तत्वे सति यन्नित्यत्वव्याप्यत्वं तद्रहितत्वात्। नित्यत्वस्य नित्यनिष्ठत्वेऽपि नित्यत्वव्याप्यत्वेन नित्यत्वाव्याप्यत्वे सति यन्नित्यनिष्ठत्वं तद्रहितत्वाच्च। न च व्याप्यव्यापकभावस्य भेदाधिष्ठानत्वात्कथं नित्यत्वस्य नित्यत्वव्याप्यत्वमिति युक्तम्। नित्यत्वस्य नित्यत्वभेदाभावेऽपि**

---

सम्बन्धरूपाया व्याप्तेर्भिन्नाधिकरणत्वादेकस्मिन्नसम्भव इत्यत आह—**न चेति।** हेतुमाह—**नित्यत्वस्येति।** तदत्यन्ताभाववन्निष्ठात्यन्ताभावप्रतियोगित्वं तद्व्याप्यत्वम्। धूमस्यापि धूमध्वजात्यन्ताभाववन्निष्ठात्यन्ताभावप्रतियोगित्वमेव तद्व्याप्यत्वमिति भावः। अनेन विशेषणेन कथमर्थान्तरतानिरासोऽत्राह—**पक्षीकृतेति।**

**भुवन.**—अथ प्रथमविशेषणं परित्यज्य व्यावृत्यचिन्तां करोति—**नित्यत्वव्यतिरिक्तेत्यादि।** कथमर्थान्तरता स्यादित्याह—**नित्यत्वस्य नित्यत्व-व्याप्येत्यादि।** यद्यपि नित्यत्वं नाम धर्मो नित्यत्वव्याप्यो भवति, तथापि नित्यत्वव्यतिरिक्तत्वे सति यन्नित्यव्यव्याप्यत्वं तद्रहितोऽप्युपपद्यत एव। नित्यत्वव्यतिरिक्तेतिविशेषणेन तस्य नित्यत्वव्याप्येभ्यः पृथक्कृतत्वात्। तद्वर्जने च पृथक्करणेन तस्यावर्जनात्। नित्यत्वस्य नित्यत्वव्यतिरिक्ते-त्यादिविशेषणविशिष्टत्वमुपपाद्य नित्यत्वाव्याप्येत्यादिविशेषणविशिष्टत्व-माह—**नित्यनिष्ठत्वेऽपीत्यादि।** यद्यपि नित्यत्वस्य नित्यनिष्ठत्वरहितत्वं नास्ति, तथापि नित्यत्वाव्याप्यत्वे सति यत् नित्यनिष्ठत्वं, तद्रहितत्वमस्त्येव। केन हेतुना। नित्यत्वव्याप्यत्वेन। नित्यत्वस्य नित्यत्वेन व्याप्यत्वादित्यर्थः। सम्बन्धरूपाया व्याप्तेर्भिन्नाधिकरणत्वात्तस्यैव नित्यत्वस्य तेनैव नित्यत्वेन व्याप्यत्वासम्भव इत्यत आह—**न च व्याप्यव्यापकभावस्येति।** अत्र

---

नित्यत्व का व्याप्य है। तथापि नित्यत्व व्यतिरिक्तत्वेन नित्यत्वव्याप्य नहीं है। नित्यत्वव्यतिरिक्तविशेषण नित्यत्वव्याप्यों से पृथक् कर देता है। एवं नित्यत्वनित्यनिष्ठ (नित्य में रहना) है, परन्तु वह नित्यत्व का व्याप्य है। नित्यत्व से अव्याप्य होकर नित्यनिष्ठत्व नित्यत्व में नहीं है। अतः नित्यत्वाव्याप्यनित्यनिष्ठत्वरहित भी नित्यत्व धर्म हो गया।

यदि यहाँ पर आशङ्का करें कि व्याप्यव्यापकभावभिन्नाधिकरणक होते हैं। नित्यत्व का नित्यत्व से भेद नहीं है। व्यापक और व्याप्य भिन्न होते हैं। स्वयं नित्यत्व अपना व्यापक या व्याप्य कैसे होगा इसके उत्तर में

**नित्यत्वात्यन्ताभाववद्वृत्तित्वरहितस्य नित्यत्वव्याप्यत्वस्योपपत्तेरिति। अतो नित्यत्वेनार्थान्तरतापरिहारार्थमेतदाकाशवृत्तित्वरहितग्रहणम्। पक्षीकृतशब्द-स्य नित्यत्वे नित्यत्वस्यैतदाकाशवृत्तित्वेन तद्रहितत्वानुपपत्तेः।**

**एतदाकाशवृत्तित्वरहितनित्यत्वाव्याप्यनित्यनिष्ठत्वरहिताधिकरणमित्युक्ते पक्षीकृतशब्दमात्रनिष्ठेन पक्षीकृतशब्दान्यत्वात्यन्ताभावादिना अर्थान्तरता**

---

हेतुमाह—**नित्यत्वस्य नित्यत्वभेदेत्यादि।** नित्यत्वात्यन्ताभाववत्सु अनित्येषु वृत्तिर्येषां धर्माणां ते तथा। तेषां भावो नित्यत्वात्यन्ताभाववद्वृत्तित्वम्। तेन रहितत्वस्य यत् नित्यत्वव्याप्यत्वं तस्योपपत्तेः। नित्यत्वं व्यापकं, नित्यत्वात्यन्ताभाववद्वृत्तित्वरहितत्वं व्याप्यम्। तथा हि—यत्र यत्र नित्यत्वा-त्यन्ताभाववद्वृत्तित्वरहितत्वं तत्र तत्र नित्यत्वम्। यथा आत्माकाशादिषु। एवं चार्थभेदाभावेऽपि शब्दभेदमात्रदर्शनप्रकारेण नित्यत्वस्य व्याप्यव्यापक-भावोपपत्तिः।

**आनं.**—पक्षीकृतशब्दनित्यत्वे तन्मात्रनिष्ठस्य नित्यनिष्ठत्वरहितत्वा-भावान्न तेनार्थान्तरतेत्यत आह—**पक्षीकृतशब्दनित्यत्वेऽपीति।** तेनापि तन्निरास-प्रकारमाह—**पक्षीति।**

**भुवन.**—अथ मध्यविशेषणं परित्यज्य व्यावृत्तिचिन्तां करोति—**एतदाकाशवृत्तित्वरहितेत्यादि। पक्षीकृतशब्दान्यत्वेत्यादि।** पक्षीकृतशब्दात्

---

ग्रन्थकार ने व्याप्यत्वधर्म को परिभाषित कर दिया है। 'नित्यत्वात्यन्ता-भाववद्वृत्तित्वरहितत्व (नित्यत्व का जहाँ पर अत्यन्ताभाव हो। वहाँ पर जो धर्म नहीं रहता वह नित्यत्वव्याप्य कहलाता है।) नित्यत्वधर्म नित्यत्व के अत्यन्ताभावस्थल में नहीं रहता। अतः नित्यत्व, नित्यत्व का व्याप्य है। शब्द में अनित्यत्व का अधिकरणत्व साध्य है। उससे विपरीत नित्यत्व का अधिकरणत्व सिद्ध होने लगेगा। यही अर्थान्तरता दोष है। पक्षीकृत शब्द को नित्य मानने पर नित्यत्व शब्द और आकाश दोनों में रह गया, तो शब्द और आकाशवृत्तित्वरहित नहीं हुआ। अतः शब्द को अनित्य माना है।

यदि साध्य घटक मध्यविशेषण हटा दें। 'एतदाकाशवृत्तित्वरहित-नित्यत्वाव्याप्यनित्यनिष्ठत्वरहिताधिकरण साध्य रखें, तो पक्षीकृतशब्द में रहने वाले पक्षीकृतशब्दान्यत्वात्यन्ताभाव को लेकर अर्थान्तरतादोष होगा। पक्षीकृतशब्दान्यत्वात्यन्ताभाव शब्दमात्र में रहता है। शब्द एवं आकाश दोनों

**स्यात्। तस्य पक्षीकृतशब्दमात्रवृत्तित्वेन पक्षीकृतशब्दनित्यत्वेऽपि तन्मात्रनिष्ठानां नित्यत्वव्याप्यत्वोपपत्त्या नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितत्वाच्च। अतः पक्षीकृतशब्दमात्रनिष्ठैरर्थान्तरतापरिहारार्थं नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितग्रहणम्। पक्षीकृतशब्दनित्यत्वपक्षे तन्मात्रनिष्ठानां नित्यत्वव्यतिरिक्तत्वे सति नित्यत्वव्याप्यत्वेन तद्रहितत्वानुपपत्तेः।**

---

यत् अन्यत्वं विश्वस्य तस्यात्यन्ताभावादिना अर्थान्तरता स्यात्। अर्थान्तरतामेवाह—**तस्य पक्षीकृतशब्दमात्रेत्यादि।** तस्य पक्षीकृतशब्दान्यत्वात्यन्ताभावस्य केवलशब्दनिष्ठत्वेन पक्षीकृतशब्दाकाशवृत्तित्वरहितत्वमुपपन्नमेवेति। अथ पक्षीकृतशब्दान्यत्वात्यन्ताभावस्य नित्यत्वाव्याप्येत्यादिविशेषणविशिष्टत्वं दर्शयति—**पक्षीकृतशब्दनित्यत्वेऽपीत्यादि।** नित्यशब्दमात्रनिष्ठानां शब्दत्वश्रावणत्वपक्षीकृतशब्दान्यत्वात्यन्ताभावादीनां नित्यत्वव्याप्यत्वोपपत्त्या नित्यत्वेन अव्याप्यत्वे सति नित्यनिष्ठत्वरहितत्वाच्च। ननु शब्दमात्रनिष्ठानां कथं नित्यत्वव्याप्यत्वोपपत्तिः। उच्यते। शब्दनित्यत्वे शब्दत्वादीनां नित्यत्वव्याप्यत्वोपपत्तिर्युक्तैव। तथा च सति यत्र यत्र शब्दत्वादयः, तत्र तत्र नित्यत्वम्। एवं शब्दत्वादीनां नित्यत्वव्याप्यत्वं ज्ञेयम्। तथा च सति नित्यत्वाव्याप्यत्वे सति यन्नित्यनिष्ठत्वं तद्रहितत्वेन तेषां शब्दत्वादिधर्माणां नित्यत्वव्याप्यत्वमेवायातम्। अतस्तैर्धर्मैरर्थान्तरतापरिहारार्थं नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितेति विशेषणग्रहणम्। तथा च सति पक्षीकृतशब्दनित्यत्वपक्षे शब्दत्वश्रावणत्वशब्दान्यत्वात्यन्ताभावादीनां नित्यत्वव्याप्यत्वेन तद्रहितत्वानुपपत्तिः।

---

में एक साथ तो रहता नहीं, अतः एतदाकाशवृत्तित्वरहित है। पक्षीकृतशब्द को नित्य मानने पर पक्षीकृतशब्द में रहने वाले शब्दत्व श्रावणत्व आदि धर्म नित्यत्व व्याप्य हो जायेगें। अतः नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितत्व भी पक्षीकृतशब्द में रहने वाले नित्यत्व में रह जायेगा। अतः नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहित साध्य का विशेषण बनाया गया।

पक्षीकृतशब्द को नित्य मानने पर शब्द में रहने वाले धर्म नित्यत्व व्यतिरिक्त होकर नित्यत्वव्याप्य ही होंगे उससे रहित नहीं होंगे।

**एतदाकाशवृत्तित्वरहितनित्यत्वव्याप्यत्वरहितनित्यत्वाव्याप्यनित्यनिष्ठत्वरहिताधिकरणमित्युक्ते नित्यपदार्थेषु साध्याभावः। यदि नित्यपदार्थधर्मेषु नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितत्वं नित्यनिष्ठत्वरहितत्वेन, तदा नित्यनिष्ठत्वनित्यनिष्ठत्वरहितत्वयोर्व्याघातः। अथ नित्यत्वाव्याप्यत्वरहितत्वेन, तदा-**

---

**आनं.**—विशेष्याभावाद्वा विशेषणाभावाद्वा विशिष्टाभावो वाच्यः। तथा च नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितत्वं किं नित्यनिष्ठत्वाभावेन नित्यत्वाव्याप्यत्वाभावेन वेति विकल्प्य दूषयति—**यदीत्यादिना**। फलितमुपसंहरति—**तस्मादिति**। नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितग्रहणेन गगनान्यत्वनिरासः कुतोऽत्राह—**गगनान्यत्वस्येति**। नित्यानित्यसकलवस्तुषु गगनातिरिक्तेषु गगनान्यत्वस्य सत्वान्नित्यनिष्ठत्वान्नित्यत्वाव्याप्यत्वाच्च नित्यत्वव्याप्यत्वे सति नित्यनिष्ठत्वरहित्वं नास्तीत्यर्थः।

**भुवन.**—अथ द्वितीयविशेषणस्थं नित्यत्वव्यतिरिक्तेतिपदं मुक्त्वा व्यावृत्तिं चिन्तयति—**एतदाकाशवृत्तित्वरहितेत्यादि। नित्यपदार्थेषु साध्याभाव इति।** दृष्टान्तीकृतेषु नित्यपदार्थेषु साध्यस्यानुपपत्तिः। विशेष्याभावाद्वा विशेषणाभावाद्वा विशिष्टाभावो वाच्यः। तथा च नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितत्वं किं नित्यनिष्ठत्वाभावेन वा, नित्यव्याप्यत्वाभावेन वा, इति विकल्पाभ्यां तृतीयविशेषणविचारणया नित्यपदार्थेषु साध्यानुपपत्तिमेव दर्शयति—**यदि नित्यपदार्थेत्यादि**। अत्र तृतीयविशेषणविशिष्टा द्वये धर्माः स्युः। एके केवलानित्यनिष्ठा घटत्वादयः। अपरे केवलनित्यनिष्ठा आकाशत्वपरमाणुत्वादयः। ते च द्वयेऽपि विकल्पद्वयेन नित्येषु निवर्तयितव्याः। तत्र प्रथमविकल्पेन केवलानित्यनिष्ठान् घटत्वादीन्निवर्तयति—**यदीत्यादिना**। यदि नित्यनिष्ठधर्मेषु नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितत्वं विद्यते, केन प्रकारेणेत्याह—**नित्यनिष्ठत्वरहितत्वेनेति**। नित्यवृत्तित्व-

---

यदि द्वितीयविशेषणघटकनित्यत्वव्यतिरिक्तपद का परित्याग कर 'एतदाकाशवृत्तित्वरहितनित्यत्वव्याप्यत्वरहितनित्यत्वाव्याप्यनित्यनिष्ठत्वरहिताधिकरणम्' साध्य रखखें, तो नित्यपदार्थों में साध्य न रहने से साध्य वैकल्प दोष होगा। महाविद्यानुमान केवलान्वयी है, नित्यपदार्थ सपक्ष होगा या तो पक्षसम, दोनों अवस्था में नित्यों में साध्य रहना चाहिए। सपक्ष में साध्य का न रहना साध्यवैकल्पदोष है। यदि नित्यों को पक्षतुल्य माने तो उनमें साध्य आवश्य

**नित्यत्वव्याप्यत्वरहितत्वनित्यत्वाव्याप्यत्वरहितत्वयोर्व्याघातः। तस्मान्नित्यत्वव्याप्यत्वरहितो नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितश्च धर्मो नित्येषु न सम्भवत्येवेति व्याप्तिभङ्गः। तन्निवृत्त्यर्थं नित्यत्वव्यतिरिक्तग्रहणम्।**

---

रहितत्वेन। **तदा नित्यनिष्ठत्वनित्यनिष्ठत्वरहितत्वयोर्व्याघात इति।** नित्यवृत्तित्वनित्यवृत्तित्वरहितत्वयोर्व्याघातः। अयमर्थः—दृष्टान्तीकृतेषु आकाशादिनित्येषु वर्तमानस्य यस्य कस्यापि धर्मस्य नित्यनिष्ठत्वेन नित्यनिष्ठत्वरहितत्वं न स्यादेवेति स्पष्ट एव व्याघातः। **'विरुद्धसमुच्चयो व्याघातः'** इति तल्लक्षणात्। अथ केवलनित्यनिष्ठानाकाशत्वादीन्निवर्तयति—**अथेत्यादिना।** अथ नित्यत्वाव्याप्यत्वरहितत्वेनेति विकल्पोऽङ्गीक्रियते, तदा द्वितीयविशेषणोक्तस्य नित्यत्वव्याप्यत्वरहितत्वस्य एतद्विशेषणायातनित्यत्वाव्याप्यत्वरहितत्वस्य च व्याघातः। नित्यत्वव्याप्यत्वरहितत्वेनेति विकल्पोऽङ्गीक्रियते, तदा द्वितीयविशेषणोक्तस्य नित्यत्वव्याप्यत्वरहितत्वस्य एतद्विशेषणायातनित्यत्वाव्याप्यत्वरहितत्वस्य च व्याघातः। नित्यत्वव्याप्यत्वरहितो हि नित्यत्वाव्याप्यः स्यात्, न तु नित्यत्वाव्याप्यत्वरहितः। नित्यत्वाव्याप्यत्वरहितोऽपि च नित्यत्वव्याप्यः स्यात्, न तु नित्यत्वव्याप्यत्वरहितः। तेन व्याघात एव।

अयं भावः—नित्यत्वव्यतिरिक्तेति पदं विना नित्यपदार्थधर्मस्य यदि द्वितीयविशेषणविशिष्टत्वं स्यात्, तदा तृतीयविशेषणविशिष्टत्वं न स्यात्। यदि च तृतीयविशेषणविशिष्टत्वं, तदा न द्वितीयविशेषणविशिष्टत्वमिति। ततो द्वितीयतृतीयविशेषणविशिष्टो धर्मो नित्यत्वव्यतिरिक्तेतिपदं विना नित्येषु न सम्भवत्येव। तेन तेषु व्याप्तिभङ्गः। तन्निवृत्त्यर्थं नित्यत्वव्यतिरिक्तग्रहणम्। तथा

---

रहना चाहिए। अन्यथा पक्षसम में साध्य के न रहने पर बाध दोष होगा। नित्यपदार्थों में रहने वाले धर्मों में नित्यत्वाव्याप्य नित्यनिष्ठत्वरहितत्व (नित्यत्वाव्याप्यनित्यनिष्ठत्वाभाव) यदि सिद्ध करें तो विशिष्टाभाव है। विशिष्टाभाव विशेषणाभावप्रयुक्त, तथा विशेष्याभावप्रयुक्त, एवं उभयाभावप्रयुक्त होता है। यहाँ पर नित्यत्वाव्याप्यत्वविशेषण है। नित्यनिष्ठत्वरहितत्व विशेष्य है। विशेष्याभावप्रयुक्त विशिष्टाभाव माने तो नित्यनिष्ठत्वरहित को नित्य में सिद्ध करना व्याघातदोष होगा। विशेषणाभावप्रयुक्त विशिष्टाभाव माने तो नित्यनिष्ठत्वरहित पद से नित्यत्वव्याप्यत्वरहित अर्थ अधिगत होता है। नित्यात्वाव्याप्यत्वरहित विशेषणपद से साक्षात् नित्यत्वाव्याप्यत्वरहित अर्थ अधिगत होता है।

**एतदाकाशवृत्तित्वरहितनित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहिताधिकरणमित्युक्ते गगनान्यत्वेनोक्तरूपोपपन्नेनार्थान्तरता स्यात्। तन्निवृत्त्यर्थं नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितग्रहणम्। गगनान्यत्वस्य नित्यनिष्ठत्वात् नित्यत्वाव्याप्यत्वाच्च तद्रहितत्वानुपपत्तेः।**

---

च सति नित्यपदार्थेषु नित्यत्वमेव धर्मः। अथ तृतीयं विशेषणं त्यक्त्वा व्यावृत्तिं विद्यत्ते—**एतदाकाशवृत्तित्वरहितेत्यादि। गगनान्यत्वेनोक्तरूपोपपन्नेनार्थान्तरतेति।** गगनान्यत्वस्य हि गगनावृत्तित्वेनैतच्छब्दवृत्तित्वेन चैतदाकाशवृत्तित्वरहितत्वादनित्येष्वपि वर्तमानत्वेन नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितत्वाच्च एतद्विशेषणद्वयोपपन्नेन तेनार्थान्तरता स्यात्, तन्निरासार्थं तृतीयविशेषणग्रहणम्। अनेन विशेषणेन कथमर्थान्तरतानिरासः, अत्राह—**गगनान्यत्वस्येति।** गगनान्यत्वस्य गगनातिरिक्तेषु सकलनित्यानित्येषु विद्यमानत्वेन नित्यनिष्ठत्वात् नित्यत्वाव्याप्यत्वाच्च। **तद्रहितत्वेति।** नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितत्वानुपपत्तेरिति भावः।

---

नित्यत्वव्याप्यत्वरहित नित्यात्वाव्याप्यत्वरहित पदों का परस्पर व्याघात है। अतः नित्यत्वव्याप्यत्वरहित एवं नित्यत्वाव्याप्यत्वरहित धर्म नित्यों में सम्भव नहीं है। व्याप्ति भङ्ग के भय से नित्यत्वव्यतिरिक्तपद साध्य का विशेषण बनाया। जब नित्यत्वव्यतिरिक्त साध्य का विशेषण बना दिया तो परस्पर व्याघात की आशङ्का नहीं रह गयी।

यदि नित्यत्वाव्याप्यनित्यनिष्ठत्वरहित साध्य का विशेषण न रख्खे, 'एतदाकाशवृत्तित्वरहितनित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहिताधिकरणम्' साध्य माने तो गगनान्यत्व को लेकर अर्थान्तरता दोष होगा। गगनान्यत्व गगन से अन्य में रहता है। शब्द में तो है, परन्तु गगनमें नहीं है। अतः शब्द एवं आकाश दोनों में एक सात नहीं रहा। नित्यत्व से अतिरिक्त है, तथा नित्यत्व व्याप्यत्वरहित भी है। यतः यत्र यत्र गगनान्यत्वं तत्र तत्र नित्यत्वं ऐसी व्याप्ति व्यभिचरित है। गगनान्यत्व घट पट आदि में है, वहाँ पर नित्यत्व नहीं है। जब नित्यत्वाव्याप्यनित्यनिष्ठत्वरहित साध्य का अंश बना दिया तो गगनान्यत्व को लेकर अर्थान्तरता दोष नहीं होगा। गगनान्यत्व जिस प्रकार घट पट आदि अनित्य पदार्थों में रहता उसी प्रकार परमाणु आदि नित्य पदार्थों में भी रहता। गगनान्यत्व अनित्यों में भी रहता है। अतः नित्यत्व का अव्याप्य है। तथा परमाणु आदि में रहता है। अतः नित्यनिष्ठ भी है। नित्यनिष्ठत्वरहित नहीं है।

**नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितं नित्यत्वं वा स्यान्नित्यत्वाव्याप्यं वा। तत्र नित्यत्वं तावत्पक्षे न सिध्यति। पक्षीकृतशब्दनित्यत्वपक्षे नित्यत्वस्यैतदाकाशवृत्तित्वेन एतदाकाशवृत्तित्वरहितत्वव्याघातात्। नित्यत्वाव्याप्यमपि नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितं यदि नित्यत्वाव्याप्यत्व-**

---

**आनं.**—तथापि कथं शब्दस्यानित्यत्वसिद्धिरत्राह—**नित्यत्वेति।** नित्यत्वव्यतिरिक्तत्वाभावान्नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितनित्यत्वमेवास्तु, अत आह—**अत्रेति।** द्वितीयेऽपि नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितं नित्यत्वाव्याप्यत्वाभावेन नित्यनिष्ठत्वाभावेन वेति विकल्प्याद्यमनुवदति **नित्यत्वाव्याप्यमपीति।** अपवदति—**तदेति।** द्वितीयः परिशिष्यत इत्याह—**तेनेति।** किमतस्त त्राह—**तेन नित्येति।**

**भुवन.**—एवमप्यत्र कथं शब्दस्यानित्यत्वसिद्धिरत्र प्राह—**नित्यत्वव्यतिरिक्तेत्यादि।** नित्यत्वव्यतिरिक्तेत्यादिविशेषणेन धर्मद्वयमायाति, नित्यत्वं वा नित्यत्वाव्याप्यं वा। तत्र नित्यत्वं तावत्प्रथमविशेषणेन एतदाकाशेत्यादिना विचार्यमाणं न जाघटीति व्याघातादिति दर्शयति—**तत्र नित्यत्वं तावदित्यादिना।** अथ नित्यत्वाव्याप्यमित्येवंरूपे द्वितीये धर्मान्तरविकल्पे पूर्ववन्नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितं नित्यत्वाव्याप्यत्वाभावेन वा नित्यनिष्ठत्वाभावेन वा इति धर्माभ्यां विचारयति—**नित्यत्वाव्याप्यमपि नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितमित्यादि।** द्वितीयविशेषणोद्धरितं नित्यत्वा-

---

उक्त महाविद्यानुमान द्वारा शब्द में अनित्यत्व कैसे सिद्ध होगा। इसका विवेचन करते हुए 'नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरिहत' नित्यत्व हो सकता है? या नित्यत्व से अव्याप्य कोई धर्म हो सकता है।

नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहित अर्थात् नित्यत्वव्यत्तिरिक्तविशिष्ट नित्यत्वव्याप्यत्वाभाव, नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्व नित्यत्वव्यतिरिक्त में रहेगा। उसका अभाव नित्यत्व में है। अतः ऐसा धर्म नित्यत्व लिया जा सकता है। अथवा नित्यत्वव्यतिरिक्तनित्यत्व व्याप्यत्व रहित धर्म नित्यत्व का अव्याप्य धर्म होगा। यदि नित्यत्व को लेते हैं? तो पक्षीकृतशब्द में नहीं सिद्ध होगा। शब्द में यदि नित्यत्व मान लेते हैं, तो वह नित्यत्व आकाश में है ही, एवं शब्द में भी मान लिया तो आकाश एवं शब्द में रह गया, एतदाकाशवृत्तित्वरहित (शब्द तथा आकाश में न रहना) नहीं सिद्ध होगा। जो शब्द एवं आकाश में रहता है। उसका न रहना सिद्ध करना व्याघात दोष होगा।

**रहितत्वेन, तदा नित्यत्वाव्याप्यं नित्यत्वाव्याप्यत्वरहितं चेति व्याघातादेव तथारूपस्य पक्षेऽनुपसंहारः। तेन नित्यत्वाव्याप्यस्य नित्यत्वाव्याप्य-नित्यनिष्ठत्वरहितत्वं नित्यनिष्ठत्वरहितत्वेन स्वीकर्तव्यम्। तेन नित्य-निष्ठत्वरहितः पक्षीकृतशब्दे धर्मोऽधिगम्यमानो नित्यत्वप्रतिक्षेप-रूपमनित्यत्वमन्तर्भाव्य अधिगम्यते इति अनित्यत्वसिद्धिः।**

---

व्याप्यमिति द्वितीयं धर्मान्तरं नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितं सत् यदि तृतीयविशेषणायातनित्यत्वाव्याप्यत्वरहितत्वेन, तदा नित्यत्वाव्याप्यं नित्यत्वा-व्याप्यत्वरहितं चेति व्याघातः। व्याघातादेव च तथाभूतस्य धर्मस्य पक्षे शब्दरूपेऽनुपसंहारोऽनवतारः।

अथ तृतीयविशेषणायातं नित्यनिष्ठत्वरहितं द्वितीयं धर्मान्तरं परिशिष्टमभ्युपगच्छन् शब्दस्यानित्यत्वं दर्शयति—**तेन नित्यत्वाव्याप्य-स्येत्यादिना। तेन नित्यनिष्ठत्वरहित इत्यादि।** तेन नित्यनिष्ठत्वरहितः घटान्यतरत्वादिर्धर्मः पक्षीकृतशब्देऽधिगम्यमानः। **नित्यत्वप्रतिक्षेपरूपम-नित्यत्वमन्तर्भाव्येति।** नित्यत्वतिरस्काररूपमनित्यत्वं पक्षे सिद्धं कृत्वा अधिगम्यते ज्ञायते इत्यर्थः। पूर्वोक्तविशेषणत्रयेण नित्यधर्माणां प्रतिक्षेपात् शब्दस्यानित्यत्वं विनैवंविधविशेषणविशिष्टाः शब्दघटान्यतरत्वादयः शब्दधर्मा नोपपद्यन्ते। तस्माच्छब्दस्यानित्यत्वमङ्गीकरणीयमेवेति। यद्वा अत्र शब्दत्वश्रावणत्वादयोऽपि पक्षे साध्यधर्मा ज्ञेयाः। ते च नित्यत्वव्यतिरिक्त-नित्यत्वव्याप्यत्वरहितास्तदैव, यदि शब्दस्यानित्यत्वं स्यादिति द्वितीय-विशेषणेनापि परिशेषाच्छब्दस्यानित्यत्वमुपपाद्यमिति।

---

दूसरे धर्म पर विचार करें तो नित्यात्वाव्याप्य साध्य घटक तृतीय विशेषण 'नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितत्वेन अर्थात् (जो नित्यत्व का व्याप्य नहीं तथा नित्य में रहता नहीं) उसको नित्यत्वाव्याप्यत्वरहित (नित्यत्वव्याप्य) कहे तो नित्यात्वाव्याप्य धर्म को नित्यत्वाव्याप्यत्वरहित सिद्ध करना स्पष्ट व्याघात है। जो धर्म नित्यत्व का व्याप्य नहीं है, वह नित्यत्व के अव्याप्यत्व धर्म वाला होगा। उससे रहित कैसे होगा। ऐसा धर्म शब्द में नहीं सिद्ध हो सकता।

अतः नित्यत्व के अव्याप्य धर्म को नित्यत्व के अव्याप्यनित्य-निष्ठत्वरहितत्वेन स्वीकार करना है। अतः शब्द में नित्यनिष्ठत्वरहित (नित्य में न रहने वाला) धर्म सिद्ध करेंगें तो शब्द में अनित्यत्व धर्म का अन्तर्भाव करके सिद्ध होगा। शब्द में रहने वाला शब्दत्व या श्रावणत्व नित्यत्व का अव्याप्य भी है। तथा नित्य में रहता भी नहीं है।

**ननु नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितो नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितश्च धर्मो नित्येषु नित्यत्वमेव। तस्य च पक्षीकृतशब्दाकाशवृत्तित्वरहितत्वं शब्दानित्यत्वसिद्धेः पूर्वं दुरधिगममिति कथं नित्यानां सपक्षतेति चेत्। न। नित्यानां पक्षतुल्यत्वेनास्माभिः सपक्षत्वानङ्गीकारात्।**

---

**आनं.**—नित्यपदार्थानां साध्यसमानधर्मत्वाभावेन सपक्षत्वासिद्धौ व्याप्तिभङ्ग इति चोदयति—**नन्विति।** शब्दानित्यत्वसिद्धेः पूर्वं नित्यत्वस्य एतदाकाशवृत्तित्वराहित्यसंदेहान्नित्यानां संदिग्धसाध्यसमानधर्मतया पक्षतुल्यत्वमिति परिहरति—**नेति।** न च पक्षतुल्ये व्यभिचारः। अयमग्निरद्विष्ठातीन्द्रियसामान्यवन्निष्क्रियाश्रयः, कारणत्वात्, गुरुत्वाश्रयवदित्यादौ गगनादिषु व्यभिचारापत्तेरिति भावः। पक्षतुल्यत्वे लिङ्गमाह—**अत एवेति।** लिङ्गत्वा।

**भुवन.**—नित्यवस्तूनां साध्यमानधर्मवत्त्वाभावेन सपक्षत्वासिद्धौ व्याप्तिभङ्ग इत्याक्षिपति—**ननु नित्यत्वव्यतिरिक्तेत्यादि।** नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वेत्यादिद्वितीयतृतीयविशेषणविशिष्टं नित्येषु दृष्टान्तीक्रियमाणेषु नित्यत्वमेव। **तस्य च पक्षीकृतशब्दाकाशेत्यादि।**

तस्य च नित्यत्वस्य दृष्टान्तेऽपि यथोक्तविशेषणत्रयविशिष्टत्वं विलोक्यते। तच्च प्रथमविशेषणविशिष्टं नास्ति। यतः प्रथमविशेषणविशिष्टत्वं तदा अस्य स्यात्, यदि शब्दस्यानित्यत्वं सिद्धं स्यात्। तच्चाद्यापि सिद्धं नास्ति। शब्देऽद्यापि तस्य साध्यमानत्वात्। असिद्धे चानित्यत्वे नित्यत्वस्यैतदाकाशवृत्तित्वं न स्यात्। पक्षीकृतशब्दे आकाशे च वर्तनात्। तस्माद्दृष्टान्तार्थे पृथक्कृतस्य नित्यत्वस्य शब्दानित्यत्वसिद्धेः पूर्वमेतदाकाशवृत्तित्वराहित्यसंदेहान्नित्यानां संदिग्धसाध्यसमानधर्मवत्तया पक्षतुल्यत्वेन कथं

---

साध्य में तीन विशेषण एतदाकाशवृत्तित्वरहितत्व नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितत्व नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितत्व, जब तक शब्द में अनित्यत्व धर्म सिद्ध नहीं हो जाता, तब तक प्रथम विशेषण एतदाकाशवृत्तित्वरहित माना नहीं जा सकता। महाविद्यानुमान केवलान्वयी अनुमान है। अतः शब्दातिरिक्त नित्य या अनित्य सभी सपक्ष है। परन्तु नित्यपदार्थ सपक्ष नहीं बन पायेंगे। क्योंकि नित्यों में रहने वाला धर्म नित्यत्व होगा। वह नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहित है, तथा नित्यत्वाव्याप्यनित्यनिष्ठत्वरहित भी है। परन्तु शब्द में अनित्यत्व सिद्धि के पूर्व

**अत एव चैनां महाविद्यां मूलानुमानविपक्षं गगनादिकं पक्षीकृत्य प्रवर्तमानासु गणयिष्यामः। तदा च मूलानुमानविपक्षस्य पक्षतुल्यत्वं सपक्षस्य च सपक्षत्वमिति।।८।।**

---

सपक्षतेत्याक्षेपे ग्रन्थकृत्परिहारमाह—**न नित्यानां पक्षतुल्यत्वेनेत्यादिना।** अत्र चानित्यपदार्था घटादय एव दृष्टान्तीकार्याः, न नित्या आकाशादयः। तेषां संदिग्धसाध्यधर्मवत्त्वेन पक्षतुल्यत्वात्। न च पक्षतुल्येषु व्यभिचारः। **'न हि पक्षे पक्षतुल्ये वा व्यभिचारः'** इति वचनात्। पक्षतुल्यत्वे हेतुमाह—**अत एवैनां महाविद्यामिति।** शब्दोऽनित्यः कृतकत्वात् घटवत् इति मूलानुमानम्। तस्य विपक्षः तद्विपक्षः, तं मूलानुमानविपक्षमित्यर्थः। **तदा चेत्यादि।** तदा मूलानुमानविपक्षस्य गगनादेर्नित्यस्य पक्षत्वे। **मूलानुमानपक्षस्येति।** शब्दस्य पक्षतुल्यत्वम्। **सपक्षस्य चेति।** मूलानुमानस्यैव सपक्षस्य घटादेरनित्यस्य। **सपक्षत्वमिति।** साध्यसमानधर्मवत्त्वं सपक्षत्वमित्यर्थः। सोऽयं नित्यानां पक्षतुल्यत्वे हेतुरित्यर्थः। अत्र च नित्यानां पक्षतुल्यत्वेन व्यपदेशान्नित्यत्वव्यतिरिक्तेतिपदस्य साफल्यं सूक्ष्ममतिभिश्चिन्त्यम्।।८।।

---

एतदाकाशवृत्तित्वरहितत्व निश्चय नहीं है। तो नित्यपदार्थों को सपक्ष कैसे समझा जायेगा। इसमें ग्रन्थकार कह रहे हैं, कि नित्यपदार्थों को पक्षतुल्य मानना चाहिए जिस प्रकार साध्य का सन्देह पक्ष शब्द में है, उसी प्रकार नित्यपदार्थों में भी है।

अतः महाविद्यानुमान का जो मूल अनुमान 'शब्दः अनित्यः कार्यत्वात् घटवत्, उसमें जो सपक्ष हैं, उन्हें ही यहाँ पर सपक्ष मानना चाहिए। जो विपक्ष में उन्हें पक्षतुल्य मानना होगा। जिस प्रकार पक्ष में साध्यसन्देह अनुमान के अनुकूल माना जाता है। उसी प्रकार पक्षतुल्य में साध्य सन्देह अनुकूल माना जाता है। सपक्ष घटपटादि अनित्यपंदार्थों में रहने वाला अनित्यत्वधर्म शब्द में भी सन्दिध है, तथा आकाश में तो उसका अभाव है, ही अतः अनित्यत्व एतदाकाशवृत्तित्वरहित है। तथा नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहित भी है। तथा नित्यत्वाव्याप्यनित्यनिष्ठत्वरहित भी है। वह अनित्यघटपटादि पदार्थों में सिद्ध है। और शब्द में साधनीय है।।८।।

**९ अयं शब्दः एतदन्योन्याभावाव्याप्यनित्यनिष्ठत्वरहिताधिकरणं मेयत्वादिति। एतदन्योन्याभावाव्याप्यनित्यनिष्ठत्वं धर्मः। तद्रहितश्च एतदन्योन्याभावव्याप्यो वा स्यात्, नित्यनिष्ठत्वरहितो वा। आद्यः पक्षे व्याघातान्न सिध्यति। न ह्येतदन्योन्याभावव्याप्यः एतस्मिन्नेतदन्योन्या-**

---

**भुवन.**—पुनरपि प्रकारान्तरेण महाविद्यान्तरमाह—**अयं शब्दः एतदन्योन्याभावाव्याप्येत्यादि**। एतस्य पक्षीकृतशब्दस्य अन्योन्याभावः एतदन्योन्याभावः। एतदन्योन्याभावेन अव्याप्याः। एतदन्योभावाव्याप्याः। ते च नित्यनिष्ठाश्च एतदन्योन्याभावाव्याप्यनित्यनिष्ठाः। तेषां भावः तत्त्वम्। तद्रहितो यो धर्मः, तस्याधिकरणमित्यर्थः।

अत्र नित्यनिष्ठा धर्मा द्विधा, आकाशत्वादयः सत्त्वादयश्च। तत्र प्रथमे एतदन्योन्याभावव्याप्याः, यत्र यत्र आकाशत्वादयः, तत्र तत्र एतदन्योन्याभावः इत्येवं व्याप्तिसद्भावात्। इतरे चैतदन्योन्याभावाव्याप्याः यत्र यत्र सत्त्वादयः, तत्र तत्र एतदन्योन्याभाव इति व्याप्त्यभावात्। सत्त्वादीनां शब्देऽपि भावात्। एतदन्योन्याभावस्य च तत्राभावात्। तेन एतदन्योन्याभावाव्याप्येत्यादिना। **एतदन्योन्याभावव्याप्यो वेति**। एतदन्योन्याभावव्याप्यश्च धर्मो नित्यनिष्ठो वा अनित्यनिष्ठो वा पक्षीकृतशब्दधर्मान् मुक्त्वा सर्वोऽप्युपपद्यत एव। तेषामुभयेषामप्येतदन्योन्याभावेन अव्याप्याः सन्तो ये नित्यनिष्ठाः, तत्त्वेन रहितत्वादेतदन्योन्याभावेन व्याप्यत्वाच्च। पक्षीकृतशब्दमात्रधर्माणां च शब्द एव विद्यमानत्वेन तत्र चैतदन्योन्याभावस्य अविद्यमानत्वेन तेषामेतदन्योन्याभावाव्याप्यत्वमिति भावः।

**नित्यनिष्ठत्वरहितो वेति**। घटत्वपटत्वादिधर्मः, शब्दे नित्यत्वे चाङ्गीक्रियमाणे शब्दत्वश्रावणत्वादिः। **आद्यः पक्षे व्याघातादित्यादि। न**

---

नवम महाविद्यानुमान का प्रयोग 'अयं शब्दः एतदन्योन्याभावाव्याप्य नित्यनिष्ठत्वरहिताधिकरणम्, मेयत्वात्' यहाँ पर भी पूर्ववत् अयं शब्दः पक्ष है, मेयत्व हेतु है। एतदन्योन्याभावाव्याप्यनित्यनिष्ठत्वरहिताधिकरणत्व साध्य है। पक्षीकृतशब्द के अन्योन्याभाव से अव्याप्य तथा नित्यों में न रहने वाले धर्मों का अधिकरण यानी आश्रय शब्द है।

यहाँ पर प्रथम विशेषणविशिष्ट यानी पक्षीकृतशब्द के अन्योन्याभाव से अव्याप्य धर्म नित्य में रहने वाले, तथा अनित्य में रहने वाले दोनों होंगे। द्वितीयविशेषण साध्य घटक होने के कारण नित्यनिष्ठत्वरहित यानी नित्यनिष्ठत्वात्यन्ताभाव नित्यधर्मों में नहीं रहेगा, नित्यधर्मों में नित्यनिष्ठत्व

**भावरहिते वर्तते इति सम्भवति। तेन नित्यनिष्ठत्वरहितो धर्मः पक्षे सिध्यन्ननित्यत्वमन्तर्भाव्य सिध्यतीति अनित्यत्वसिद्धिः।।९।।**

---

ह्येतदन्योन्याभावव्याप्यो नित्यधर्मो वा नित्येतरधर्मो वा तन्मात्रनिष्ठः एतस्मिन् शब्दे स्वान्योन्याभावरहिते साधयितुं शक्यते। असम्भवात्। शब्दान्योन्याभावव्याप्यो हि धर्मः शब्दान्योन्याभाववत्येव धर्मिणि साधयितुं शक्यो नान्यत्रेत्यर्थः। द्वितीयविकल्पेन शब्दानित्यत्वसिद्धिमाह—**तेन नित्यनिष्ठत्वरहितो धर्म इत्यादि**। नित्यनिष्ठत्वरहितोऽपि धर्मो यथोक्तविशेषणोपपन्नो द्वेधा, पक्षनिष्ठः शब्दत्वादिः, सपक्षनिष्ठो घटत्वादिश्च। तत्र घटत्वादिरन्यमात्रधर्मत्वेन पक्षे व्याघातादेव साधयितुमशक्यः। शब्दत्वादिश्च नित्यनिष्ठत्वरहितस्तदैव स्यात्, यदि शब्दस्यानित्यत्वं स्यात्। तस्मादनित्यः शब्दः

---

ही है, उसका अत्यन्ताभाव अनित्यधर्मो में है। उसका अधिकरण शब्द तभी होगा जब शब्द को अनित्य माना जाय।

नित्यों मे रहने वाले धर्म दो प्रकार के हैं। एक शब्द के अन्योन्याभाव से व्याप्य है, जैसे आकाशत्व आदि जहाँ-जहाँ आकाशत्व है, वहाँ-वहाँ शब्दान्योन्याभाव है। दूसरा सत्ता आदि जो शब्दान्योन्याभाव का व्याप्य नहीं है। जहाँ-जहाँ सत्ता है वहाँ-वहाँ शब्दान्योन्याभाव है, ऐसी व्याप्ति नहीं हो सकती, इसलिए कि सत्ता शब्द में भी है, वहाँ पर शब्दान्योन्याभाव नहीं है। शब्दान्योन्याभाव शब्द से इतर में रहता है। अपने में अपना भेद नहीं रहता।

इसी प्रकार अनित्यों में रहने वाले धर्म भी दो प्रकार के होंगें शब्द के अन्योन्याभाव से व्याप्य घटत्व आदि, शब्द के अन्योन्याभाव से अव्याप्य प्रमेयत्व आदि। साध्य में दो विशेषण है, एतदन्योन्याभावाव्याप्यत्व, तथा नित्यनिष्ठत्व, यदि विशेषण के अभाव से विशिष्ट का अभाव कहेंगे तो एतदन्योन्याभावाव्याप्यत्वात्यन्ताभाव यानी एतदन्योन्याभावव्याप्यत्व वह उक्त प्रकार से नित्य में रहने वाला भी है, तथा अनित्य में रहने वाला भी है। यदि विशेष्याभावप्रयुक्त विशिष्टाभाव यानी नित्यनिष्ठत्वाभाव लेते है, तो अनित्यत्व में रहेगा। प्रथम पक्ष में व्याघात दोष होगा, शब्द का अन्योन्याभाव अर्थात् शब्द का भेद शब्द में साधन करना व्याघात इसलिए होगा, कि शब्द का भेद शब्द से इतर में रहता है, उसे यदि शब्द में सिद्ध करना चाहे तो मेरी माता बन्ध्या है, के समान व्याघात होगा। जिस प्रकार माता भी कहना तथा बन्ध्या भी कहना व्याघात है। उसी प्रकार शब्द का भेद भी कहना तथा शब्द में रहना भी कहना व्याघात होगा। अतः नित्यनिष्ठत्व-

**१० अयं शब्दः शब्दत्वात्यन्ताभावाव्याप्यनित्यनिष्ठत्वरहिताधिकरणं मेयत्वादिति। अत्र च पक्षीकृतशब्दान्योन्याभावतुल्यः शब्दत्वात्यन्ता-**

---

स्वीकर्तव्यः। तत्तत्पदार्थमात्रनिष्ठं घटत्वगगनत्वादिधर्ममात्रमादाय सर्वत्र नित्यानित्यपदार्थेषु साध्यप्रसिद्धिर्द्रष्टव्येत्यर्थः॥९॥

**भुवन.**—अयं शब्दः शब्दत्वात्यन्ताभावाव्याप्येत्यादि। शब्दत्वस्यात्यन्ताभावः शब्दत्वात्यन्ताभावः इति कार्यम्। यादृशः पाश्चात्यानुमाने शब्दान्योन्याभावः तादृशोऽत्र शब्दत्वात्यन्ताभावः। शेषं सर्वं पूर्ववत्। अत्र अयमितिपक्षविशेषणस्य कार्यं न दृश्यते। शब्दमात्रस्यापि शब्दत्वात्यन्ताभावरहितत्वेन शब्दैकदेशे सिद्धसाधनत्वाद्यभावात्। अतः केवलं स्पष्टीकरणार्थमयमितिविशेषणम्। यद्वा पक्षतुल्ये यत्र क्वापि शब्दे साध्यसिद्धेर्निषेधाय अयमितिपदम। अत्रापि पूर्ववत् शब्दत्वात्यन्ताभावाव्याप्यनित्यनिष्ठत्वरहितो धर्मः शब्दत्वात्यन्ताभावव्याप्यो वा नित्यनिष्ठत्वरहितो वा। पूर्वः पक्षे व्याहत इति, द्वितीयः पक्षे सिध्यन्ननित्यत्वमन्तर्भाव्य सिध्यतीति

---

रहित (नित्य में न रहना) रूप विशेस्य के अभाव द्वारा साध्य की सिद्धि शब्द में कहेंगे जो शब्द को अनित्य माने विना नही होगी। अतः शब्द अनित्य सिद्ध होगा। यहाँ पर नित्यपदार्थ पक्षसम है। तथा अनित्यपदार्थ सपक्ष है॥९॥

दशम अनुमान 'अयं शब्दः शब्दत्वात्यन्ताभावाव्याप्यनित्यनिष्ठत्वरहिताधिकरणं मेयत्वात्', यहाँ पर पक्ष एवं हेतु पूर्ववत् है। साध्य में पूर्व साध्य से भिन्नता अत्यन्ताभाव अंश में है। पूर्वानुमान में एतदन्योन्याभाव साध्य घटक था, उक्त अनुमान में शब्दत्वात्यन्ताभाव साध्य घटक है। नवम और दशम अनुमानो में विशेष अन्तर नहीं है। जिस प्रकार शब्दान्योन्याभाव शब्द से इतर नित्य या अनित्य में रहता है। उसी प्रकार शब्दत्व का अत्यन्ता भाव भी शब्द से इतर नित्य आकाश आदि में, अनित्य घट आदि में रहता है। शब्दत्वात्यन्ताभाव का व्याप्य धर्म शब्द से इतर में ही रहेगा, शब्दत्वात्यन्ताभाव का अव्याप्य धर्म प्रयेयत्व आदि शब्द तथा शब्देतर में सामन्यतया रहता है।

यहाँ पर शब्दत्वात्यन्ताभावाव्याप्यनित्यनिष्ठत्वरहित, यानी शब्दत्वात्यन्ताभावाव्याप्यत्वविशिष्टनित्यनिष्ठत्वात्यन्ताभाव विशेषण के अभाव से

**भावः। शेषं पूर्ववत्। एवं पक्षीकृतशब्दनिष्ठयत्किञ्चिद्धर्मविशेषात्यन्ताभावमुपादाय यावन्तः पक्षीकृतशब्दधर्मास्तावत्यो महाविद्या द्रष्टव्याः।।१०।।**

**११ यद्वा सामान्यतः अयं शब्दः एतन्निष्ठात्यन्ताभावाव्याप्य-**

---

शब्दानित्यत्वसिद्धिरित्यर्थः। **एवं पक्षीकृतशब्दनिष्ठयत्किञ्चिदित्यादि।** यथा अयं शब्दः शब्दत्वात्यन्ताभावाव्याप्येत्यादिमहाविद्या प्रयुक्ता, तथा पक्षीकृतशब्दनिष्ठा ये केचन धर्मविशेषाः श्रावणत्वाकाशविशेषगुणत्वशब्दव्यतिरिक्तान्यत्वादयः तेषां योऽत्यन्ताभावः तमादायान्या अपि महाविद्याः प्रयोक्तव्याः। तथा हि—**अयं शब्दः आकाशविशेषगुणत्वात्यन्ताभावाव्याप्यनित्यनिष्ठत्वरहिताधिकरणं मेयत्वात्।** एवमन्या अपि ज्ञेयाः।।१०।।

**भुवन.—यद्वा सामान्यतः अयं शब्दः एतन्निष्ठात्यन्ताभावाव्याप्यादि।** एतस्मिन् पक्षीकृते शब्दे निष्ठा यस्य स एतन्निष्ठः। एतन्निष्ठस्य

---

प्रयुक्त अर्थात् शब्दत्वात्यन्ताभावव्याप्यरूपेण लें? या विशेष्याभावप्रयुक्त यानी नित्यनिष्ठत्वरहितत्वेन लें? यदि शब्दत्वान्ताभावव्याप्यत्वेन लेते हैं, तो व्याघात होगा। शब्दत्वात्यन्ताभावाभाववद्वृत्ति ही शब्दत्वात्यन्ताभावव्याप्यत्व है। शब्दत्वात्यन्ताभावाभाववत् यानी शब्दत्ववत् शब्द अवृत्तिधर्म की सिद्धि यदि शब्द में करें तो स्पष्ट व्याघात है। अतः नित्यनिष्ठत्वरहितरूपेण लेगें। जो शब्द को अनित्य माने विना नहीं सिद्ध होगा। अतः शब्द अनित्य है। यहाँ पर अयं इस पक्षविशेषण का फल नहीं दीखता, शब्दत्व के अत्यन्ताभाव से रहित शब्दमात्र है। अतः पक्ष के एक देश में सिद्ध साधनता दोष सम्भव ही नहीं है। जिस प्रकार शब्दान्योन्याभावाव्याप्यनित्यनिष्ठत्वरहिताधिकरणत्व साध्य बनाया, एवं शब्दत्वात्यन्ताभावाव्याप्यनित्यनिष्ठत्वरहिताधिकरणत्व साध्य बनाया। इसी प्रकार पक्ष शब्द में रहने वाले श्रावणत्व आकाशविशेषगुणत्व शब्दव्यतिरिक्तान्यत्वादि को लेकर साध्य बनाया जा सकता है। क्रमशः **'श्रावणत्वात्यन्ताभावाव्याप्यनित्यनिष्ठत्वरहिताधिकरणम् आकाशविशेषगुणत्वात्यन्ताभावाव्याप्यनित्यनिष्ठत्वरहिताधिकरणम्'** आदि साध्य सिद्धि महाविद्यानुमान द्वारा कर सकते हैं। जो शब्द में अनित्य मानने पर ही सिद्ध होगा।।१०।।

ग्यारहवाँ महाविद्यानुमान प्रयोग **'अयं शब्दः एतन्निष्ठात्यन्ताभावाव्याप्यनित्यनिष्ठत्वरहिताधिकरणं मेयत्वात्'** इस अनुमान में भी पक्ष एवं

**नित्यनिष्ठत्वरहिताधिकरणं मेयत्वादिति। एतन्निष्ठस्यात्यन्ताभावः एतन्निष्ठात्यन्ताभावः। शेषं सुगमम्।।११।।**

**१२ अयं शब्दः एतदन्योन्याभावानित्यत्वान्यतराधिकरणं**

---

अत्यन्ताभावः एतन्निष्ठात्यन्ताभावः। तेन अव्याप्या ये नित्यनिष्ठाः। तेषां भावः तत्त्वम्। तेन रहितो धर्मः, तद्वान् शब्दः। शेषं पूर्ववदेव। पूर्वमहाविद्यायां हि यथानामग्राहं शब्दत्वादिधर्मविशेषो निर्दिष्टः, इह पुनरेतन्निष्ठपदेन सामान्येन यः कश्चन धर्म इति सामान्यत इत्युक्तम्। एवमग्रेऽपि शब्दत्वादिधर्मविशेषस्थाने सामान्येनैतन्निष्ठपदं ज्ञेयमिति।।११।।

**भुवन.—अयं शब्दः एतदन्योन्याभावेत्यादि।** एतस्य अन्योन्याभावश्च अनित्यत्वं च एतदन्योन्याभावानित्यत्वे। तयोर्यदन्यतरत् तस्याधिकरणं शब्द इत्यर्थः। एतदन्योन्याभावानित्यत्वयोः अन्यतरो हि धर्म एतदन्योन्याभावो वा स्यात्, अनित्यत्वं वा स्यात्। आद्यः पक्षे व्याहत इति

---

हेतु पूर्ववत् है। शब्द में रहने वाले शब्दत्व श्रावणत्व आदि धर्म एतन्निष्ठधर्म हुए उनका अत्यन्ताभाव शब्द से इतर में रहने वाले धर्मों में उनमें से कुछ एतन्निष्ठात्यन्ताभाव से व्याप्य हैं। जो धर्म शब्द से इतर मात्र में रहने वाले हैं। वह धर्म एतन्निष्ठ (शब्दवृत्ति) अत्यन्ताभाव के व्याप्य हैं। कुछ धर्म एतन्निष्ठात्यन्ताभाव से अव्याप्य भी हैं। जो धर्म एतन्निष्ठात्यन्ताभाव वाले द्रव्य में रहते हैं, तथा शब्द में भी रहते हैं।

यहाँ पर भी विशिष्टाभाव को लेकर साध्य का समन्वय करना है। एतन्निष्ठात्यन्ताभावाव्याप्यत्वविशिष्ट नित्यनिष्ठत्वात्यन्ताभाव, यदि विशेषणाभावप्रयुक्त विशिष्टाभाव लेते हैं। एतन्निष्ठात्यन्ताभावाव्याप्यत्वाभाव यानी एतन्निष्ठात्यन्ताभावव्याप्य शब्द में सिद्ध करना व्याघात होगा। नित्यनिष्ठत्वरहितत्व पक्ष में तभी सिद्ध होना जब शब्द अनित्य सिद्ध हो जाये। अतः शब्द अनित्य है। पूर्वानुमान से उक्त अनुमान शब्दान्तरमात्र है। पूर्वानुमान में शब्दत्व पद है, शब्दत्व शब्द में ही रहता। इस अनुमान में एतन्निष्ठ यानी शब्द में रहना शेष पूर्ववत् है।।११।।

बारहवाँ महाविद्यानुमान **'अयं शब्दः एतदन्योन्याभावानित्यत्वान्यतराधिकरणं मेयत्वात्'**। इस में भी पक्ष और हेतु पूर्ववत् है।

पूर्वानुमानों में विशिष्टाभाव धर्म शब्द में सिद्ध किया गया है। यहाँ पर अन्यतर दो में से किसी एक का अधिकरण शब्द को कहना है।

**मेयत्वादिति। एतच्छब्दान्योन्याभावव्यतिरिक्तत्वे सति, अनित्यत्वव्यतिरिक्तं यत् तदत्यन्ताभावः। एतच्छब्दान्योन्याभावानित्यत्वान्यतरत्वमुभयानुगतम्। तेनैतच्छब्दान्योन्याभावानित्यत्वयोरन्यतरत्वमनुगतं निर्वक्तुमशक्यमिति खण्डनं निरस्तम्। एवमन्यत्राप्यन्यतरत्वं विवेचनीयम्।।१२।।**

---

द्वितीयमनित्यत्वं शब्दे सिध्यतीति भावः। एतदन्योन्याभावानित्यत्वयोरन्यतरस्य धर्मस्य अन्योन्याभावरूपत्वे व्याघातः, अनित्यत्वरूपत्वे च व्याप्त्यसिद्धिः, नित्येषु तदभावात्। तेन एकानुगतत्वादन्यतरत्वमुभयानुगतं नोपपद्यते इति शास्त्रान्तरस्थमन्यतरत्वखण्डनमाशङ्क्य तद्व्यवच्छेदायाह—**एतच्छब्दान्योन्याभावव्यतिरिक्तत्वे सतीत्यादि।** एतच्छब्दस्यान्योन्याभावः एतच्छब्दान्योन्याभावः। तस्माद्व्यतिरिक्तत्वेऽन्यत्वे सति यत् अनित्यत्वव्यतिरिक्तत्वमनित्यत्वादन्यत्वमेतद्द्वयव्यतिरिक्तसर्वविश्वनिष्ठम्, तदत्यन्ताभावः एव एतच्छब्दान्योन्याभावानित्यत्वान्यतरत्वमुच्यते। तच्च किंविशिष्टम्। उभयानुगतम्। एतदन्यो-

---

एतदन्योन्याभाव तथा अनित्यत्व दो में से किसी एक का अधिकरण शब्द है। यदि एतदन्योन्याभाव अर्थात् शब्दान्योन्याभाव शब्द से इतर मे रहने वाले धर्म को शब्द में सिद्ध रहेंगे तो व्याघात होगा। अतः अनित्यत्व का अधिकरण शब्द को कहना होगा। जो शब्द को अनित्य माने विना सम्भव नहीं है। अतः शब्द अनित्य है।

यहाँ पर आशङ्का यह होती है, कि शब्दान्योन्याभाव यदि शब्द में सिद्ध करेंगे तो व्याघात दोष है। अनित्यत्व नित्यों में नहीं है। अनित्यत्व साधन में केवलान्वयी अनुमान की व्याप्ति भङ्ग होगी। अतः यहाँ पर भी विशिष्टाभाव धर्म का अधिकरण शब्द को कहना चाहिए।

विशिष्टाभाव साधन करने के लिए एतदन्योन्याभाव (शब्दान्योन्याभाव) शब्द से इतर में है। उसे विशेषण कोटि में रखेंगे। तथा अनित्यत्व को विशेष्य कोटि में रखेंगे। शब्द के अन्योन्याभाव से व्यतिरिक्त अनित्यत्व से व्यतिरिक्त सकल विश्व है। यानी शब्दान्योन्याभाव एव अनित्यत्व को छोड़ कर सभी शब्दान्योन्याभावविशिष्टानित्यत्वव्यतिरिक्त है। यानी अन्य है। उसका अभाव शब्द में है। शब्द में अनित्यत्व का अभाव सिद्ध न रहने पर भी शब्दान्योन्याभावविशिष्ट अनित्यत्व का अभाव सिद्ध है। अतः जो यह कह रहे थे कि उभयानुगत धर्म प्रसिद्ध नहीं है। अतः साध्याप्रसिद्धिदोष होगा उनका कथन असत्य सिद्ध हो गया।

**अयं शब्दः एतच्छब्दत्वात्यन्ताभावानित्यत्वान्यतराधिकरणं मेयत्वादिति। शब्दत्वात्यन्ताभावानित्यत्वान्यतरः शब्दत्वात्यन्ताभावो वा, अनित्यत्वं वा, आद्यः पक्षे व्याहतत्वान्न सिध्यतीत्यनित्यत्वसिद्धिः। एवं पक्षीकृतशब्दमात्रनिष्ठधर्मविशेषात्यन्ताभावमुपादाय यावन्तः पक्षीकृते शब्दे विशेष धर्मास्तावत्यो महाविद्या द्रष्टव्याः।।१३।।**

---

न्याभावानित्यत्वलक्षणं यदुभयं तत्रानुगतमनुप्राप्तम्। एतदन्योन्याभावानित्यत्वव्यतिरिक्तत्वात्यन्ताभावस्य एतद्द्वये एव वर्तमानत्वात्। तेन एतच्छब्दान्योन्याभावेत्यादिखण्डनं निरस्तम्। एवमन्यत्राप्यन्यतरत्वं विवेक्तव्यमित्यर्थः।।१२।।

**भुवन.—अयं शब्द एतच्छब्दत्वात्यन्ताभावेत्यादि।** एतच्छब्दत्वस्य अत्यन्ताभाव इति तत्पुरुषः कार्यः। **एवं पक्षीकृतशब्दमात्रनिष्ठेत्यादि।** यथा

---

अब आशङ्का हो सकती है, कि शब्दान्योन्याभाव शब्दान्य सभी में रहता है। अतः नित्यों में भी है। उसी में अनित्यत्व का अत्यन्ताभाव भी है। यदि शब्द को नित्य माने तो भी शब्दान्योन्याभाव विशिष्ट अनित्यत्व का अभाव शब्द में सिद्ध हो सकता है। अतः अर्थान्तरता दोष होगा। इसलिए अनित्यत्व व्यतिरिक्त (अनित्यत्वाभाव) के आगे एक अभाव और जोड़ देना चाहिए। इस प्रकार शब्दान्योन्याभावविशिष्टानित्यत्वव्यतिरिक्तत्वात्यन्ताभाव साध्य होगा। यहाँ पर सपक्ष अनित्य घट पट आदि होंगे, पक्षतुल्य नित्य-पदार्थ होंगे। उभयानुगतधर्म की प्रसिद्धि के लिए इस उपाय का चिन्तन है।

वस्तुतः अन्यतर का अधिकरण (किसी एक का आश्रय) शब्द (शब्दान्योन्याभाव) शब्द भेद का आश्रय हो नहीं सकता, अतः अनित्यत्व का आश्रय सिद्ध होगा। इसी प्रकार अन्य भी अन्यतर घटित साध्यों की सिद्धि करनी चाहिए।।१२।।

**अयं शब्दः एतच्छब्दत्वात्यन्ताभावानित्यत्वान्यतराधिकरणं मेयत्वात्** पक्ष एवं हेतु पूर्ववत् है। बारहवें अनुमान से उक्त के साध्य में कुछ भिन्नता है। पूर्वानुमान के साध्यघटक एतदन्योन्याभाव के स्थान में एतच्छब्दत्वात्यन्ताभाव रख दिया है। फल भेद नहीं है। शब्द का अन्योन्याभाव यानी शब्द भेद शब्द से अतिरिक्त में रहता है। शब्दत्व का अत्यन्ताभाव भी शब्द से इतर में रहता है, शेष समान है। एतच्छब्दत्वात्यन्ताभाव में कर्मधारय समास करके षष्ठीतत्पुरुष समास करना चाहिए। एष चासौ शब्दः एतच्छब्दः

**यद्वा सामान्यतः अयं शब्दः एतन्निष्ठात्यन्ताभावानित्यत्वान्यतराधिकरणं मेयत्वादिति।।१४।।**

**अयं शब्दः एतदन्योन्याभावात्यन्ताभावानित्यत्वात्यन्ताभावान्यतररहितः मेयत्वादिति। अत्र चैतदन्योन्याभावात्यन्ताभाववति पक्षे तद्रहितत्वं**

---

अयं शब्दः एतच्छ्रावणत्वात्यन्ताभावानित्यत्वान्यतराधिकरणं प्रमेयत्वादित्यादि।।१३।।

**भुवन.—यद्वा सामान्यतः इत्यादि।** एतनिष्ठः शब्दत्वश्रावणत्वादिधर्मविशेषः, तस्यात्यन्ताभावः एतनिष्ठात्यन्ताभावः।।१४।।

**भुवन.**—अयं शब्दः एतदन्योन्याभावेत्यादि। एतस्य शब्दस्यान्योन्याभाव एतदन्योन्याभावः। तस्य अत्यन्ताभावश्च अनित्यत्वात्यन्ताभावश्च नित्यत्वम्। तयोरन्यतरेण रहित इत्यर्थः। अयं शब्दः अनित्यत्वात्यन्ताभावरहित इत्युक्ते नित्येषु साध्यासिद्धिः। तन्निरासाय एतदन्योन्याभावात्यन्ता-

---

तस्य भावः एतच्छब्दत्वं तस्यात्यन्ताभावः (पक्षी कृत शब्द के धर्म का अत्यन्ताभाव) एतच्छब्दत्वात्यन्ताभाव एवं अनित्यत्व में से किसी एक का अधिकरण शब्द है। एतच्छब्दत्वात्यन्ताभाव का अधिकरण हो नहीं सकता एतच्छब्दत्वाभाव शब्द से इतर में ही रहता है। प्रत्यासत्या अनित्यत्व का अधिकरण ही शब्द होगा। जो शब्द को अनित्य माने विना नहीं सिद्ध होगा। अतः शब्द अनित्य है। शेष समन्वयप्रकार बारहवें अनुमान के समान है। इसी प्रकार पक्षीकृतशब्द के अन्यधर्म श्रावणत्व आदि के अत्यन्ताभाव एवं अनित्यत्व के अन्यतर का अधिकरण शब्द सिद्ध होगा। जैसे **एतच्छ्रावणत्वात्यन्ताभावानित्यत्वान्यतराधिकरणं मेयत्वात्**। एवं **एतदाकाशविशेषगुणत्वात्यन्ताभावानित्यत्वान्यतराधिकरणं मेयत्वात्**। एतादृश अनुमानो में समन्वय बारहवें महाविद्यानुमान के समान करना चाहिए। इसी अभिप्राय का बोधक चौदहवाँ महाविद्यानुमान है।।१३।।

**'अयं शब्दः एतन्निष्ठात्यन्ताभावानित्यत्वान्यतराधिकरणं मेयत्वात्।'** एतन्निष्ठ अर्थात् शब्द में रहने वाले धर्म उनका अत्यन्ताभाव शब्द से इतर में रहेगा। यहाँ पर भी शब्दधर्म के अत्यन्ताभाव का अधिकरण या अनित्यत्व का अधिकरण शब्द में सिद्ध करना है। शब्दधर्म के अत्यन्ताभाव का अधिकरण शब्द हो नहीं सकता। अतः अनित्यत्व का अधिकरण शब्द होगा।।१४।।

**व्याहतमित्यनित्यत्वात्यन्ताभावरहितत्वं पक्षे सिध्यदनित्यत्वमन्तर्भाव्य सिध्यतीत्यनित्यत्वसिद्धिः।।१५।।**

**अयं शब्दः शब्दत्वानित्यत्वात्यन्ताभावान्यतररहितः मेयत्वादिति। एवं पक्षनिष्ठं यं कञ्चन धर्मविशेषमुपादाय यावन्तः पक्षे धर्माः, तावत्यो महाविद्या द्रष्टव्याः।।१६।।**

---

भावेत्युक्तम्। एवमपि नित्येषु साध्यासिद्धिरेव। तेषामेतदन्योन्याभावात्यन्ताभावरहितत्वेन अनित्यत्वात्यन्ताभावरहितत्वेन चैतद्द्वयरहितत्वासम्भवात्। तेन तेषु साध्यसिद्ध्यर्थमन्यतरेति गृहीतम्। अत्रानित्यत्वसिद्धिमाह—**अत्र चैतदन्योन्याभावात्यन्ताभावेत्यादिना। तद्रहितत्वमिति।** एतदन्योन्याभावात्यन्ताभावरहितत्वमित्यर्थः।।१५।।

**भुवन.—अयं शब्दः शब्दत्वेत्यादि।** अनित्यत्वस्य अत्यन्ताभावः अनित्यत्वात्यन्ताभावः नित्यत्वम्। शब्दत्वं चानित्यत्वात्यन्ताभावश्च। तयोरन्यतररहितः तयोरन्यतरात्यन्ताभावाश्रयः इत्यर्थः। **यं कञ्चन धर्मविशेषमिति।**

---

**'अयं शब्द एतदन्योन्याभावात्यन्ताभावानित्यत्वात्यन्ताभावान्यतररहितः मेयत्वात्'** पक्ष एवं हेतु तुल्य है। साध्य में कुछ भिन्नता है। पूर्वानुमानो में अन्यतर का अधिकरण शब्द को सिद्ध करना था। यहाँ पर अन्यतर का राहित्य शब्द में सिद्ध करना है। एतदन्योन्याभावात्यन्ताभावरहितत्व यानी शब्द भेद के अत्यन्ताभाव का राहित्य या अनित्यत्व के अत्यन्ताभाव का राहित्य शब्द में सिद्ध करना है। शब्दभेद का अत्यन्ताभाव शब्दभेदाभाव शब्दमात्र में रहता है, उसका राहित्य यानी अभाव शब्द में सिद्ध करना व्याघातदोष होगा। अतः अनित्यत्व के अत्यन्ताभाव का राहित्य शब्द में सिद्ध होगा। अनित्यत्व का अत्यन्ताभाव यानी नित्यत्व उसका राहित्य शब्द को अनित्य मानने पर सिद्ध होगा। अतः शब्द अनित्य है।

यहाँ पर शब्द भेद के अत्यन्ताभाव को यदि साध्य मनाये तो नित्यों में साध्य की अप्रसिद्धि होगी। क्योंकि नित्यों में शब्द भेद ही है। उसका अत्यन्ताभाव नहीं है। एवं अनित्यत्व का अत्यन्ताभाव ही है। अतः अन्यतर का राहित्य साध्य बनाया। नित्यों में अनित्यत्व के अत्यन्ताभाव का राहित्य भले न हो, शब्दभेद के अत्यन्ताभाव का राहित्य तो है ही।।१५।।

**'अयं शब्दः शब्दत्वानित्यत्वात्यन्ताभावान्यतररहितः मेयत्वात्'** यहाँ पर भी शब्द में शब्दत्व का राहित्य या अनित्यत्व के अत्यन्ताभाव का राहित्य

**यद्वा सामान्यतः अयं शब्दः एतनिष्ठानित्यत्वात्यन्ताभावान्यतररहितः मेयत्वादिति।। एतन्निष्ठश्चानित्यत्वात्यन्ताभावश्चेति द्वन्द्वसमासः।।१७।।**

**अयं शब्दः एतदन्योन्याश्भावव्यतिरिक्तनित्यनिष्ठत्वरहिताधिकरणं मेयत्वादिति।। एतदन्योन्याभावव्यतिरिक्तनित्यनिष्ठेषु एतदन्योन्याभाव-व्यतिरिक्तनित्यनिष्ठत्वं धर्मः। तद्रहितश्चैतदन्योन्याभावो वा स्यात्,**

---

वाचकत्ववर्णात्मकत्वाकाशविशेषगुणत्वश्रावणत्वविशिष्टसामान्यवत्त्वादिक-मित्यर्थः।।१६।।

**भुवन.—यद्वा सामान्यत इत्यादि।** सुगमैव पूर्ववत्।।१७।।

**भुवन.—अयं शब्दः एतदन्योन्याभावव्यतिरिक्तेत्यादि।** एत-दन्योन्याभावव्यतिरिक्ताश्च ते नित्यनिष्ठाश्च। तेषां भावः तत्त्वम्। तेन रहितो यो धर्मः, तस्याधिकरणं शब्दः इत्यर्थः। नित्यनिष्ठा धर्मा आकाशत्वप्रमेयत्वास्ति-त्वादय एतदन्योन्याभावश्च, तेषु एतदन्योन्याभावव्यतिरिक्तपदेन एतदन्योन्या-भावो नित्यनिष्ठेभ्यो बहिष्कृतः। तस्य च पक्षे साधने व्याघातः स्यात्। अतो

---

साध्य है। शब्दत्व का राहित्य तो शब्द में हो नही सकता, अतः अनित्यत्व के अत्यन्ताभाव का राहित्य ही सिद्ध होगा। इसी प्रकार शब्द के अन्यधर्म वाचकत्व वर्णात्मकत्व, आकाशविशेषणगुणत्व आदि को लेकर साध्य बनाना चाहिए। **वाचकत्वानित्यत्वात्यन्ताभावान्यतररहितः, वर्णात्मकत्वानित्यत्वात्यन्ता-भावान्यतररहितः** समन्वय पूर्णवत् करना चाहिए।।१६।।

उसी को सत्तरहवें में सामान्य रूप से कह दिया। एतनिष्ठ यानी शब्दधर्म तथा अनित्यत्व का अत्यन्ताभाव दोनो में से किसी एक का राहित्य शब्द से सिद्ध करना है। शब्दधर्म का राहित्य शब्द में सिद्ध नहीं हो सकता। अतः अनित्यत्व के अत्यन्ताभाव का राहित्य शब्द में सिद्ध होगा। यहाँ पर एतन्निष्ठ तथा अनित्यत्वात्यन्ताभाव तक द्वन्द्व समास है। अन्यतर रहित शब्द का दोनो से अन्वय होगा। ऐसा नियम है, कि द्वन्द्व के वाद आये हुए शब्द का प्रत्येक से अन्वय होता है। अतः साध्य का स्वरूप होगा। शब्दधर्म या अनित्यत्व के अत्यन्ताभाव का राहित्य।।१७।।

अठारहवें से साध्यघटक अन्यतर पद का परित्याग कर पुनः रहित अधिकरण पद आ गये। **'एतदन्योन्याभावव्यतिरिक्तनित्यनिष्ठत्वरहिताधिकरणं शब्दः'** शब्दभेदातिरिक्त नित्यों में रहने वाले धर्मो के अभाव का अधिकरण। नित्यों में एतदन्योन्याभाव यानी शब्दभेद रहता है। तथा शब्दभेदातिरिक्त

**नित्यनिष्ठत्वरहितो वा। आद्यः पक्षे व्याहतः। तेन नित्यनिष्ठत्वरहितः पक्षे सिध्यन्ननित्यत्वमन्तर्भाव्य सिध्यतीत्यनित्यत्वसिद्धिः।।१८।।**

**अयं शब्दः शब्दत्वात्यन्ताभावव्यतिरिक्तनित्यनिष्ठत्वरहिताधिकरणं मेयत्वादिति। व्याख्यानं पूर्ववत्। एवं पक्षीकृतशब्दनिष्ठयत्किञ्चिद्धर्मविशेषात्यन्ताभावमुपादाय यावन्तः पक्षीकृतशब्दधर्माः, तावत्यो महाविद्या द्रष्टव्याः।।१९।।**

**यद्वा सामान्यतः अयं शब्दः एतन्निष्ठात्यन्ताभावव्यतिरिक्तनित्यनिष्ठत्वरहिताधिकरणं मेयत्वादिति।। एतन्निष्ठस्य अत्यन्ताभाव इति समासः।।२०।।**

---

यथोक्तविशेषणोपपन्नः एतदन्योन्याभावो दृष्टान्तार्थे सर्वत्र ज्ञेयः। नित्यनिष्ठत्वरहितश्च धर्मः शब्दत्वादिः पक्षे ज्ञेयः। व्याख्यानं तु सुगममेव।।१८।।

**भुवन.**—अयं शब्दः शब्दत्वात्यन्ताभावेत्यादि। शब्दत्वस्यात्यन्ताभावः शब्दत्वात्यन्ताभावः इति तत्पुरुषसमासः कार्यः। शेषं पूर्ववत्।।१९।।

**भुवन.**—यद्वा सामान्यतः अयं शब्दः एतन्निष्ठात्यन्ताभावेत्यादि। एतन्निष्ठस्य शब्दत्वादेर्धर्मस्य अत्यन्ताभावः एतन्निष्ठात्यन्ताभाव इत्यत्रापि तत्पुरुषसमास एव कर्तव्यः।।२०।।

---

आकाशत्व प्रमेयत्व सत्ता आदि धर्म है। उनमें शब्द भेदातिरिक्तनित्यनिठत्व नामक धर्म है। उसका अभाव शब्द में रहने वाले शब्दत्व आदि धर्मों में है। उसका अधिकरण शब्द है।

शब्दान्योन्याभावव्यतिरिक्तनित्यनिष्ठत्वरहित शब्दान्योन्याभाव (शब्द-भेद) है, या नित्यनिष्ठत्वरहित है। प्रथमपक्ष यानी शब्द में शब्द भेद साधन कहेंगे तो व्याघात दोष होगा। अतः नित्यनिष्ठत्वरहितत्व ही शब्द में सिद्ध होगा, जो शब्द को अनित्य माने विना नहीं सिद्ध हो सकता। अतः शब्द अनित्य है। सपक्षभूत अनित्यों में एतदन्योन्याभाव भी है, तथा नित्यनिष्ठत्वराहित्य भी है। नित्यों में शब्दान्योन्याभाव है। अतः उभयविध सपक्षो में साध्य प्रसिद्ध है।।१८।।

उन्नीसवाँ साध्य भी अठारहवें के समान ही है। इसमें शब्दान्योन्याभाव के स्थान पर शब्दत्वात्यन्ताभाव रख दिया जो शब्द भेद के समान शब्द से इतर में रहेगा। समन्वय अठारहवें अनुमान के अनुसार करना है।।१९।।

इसी प्रकार शब्द में रहने वाले अन्यधर्म श्रावणत्व आकाशविशेषगुणत्व आदि के अत्यन्ताभाव से घटित साध्यो का प्रयोग कर सकते है। इसी आशय

**अयं शब्दः शब्दत्वव्यतिरिक्तैतद्धर्मत्वरहितानित्यनिष्ठाधिकरणं मेयत्वादिति। शब्दत्वव्यतिरिक्तैतद्धर्मेषु शब्दत्वव्यतिरिक्तैतद्धर्मत्वं नाम धर्मः। तद्रहितश्चानेतद्धर्मो वा, शब्दत्वं वा। आद्यः पक्षे व्याहतः। तेन शब्दत्वमनित्यनिष्ठत्वविशेषितं पक्षे सिध्यतीति शब्दानित्यत्वसिद्धिः। एवं**

---

**भुवन.—अयं शब्दः शब्दत्वव्यतिरिक्तैतद्धर्मत्वरहितानित्यनिष्ठाधिकरणमिति।** शब्दत्वात् व्यतिरिक्ताः भिन्नाः शब्दत्वव्यतिरिक्ताः। ते च ते एतद्धर्माश्च शब्दत्वव्यतिरिक्तैतद्धर्माः। तेषां भावः तत्त्वम्। तेन रहितश्चासौ अनित्यनिष्ठश्च। तदाश्रयः शब्द इति भावः। शब्दत्वव्यतिरिक्तैतद्धर्मत्वरहितोऽनित्यनिष्ठश्च धर्मः शब्दान्यनिष्ठः पक्षीकृतशब्दान्योन्याभावादिर्दृष्टान्तीभूतेषु सर्वपदार्थेषु पक्षव्यतिरिक्तेषु नित्यानित्येषु ज्ञातव्यः। अनित्ये घटपटादौ च घटत्वपटत्वादिकोऽपि धर्मो ज्ञेयः। आकाशत्वादिकस्तु धर्मोऽनित्यनिष्ठो न भवतीति नित्येषु न तेन साध्यसिद्धिः, किन्तु पक्षान्योन्याभावादिनैव। पक्षे च शब्दत्वव्यतिरिक्तैतद्धर्मत्वरहितो धर्मः शब्दत्वमेव। तच्च अनित्यनिष्ठं तदैव स्यात्, यदि शब्दोऽनित्यः स्यादित्यत्र शब्दानित्यत्वसिद्धिः। नित्यत्वेनार्थान्तरतापरिहारार्थमनित्यनिष्ठेतिपदम्। प्रमेयत्वादिव्यावृत्त्यर्थमेतद्धर्मत्वरहितेति ग्रहणम्। व्याघातपरिहाराय शब्दत्वव्यतिरिक्तेतिपदोपादानम्। तथा च पक्षे अनित्यनिष्ठेति विशेषणविशिष्टशब्दत्वसिद्ध्या व्याघातपरिहारो बोद्धव्यः। एतदेवानुमानं शब्दव्यतिरिक्तेत्यादिना व्याख्यानयति—**अनेतद्धर्म इति।** अशब्दधर्म इत्यर्थः। **अनित्यनिष्ठत्वविशेषितामिति।** शब्दत्वस्य शब्दमात्र-

---

का बोधक बीसवाँ अनुमान है। अनुमान सामान्य का प्रयोग एतन्निष्ठ यानी शब्दवृत्ति (शब्द में रहने वाले) धर्म का अत्यन्ताभाव शेष पूर्ववत् है।।२०।।

इक्कीसवें अनुमान का साध्य है **'शब्दत्वव्यतिरिक्तैतद्धर्मत्वरहितानित्यनिष्ठाधिकरणत्व'** शब्दत्वव्यतिरिक्त जो एतद्धर्म यानी शब्दवृत्तिधर्म उनसे भिन्न जो अनित्यवृतिधर्म उसका अधिकरण। शब्दत्वभिन्न शब्दवृत्तिधर्म में शब्दत्वव्यतिरिक्तैतद्धर्मत्व नामक धर्म है। उसका अत्यन्ताभाव शब्दत्व में है, या तो शब्दनिष्ठधर्मों में है। उस धर्म का अधिकरण शब्द को कहना है। अब यदि शब्द से भिन्न में रहने वाले धर्म का अधिकरण कहते है, तो व्याघात होगा। अतः शब्दत्व को अनित्यनिष्ठत्वेन शब्द में सिद्ध करना है। शब्दत्व अनित्यनिष्ठ तभी हो सकता है। जब शब्द को अनित्य माना जाय, इस प्रकार अनित्यनिष्ठशब्दत्व का अधिकरण शब्द अनित्य है। केवलान्वयी अनुमान है। अतः सपक्ष अनित्य एवं नित्य दोनों प्रकार के पदार्थ होंगे। अनित्य घट पट आदि में तो

**पक्षमात्रनिष्ठयत्किञ्चिद्धर्मविशेषव्यतिरिक्तत्वमुपादाय यावन्तः पक्षमात्रनिष्ठा धर्मास्तावत्यो महाविद्या द्रष्टव्याः।।२१।।**

**यद्वा सामान्यतः अयं शब्द एतन्मात्रनिष्ठव्यतिरिक्तैतद्धर्मत्वरहिता-नित्यनिष्ठाधिकरणं मेयत्वादिति।।२२।।**

---

निष्ठत्वादनित्यनिष्ठेति द्वितीयविशेषणविशिष्टत्वं शब्दस्यानित्यत्वे सत्येव स्यात्, नान्यथेत्यर्थः। **एवं पक्षमात्रनिष्ठयत्किञ्चिद्धर्मविशेषव्यतिरिक्तमिति। अयं शब्दः श्रावणत्वव्यतिरिक्तैतद्धर्मत्वरहितानित्यनिष्ठाधिकरणं मेयत्वादि-त्यादिका महाविद्येत्यर्थः**।।२१।।

**भुवन.—यद्वा सामान्यतः अयं शब्दः एतन्मात्रनिष्ठव्यतिरिक्तेत्यादि।** एतन्मात्रनिष्ठाः पक्षीकृतशब्दमात्रनिष्ठाः एतच्छब्दत्वैतच्छ्रावणत्वादयः। पक्षी-कृतशब्दे एव तेषां वर्तमानत्वात्। तव्द्यतिरिक्ता एतद्धर्मा अस्तित्वप्रमेयत्वादयः, तेषां पक्षीकृतशब्दमात्रादन्यत्रापि वर्तनात्। तत्त्वेन रहितो योऽनित्यनिष्ठस्त-स्याधिकरणमित्यर्थः। विशेषणसाफल्यं पूर्ववदेव ज्ञातव्यम्।।२२।।

---

शब्दत्वव्यतिरिक्तैतद्धर्मत्व रहित घटत्व पटत्व आदि धर्म है। वह अनित्यनिष्ठ भी है। नित्यों के विशेषधर्म आकाशत्व आदि शब्दत्वव्यतिरिक्तैतद्धर्मत्वरहित तो है। परन्तु अनित्यनिष्ठ नहीं है। तथापि नित्यनिष्ठ सामान्यधर्मों को लेकर साध्यसिद्धि करनी चाहिए। नित्यों में रहने वाले जो सामान्यधर्म प्रयेयत्व आदि वह शब्दत्वव्यतिरिक्तैतद्धर्मत्वरहित भी हैं, तथा अनित्यों में रहने वाले भी हैं। इसी प्रकार पक्ष शब्दमात्र में रहने वाले जिस किसी धर्मविशेष व्यतिरिक्तत्व को लेकर साध्यसिद्ध करना चाहिए। अतः जितने शब्दवृत्ति धर्म होंगे तद्व्यतिरिक्त घटित उतने महाविद्यानुमान होंगे। उसका प्रतिफलीभूत बाईसवाँ महाविद्यानुमान है।।२१।।

साध्य सामान्य को लेकर बाईसवाँ महाविद्यानुमान प्रवृत्त है। **'एतन्मात्रनिष्ठव्यतिरिक्तैतद्धर्मत्वरहितानित्यनिष्ठाधिकरण'** पक्षीकृतशब्दमात्रवृत्ति (शब्दमात्र में रहने वाले) श्रावणत्व आदि धर्म जो शब्दातिरिक्त किसी अन्य में नहीं रहते। शब्दमात्रवृत्तिश्रावणत्वादि से अतिरिक्त शब्दवृत्तिसामान्यधर्म प्रमेयत्वादि जो सभी नित्यानित्यपदार्थों में रहते है। उनमें एतन्मात्रनिष्ठव्यति-रिक्तैतद्धर्मत्व नामक धर्म है। उसका अत्यन्ताभाव एतन्मात्रनिष्ठ धर्म में होगा या तो शब्दातिरिक्तवृत्तिधर्म में होगा।यदि शब्दान्यवृत्तिधर्म को शब्दवृत्तित्वेन साध्य करेगे तो व्याघातदोष होगा। अतः शब्दमात्र वृत्तिधर्म को अनित्यवृत्तित्वेन साध्य बनाना है। जो शब्द को अनित्य मानने पर होगा। अतः शब्द अनित्य है।।२२।।

**अयं शब्द एतदन्यत्वव्यतिरिक्तैतदन्यवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वादिति। एतदन्यत्वव्यतिरिक्ता ये एतदन्यवृत्तयः तेषु एतदन्यत्वव्यतिरिक्तैतदन्यवृत्तित्वं धर्मः। तद्रहितश्चैतदन्यत्वं वा, एतदवृत्तिर्वा, एतन्मात्रवृत्तिर्वा। आद्यौ पक्षे व्याहतौ। तेन पक्षमात्रनिष्ठो धर्मोऽनित्यनिष्ठत्वविशेषितः पक्षे सिध्यतीत्यनित्यत्वसिद्धिः।।२३।।**

---

**भुवन.—अयं शब्दः एतदन्यत्वव्यतिरिक्तैतदन्यवृत्तित्वरहितानित्यनिष्ठाधिकरणमिति।** एतस्मात्पक्षीकृतशब्दात् यत् अन्यत्वं भिन्नत्वं, तद्व्यतिरिक्ताः एतद्भिन्नाः। एतस्मात्पक्षीकृतशब्दादन्ये घटपटात्मादयः, तत्र वृत्तिर्येषां ते एतदन्यवृत्तयः। एतदन्यत्वव्यतिरिक्ताश्च ते एतदन्यवृत्तयश्च एतदन्यव्यतिरिक्तैतदन्यवृत्तयः। तेषां भावः तत्त्वम्। तेन रहितो योऽनित्यनिष्ठो धर्मः तस्याधिकरणं शब्द इत्यर्थः। **एतदन्यत्वं वेति।** एतदन्योन्याभावो वा। **एतदवृत्तिर्वेति।** घटत्वपटत्वात्मत्वादिर्वा। **एतन्मात्रवृत्तिर्वेति।** शब्दत्वश्रावणत्वादिर्वा। **आद्याविति।** आद्यौ धर्मौ पक्षे व्याघातादेव साधयितुमशक्यौ। तृतीयश्चानित्यनिष्ठस्तदैव स्यात्, यदि शब्दोऽनित्यः स्यादिति शब्दानित्यत्वसिद्धिः। अत्रानुमाने सर्वत्रापि दृष्टान्ते एतदन्यत्वं धर्मोऽधिगन्तव्यः। तद्भिन्नानां सर्वेषामप्येतदन्यवृत्तित्वरहितपदेन निषिद्धत्वात्, एतदन्यत्वव्यतिरिक्तेति पदेन एतदन्यत्वस्यैव ग्रहणाच्च। स चानित्ये घटपटादौ वर्तमानत्वादनित्यनिष्ठ एवेति सर्वं समञ्जसमेवेति।।२३।।

---

तेईसवें अनुमान का साध्य है। **'एतदन्यत्वव्यतिरिक्तैत्तदन्यवृत्तित्वरहिताधिकरणम्'** पक्षीकृतशब्द से इतर में रहने वाले एतदन्यत्वव्यतिरिक्त (शब्दन्यत्वातिरिक्त) धर्म से भिन्न अनित्यवृत्तिधर्म का अधिकरण शब्द है। पक्षीकृतशब्द से भिन्न नित्य या अनित्य पदार्थों में शब्दान्यत्व धर्म है। तथा शब्दान्यत्व से अतिरिक्त उनके विशेषधर्म एवं समान्यधर्म हैं। विशेषधर्म नित्य आकाशादि में आकाशत्व आदि, अनित्यघटादि में घटत्वादि, सामान्यधर्म प्रयेयत्व आदि, उससे भिन्न या तो शब्दान्यत्व होगा, या तो एतदवृत्तित्व अथवा एतन्मात्रवृत्तित्व, प्रथमपक्ष में एवं द्वितीयपक्ष में व्याघातदोष है। अतः तृतीयपक्ष शब्दमात्रवृत्तिधर्म को अनित्यवृत्तित्वेन शब्द में सिद्ध करना है। जो शब्द को अनित्य माने विना नहीं सम्भव होगा। अतः शब्द अनित्य है। इस अनुमान में सर्वत्र दृष्टान्तों में एतदन्यत्व (शब्दान्यत्व) साध्यरूपेण स्वीकार करना चाहिए। तदतिरिक्त एतदन्यवृत्तिरहित कथन मात्र से निषिद्ध है। वह एतदन्यत्वधर्म अनित्यों में अनित्यवृत्तित्वेन सिद्ध है ही। नित्यों को पक्षतुल्य मानना चाहिए।।२३।।

**अयं शब्दः शब्दत्वात्यन्ताभावव्यतिरिक्तैतदन्यवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वादिति।। अत्र चैतदन्योन्याभावपदस्थाने शब्दत्वात्यन्ताभावपदमेव पूर्वमहाविद्यावैलक्षण्यम्। शेषं पूर्ववत्। एवं पक्षमात्रनिष्ठयत्किञ्चिद्धर्मविशेषात्यन्ताभावमुपादाय यावन्तः पक्षे धर्मास्तावत्यो महाविद्या द्रष्टव्याः।।२४।।**

**यद्वा सामान्यतः अयं शब्दः एतन्मात्रनिष्ठात्यन्ताभावव्यतिरिक्तैदन्यवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वादिति।।२५।।**

---

**भुवन.—अयं शब्दः शब्दत्वात्यन्ताभावत्यादि।** शब्दत्वस्य अत्यन्ताभावः शब्दत्वात्यन्ताभावः। अत्र चैवंविधविशेषणविशिष्टो धर्मः शब्दत्वात्यन्ताभावो वा शब्दत्वादिर्वा। आद्यः पक्षे व्याहतत्वाद्दृष्टान्तोपयोगी। द्वितीयस्तु पक्षोपयोगी। **अन्योन्याभावपदस्थाने इति।** अन्यत्वपदस्थाने इत्यर्थः। अन्यत्वान्योन्याभावयोर्हि पर्यायान्तरतैव नार्थान्तरतेति भावः।।२४।।

**भुवन.—यद्वा सामान्यतः अयं शब्दः एतन्मात्रनिष्ठात्यन्ताभावेत्यादि।** एतन्मात्रनिष्ठः शब्दत्वादिः, तस्य अत्यन्ताभावः एतन्मात्र-

---

चौबीसवें अनुमान का साध्य **'शब्दत्वात्यन्ताभावव्यतिरिक्तैतदन्यत्वरहितानित्यनिष्ठाधिकरणम्'** इस अनुमान का साध्य पूर्व अनुमान के साध्य से बहुत भिन्न नहीं है। तेईसवें साध्य में एतदन्यत्व शब्दान्यत्व यानी शब्दभेद जो शब्द से भिन्न में ही रहता है। चौबीसवें में शब्दत्वात्यन्ताभाव पद है, वह भी शब्द से इतर में ही रहता है। शेष पूर्ववत् है। समन्वय भी तेईसवें के समान करना चाहिए। इसी प्रकार पक्षमात्र में रहने वाले जिस किसी धर्म विशेष के अत्यन्ताभाव को लेकर महाविद्यानुमान प्रवृत्त होगें।।२४।।

पचीसवां अनुमान इसी अभिप्राय का बोधक है। **'एतन्मात्रनिष्ठात्यन्ताभावव्यतिरिक्तैतदन्यवृत्तित्वरहितानित्यनिष्ठाधिकरणम्।'** पक्षीकृतशब्दमात्र में रहने वाले श्रावणत्व आदि धर्म के अत्यन्ताभाव से अतिरिक्त शब्द से इतर में रहने वाले धर्म के राहित्य का अधिकरण शब्द है। यहाँ पर भी शब्दमात्र में रहने वाले धर्म श्रावणत्व आदि का अत्यन्ताभाव शब्द से इतर में हैं। तथा शब्दधर्माभाव के अतिरिक्त शब्दभिन्नों में स्वकीयधर्म भी हैं। उससे भिन्न या तो शब्द में न रहने वाला धर्म होगा। या तो शब्दमात्रवृत्ति धर्म होगा। प्रथमपक्ष को स्वीकार करने पर व्याघात होगा। अतः द्वितीयपक्ष मान्य है।

**२६ अयं शब्दः अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगिपक्षवृत्तित्वरहिता-नित्यत्ववन्निष्ठानित्यत्वात्यन्ताभाववन्निष्ठरहिताधिकरणं मेयत्वादिति।। अनित्यत्ववन्निष्ठानित्यन्ताभावप्रतियोगित्वे सति ये पक्षवृत्तयो धर्माः, तेषु**

---

निष्ठात्यन्ताभावः। अत्राप्येवंविधो धर्म एतन्निष्ठात्यन्ताभावो वा शब्दत्वादिरेव वा। शेषं पूर्ववदेव।।२५।।

**भुवन.—अयं शब्दः अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगिपक्ष-वृत्तित्वरहितानित्यत्ववन्निष्ठानित्यत्वात्यन्ताभाववन्निष्ठत्वरहिताधिकरणमिति।** अनित्यत्वं विद्यते येषु ते अनित्यत्ववन्तः अनित्यपदार्थाः। तेषु निष्ठा अवस्थानं यस्य सोऽनित्यत्ववन्निष्ठः। स चासौ अत्यन्ताभावश्च। तस्य प्रतियोगिनः परमाणुत्वाकाशत्वादयः। पक्षे वृत्तिर्येषां ते पक्षवृत्तयः। अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगिनश्च ते पक्षवृत्तयश्चेति समासः। एवंविधाश्च धर्माः शब्दस्य नित्यत्वेऽङ्गीक्रियमाणे शब्दत्वश्रावणत्वनित्यत्वादयः। तेषां भावः तत्त्वम्। तेन रहिता नित्यनिष्ठा अनित्यनिष्ठा नित्यानित्योभयनिष्ठाश्च धर्माः स्युः। तत्र ये नित्यनिष्ठा आकाशत्वादयो ये चानित्यनिष्ठा घटत्वादयो ये चोभयनिष्ठा अस्तित्वप्रमेयत्वादयः, ते सर्वेऽप्यनित्यत्ववन्निष्ठात्यन्ता-भावप्रतियोगिनः सन्तो ये पक्षवृत्तयस्तत्त्वरहिता विद्यन्त एव। यद्यप्यस्तित्व-

---

शब्दमात्रवृत्तिधर्म शब्द में अनित्यवृत्तित्वेन सिद्ध करना है। जो शब्द को अनित्य मानने पर ही सिद्ध होगा।।२५।।

इस महाविद्यानुमान का साध्य **'अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगि-पक्षवृत्तित्वरहितानित्यत्ववन्निष्ठानित्यत्वात्यन्ताभाववन्निष्ठरहिताधिकरणम्'** अनित्यत्ववत् घट पटादि में रहने वाला जो अत्यन्ताभाव उसके प्रतियोगी नित्यपदार्थवृत्तिधर्म परमाणुत्व आकाशत्व आदि, तथा जब तक शब्द में अनित्यत्व का निश्चय नहीं हो जाता, तब तक शब्दवृत्तिधर्म शब्दत्व श्रावणत्व आदि होंगे। परन्तु साध्यान्तर्गतपक्षवृत्तित्वरहित पद भी है। अतः पक्षवृत्तित्वरहित प्रतियोगी नित्यनिष्ठधर्मपरमाणुत्व आशकत्व आदि ही होगें।

अथवा अनित्यत्ववन्निष्ठ अत्यन्ताभाव का प्रतियोगी पक्षवृत्तिधर्म से भिन्न जो नित्यनिष्ठ विशेषधर्म आकाशत्व आदि तथा अनित्यनिष्ठ जो विशेषधर्म घटत्व आदि। एवं नित्य तथा अनित्यनिष्ठ जो समान्य धर्म प्रयेयत्व आदि, यद्यपि प्रयेयत्व आदि धर्म पक्षवृत्ति होने के कारण पक्ष

**अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगिपक्षवृत्तित्वं धर्मः। ये चानित्यत्ववन्निष्ठत्वे सति अनित्यत्वात्यन्ताभाववन्निष्ठा धर्माः, तेषु अनित्यत्ववन्निष्ठानित्यत्वात्यन्ताभाववन्निष्ठत्वं धर्मः। अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगिपक्षवृत्तित्वरहितश्चासौ अनित्यत्ववन्निष्ठानित्यत्वात्यन्ताभाववन्निष्ठत्वरहितश्च, तदधिकरणं तदाश्रय इत्यर्थः।**

---

प्रमेयत्वादयः पक्षवृत्तित्वरहिता न सन्ति, तथाप्यनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वे सति ये पक्षवृत्तयस्तत्त्वरहिता एव। तेषां सर्वत्रापि विद्यमानत्वेन अत्यन्ताभावप्रतियोगित्वस्यैव अभावात्। अथ द्वितीयविशेषणं व्याख्यायते—अनित्यत्ववन्तोऽनित्यपदार्थाः। तन्निष्ठाश्च अनित्यत्वात्यन्ताभाववन्तो नित्यपदार्थाः, तन्निष्ठाश्च। तत्त्वेन रहितो यो धर्मः स तथा। ततोऽनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगिपक्षवृत्तित्वरहितश्चासौ अनित्यत्ववन्निष्ठात्यन्ताभाववन्निष्ठत्वरहितश्चेति कर्मधारयः। तस्याश्रयः शब्द इत्यर्थ। अत्र च द्वितीयविशेषणेन प्रथमविशेषणोपपन्नानामप्यस्तित्वप्रमेयत्वादीनां व्यवच्छेदः कृतः। एवंविधविशेषणद्वयोपपन्नश्च धर्मः पक्षे शब्दे शब्दत्वादिरेव। स च अनित्यत्ववदनित्यत्वात्यन्ताभाववद्युगलनिष्ठत्वरहितो विद्यते। स चाद्यविशेषणोपपन्नस्तदैव स्यात्, यदि शब्दस्यानित्यत्वमङ्गीक्रीयेत। शब्दस्य च

---

वृत्तित्वरहित नहीं है। तथापि अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्व विशिष्ट होकर प्रमेयत्वादिधर्म पक्षवृत्ति नहीं है। क्योंकि शब्द में अभी तक नित्यत्व का निश्चय हुआ नहीं। जब तक शब्द में नित्यत्वनिश्चय नहीं हो जाता तब तक शब्दवृत्तिधर्म अनित्यवन्निष्ठात्यन्ताभावप्रतियोगी नहीं होंगे। अतः विशेषण के अभाव से विशिष्ट का अभाव है। पक्षवृत्ति होने पर भी प्रयेयत्व सत्ता आदि धर्मों में है। इस प्रकार नित्यानित्यविशेषधर्मों का या नित्यानित्य में रहने वाले तथा शब्द में भी रहने वाले प्रमेयत्व आदि सामान्यधर्मों का शब्द अधिकरण होगा। प्रथमपक्ष में व्याघातदोष है। द्वितीय पक्ष में सिद्धसाधन। अतः द्वितीयविशेषण से विशेषित साध्य को कर रहे हैं।

**'अनित्यत्ववन्निष्ठात्यन्ताभाववन्निष्ठत्वरहित'** (अनित्यत्ववन्निष्ठत्वे सति अनित्यत्वात्यन्ताभावनिष्ठत्वरहित) जो धर्म अनित्यों में रहते हुए अनित्यत्व के अत्यन्ताभाव वाले नित्यो में रहते हैं, उनसे भिन्न। द्वितीयविशेषण से साध्य को विशेषित कर देने से प्रयेयत्व आदि धर्म नहीं गृहीत होंगे। क्यों वे धर्म अनित्यों में तथा अनित्यत्व के अत्यन्ताभाववाले नित्यों में भी रहते

**अनित्यत्ववन्निष्ठानित्यत्वात्यन्ताभाववन्निष्ठत्वरहिताधिकरणमित्युक्ते नित्यत्वतदवान्तरधर्मैरनित्यत्वात्यन्ताभाववन्मात्रवृत्तिभिरर्थान्तरता स्यात्। अनित्यत्ववन्मात्रवृत्तीनामिव अनित्यत्वात्यन्ताभाववन्मात्रवृत्तीनामप्यनित्यत्ववन्निष्ठानित्यत्वात्यन्ताभाववन्निष्ठत्वरहितत्वात्। तन्निवृत्यर्थमनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगिपक्षवृत्तित्वरहितग्रहणम्। पक्षीकृतशब्दनित्यत्वे नित्यत्वादीनामनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगिपक्षवृत्तित्वेन तद्रहितत्वानुप-**

---

नित्यत्वे स धर्मोऽनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगी सन् पक्षवृत्तिरेव स्यात्, न तु तत्त्वरहित:। तस्माच्छब्दस्यानित्यत्वमङ्गीकार्यम्। दृष्टान्ते चैवंविधो धर्म: एकैकनित्यनिष्ठो गगनत्वादिरेकैकानित्यनिष्ठो घटत्वादिश्च ज्ञेय:।

भुवन.—अथैतदनुमानं व्याचष्टे—**अनित्यत्ववन्निष्ठेत्यादि।** अथ व्यावृत्तिचिन्ता। शब्द: अनित्यत्ववन्निष्ठेत्यादिसाध्यवानिति। शब्दमात्रपक्षीकरणे एकस्य शब्दस्य यन्नित्यत्वं तदनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वे सति यत्पक्षवृत्तित्वं तद्रहितं, सर्वशब्दानां पक्षत्वेन तत्र वृत्तिहीनत्वात्। एवमनित्यत्ववन्निष्ठत्वे सति यदनित्यत्वात्यन्ताभाववन्निष्ठत्वं तद्रहितं च। तदाश्रय एक: शब्द इति भागे सिद्धसाधनता स्यात्, अत उक्तमयं शब्द इति। अथ ग्रन्थकृदाद्यविशेषणपरिहारेण व्यावृत्तिचिन्तामाह—**अनित्यत्ववन्निष्ठानित्यत्वेत्यादि। नित्यत्वतदवान्तरधर्मैरिति।** शब्दस्यानित्यत्वे साध्ये नित्यत्वरूपार्थान्तरता स्यात्। कै:। नित्यत्वतदवान्तरधर्मै:। नित्यत्वं च, तस्मात् नित्यत्वादवान्तरधर्माश्च शब्दत्वादय:, तै:। **अनित्यत्वात्यन्ताभाववन्मात्र-**

---

हैं। दो विशेषणों से विशेषित धर्म का अधिकरण शब्द है। ऐसा धर्म जो अनित्यत्ववत् में रहने वाले अभाव का प्रतियोगी होते हुए पक्ष में नहीं रहता, तथा जो अनित्यत्ववत् में रहते हुए अनित्यत्व के अत्यन्ताभाववाले में नहीं रहता। ऐसा धर्म पक्ष में शब्दत्व आदि, तथा सपक्षनित्यों के विशेषधर्म आकाशत्व आदि अनित्यों के विशेषधर्म घटत्व आदि होंगे। नित्यानित्यों के विशेषधर्म अनित्यत्ववत् में रहने वाले अभाव के प्रतियोगी होते हुए पक्षीकृतशब्द में नहीं रहते, तथा अनित्यत्ववत् में रहते हुए अनित्यत्ववत् के अत्यन्ताभाववाले में नहीं रहते। पक्षीकृतशब्दवृत्ति शब्दत्व तभी उभयविशेषणों से विशेषित होगा जब शब्द को अनित्य माना जाय। शब्द को नित्य मानने पर शब्दत्व अनित्यत्वत् में रहने वाले अभाव का प्रतियोगी होते हुए पक्षवृत्ति ही हो जायेगा, उससे रहित नहीं होगा। जब

**पत्तेः। अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगिपक्षवृत्तित्वरहिताधिकरणमित्युक्ते मेयत्वाभिधेयत्वादिभिरर्थान्तरता स्यात्। तेषां पक्षनिष्ठत्वेऽप्यनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वे सति यत्पक्षवृत्तित्वं तद्रहितत्वेन पक्षीकृतशब्दनित्यत्ववादिनाप्यङ्गीकारात्। तन्निवृत्यर्थमनित्यत्ववन्निष्ठानित्यत्वात्यन्ताभाववन्निष्ठत्वरहितग्रहणम्। मेयत्वादीनामनित्यत्ववन्निष्ठानित्यत्वात्यन्ताभाववन्निष्ठत्वेन तद्रहितत्वानुपपत्तेः।**

---

**वृत्तिभिरिति।** नित्यमात्रवृत्तिभिरित्यर्थः। कथमर्थान्तरता अत्राह—**अनित्यत्ववन्मात्रेत्यादि।** अनित्यत्ववन्निष्ठत्वे सति यत् अनित्यत्वात्यन्ताभाववन्निष्ठत्वं तत् अनित्यमात्रवृत्तीनामिव नित्यमात्रवृत्तीनामपि नास्तीत्यर्थः। तन्निवृत्यर्थं प्रथम विशेषणम्। कथमनेन विशेषणेन तन्निरासोऽत्राह—**पक्षीकृतशब्देत्यादि। तद्रहितत्वानुपपत्तेरिति।** अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगिपक्षवृत्तित्वरहितत्वानुपपत्तेरित्यर्थः। अथ द्वितीयविशेषणं मुक्त्वा व्यावृत्तिचिन्तां करोति—**अनित्यत्ववन्निष्ठात्यन्ताभावेत्यादि।** अर्थान्तरतामेवाविष्करोति—**तेषामित्यादिना।** मेयत्वादीनामनित्येष्वपि भावादनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वहीनत्वात् अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वविशिष्टपक्षवृत्तित्वाभाव उभयसंमत इत्यर्थः। तन्निरासाय द्वितीयविशेषणोपादानम्। कथमनेन तन्निरासोऽत्राह—**मेयत्वादीनामित्यादि।** मेयत्वादीनां नित्यानित्यवृत्तित्वेन। **तद्रहितत्वानुपपत्तेरिति।** नित्यानित्यवृत्तित्वरहितत्वानुपपत्तेरिति भावः।

---

शब्द स्वयम् अनित्य होगा तो अनित्यत्ववत् में रहने वाले अभाव का प्रतियोगी नहीं होगा। इस प्रकार अनित्यवत् में रहने वाले अभाव का प्रतियोगी हो कर शब्दत्व पक्षवृत्ति नहीं है।

अब अनुमान घटक प्रत्येक पद की सार्थकता पर विचार करते हैं। सबसे पहले पक्ष के विशेषणीभूत अयं पद की सार्थकता। यदि पक्ष का विशेषण अयं न रख्खें **शब्दः अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगिपक्षवृत्तित्वरहितानित्यत्ववन्निष्ठात्यन्ताभाववन्निष्ठत्वरहिताधिकरणं** कहे तो शब्दसामान्य यानी सकल शब्द पक्षकोटि में होगे। इस स्थिति में किसी एक शब्द के नित्यत्व धर्म या अनित्यत्व धर्म को लेकर पक्षैकदेश में सिद्ध साधनता या अर्थान्तरता दोष होगा। यदि नित्यत्व धर्म को लेते हैं, तो वह अनित्यत्ववन्निष्ठात्यन्ताभाव का प्रतियोगी तो है, परन्तु सकल पक्ष में न रहने के कारण पक्ष वृत्तित्वरहित है। यदि अनित्यत्व को लेते हैं, तो वह

**अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वरहितानित्यत्ववन्निष्ठानित्यत्वात्यन्ताभाववन्निष्ठत्वरहिताधिकरणमित्युक्ते नित्यपदार्थेषु साध्याभावः। नित्य पदार्थमात्रवृत्तीनां धर्माणामनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वेन तद्रहितत्वानुपपत्तेः। अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वरहितनित्यनिष्ठधर्माणां चानित्यत्वात्यन्ताभाववन्निष्ठत्वेन तद्रहितत्वानुपपत्तेः। अतो नित्येषु साध्यसद्भावसिद्ध्यर्थं पक्षवृत्तित्वरहितग्रहणम्। यद्यप्येकैकनित्यवृत्तयो धर्मा अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वेन न तद्रहिताः, तथाप्यनित्यत्वव-**

---

**भुवन.**—अथ पक्षवृत्तित्वेतिपदं त्यक्त्वा व्यावृत्तिं विधत्ते—**अनित्यत्ववन्निष्ठात्यन्ताभावेत्यादि।** तथा च नित्यमात्रवृत्तीनां धर्माणां द्वितीयविशेषणोपपन्नानामपि प्रथमविशेषणोपपन्नत्वस्यानुपपत्तिः। अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वरहितेति विशेषणोपपन्नानां च सत्त्वादीनां नित्यनिष्ठानां धर्माणां नित्यानित्ययुगलवृत्तित्वेन नित्यानित्ययुगलवृत्तित्वरहितत्वानुपपत्तिश्च। तेन नित्येषु न साध्यसिद्धिः। तदर्थं पक्षवृत्तित्वेति। पदोपादानम्। तद्ग्रहणेऽपि च नित्यत्वतदवान्तरधर्माणामनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वात् न नित्येषु साध्यानुगम इत्यत आह—**यद्यप्येकैकनित्यवृत्तयो धर्मा इति।** एकैकनित्यवृत्तयो धर्मा आकाशत्वपरमाणुत्वादयः। ते

---

अनित्यत्ववन्निष्ठात्यन्ताभाव का प्रतियोगी नहीं है, तथा सकल पक्ष में न रहने के कारण पक्षवृत्तित्वरहित है। द्वितीयविशेषण भी उभयपक्ष से सिद्ध है। अनित्यत्ववत् में रहते हुए अनित्यत्वात्यन्ताभाववत् में न रहना। नित्यत्वधर्म या अनित्यत्वधर्म उभयवृत्ति नहीं होते। अतः पक्षैकदेश में सिद्ध साधनता दोष होगा। क्योंकि ऐसा धर्म नित्यत्व भी लिया जा सकता, इससे पक्ष में अर्थान्तरतादोष होगा। अतः अयं पक्ष विशेषण बनाया ताकि शब्द सामान्य पक्ष न हो सके। शब्द विशेष को पक्ष बनाने पर उक्त दोषों की आशङ्का नहीं है।

साध्यस्वरूपविचारः—साध्यघटक दो दल है, प्रथमदल **अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगिपक्षवृत्तित्वरहित** द्वितीयदल है, **अनित्यत्ववन्निष्ठानित्यत्वात्यन्ताभाववन्निष्ठत्वरहित,** अब यदि प्रथमदल को छोड़ कर द्वितीयदल मात्र रखते हैं, तो नित्यत्वधर्म को लेकर या किसी धर्मी विशेष में रहने वाले धर्म को लेकर अर्थान्तरतादोष होगा। क्योंकि नित्यत्वधर्म या अनित्यत्वात्यन्ताभाव वाले आकाशत्व आदि धर्म भी अनित्यत्ववन्मात्रवृत्ति

**न्निष्ठात्यन्ताभावप्रतियोगित्वे सति यत्पक्षवृत्तित्वं तद्रहिता भवन्त्येवेति नित्येषु साध्यानुगमसिद्धिः।**

**एवं पक्षीकृतशब्दातिरिक्तानित्येष्वपि एकैकानित्यनिष्ठधर्मैः साध्यानुगमो द्रष्टव्यः। अनित्यत्ववन्निष्ठानित्यत्वात्यन्ताभाववन्निष्ठत्वरहितः अनित्यत्वात्यन्ताभाववन्मात्रवृत्तिर्वा स्यात् अनित्यत्ववन्मात्रवृत्तिर्वा। आद्यः पक्षे न सिध्यति। तस्यानित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वे सति**

---

चानित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगिनः, एवं सति न तद्रहिताः। तथापि सम्पूर्णविशेषणेन विचार्यमाणाः सम्पूर्णविशेषणोपपन्ना अपि भवन्त्येवेति नित्येषु साध्यसिद्धिः।

**भुवन.**—अत्रानित्यत्वसिद्धिं दर्शयितुमाह—**अनित्यत्ववन्निष्ठेत्यादि। अनित्यत्वात्यन्ताभाववन्मात्रवृत्तिर्वेति।** नित्यमात्रवृत्तिर्नित्यत्वादिर्धर्म इत्यर्थः। **अनित्यत्ववन्मात्रवृत्तिर्वेति।** अनित्यमात्रवृत्तिः अनित्यत्वादिरित्यर्थः। शब्दे आद्यधर्मसाधने आद्यविशेषणेन सह विरोधः स्यादित्याह—**आद्यः पक्षे न सिध्यतीत्यादि।** पारिशेष्याद्द्वितीयधर्मं शब्दे साधयति—**अतोऽनित्यत्व-**

---

अनित्यत्व धर्म के समान अनित्यत्ववत् में रहते हुए अनित्यत्वात्यन्ताभाववत् में नहीं रहते। अतः प्रथमदल **'अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगिपक्षवृत्तित्वरहित'** रख्खा। शब्द को यदि नित्य मानते है, तो नित्यत्व आदि धर्म अनित्यत्ववन्निष्ठात्यन्ताभाव के प्रतियोगी हो कर पक्षवृत्ति होंगे। पक्षवृत्तित्व रहित नहीं होंगे।

यदि प्रथमदल ही रख्खें तो मेयत्व अभिधेयत्व आदि धर्म को लेकर अर्थान्तरतादोष है। मेयत्व आदि धर्म पक्षवृत्ति तो हैं, परन्तु अनित्यत्ववन्निष्ठात्यन्ताभाव के प्रतियोगी होकर पक्षवृत्ति नहीं हैं। ऐसे धर्म का अधिकरण शब्दनित्यत्ववादी भी स्वीकार कर सकते हैं। क्यों कि अभिधेयत्व या प्रमेयत्व का अधिकरण होने से शब्द अनित्य नहीं हो जाता। जब द्वितीय दल भी साध्य का घटक कर दिया गया तो अभिधेयत्व आदि सामान्य धर्म नहीं लिये जा सकते क्योंकि अभिधेयत्व आदि धर्म अनित्यत्ववत् वृत्ति होकर अनित्यत्वात्यन्ताभाववत् में भी वृत्ति ही हैं। उससे रहित नहीं हैं।

अब साध्यघटक पक्षवृत्तित्वरहितपद के फल क़ा विवेचन करते हैं। यदि पक्षवृत्तित्वरहितपद को हटाकर **'अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वरहितानित्यत्ववन्निष्ठानित्यत्वात्यन्ताभाववन्निष्ठत्वरहिताधिकरण'** कहे तो नित्यों

**पक्षवृत्तित्वेन तद्रहितत्वानुपपत्तेः। अतोऽनित्यत्ववन्मात्रवृत्तिधर्मः पक्षे सिध्यन् अनित्यत्वमन्तर्भाव्य सिध्यतीत्यनित्यत्वसिद्धिः।।२६।।**

---

**वन्मात्रेत्यादि।** अनित्यत्वशब्दत्वश्रावणत्वादिरनित्यत्ववन्मात्रवृत्तिः, तदा स्यात्, यदि शब्दोऽनित्यः स्यादित्यनित्यत्वमन्तर्गतं कृत्वा स धर्मः शब्दे सिध्यति। स चानित्यमात्रवृत्तिर्यद्यपि पक्षे वर्तमानत्वेन पक्षवृत्तित्वरहितो नास्ति, तथाप्यनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वे सति यः पक्षवृत्तिः तत्त्वरहित एवास्तीति व्याख्या।।२६।।

---

में साध्याप्रसिद्धिदोष होगा। नित्यमात्र में रहने वाले धर्म द्वितीय विशेषण से युक्त होते हुए अनित्यत्ववन्निष्ठात्यन्ताभाव. के प्रतियोगि ही हैं। उससे रहित नहीं हैं। अनित्यवृत्ति सत्ता आदि सामान्य धर्म अनित्यत्ववत् में भी रहते हैं, तथा अनित्यत्व के अत्यन्ताभाववत् में भी रहते हैं। उससे रहित नहीं हैं।

अतः पक्षवृत्तित्वरहितविशेषण दिया गया। पक्षवृत्तित्वरहित विशेषण देने से नित्यवृत्ति नित्यत्व या आकाशत्व आदि अनित्यत्ववन्निष्ठात्यन्ताभाव के प्रतियोगी तो हैं। परन्तु पक्षवृत्ति नहीं हैं। यद्यपि एक-एक नित्यवृत्तिधर्म अनित्यत्वन्निष्ठात्यन्ताभाव के प्रतियोगी ही हैं; उससे रहित नहीं हैं। तथापि अनित्यत्ववन्निष्ठात्यन्ताभाव के प्रतियोगी हो कर पक्षवृत्ति नहीं हैं। इसी प्रकार पक्षीकृतशब्दातिरिक्त अनित्यपदार्थों में भी एक-एक अनित्यनिष्ठघटत्व आदि धर्म को लेकर साध्यप्रसिद्धि करनी चाहिए। घटत्व आदि धर्म अनित्यत्व-वन्निष्ठात्यन्ताभावप्रतियोगिपक्षवृत्तित्वरहित भी हैं। तथा अनित्यत्ववत् में रहते हुए अनित्यत्वात्यन्ताभाववत् में रहते भी नहीं है।

पक्षशब्द में साध्य का समन्वय इस प्रकार है। द्वितीयविशेषणयुक्त यानी अनित्यत्ववत् में रहते हुए अनित्यत्व के अत्यन्ताभाववत् में न रहने वाला धर्म या अनित्यत्वात्यन्ताभाववत् (नित्य) मात्र में रहने वाला होगा। या तो अनित्यत्ववत् (अनित्य) मात्र में रहने वाला होगा। प्रथमपक्ष इसलिये नहीं ग्राह्य है। क्योंकि प्रथमविशेषण का समन्वय नित्य वृत्तिधर्म के साथ असम्भव है, यतः नित्यवृत्तिधर्म अनित्यत्ववन्निष्ठात्यन्ताभाव का प्रतियोगी हो कर पक्षवृत्ति ही है। पक्षवृत्तित्वरहित नही होगा।

अतः द्वितीय पक्ष यानी अनित्यत्ववत् (अनित्य) मात्र में रहने वाला धर्म लिया जायेगा। जो अनित्यत्व का अन्तर्भाव करके सिद्ध होगा। इस प्रकार शब्द अनित्य सिद्ध हुआ।।२६।।

**२७ अयं शब्दः एतच्छब्दनित्यविषयत्वरहितज्ञानविषयः मेयत्वादिति। येषु येषु ज्ञानेषु एतच्छब्दविषयत्वनित्यविषयत्वे स्तः, तेषु तेषु एतच्छब्दनित्यविषयत्वं धर्मः। तद्रहितं ज्ञानमेतच्छब्दाविषयं वा, नित्याविषयं वा। आद्यं पक्षीकृतशब्दविषयं न सिध्यति। व्याघातात्। द्वितीयं च**

---

**भुवन.**—अथ प्रकारान्तरेण महाविद्यान्तरमाह—**अयं शब्दः एतच्छब्दनित्यविषयत्वरहितज्ञानविषय इति।** एतच्छब्दश्च नित्यश्च एतच्छब्दनित्यौ। तौ विषयौ गोचरौ यस्य ज्ञानस्य तदेतच्छब्दनित्यविषयम्। तस्य भावः तत्त्वम्। तेन रहितं यत् ज्ञानं तस्य विषयः शब्द इत्यर्थः। **येषु येषु ज्ञानेष्वित्यादि।** येषु येषु शब्दाकाशादिज्ञानेषु। विशेषणाभावाद्वा विशेष्याभावाद्वा विशिष्टाभाव इति न्यायेन एतच्छब्दनित्यविषयत्वरहितज्ञानं हि एतच्छब्दाविषयं वा नित्याविषयं वा। तत्राद्यस्य एतच्छब्दविषयत्वे व्याघातमाह—**आद्यं पक्षीकृतशब्देति।** यदेवैतच्छब्दाविषयं तदैवेतच्छब्द-विषयमिति व्याघात इत्यर्थः। **द्वितीयमिति।** नित्याविषयम्। तच्च शब्दविषयं सिध्यच्छब्दस्यानित्यत्वं साधयेदिति भावः। अनित्यत्वसाधने हेतुमाह—**पक्षीकृतशब्दनित्यत्वे यस्य कस्यचिदपीत्यादि।** यद्यतच्छब्दो नित्योऽङ्गी-

---

दूसरी प्रकार से महाविद्यानुमान का प्रयोग कर रहे है। पक्ष एवं हेतु पूर्ववत् है। साध्य में भिन्नता है। पूर्वानुमानों में किसी धर्मविशेष के अधि-करणत्वेन शब्द में अनित्यसिद्ध किया गया था, यहाँ पर ज्ञानविशेष के विषयत्वेन शब्द को अनित्य सिद्ध किया जा रहा है। **'एतच्छब्दनित्य-विषयत्वरहितज्ञानविषयः'** एतच्छब्द (यह शब्द) एवं नित्यपदार्थ विषय हैं, जिसके वह ज्ञान, एतच्छब्दनित्यविषयकज्ञान हुआ। उससे भिन्न ज्ञान का विषय शब्द है।

जिन ज्ञानों में एतच्छब्दविषयत्व (इस शब्द की विषयता) नित्य-विषयत्व (नित्यपदार्थ की विषयता) है। उन ज्ञानों में एतच्छब्द-नित्यविषयत्व धर्म है। उससे भिन्न ज्ञान या तो एतच्छब्दाविषयक (यह शब्द नहीं विषय जिसका) होगा, या तो नित्याविषयक (नित्यपदार्थ नहीं विषय जिसका) होगा। प्रथमपक्ष में व्याघात है। जिस ज्ञान का यह शब्द विषय ही नहीं है। उसी ज्ञान का विषय शब्द को बनाना व्याघात दोष है। अतः द्वितीयपक्ष मान्य होगा। नित्याविषयक ज्ञान का विषय शब्द तभी होगा, जब नित्य न माना जाय। इस प्रकार नित्याविषयक ज्ञान का विषय शब्द अनित्य है। पक्षीकृत शब्द को यदि नित्य माना जायेगा, तो जो भी एतच्छब्दविषयक

**पक्षशब्दविषयं सिध्यदनित्यत्वमन्तर्भाव्य सिध्यति। पक्षीकृतशब्दनित्यत्वे यस्य कस्यचिदपि तद्विषयज्ञानस्य एतच्छब्दविषयत्वे सति नित्यविषयत्वेन तद्रहितत्वानुपपत्तेः।।२७।।**

**अयं शब्दः एतन्निष्ठानित्यत्वात्यन्ताभावाप्रतियोगिकत्वानधिकरणात्यन्ताभाववान् मेयत्वादिति। ये पक्षीकृतशब्दधर्मा अनित्यत्वात्यन्ताभावप्रतियोगिकत्वरहिताः, तेषु एतन्निष्ठानित्यत्वात्यन्ताभावाप्रतियोगिकत्वं धर्मः, तदनधिकरणं तद्रहितः, एतन्निष्ठानित्यत्वात्यन्ताभावा-**

---

क्रीयेत, तदा यत्किञ्चिदेतच्छब्दविषयज्ञानस्य नित्यविषयत्वमेव स्यात्, न तु तदविषयत्वमित्यर्थः। **तद्रहितत्वानुपपत्तेरिति।** नित्यविषयत्वरहितत्वानुपपत्तेरित्यर्थः। अत्र सर्वत्र सपक्षे एतच्छब्दाविषयज्ञानविषयत्वं धर्मो मन्तव्यः।।२७।।

**भुवन.—अयं शब्दः एतन्निष्ठानित्यत्वात्यन्ताभावाप्रतियोगिकत्वानधिकरणात्यन्ताभाववानिति।** अनित्यत्वात्यन्ताभावो नित्यत्वमप्रतियोगी यस्य अत्यन्ताभावस्य असौ अनित्यत्वात्यन्ताभावाप्रतियोगिकः। एतस्मिन् पक्षितशब्दे निष्ठा यस्य स तथा। एतन्निष्ठश्चासौ अनित्यत्वात्यन्ताभावाप्रतियोगिकश्च एतन्निष्ठात्यन्ताभावाप्रतियोगिकः। तस्य भावः तत्त्वम्। तस्य

---

ज्ञान होगा वह नित्यविषयक ही होगा उससे भिन्न नहीं होगा। सभी सपक्षों में एतच्छब्दाविषयज्ञानविषयत्व मानना होगा। एतच्छब्दविषयकज्ञान (यह शब्द है विषय जिसका) से भिन्न जितने भी ज्ञान है, वे सब एतच्छब्दाविषयक है। उन ज्ञानों के विषय नित्यानित्य सभी पदार्थ है।।२७।।

पूर्वानुमान में ज्ञानविषयत्वेन शब्द में अनित्यत्व साधन किया अब अत्यन्ताभावाधिकरणत्वेन शब्द में अनित्यत्व की सिद्धि कर रहे हैं। **'एतन्निष्ठानित्यत्वात्यन्ताभावाप्रतियोगिकत्वानधिकरणात्यन्ताभाववान्'** इस शब्द में रहने वाला अनित्यत्वात्यन्ताभाव (नित्यत्व) है, अप्रतियोगी जिस अत्यन्ताभाव का उसकी प्रतियोगिता का अनधिकरण जो अत्यन्ताभाव उसका आश्रय शब्द है। अर्थात् अनित्यत्वान्यन्ताभाव (नित्यत्व) प्रतियोगिकात्यन्ताभाववाला शब्द है। अनित्यत्वात्यन्ताभाव है, अप्रतियोगी जिस अभाव का वह अभाव अनित्यत्वात्यन्ताभावाप्रतियोगिक है। उसमें अप्रतियोगिकत्व धर्म है। उसका अधिकरण अनित्यत्वात्यन्ताभावाप्रतियोगिकाभाव है। अनधिकरण तद्भिन्नप्रतियोगिकाभाव होगा।

**प्रतियोगिकत्वानधिकरणश्चासौ अत्यन्ताभावश्च तदधिकरणमित्यर्थः। एतन्निष्ठानित्यत्वात्यन्ताभावाप्रतियोगिकत्वानधिकरणवानित्युक्ते अनित्यत्वात्यन्ताभावप्रतियोगिकेन अनित्यत्वात्यन्ताभावान्योन्याभावेन पक्षीकृतशब्दनित्यत्वेऽप्युपपद्यमानेनार्थान्तरता स्यात्। तन्निवृत्यर्थमत्यन्ताभावग्रहणम्।**

---

अनधिकरणं योऽत्यन्ताभावः तद्वान् शब्द इति समासः। अनित्यत्वात्यन्ताभावाप्रतियोगिकपदेन नित्यत्वात्यन्ताभावं विना सर्वेऽपि घटत्वपटत्वशब्दत्वादिप्रतियोगिका अत्यन्ताभावा उपात्ताः। एतन्निष्ठविशेषणसहितेन च तेन पदेन शब्दत्वादिशब्दधर्मात्यन्ताभावाः पूर्वविशेषणायाताः पृथक्कृतत्वान्नित्यत्वात्यन्ताभावश्च निषिद्धाः। तत्त्वानधिकरणात्यन्ताभावपदेन च घटत्वपटत्वाद्यत्यन्ताभावा एतन्निष्ठेतिविशेषणायाताः सर्वेऽपि निषिद्धाः। शब्दधर्मात्यन्ताभावनित्यत्वात्यन्ताभावौ च पुनरप्युपात्तौ।

तत्र पक्षीकृतशब्दे एतच्छब्दधर्मात्यन्ताभावसाधने व्याघात इति नित्यत्वात्यन्ताभावः पक्षीकृतशब्दे साध्यते इति शब्दानित्यत्वसिद्धिः। अनुमानार्थं व्याचष्टे—**ये पक्षीकृतशब्दधर्मा इत्यादि**। पक्षीकृतशब्दधर्मा इह घटत्वाकाशत्वाद्यभावाः। तेषां सर्वेषामपि पक्षीकृतशब्दनिष्ठत्वात्। एतावता अनुमानस्थमेतन्निष्ठेतिपदं व्याख्यातम्। **अनित्यत्वात्यन्ताभावेति।** अनित्यत्वात्यन्ताभावो नित्यत्वं प्रतियोगी यस्य स तथा। तद्भावः तत्त्वम्। तेन रहिताः। पक्षीकृतशब्दधर्माः सन्तो येऽनित्यत्वात्यन्ताभावप्रतियोगिकत्वरहिता इत्यर्थः। एतावता अनित्यत्वात्यन्ताभावाप्रतियोगिकेति पदमनुमानस्थं

---

यहाँ पर साध्य के विशेषण तीन है। **'अनित्यत्वात्यन्ताभावाप्रतियोगिकत्व, एतन्निष्ठत्व, अप्रतियोगिकत्वानधिकरणत्व'** साध्य अत्यन्ताभाव है। प्रथमविशेषण से विशेषित करने पर नित्यत्वात्यन्ताभाव को छोड़ कर सभी घटत्वप्रतियोगिक अत्यन्ताभाव पटत्वप्रतियोगिक अत्यन्ताभाव एवं शब्दत्वप्रतियोगिक अत्यन्ताभाव लिए जा सकते हैं। परन्तु एतन्निष्ठत्व अत्यन्ताभाव का विशेषण होने से शब्दत्वधर्म प्रतियोगिक अभाव नहीं लिया जा सकता। इस लिए कि शब्द में शब्दत्व का अभाव नहीं रहता। शेष घटत्वप्रतियोगिक पटत्वप्रतियोगिक अभाव इसलिए नहीं लिए जा सकते, वे सब अनित्यत्वात्यन्ताभाव के अप्रतियोगिकत्व के अधिकरण ही है। अनधिकरण तो नित्यत्वात्यन्ताभाव ही है। पुनश्च शब्द में तो नित्यत्वानित्यत्व संदिग्ध है, अतः शब्दत्वप्रतियोगिक अत्यन्ताभाव भी नित्यत्वान्ताभाव के समान अनित्यत्वात्यन्ताभाव के अप्रतियोगिकत्व का अधिकरण ही है। इस प्रकार

**एतन्निष्ठानित्यत्वात्यन्ताभावाप्रतियोगिकत्वानधिकरणमत्यन्ताभावः एतन्निष्ठत्वरहितो वा स्यात्, अनित्यत्वात्यन्ताभावप्रतियोगिकोऽत्यन्ताभावो वा। आद्यः पक्षे व्याहतः। द्वितीयस्त्वनित्यत्वमेव। अनित्यत्वात्यन्ता-**

---

व्याकृतम्। शेषं सुगमम्। अथ अत्यन्ताभावं विमुच्य व्यावृत्तिं करोति— **एतन्निष्ठानित्यत्वात्यन्ताभावेत्यादि। अनित्यत्वात्यन्ताभावप्रतियोगिकेनेति।** अनित्यत्वात्यन्ताभावो नित्यत्वं प्रतियोगी यस्य तेन। अनित्यत्वात्यन्ताभावो नित्यत्वं, तस्य अन्योन्याभावेन शब्दो नित्यत्वं न भवतीतिरूपेण शब्दनिष्ठेन सिषाधयिषितानित्यत्वविपर्ययेऽप्युपपद्यमानेन अर्थान्तरता स्यात्, तत्परिहारार्थमत्यन्ताभावग्रहणम्। अभिमतसाध्यसिद्धिं निरूपयितुमाह— **एतन्निष्ठानित्यत्वेत्यादि।** एवंविधश्चात्यन्ताभावो द्वेधा स्यात्, एतन्निष्ठत्वरहितोऽत्यन्ताभावो वा नित्यत्वात्यन्ताभावो वेति। तत्राद्यस्य पक्षे व्याघातमाह—**आद्यः पक्षे व्याहत इति।** आद्यः एतन्निष्ठत्वरहितोऽत्यन्ताभावः, पक्षे शब्दे, व्याघातेन बाधितः। अयमाशयः—पक्षीकृतशब्दधर्मा ये शब्दत्वश्रावणत्वादयः तेषामत्यन्ताभावः शब्दनिष्ठो नास्ति। यतः शब्दत्वादय एव शब्दधर्माः शब्दनिष्ठाः, न तु तदत्यन्ताभावः। तस्य शब्दादन्यत्रैव वर्तनात्। ततस्तस्मिन् शब्दे साध्यमाने स्फुट एव व्याघातः। तस्मादेतन्निष्ठत्वरहितात्यन्ताभावः सर्वत्र सपक्षे ज्ञेयः। द्वितीयस्य शब्दे सिद्धिमाह— **द्वितीय इत्यादि।** द्वितीयोऽनित्यत्वात्यन्ताभावात्यन्ताभावः। एतावता नित्यत्व-

---

शब्दत्वादिशब्दधर्मप्रतियोगिक अत्यन्ताभाव या नित्यत्वात्यन्ताभाव शब्द में सिद्ध हो सकता है। अब यदि शब्दत्व धर्म प्रतियोगिक अत्यन्ताभाव शब्द में सिद्ध करते हैं। तो व्याधात होगा। अतः नित्यत्वात्यन्ताभाव शब्द में सिद्ध हुआ।

यदि **'एतन्निष्ठानित्यत्वात्यन्ताभावाप्रतियोगिकत्वानधिकरणत्व'** साध्य वनायेगें तो अनित्यत्वात्यन्ताभाव (नित्यत्व) है, प्रतियोगी जिस अभाव का वह नित्यत्वान्योन्याभाव (नित्यत्वं न) यह भेद भी लिया जा सकता है। अतः अर्थान्तरतादोष होगा। अर्थान्तरतादोष इसलिए है, कि शब्द में अनित्यत्व सिद्ध करने की इच्छा थी, सिद्ध हो गया नित्यत्वभेद। धर्म और धर्मी में भेद माना जाता है। नित्यत्व का भेद नित्य में भी रहता है। अतः शब्द नित्य रहने पर भी शब्द में नित्यत्व का भेद रह सकता है। इसलिए अत्यन्ताभाव कहा (पक्षीकृतशब्दनिष्ठानित्यत्वात्यन्ताभाव का प्रतियोगी अनित्यत्व अप्रतियोगी नित्यत्व उसका अनधिकरण नित्यत्वं न भेद भी है)।

**भावात्यन्ताभावस्य अनित्यत्वानतिरेकात् तत्तुल्ययोगक्षेमत्वाद्वा इत्यनित्यत्वसिद्धिः।।२८।।**

**२९ अयं शब्दः अनाद्येतदभावत्वरहिताभावप्रतियोगी मेयत्वादिति।। अनाद्येतदभावेषु अनाद्येतदभावत्वं धर्मः। तद्रहितश्चाभावः एतदभावत्व-**

---

स्यात्यन्ताभावः शब्दे साध्यते। स च अनित्यत्वमेवेतिभावः। अत्र हेतुमाह—**अनित्यत्वात्यन्ताभावेत्यादि।** अनित्यत्वात्यन्ताभावो नित्यत्वम्। तस्यात्यन्ताभावस्य अनित्यत्वानतिरेकादनित्यत्वरूपत्वादित्यर्थः। हेत्वन्तरमाह—**तत्तुल्ययोगक्षेमत्वाद्वेति।** तेन तुल्यौ यौ योगक्षेमौ, तद्भावः तत्त्वं, तस्मात्। अत्रायं भावः। यथा अनित्यत्वस्यात्यन्तिकनिषेधो नित्यत्वं, तथा तदात्यन्तिकनिषेधः पुनरनित्यत्वमेव। **'परस्परविरोधे हि न प्रकारान्तरस्थितिः' इतिन्यायादित्यर्थः**।।२८।।

**भुवन.**—अथाभिनवप्रकारान्तरेण पुनर्महाविद्यान्तरमाह—**अयं शब्दः अनाद्येतदभावत्वेत्यादि।** एतस्य पक्षशब्दस्य अभावाः एतदभावाः। अनादयश्च ते एतदभावाश्च अनाद्येतदभावाः, प्रागभावान्योन्याभावात्यन्ताभावरूपाः। 'अनादिः सान्तः प्रागभावः', 'तादात्म्यनिषेधोऽन्योन्याभावः', 'अनादिरनन्तः संसर्गाभावोऽत्यन्ताभावः' इति तेषां लक्षणात्। तेषां भावः तत्त्वम्। तेन रहितो

---

एतादृश अत्यन्ताभाव शब्दनिष्ठत्व रहित लिया जाय? कि अनित्यत्वात्यन्ताभावप्रतियोगिक अत्यन्ताभाव लिया जाय। प्रथमपक्ष में व्याघातदोष है। जो धर्म शब्द में नहीं रहता उसे शब्द में सिद्ध करना व्याघात है। अतः अनित्यत्वात्यान्ताभाव (नित्यत्व) प्रतियोगिक अत्यन्ताभाव शब्द में सिद्ध होगा। अनित्यत्व के अत्यन्ताभाव का अत्यन्ताभाव, अनित्यत्व है। द्वितीयाभाव प्रतियोगी स्वरूप ही होता है।।२८।।

नूतन प्रकार से महाविद्यानुमान का प्रयोग कर रहे हैं। पक्ष एवं हेतु पूर्ववत् है। **'अनाद्येतदभावत्वरहिताभावप्रतियोगित्व'** साध्य है। शब्द प्रतियोगिक अनादि जो अभाव उससे भिन्न जो अभाव उसका प्रतियोगी शब्द है। अनादि अभाव प्रागभाव अन्योन्याभाव तथा अत्यन्ताभाव है। इनसे भिन्न अभाव प्रध्वंसाभाव है। उसका प्रतियोगी शब्द अनित्य होगा। आदि (उत्पत्तिमत्) अनादि (उत्पत्तिरहित)। अभाव दो प्रकार का है, संसर्गाभाव अन्योन्याभाव। पुनश्च संसर्गाभाव तीन प्रकार है, प्रागभाव, प्रध्वंसाभाव, तथा अत्यन्ताभाव, इनमें से प्रागभाव की उत्पत्ति नहीं होती। कार्योत्पत्ति के बाद नाश होता है।

**रहितो वा, आदिमानेतदभावो वा। आद्यं प्रत्येतस्मिन्प्रतियोगित्वं न सिध्यति। व्याघातात्। द्वितीयस्तु प्रध्वंस एवेत्यनित्यत्वसिद्धिः।।२९।।**

---

योऽभावः पक्षमध्ये सादिरभावः, स च प्रध्वंसाभाव एव। 'सादिरनन्तः प्रध्वंसाभावः' इति तल्लक्षणात्। तस्य प्रतियोगी शब्द इत्यर्थः। अयं शब्दः प्रतियोगीत्युक्ते श्रोत्रे शब्दसमवाय इति समवायप्रतियोगित्वेन शब्दे सिद्धसाध्यता स्यात्। अनाश्रयत्वे सति व्यावर्तकस्य प्रतियोगित्वात्। अत उक्तमभावप्रतियोगीति। एवं चान्योन्याभावप्रतियोगित्वेन सिद्धसाधनं स्यात्, अत उक्तमनादित्वरहितेति। अनादित्वरहिताभावप्रतियोगीत्युक्ते च व्याप्तिभङ्गः, नित्येषु तदभावात्। अत उक्तमनाद्येतदभाववरहितेति। इतिव्यावृत्तिचिन्ता। **एतदभावत्त्वरहितो वेति।** एतस्य पक्षशब्दस्य योऽभावः, तत्त्वरहितोऽभावो घटत्वाकाशत्वाद्यभावः। सोऽप्यनाद्येतदभावत्वरहितः। परमेतस्य शब्दः प्रतियोगी न स्यात्, तस्माव्द्याघातः। **आदिमानेतदभावो वेति।** आदिर्विद्यते यस्य स आदिमान्। प्रध्वंसाभाव इत्यर्थः। तस्य च प्रतियोगित्वं शब्दस्य

---

प्रागभाव का लक्षण है **'अनादिः सान्तः प्रागभावः'** जो उत्पन्न नहीं होता हुआ नष्ट होता वह प्रागभाव कहलाता है। अत्यन्ताभाव, नित्य होता है। **'अनादिरनन्तः ससर्गाभावोऽत्यन्ताभावः'** जो उत्पन्न नहीं होता तथा नष्ट नहीं होता ऐसा जो संसर्गाभाव उसे अत्यन्ताभाव कहते हैं। अन्योन्याभाव भी नित्य होता है। **'तादात्म्यनिषेधोऽन्योन्याभावः'** तादात्म्य का निषेध अन्योन्याभाव है। अतः प्रागभाव अत्यन्ताभाव, तथा अन्योन्याभाव अनादि उत्पत्तिरहित हैं। इसने भिन्न अभाव प्रध्वंसाभाव है, जो सादि उत्पन्न होने वाला है। **'सादिरनन्तः प्रध्वंसाभावः'** जो उत्पन्न तो होता है, परन्तु नष्ट नहीं होता उसे प्रध्वंसाभाव कहते हैं। उसका प्रतियोगी शब्द अनित्य ही होगा।

यदि 'अयं शब्दः प्रतियोगी' अनुमान का आकार रखे तो **'श्रोत्रे शब्दसमवायः'** श्रोत्र में शब्द का समवाय है। इस स्थल में शब्द में सिद्धसाधनतादोष होगा। क्योंकि जो आश्रय न रहते हुए व्यावर्तक होता है, उसे प्रतियोगी कहते हैं। यहाँ पर समवाय का आश्रय श्रोत्र है। शब्द आश्रय न होते हुए व्यावर्तक है। अतः साध्यघटकतया अभावप्रतियोगी कहा। अन्योन्याभावप्रतियोगित्वेन सिद्धसाधनता हो सकती थी। अतः अनादित्व रहित कहा। अनादित्वरहिताभावप्रतियोगी साध्य कहे तो नित्यों में न होने के कारण व्याप्तिभङ्ग हो जायेगी। अतः एतत् पद को विशेषण बनाया।

**३० अयं शब्दः ध्वंसत्वरहितैतदभावत्वरहिताभावप्रतियोगी मेयत्वा-**

---

अनित्यत्वे एव स्यात्, नान्यथेति शब्दानित्यत्वसिद्धिरिति। अत्र शब्दान्यवत्सु अभावप्रतियोगित्वं शब्देतरसमस्तवस्तूनामप्यस्तीति तेषां सपक्षता।।२९।।

**भुवन.—अयं शब्दः ध्वंसत्वरहितैतदभावेत्यादि।** ध्वंसो विनाशः। तत्त्वरहिता ये एतस्य शब्दस्याभावाः पूर्वोक्ता एव। तेषां भावस्तत्त्वं, तेन रहितो योऽभावः साध्यधर्मपक्षे प्रध्वंसाभाव एव, तस्य प्रतियोगी शब्द इत्यर्थः। अभावप्रतियोगीत्युक्ते शब्दस्यान्योन्याभावादिप्रतियोगित्वं सिद्धमेव इत्यत उक्त**मेतदभावत्वरहितेति।** तथा च व्याघातः स्यात्। ततस्तत्परिहाराय ध्वंसत्वरहितेति। ध्वंसत्वरहितैतदभावेषु ध्वंसत्वरहितैदभावत्वं धर्मः।

---

अनाद्येतदभावत्वरहिताभाव या तो एतदभावत्वरहित अभाव घटत्वाभाव आकाशत्वाभाव आदि होंगे, या तो आदिमान् (उत्पत्तिवाला) अभाव होगा। प्रथम पक्ष में व्याघात दोष है। क्योंकि घटत्वाभाव का प्रतियोगी घटत्व होगा शब्द नहीं होगा। अत: आदिमान् उत्पत्ति वाला अभाव लिया जायेगा। वह अभाव प्रध्वंसाभाव है। उसका प्रतियोगी शब्द अनित्य होगा। शब्द से इतर नित्यानित्यसपक्षों में अनाद्येतदभावत्वरहित अभाव आकाशत्वाभाव, तथा घटत्वाभाव की प्रतियोगिता है ही। अत: साध्य वैकल्यदोष भी नहीं है। इससे पूर्व महाविद्यानुमानो द्वारा शब्द में अनित्यत्व परम्परया सिद्ध किया। यहाँ पर प्रध्वंसाभाव का प्रतियोगी शब्द को सिद्ध कर साक्षात् अनित्यत्व ख्यापित किया है।।२९।।

तीसवां महाविद्यानुमान उन्तीसवें के समान ही है। **'अयं शब्दः ध्वंसत्वरहितैतदभावत्वरहिताभावप्रतियोगी मेयत्वात्'** ध्वंसत्व से रहित जो शब्दप्रतियोगिक्त प्रागभाव, अत्यन्ताभाव, अन्योन्याभाव, इन तीनों से भिन्न जो अभाव (प्रध्वंसाभाव) उसका प्रतियोगी शब्द है। ध्वंस विनाश को कहते है। ध्वंस में ध्वंसत्व धर्म रहता है। ध्वंसत्व नहीं जिन अभावों में वे अभाव, ध्वंसत्वरहितैतदभाव हुए उनमें ध्वंसत्वरहितैतदभावत्व धर्म है। उक्त धर्म से रहित शब्द प्रतियोगिक अभाव प्रध्वंसाभाव, उसका प्रतियोगी शब्द अनित्य है। उन्तीसवाँ और तीसवाँ महाविद्यानुमान अनित्यत्व के ही साधक हैं। यही अन्यमहाविद्यानुमानों से इनकी विलक्षणता है। अन्य महाविद्यानुमान पक्ष सपक्ष तथा विपक्ष को पक्ष बनाकर प्रवृत्त हैं। अत: वे सम्पूर्ण अन्वय या व्यतिरेकि साधनों के साध्य के साधक हैं।

**दिति।। इयं पूर्वा च महाविद्या यत्र यत्रानित्यत्वं साध्यते तत्रैव संचरति। शेषास्तु सकलान्वयव्यतिरेकिसाध्यसंचारिण्य इति।।३०।।**

**ननु महाविद्याप्रकरणे किमिदं पक्षनिष्ठत्वं, किं वा सपक्षनिष्ठत्वं, किं वा विपक्षनिष्ठत्वं, किं वा उभयनिष्ठत्वमिति। उच्यते। अयं**

---

तद्रहितश्चाभाव एतदभावत्वरहितो वा ध्वंसो वा। आद्यं प्रति शब्दस्य प्रतियोगित्वं व्याहतमिति एतदभावत्वरहिताभावप्रतियोगित्वं सर्वसपक्षोपयोगि, द्वितीयं प्रति शब्दस्य प्रतियोगित्वं सिध्यच्छब्दस्यानित्यत्वं साधयेदित्यर्थः। एतन्महाविद्याद्वयमनित्यत्वसाधकमेव न साध्यान्तरसाधकमिति महाविद्यान्तरेभ्योऽस्य वैलक्षण्यं प्रतिपादयति—**इयमिति**। इयमनन्तरोद्दिष्टैव महाविद्या, पूर्वा चायं शब्दोऽनाद्येतद्भावेत्यादिका। **शेषास्त्विति**। शेषाः पक्षसपक्षादिकं पक्षीकृत्य प्रवृत्ता महाविद्याः। सकलानि अन्वयव्यतिरेकिणां यानि साध्यानि तत्संचारिण्यः। एतत्प्रकारश्च पुरापि आपातनिकायां किञ्चित्प्रपञ्चित इति न प्रपञ्चयते।

**भुवन.**—अथ प्रेमयत्वादीनां हेतूनां पक्षेण सह संयोगसमवायादिसम्बन्धाभावात्पक्षधर्मत्वाद्यसिद्धिरिति नोदयति—**नन्वित्यादि। उभयनिष्ठत्वमिति।** पक्षसपक्षनिष्ठत्वमित्यर्थः। बुद्धिविशेषविषयत्वोपाधिको धर्मः पक्षनिष्ठत्वादिरित्याह—**उच्यत इत्यादिना।** अयं धर्मविशेषः किं भावः उत अभावः

---

महाविद्या का निरूपण करने के बाद मेयत्वादिपक्षवृत्तिधर्मों के वृत्तिता (रहनापन) का विचार कर रहे हैं। महाविद्या में प्रयुक्त हेतु व साध्य क्या पक्ष में रहते है? या सपक्ष में रहते है? या विपक्ष में रहते है? या पक्ष सपक्षोभय में रहते है? उत्तर में कहते है, कि यह पक्षवृत्तिधर्म पक्ष सपक्ष विपक्ष आदि में भी वृत्तिता के अबाधितज्ञान का साक्षी होकर रहता है। अतः उक्त धर्म पक्षाश्रिततत्व सपक्षाश्रिततत्व, विपक्षाश्रिततत्व, उभयाश्रिततत्वरूप, है। पुनः पक्षवृत्तिधर्म के स्वरूप के विषय में प्रश्न है। क्या पक्ष वृत्ति भावरूप है? या अभाव-रूप है? पक्षवृत्तिधर्म भावरूप नहीं हो सकता क्योंकि यह अभावपदार्थों में भी विद्यमान है। अभाव रूप भी नहीं कह सकते क्योंकि इसका निरूपक कोई प्रतियोगी नहीं है। अभावसम्बन्धी प्रतियोगी का निरूपण नहीं किया गया।

दोनों विकल्पों में से अभावपक्ष को स्वीकार किया है। पक्षवृत्तिधर्म अभावरूप है। उसका प्रतिपादन करते हुए कह रहे हैं कि द्रव्यादि छः

**पक्षनिष्ठः, अयं सपक्षनिष्ठः, अयं विपक्षनिष्ठ इत्याद्यबाधितबुद्धिसाक्षिकः पक्षाश्रितत्वसपक्षाश्रितत्वविपक्षाश्रितत्वोभयाश्रितत्वरूपो धर्मविशेषः। ननु नायं भावः, अभावेऽपि वर्तमानत्वात्। नाप्यभावः, प्रतियोगिविशेषा-निरूपणात् इति चेत्। न। द्रव्यादिषड्लक्षणानां ये षडत्यन्ताभावा-**

---

इति विकल्प नोदकः प्रथमं प्रत्याह—**ननु नायमिति।** अयं पक्षनिष्ठत्वादिको धर्मो न भावः। नित्यमाकाशं कृतकत्वाभावादित्यादौ पक्षनिष्ठत्वादेर्धर्मस्य कृतकत्वाभावहेतौ अभावरूपेऽपि वर्तमानत्वात्। न द्वितीयोऽपीत्याह—**नाप्यभावः, प्रतियोगिविशेषानिरूपणादित्यादि।** अयं पक्षनिष्ठत्वादिधर्मो नाप्यभावः नाप्यभावरूपः। अयं घटादेराकाशादेर्वाऽभाव इत्येवं प्रतियोगि-विशेषस्य अभावसंबन्धिनोऽनिरूपणादित्यर्थः। द्वितीयं विकल्पमङ्गीकृत्य नोदकोक्तं परिहरति—**न द्रव्यादिषड्लक्षणानामित्यादि।** द्रव्यादयो ये षटपदार्था द्रव्यगुणकर्मसामान्यविशेषसमवायाख्या **वैशेषिक**मतप्रसिद्धाः तेषां यानि षड्लक्षणानि १ 'गुणाश्रयो द्रव्यम्', २ 'कर्मातिरिक्तो जातिमात्राश्रयो गुणः', ३ 'संयोगविभागाजन्यसंयोगविभागासमवायिकारणजातीयं कर्म', ४ 'नित्यत्वे सत्येकत्वे सत्यनेकसमवेता जातिः सामान्यापरपर्याया', ५ 'नित्येष्वेव द्रव्येष्वेव वर्तत एव ये ते अन्त्या विशेषाः' ६ 'अयुतसिद्धा-नामाधार्याधारभूतानामिहप्रत्ययहेतुर्यः सम्बन्धः स समवायः', इत्येवं रूपाणि। तेषां ये षडत्यन्ताभावास्तद्वत्त्वस्य तदधिकरणत्वस्य अभावत्वस्य प्रत्यक्षादि-प्रमाणसिद्धत्वादभावोऽयं पक्षनिष्ठत्वादिरूपो धर्म इत्यर्थः। तथा हि, एवंविधो

---

भावपदार्थ द्रव्य, गुण कर्म, सामान्य, विशेष, समवाय, के लक्षणों का पक्षवृत्तिधर्म में अभाव है। जैसे **'गुणाश्रयो द्रव्यम्'** (गुण का आधार द्रव्य है)। **'कर्मातिरिक्तो जातिमात्राश्रयो गुणः'** (कर्मातिरिक्त जातिमात्र का आधार गुण है)। **'संयोगविभागाजन्यसंयोगविभागासमवायिकारणजातीयं कर्म'** (संयोग व विभाग से अजन्य तथा संयोग व विभाग के असमवायिकारण जाति वाला कर्म है)। **'नित्यत्वे सत्येकत्वे सत्यनेकसमवेता जातिः'** (नित्य होते हुए जो एक हो तथा अनेक में समवाय सम्बन्ध से रहती हो वह जाति है)। **'नित्येष्वेव द्रव्येष्वेव वर्तत एव ये ते अन्त्या विशेषाः'** (नित्यों में ही द्रव्यों में ही वर्तमान ही रहे जो वह विशेष कहलाते हैं)। **'अयुतसिद्धानामाधार्याधार-भूतानामिह प्रत्यय हेतुर्यः सम्बन्धः स समवायः'** (अयुतसिद्ध आधेय तथा आधार के ज्ञान का हेतुभूत सम्बन्ध समवाय कहलाता है)।

**स्तद्वत्त्वस्यात्राभावत्वस्य प्रत्यक्षादिप्रमाणसिद्धत्वादिति। कः पुनरस्य प्रतियोगीति चेत्। न कश्चित। सविस्तरं चैतदन्यत्रोपपादयिष्यामः इति।**

**अथ सपक्षं पक्षीकृत्य प्रवर्तमानमहाविद्याभेदाः यथा–शब्दोऽनित्यः इत्यत्र सपक्षो घटः इति स्थिते,**

---

धर्मो द्रव्यं न भवति, तल्लक्षणाभावात्। तथा गुणोऽपि न भवति। तल्लक्षणाभावात्। एवं कर्मसामान्यादिरूपोऽपि न भवति। तत्तल्लक्षणाभावादेव। तस्मादयं पक्षनिष्ठत्वादिधर्मोऽभावरूप एव सप्तमः पदार्थः केषांचिद्वैशेषिकाणां मते प्रसिद्धः। एवं च प्रमेयत्वास्तित्वादयोऽपि धर्माः अभावरूपाः एव ज्ञेयाः इत्यर्थः। प्रतियोग्यनिरूप्यस्य अभावत्वानुपपत्तेः प्रतियोगी वाच्य इति शङ्कते। **कः पुनरस्य प्रतियोगीति।** अस्य पक्षनिष्ठत्वादिधर्मस्याभावरूपस्येत्यर्थः। अभावस्य प्रतियोगिनिरूप्यत्वनियमो नेति परिहरति—**न कश्चिदिति।** प्रतियोगिज्ञानकार्यत्वादभावज्ञानस्य कथमनियमस्तत्राह—**सविस्तरं चैतदन्यत्रेति।** अत्यन्ताभावो निष्प्रतियोगिक इत्यन्यत्र वार्तिके वक्ष्याम इति तत एवैतज्ज्ञेयमित्यर्थः। इति पक्षं पक्षीकृत्य प्रवृत्तास्त्रिंशन्महाविद्याः प्रादर्श्यन्त॥३०॥

भुवन.—अथ सपक्षं पक्षीकृत्य महाविद्याभेदान् दिदर्शयिषुराह—**अथ सपक्षमित्यादि।** अथ सपक्षं पक्षीकृत्य प्रवर्तमानमहाविद्याभेदा यथा सन्ति तथोदाहरिष्यन्त इति शेषः। **शब्दोऽनित्य इत्यत्रेति।** शब्दोऽनित्यः कृतकत्वात् घटवदित्यत्र मूलानुमाने घटः सपक्षः इति स्थिते, घटं सपक्षं पक्षीकृत्य प्रयुज्यते इत्यर्थः। तत्र—

---

उक्त छयों भावपदार्थो का अत्यन्ताभावत्व पक्षवृत्तिधर्म में है, अतः अभावरूप होगा। यह प्रत्यक्षादिप्रमाणसिद्ध है। पुनः प्रश्न होता है, कि अभाव का प्रतियोगी कौन है? उत्तर में कहा कोई नहीं है अभावप्रतियोगिनिरूप्य ही हो ऐसा नियम नहीं है। इसका विस्तार पूर्वक उपपादन अन्यत्र **'सपक्षपक्षकमहाविद्यानुमान'** में किया जायेगा॥३०॥

**सपक्षपक्षक महाविद्या**

महाविद्यानुमान केवलान्वयी होने से पक्षसपक्ष तथा विपक्ष में सामान्येन प्रवृत्त है। अतः पक्ष में साध्य सिद्धि के पश्चात् सपक्ष में साध्य सिद्धि तथा पक्ष से सपक्ष का भेद सिद्ध कर रहे हैं।

**१अयं घटः एतद्घटपक्षीकृतशब्दान्यान्यानित्यान्यः मेयत्वादिति। अत्र च वक्ष्यमाणासु महाविद्यासु चाकाशो दृष्टान्तः। एतद्घटपक्षीकृतशब्दयोर्ये अन्यत्वे तदुभयवत्त्वरहितः एतद्घटपक्षीकृतशब्दान्यान्यः। स चासौ अनित्यश्च। तदन्यत्वाधिकरणमित्यर्थः। एतद्घटपक्षीकृतशब्दान्यान्यानित्यान्यत्वं चैतद्घटान्यत्वेन वा स्यात्, पक्षीकृतशब्दान्यत्वेन वा। आद्ये**

---

**पक्षापक्षविपक्षान्यवर्गादिकैमुद्धृतम्।**

**भिन्नं साध्यवतस्तद्वदुद्धृतावधिभेदिनः।।**

इति कारिकामाश्रित्य या प्रवर्तते तामाह—

**१भुवन.—अयं घट एतद्घटपक्षीकृतशब्दान्यान्यानित्यान्यः, मेयत्वादिति।** अत्र महाविद्यानुमानापेक्षया घटः पक्षः। यच्चानुमाने पक्षीकृतशब्द इत्युक्तं, तदनित्यः शब्द इत्यादि मुख्यानुमानापेक्षया। अथ व्याख्या। अयं घट इति विवक्षितः कश्चिद्घटः पक्षः। एतद्घटश्च पक्षीकृतशब्दश्चैतद्घटपक्षीकृतशब्दौ, ताभ्यामन्यत् एतद्घटपक्षीकृतशब्दान्यत्। तस्मादन्यश्चासौ अनित्यश्चेत्येतद्घटपक्षीकृतशब्दान्यान्यानित्यः तस्मादन्यो घट इत्यर्थः। अयं भावः। एतद्घटपक्षीकृतशब्दाभ्यां यदन्यत् विश्वं तदन्यः एतद्घटो वा पक्षीकृतः शब्दो वा। तत्रैतद्घटस्यैतद्घटादन्यत्वं व्याहतम्। तस्मादनित्यशब्दादन्य एतद्घटः सिध्यन् शब्दानित्यत्वं साधयेदित्यर्थः। घटः उक्तसाध्यः इत्युक्ते घटान्तरं घटान्तरादन्यदिति भागे सिद्धसाधनम्। अत उक्तमयं घट इति। अयं घटोऽनित्यान्य इत्युक्ते अनित्यात्पटादेरन्यत्वं सिद्धमत आह—**घटपक्षीकृत-**

---

**पक्षापक्षविपक्षान्यवर्गादिकैकमुद्धृतम्। भिन्नं साध्यवतस्तद्वदुद्धृतावधि भेदिनः।।** इस कारिका के तात्पर्य को लेकर प्रवृत्त महाविद्यानुमान का प्रतिपादन कर रहे हैं। पक्ष सपक्ष तथा विपक्ष से भिन्न जो समूह उससे भिन्न प्रत्येक (पक्ष) को साध्यवत् पक्षावधिक से भिन्न सिद्ध किया जाता है। जैसे **'अयं घटः एतद्धटपक्षीकृतशब्दान्यान्यानित्यान्यः मेयत्वात्'** अयं घटः पक्ष है, मेयत्व हेतु है। एतद्घट और पक्षीकृतशब्द से भिन्न जो वस्तु उससे भिन्न जो अनित्यपदार्थ उससे भिन्न घट है। इन महाविद्याओं का दृष्टान्त आकाश होगा। एतद्घट तथा पक्षीकृतशब्द से जो अन्य है, उनमें एतद्घट-पक्षीकृतशब्दान्यत्वधर्म है। उससे अन्य जो अनित्य पदार्थ है, उससे भिन्न एतद्घट है। अब एतद्घट तथा पक्षीकृतशब्द से भिन्न वस्तु से भिन्न अनित्य के भेद को एतद्घटान्यत्वेन (घटभेदेन) लेना है? कि पक्षीकृतशब्दान्यत्वेन

**व्याहतः। न ह्ययं घटः एतस्माद्घटादन्य इति संभवति। द्वितीये तु शब्दानित्यत्वसिद्धिः। यदि पक्षीकृतः शब्दो न अनित्यः, कथं तर्हि पक्षीकृतानित्यान्यत्वं घटे स्यादिति।।१।।**

**२ अयं घटः एतद्घटपक्षीकृतशब्दान्यान्यानित्यनिष्ठात्यन्ता-भावाधिकरणं मेयत्वादिति। अत्र चैतद्घटपक्षीकृतशब्दान्यान्यः एतद्घटो**

---

**शब्दान्यान्यानित्यान्य इति।** तथोक्ते च घटान्तरान्यत्वमुक्तरूपं सिद्धमत उक्तमेतद्घटेति। एतद्घटपक्षीकृतशब्दान्यान्य इत्युक्ते पक्षीकृतशब्दान्यत्वेन शब्दस्य नित्यत्वेऽप्युपपद्यमानेनार्थान्तरता, तदुक्तमनित्येति। एतद्घटपक्षीकृत-शब्दान्यान्याऽनित्यस्य घटस्यान्यत्वेन सर्वत्राकाशादौ व्याप्तिसिद्धिर्ज्ञेया। **अत्र वक्ष्यमाणेत्यादि।** अत्र सपक्षं पक्षीकृत्य प्रवर्त्तमानमहाविद्यासु पटाद्यनित्य-सर्वसपक्षस्य पक्षतुल्यत्वेनाकाशादय एव दृष्टान्ता ज्ञेयाः। **एतद्घटेत्यादि।** एतद्घटपक्षीकृतशब्दयोः सम्बन्धिनी ये अन्यत्वे भिन्नत्वे। **तदुभयेति।** तयोरन्यत्वयोरुभयमित्यर्थः। **यदि पक्षीकृतेत्यादि।** यदि पक्षीकृतशब्दोऽनित्यो न स्यात्, तदा पक्षीकृतादनित्याच्छब्दाद्घटस्यान्यत्वं न स्यादित्यर्थः।।१।।

**भुवन.**—अथ पूर्वमहाविद्यामेव अन्यान्यपदस्थाने निष्ठात्यन्ता-भावाधिकरणपदक्षेपेण प्रकारान्तरेणाह—**अयं घट एतद्घटेत्यादि।** एतद्घट-पक्षीकृतशब्दान्यान्यानित्ये एतद्घटे वा पक्षीकृतशब्दे वा निष्ठा यस्य

---

(पक्षीकृतशब्द भेदेन) प्रथमपक्ष में व्याघात दोष है। एतद्घट एतद्घट से भिन्न नहीं होगा। स्व में स्व का भेद नहीं रहता। द्वितीयपक्ष में शब्द में अनित्यत्व सिद्ध होगा। यदि पक्षीकृत शब्द अनित्य न होता, तो पक्षीकृतानित्यान्यत्व घट में नहीं सिद्ध होता।

यहाँ पर पक्षीकृतशब्दभेद एतद्घट में अनित्यान्यत्वेन सिद्ध करते हुए साक्षात् शब्द में अनित्यत्व स्थापित किया है। दृष्टान्त आकाशादि में एतद्घट तथा पक्षीकृतशब्द से भिन्न सकलनित्यानित्यपदार्थ उससे भिन्न जो अनित्यशब्द उसका भेद आकाश में है।।१।।

सपक्ष में साध्यसाधक द्वितीयमहाविद्या का साध्य प्रथममहाविद्यासाध्य के समान ही है। पूर्व में अनित्यान्यपद था, यहाँ पर अनित्यनिष्ठात्यन्ता-भावाधिकरण है। अर्थ में बहुत अन्तर नहीं है। एतद्घट एवं पक्षीकृतशब्द से भिन्न वस्तु से भिन्न जो अनित्यपदार्थ उसमें रहने वाले धर्म के

**वा, पक्षीकृतः शब्दो वा। न च घटनिष्ठस्यात्यन्ताभावो घटे संभवति। तेन यदि शब्दोऽनित्यः स्यात्, तर्हि शब्दनिष्ठस्यात्यन्ताभावमुपादाय प्रकृतसाध्यपर्यवसानं स्यादिति शब्दानित्यत्वसिद्धिः।।२।।**

**अयं घटः एतद्घटपक्षीकृतशब्दान्यान्यानित्यनिष्ठात्यन्ताभावप्रति-**

---

घटत्वशब्दत्वादेर्धर्मस्य स एतद्घटपक्षीकृतशब्दान्यान्यानित्यनिष्ठः। तस्य यः अत्यन्ताभावस्तदधिकरणं घट इत्यर्थः। अत्र घटनिष्ठस्य घटत्वादेरत्यन्ताभावो घटे पक्षीकृते साधयितुं न शक्यते। तस्माच्छब्दनिष्ठस्य शब्दत्वादेरत्यन्ताभावो घटे साध्यते। शब्दत्वादिधर्मस्य चानित्यनिष्ठत्वं तदैव स्यात्, यदि शब्दोऽनित्यः स्यादिति शब्दानित्यत्वसिद्धिः। एतद्घटपक्षीकृतशब्दान्यान्यानित्यनिष्ठस्य घटत्वादेरत्यन्ताभावः पक्षातिरिक्ते सर्वत्रास्तीति व्याप्तिसिद्धिरिति।।२।।

**भुवन.**—अथानन्तरं महाविद्यामेवात्यन्ताभावाधिकरणस्थानेऽत्यन्ताभावप्रतियोग्यधिकरणग्रहणेन भङ्ग्यन्तरेण दर्शयति—**अयं घट इत्यादि।** एतद्घटपक्षीकृतशब्दान्यान्यानित्यनिष्ठश्चासौ अत्यन्ताभावश्च। तस्य प्रतियोगी

---

अत्यन्ताभाव का अधिकरण एतद्घट है। अथवा एतादृश अनित्य में रहने वाले अत्यन्ताभाव का अधिकरण एतद्घट है।

एतद्घट (इस घट) एवं पक्षीकृतशब्द से भिन्न जो पदार्थ है, उनसे भिन्न अनित्य या तो एतद्घट होगा, या तो पक्षीकृत शब्द होगा। यदि एतद्घट को लेते है, तो व्याघात होगा। एतद्घटवृत्तिधर्म का अत्यन्ताभाव एतद्घट में नहीं रहता। द्वितीयपक्ष यानी पक्षीकृतशब्द को एतद्घट-पक्षीकृतशब्दान्यान्यानित्य मानने पर उसमें रहने वाले शब्दत्व धर्म के अत्यन्ताभाव का अधिकरण एतद्घट है। अथवा अनित्य शब्द में रहने वाले नित्यत्वात्यन्ताभाव का अधिकरण एतद्घट है। अतः शब्द को जब अनित्य मानेगे तभी शब्द में रहने वाले अत्यन्ताभाव का अधिकरण एतद्घट होगा। इस प्रकार शब्द में अनित्यत्व सिद्ध होता है। सपक्ष आकाश आदि में पूर्वोक्त प्रकार से साध्य समन्वय करेगे।।२।।

इसके बाद पूर्वोक्त महाविद्या को ही अत्यन्ताभावाधिकरण के स्थान पर अत्यन्ताभावप्रतियोगी अधिकरण रख कर कह रहे हैं। अर्थ में भेद नहीं है। एतद्घट तथा पक्षीकृतशब्दभिन्न वस्तु से भिन्न अनित्य में रहने वाला जो घटत्वात्यन्ताभाव उसके प्रतियोगी घटत्व का अधिकरण घट है।

**योग्यधिकरणं मेयत्वादिति। इहापि यदि पक्षीकृतः शब्दः अनित्यः स्यात्, तर्ह्येव पक्षीकृत शब्दनिष्ठात्यन्ताभवप्रतियोगिनं घटनिष्ठधर्ममुपादाय प्रकृत प्रतिज्ञार्थपर्यवसानं स्यादिति शब्दानित्यत्वसिद्धिः।।३।।**

**अयं घटः एतद्घटनिष्ठात्यन्ताभावैतच्छब्दनिष्ठात्यन्ताभाववत्त्व-**

---

घटत्वादिर्यो धर्मः तदाधारो घट इत्यर्थः। अत्रानित्यघटनिष्ठस्यात्यन्ताभावस्य प्रतियोगिनः सकलपदार्थधर्माः पटत्वाकाशत्वादयस्तेषामधिकरणं घट इति व्याघातः स्यात्। तस्मादनित्यशब्दनिष्ठो यः अत्यन्ताभावस्तस्य प्रतियोगिनो ये घटत्वादयस्तेषामधिकरणं घट इति भावः। अत्रापि अनित्यनिष्ठोऽत्यन्ताभावस्तदैव स्यात्, यदि शब्दस्यानित्यत्वमङ्गीक्रियते। तस्माच्छब्दानित्यत्वसिद्धिः। घटनिष्ठस्यात्यन्ताभावस्य प्रतियोगिनं गगनैकत्वादिकं धर्मं स्वस्वनिष्ठमुपादाय सर्वत्र गगनादौ व्याप्तिसिद्धिर्ज्ञेयेति। अत्र ग्रन्थकृदनित्यत्वसिद्धिमाह—**इहापि यदीत्यादि।।३।।**

**भुवन.**—आद्यमहाविद्यामेव भङ्ग्यन्तरेणाह—**अयं घट एतद्घटनिष्ठात्यन्ताभावैतच्छब्देत्यादि।** एतद्घटनिष्ठस्य घटत्वादेर्धर्मस्य अत्यन्ताभावश्च एतच्छब्दनिष्ठस्य शब्दत्वादेरत्यन्ताभावश्च एतद्धटनिष्ठात्यन्ताभावैतच्छब्द-

---

यहाँ पर यदि एतद्घट एवं पक्षीकृतशब्द से भिन्न अनित्य एतद्घट को लेते है, तो उसमें रहने वाले पटत्वात्यन्ताभाव या आकाशत्वात्यन्ताभाव उसका प्रतियोगी पटत्व या आकाशत्व का अधिकरण एतद्घट को बनायेगें तो व्याघात होगा। अतः एतद्घट पक्षीकृत शब्दान्यान्यानित्यपद से शब्द को ही लेगें। उसमें रहने वाले घटत्वात्यन्ताभाव के प्रतियोगी घटत्व का अधिकरण एतद्घट होगा। इस प्रकार पक्षीकृतशब्दवृत्ति अत्यन्ताभाव के प्रतियोगी घटनिष्ठधर्म को लेकर साध्य की सिद्धि करते हैं।

अतः शब्द को जब अनित्य मानते हैं तभी अनित्यनिष्ठात्यन्ताभाव का प्रतियोगी घटनिष्ठधर्म होता है। इस प्रकार शब्द में अनित्यत्व सिद्ध होता है। सपक्ष आकाशादि में साध्य सिद्धि पूर्वोक्तप्रकारेण करनी चाहिए। अनित्यशब्दनिष्ठात्यन्ताभाव का प्रतियोगी जैसे घटत्व है। उसी प्रकार आकाशत्व भी है। क्योंकि आकाशत्व आकाश में रहता है। शब्द में आकाशत्वात्यन्ताभाव ही रहता है।।३।।

चौथे महाविद्या का साध्य पूर्वोक्त महाविद्याओं के साध्य से भिन्न है। एतद्घट में रहने वाले धर्म के अत्यन्ताभाव, एवं एतत् शब्द में रहने वाले धर्म के अत्यन्ताभाव, से भिन्न जो अनित्य उससे भिन्न एतद्घट है। यहाँ

**रहितानित्यान्यः मेयत्वादिति।। अत्र चैतद्घटनिष्ठात्यन्ताभावैतच्छब्द-निष्ठात्यन्ताभावौ विवक्षितौ। पूर्वमहाविद्यायां चैतद्घटैतच्छब्दान्यो-न्याभावाविति महान्भेदः। एवं वक्ष्यमाणमहाविद्ययोः प्राचीनमहाविद्याभ्यां भेदो द्रष्टव्यः। शेषं पूर्ववत्।।४।।**

---

निष्ठात्यन्ताभावौ। तौ विद्येते यस्य स एतद्धटनिष्ठात्यन्ताभावैतच्छब्द-निष्ठात्यन्ताभाववान्। तस्य भावस्तत्त्वम्। तेन रहितश्चासावनित्यश्च तस्मादन्य इत्यर्थः। अयमाशयः। एतद्घटनिष्ठात्यन्ताभावैतच्छब्दनिष्ठात्यन्ताभाववदे-तद्द्वयव्यतिरिक्तं विश्वम्। तत्त्वरहितोऽनित्य एतद्धटो वा, एतच्छब्दो वा। तत्राद्यान्यत्वं पक्षे व्याहतमिति सपक्षोपयोगि तज्ज्ञेयम्। द्वितीयान्यत्वं च सिध्यच्छब्दस्यानित्यत्वं गमयतीति भावः। आद्यमहाविद्यातोऽस्या भेदमाह— अत्र **चैतद्घटनिष्ठेत्यादि। पूर्वमहाविद्यायामिति।** आद्यमहाविद्यायामित्यर्थः। **अन्योन्याभावाविति।** अन्यान्यशब्दाभ्यामुपात्ताविति। **एवं वक्ष्यमाण-महाविद्ययोरिति।** पञ्चमीषष्ठ्योः। प्राचीनमहाविद्याभ्यां द्वितीयतृतीयाभ्या-मित्यर्थः।।४।।

---

पर एतद्घटनिष्ठात्यन्ताभाव तथा एतत् शब्द निष्ठात्यन्ताभाव विवक्षित है। पूर्वमहाविद्याओं में एतद्घट एवं एतत्शब्द का अन्योन्याभाव यानी भेद लिया गया है। अतः साध्य के स्वरूप में महान् भेद है। परन्तु अर्थ में साम्यता है। इसी प्रकार पञ्चममहाविद्या षष्ठमहाविद्या के साध्य में भी पूर्वविद्याओं के साध्य से भिन्नता है।

पक्ष में साध्य का समन्वय एतद्घटवृत्तिधर्म घटत्व का अत्यन्ताभाव तथा एतत् शब्दवृत्ति शब्दत्व का अत्यन्ताभाव एतद्घट एवं एतत् शब्द से भिन्न में है। उनसे भिन्न अनित्य या तो एतद्घट होगा, या तो एतत् शब्द होगा। यदि एतद्घट को लेते हैं? तो एतद्घट का भेद एतद्घट में सिद्ध करने से व्याघात होगा। अतः एतद्घटनिष्ठात्यन्ताभाव एवं एतत् शब्दनिष्ठात्यन्ताभाव से भिन्न अनित्य एतत् शब्द को कहना होगा। उसका भेद एतद्घट में सिद्ध है। इस प्रकार अनित्य शब्द का भेद एतद्घट में सिद्ध होने पर शब्द में अनित्यत्व भी सिद्ध हो जाता है। सपक्ष आकाशादि में अनित्यशब्द का भेद सिद्ध ही है। जब शब्द को सपक्ष बनायेंगे तो शब्द का भेद शब्द में नहीं होगा। तब एतद्घटनिष्ठान्यन्ताभाव एतत् शब्दनिष्ठात्यन्ताभाव से भिन्न एतद्घट को लेंगे उसका भेद एतत् शब्द में है ही।।४।।

**अयं घटः एतद्घटनिष्ठात्यन्ताभावैतच्छब्दनिष्ठात्यन्ताभाववत्त्वरहितानित्यनिष्ठात्यन्ताभावाधिकरणं मेयत्वादिति।। अनित्यनिष्ठस्य अत्यन्ताभावः अनित्यनिष्ठात्यन्ताभावः।।५।।**

**अयं घटः एतद्घटनिष्ठात्यन्ताभावैतच्छब्दनिष्ठात्यन्ताभाववत्त्व-**

---

**भुवन.**—अथ पूर्ववदेव भङ्ग्यन्तरमाह—**अयं घट एतद्घटनिष्ठेत्यादि।** एतद्धटनिष्ठात्यन्ताभावैतच्छब्दनिष्ठात्यन्ताभाववत्त्वरहितश्चासौ अनित्यश्च स तथा। तन्निष्ठस्य शब्दत्वादेर्योऽत्यन्ताभावस्तदाश्रयो घट इत्यर्थः। उक्तात्यन्ताभाववत्त्वरहितावेतद्घटैतच्छब्दौ तयोरन्यतरानित्यः उभयप्रसिद्धो घटः। तन्निष्ठस्य घटत्वादेरत्यन्ताभावः पक्षादन्यत्र सर्वत्रास्तीति व्याप्तिसिद्धिः। घटे त्वनित्यशब्दनिष्ठस्य शब्दत्वादेरत्यन्ताभावः सिध्यन्ननित्यत्वं शब्दे साधयेदिति भावः। अत्र कर्मधारयं प्रतिषेद्धुमाह—**अनित्यनिष्ठस्यात्यन्ताभाव इत्यादि।।५।।**

**भुवन.**—अथ पूर्वप्रकारान्तरेण महाविद्यान्तरमाह—**अयं घट इत्यादि।** यथोक्तात्यन्ताभाववत्त्वरहिताऽनित्यनिष्ठश्चासौ अत्यन्ताभावश्च, तस्य यः प्रतियोगी घटत्वादिस्तदधिकरणं घट इत्यर्थः। यथोक्ताऽनित्य एतद्घटो वा

---

पञ्चममहाविद्या का साध्य भी चतुर्थमहाविद्या के समान है। स्वरूप भेद इतना ही है, कि चतुर्थ में अनित्यान्य कहा था, पञ्चम में अनित्यनिष्ठात्यन्ताभावाधिकरण है। अर्थ में साम्यता है। एतद्घटवृत्ति घटत्वादिधर्मो का अत्यन्ताभाव है, जिनमे, तथा एतत् शब्दवृत्ति शब्दत्वादि धर्मो का अत्यन्ताभाव है, जिनमें उनसे भिन्न अनित्य जो एतद्घट, अथवा एतत् शब्द उनमें रहने वाले धर्म के अत्यन्ताभाव का अधिकरण घट है।

यहाँ पर भी एतद्घटनिष्ठात्यन्ताभाव से भिन्न तथा एतत् शब्दनिष्ठात्यन्ताभाव से भिन्न अनित्यपद से यदि एतद्घट को लेते हैं, तो उसमें रहने वाले धर्म का अत्यन्ताभाव एतद्घट में नहीं रहेगा। अतः पूर्वोक्त अत्यन्ताभाव से रहित अनित्य पद से एतत् शब्द को लेना होगा। उसमें रहने वाले शब्दत्वादि धर्म का अत्यन्ताभाव एतद्घट में है ही। सपक्षों में साध्यसिद्धि पूर्ववत् करनी चाहिए।।५।।

षष्ठमहाविद्या का साध्य पञ्चममहाविद्या के साध्य से किञ्चित् विलक्षण है। पूर्व में अनित्यनिष्ठात्यन्ताभाव का अधिकरणघट को कहा था। यहाँ पर अनित्यनिष्ठात्यन्ताभाव के प्रतियोगी का अधिकरण कहा है। यथोक्त

**रहितानित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणं मेयत्वादिति।। अनित्यनिष्ठश्चासौ अत्यन्ताभावश्च।।६।।**

**अयं घटः एतद्घटान्योन्याभावैतच्छब्दनिष्ठात्यन्ताभाववत्त्वरहितानित्यान्यः मेयत्वादिति।। एतद्घटान्यत्ववदेतच्छब्दनिष्ठात्यन्ताभावोऽप्ये-**

---

तच्छब्दो वा। तत्रैतद्घटनिष्ठो योऽत्यन्ताभावस्तस्य प्रतियोगिनो ये विश्वनिष्ठा धर्माः पटत्वाकाशशब्दत्वादयस्तेषामधिकरणं घट इति व्याघातः। तस्मादेतच्छब्दरूपो योऽनित्यस्तन्निष्ठो योऽत्यन्ताभावः तत्प्रतियोगिनो ये घटत्वादयस्तदधिकरणं घट इत्यर्थः। व्याप्तिस्तु तत्तन्निष्ठात्मत्वाकाशत्वादिभिर्यथोक्तविशेषणोपपत्रैः पक्षादतिरिक्ते सर्वत्रापि ज्ञेया। तत्पुरुषसमासं व्यावर्त्तयति— **अनित्यनिष्ठश्चासावत्यन्तभावश्चेति।।६।।**

**भुवन.**—चतुर्थ्यादिमहाविद्यात्रयमेवैतद्घटनिष्ठात्यन्ताभावपदस्थाने एतद्घटान्योन्याभावपदग्रहणेन प्राह—**अयं घटः एतद्घटान्योन्याभावैतच्छब्दनिष्ठात्यन्ताभाववत्त्वरहितानित्यान्यः इति।** एतद्घटान्योन्याभावश्च

---

अत्यन्ताभाव से रहित जो अनित्यपदार्थ उसमें रहने वाले अत्यन्ताभाव का जो प्रतियोगी उसका अधिकरण घट है।

पक्ष में साध्य समन्वय एतद्घटवृत्तिघटत्वादिधर्मों के अत्यन्ताभाव एवं एतत् शब्दवृत्तिशब्दत्वादिधर्मों के अत्यन्ताभाव से भिन्न जो अनित्य पदार्थ, उसमें रहने वाले अत्यन्ताभाव के प्रतियोगी का अधिकरण शब्द है। यहाँ पर भी एतादृशात्यन्ताभाव से रहित यदि एतद्घट को लेते हैं, तो उसमें रहने वाले अत्यन्ताभाव के प्रतियोगी का अधिकरण एतद्घट नहीं होगा। अतः एतादृशात्यन्ताभाव से रहित अनित्य एतत् शब्द को लेना होगा। उसमें रहने वाले घटत्वात्यन्ताभाव के प्रतियोगी घटत्व का अधिकरण घट है। सपक्ष आकाशादि भी एतादृशात्यन्ताभाववत्वरहित अनित्यशब्दवृत्ति आकाशत्वात्यन्ताभाव के प्रतियोगी आकाशत्व का अधिकरण आकाश है।

एतत् शब्द को यदि सपक्ष कहना होगा तो एतादृशात्यन्ताभाव से भिन्न एतत् घट को लेना होगा, उसमें रहने वाले शब्दत्वात्यन्ताभाव के प्रतियोगी शब्दत्व का अधिकरण एतत् शब्द है।।६।।

सप्तममहाविद्या के साध्य में पूर्वोक्तमहाविद्याओं के साध्यों से भिन्नता है। अभी तक महाविद्याओं के साध्य या तो अन्यत्वमात्रघटित थे, या तो अत्यन्ताभावत्व मात्र घटित थे, सप्तम का साध्य उभय घटित है। **'एतद्घटा-**

**तच्छब्दव्यतिरिक्तसकलनिष्ठ एव। एतच्छब्दमात्रनिष्ठानां तदन्यत्रासंभवात्। तेन न कश्चित्क्षुद्रोपद्रवः। इयं चैतद्घटान्योन्याभावैतच्छब्दनिष्ठात्यन्ताभावावुपादाय प्रवृत्ता। प्रथमा चैतद्घटान्योन्याभावैतच्छब्दान्योन्याभावावुपादाय। चतुर्थी चैतद्घटनिष्ठात्यन्ताभावैतच्छब्दनिष्ठात्यन्ताभावावुपादाय। तेन प्रथमचतुर्थमहाविद्याभ्यामेतस्या महान्भेदो द्रष्टव्यः।।७।।**

---

एतच्छब्दनिष्ठस्यात्यन्ताभावश्च, एतद्घटान्योन्याभावैतच्छब्दनिष्ठात्यन्ताभावौ। तद्वत्त्वरहितो योऽनित्यस्तस्मादन्यो भिन्न इत्यर्थः। एतद्घटान्योन्याभावैतच्छब्दनिष्ठात्यन्ताभाववत्त्वरहितौ एतद्घटैतच्छब्दौ। तयोरन्यतरैतद्घटान्यत्वं सर्वत्रास्तीति व्याप्तिसिद्धिः। घटस्यानित्यशब्दादन्यत्वं च सिध्यदनित्यत्वं शब्दे गमयेदिति भावः। **एतद्घटान्यत्ववदिति।** यथैतद्घटान्योन्याभावः एतद्घटादन्यत्र सर्वत्रास्ति, तथा एतच्छब्दनिष्ठानां शब्दत्वादिधर्माणां योऽत्यन्ताभावः सोऽप्येतच्छब्दव्यतिरिक्तसकलवस्तुनिष्ठः एवेत्यर्थः। **तदन्यत्रेति।** एतच्छब्दादन्यत्र। सर्वपदार्थेष्वसंभवात्। तेन हेतुनैतद्घटान्योन्याभाव एतद्-

---

**न्योन्याभावैतच्छब्दनिष्ठात्यन्ताभाववत्त्वरहितानित्यान्यः', 'अयं घटः'** इस घट का अन्योन्याभाव (भेद) एवं इस शब्द में रहने वाले शब्दत्वादिधर्मों का अत्यन्ताभाव इस घट एवं इस शब्द से भिन्न सकलवस्तुओं में है। उन वस्तुओं से भिन्न अनित्य यह शब्द, उसका भेद इस घट में है।

यहाँ पर भी एतद्घटान्योन्याभाव एवं एतत् शब्दवृत्ति धर्म के अत्यन्ताभाव वाले से भिन्न एतद्घट, एवं एतत्शब्द दोनो है। तथापि यदि एतद्घट को लेते हैं, तो एतद्घट का भेद एतद्घट में नहीं सिद्ध हो सकेगा। अतः उक्ताभावरहित एतत्शब्द को ही लेना होगा। उसका भेद एतद्घट में है। एतद्घटान्योन्याभाव (घटभेद) जिस प्रकार घटेतर सकल में है, उसी प्रकार शब्दवृत्तिशब्दत्वादि का अत्यन्ताभाव भी शब्देतर सकल में है। उनसे भिन्न या तो एतद्घट होगा, या तो एतत् शब्द होगा।

यह महाविद्या एतद्घटान्योन्याभाव तथा एतत्शब्दवृत्ति धर्मात्यन्ताभाव को लेकर प्रवृत्त है। अन्यत्व (अन्योन्याभावत्व) मात्र घटित प्रथम, द्वितीय, तथा तृतीय से भिन्न है। एवं अत्यन्ताभावमात्र घटित चतुर्थ पञ्चम तथा षष्ठ से भी भिन्न है। अन्यत्व, इतरत्व, भेद, तथा अन्योन्याभाव पर्यायवाची हैं। तथा अन्य, इतर, भिन्न, तथा भेदवान् पर्यायवाची हैं। सपक्ष आकाशादि

**अयं घटः एतद्घटान्योन्याभावैतच्छब्दनिष्ठात्यन्ताभाववत्वरहिता-नित्यनिष्ठात्यन्ताभावाधिकरणं मेयत्वादिति।।८।।**

---

घटादन्यत्र सर्वत्र नास्ति। शब्दनिष्ठधर्मात्यन्ताभावस्तु सर्वत्र नास्तीत्यादिः क्षुद्रोपद्रवः कश्चिन्नाशङ्क्यः। प्रथमचतुर्थमहाविद्यायामस्या भेदमाह **इयं चैतदित्यादि।।७।।**

**भुवन.**—अयं घट एतद्घटान्योन्याभावैतदित्यादि। एतद्घट-स्यान्योन्याभावश्च एतच्छब्दनिष्ठस्य धर्मस्यात्यन्ताभावश्च। तद्वदेत द्वयव्यतिरिक्तं विश्वं, तद्वत्त्वरहितौ अनित्यौ एतौ द्वावेव। तत्र घटे निष्ठा घटत्वादयः, शब्दे निष्ठाश्च शब्दत्वादयः। तत्र घटत्वात्यन्ताभाववान्घट इति व्याहतम्। तस्मादनित्यशब्दनिष्ठस्य शब्दत्वादेरत्यन्ताभाववान्घटः। तथा च शब्दस्या-नित्यत्वसिद्धिः प्रकटैवेत्यर्थः।।८।।

---

उक्ताभावत्वरहित अनित्य शब्द से भिन्न है ही। शब्द में साध्य सिद्धि करने के लिए उक्ताभाव से रहित अनित्य एतद्घट को लेना होगा उसका भेद शब्द में सिद्ध है।।७।।

सप्तममहाविद्या के साध्य से अष्टम का साध्य किञ्चित् विलक्षण है। **'एतद्घटान्योन्याभावैतच्छब्दनिष्ठात्यन्ताभाववत्त्वरहितानित्य'** अंश तक उभय साम्यता है। सप्तम में अनित्यान्य यानी अनित्य का भेद साध्य है। इसमें अनित्यवृत्तिधर्म के अत्यन्ताभाव का अधिकरणत्व साध्य है।

एतद्घटान्योन्याभाव (घटभेद) वाले से तथा एतत् शब्दवृत्तिशब्दत्वधर्म के अत्यन्ताभाव वाले से भिन्न अनित्य पूर्ववत् एतद्घट, या तो एतत् शब्द होगा। अब यदि एतद्घट को लेते हैं, तो उसके धर्म के अत्यन्ताभाव का अधिकरण एतद्घट को कहने पर व्याघात होगा। अतः पूर्वोक्तात्यन्ताभाव-वत्वरहित अनित्य एतत् शब्द को कहना होगा। उसमें रहने वाले शब्दत्व के अत्यन्ताभाव का अधिकरण एतत् घट है।

आकाशादि सपक्ष पूर्वोक्तात्यन्ताभाववत्वरहित अनित्यशब्दवृत्तिधर्म के अत्यन्ताभाव के अधिकरण हैं ही। एतत् शब्द में साध्य सिद्धि करने के लिए पूर्वोक्तात्यन्ताभाववत्त्वरहित अनित्य पद से एतत् घट को लेना होगा। तद्वृत्तिघटत्व के अत्यन्ताभाव का अधिकरण एतत् शब्द है।।८।।

**अयं घटः एतद्घटान्योन्याभावैतच्छब्दनिष्ठात्यन्ताभाववत्त्वरहिता-नित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणं मेयत्वादिति। एतयोश्च प्राचीनाभ्यां पूर्ववन्महान्भेदः।।९।।**

**अयं घटः एतद्घटनिष्ठात्यन्ताभावैतच्छब्दान्योन्याभाववत्त्वरहिता-**

---

**भुवन.**—अयं घटः एतद्घटान्योन्याभावेत्यादि। एतद्घटान्योन्याभावैतच्छब्दनिष्ठात्यन्ताभाववत्त्वरहितानित्यनिष्ठश्चासावत्यन्ताभावश्च, तस्य प्रतियोगिनो ये धर्मा घटत्वादयस्तदधिकरणं घट इत्यर्थः। शेषं पूर्ववदेव। **एतयोश्चेति।** एतस्या अनन्तरोक्तमहाविद्यायाश्च प्राचीनाभ्यां पञ्चमीषष्ठीभ्यां महान्भेदो ज्ञातव्यः। यतः एतद्घटनिष्ठात्यन्ताभावैतच्छब्दनिष्ठात्यन्ताभावौ आदाय ते महाविद्ये प्रवृत्ते। एते त्वेतद्घटान्योन्याभावैतच्छब्दनिष्ठात्यन्ताभावावुपादाय चेत्यर्थः।।९।।

**भुवन.**—अथ सप्तम्यादिमहाविद्यात्रयमेव भङ्ग्यन्तरेणाह—**अयं घट इत्यादि।** एतद्घटनिष्ठस्य अत्यन्ताभाव इति विग्रहः। सप्तमीमहाविद्यातोऽस्या

---

नवम महाविद्या का साध्य अष्टम से कुछ विलक्षण है। अष्टम में पूर्वोक्तात्यन्ताभाववत्त्वरहित अनित्यवृत्तिधर्म के अत्यन्ताभाव का अधिकरण एतद्घट को कहा था। नवम में पूर्वोक्त अत्यन्ताभाववत्त्व रहित अनित्यवृत्ति अत्यन्ताभाव के प्रतियोगी का अधिकरण एतद्घट को कहा है।

एतद्घटान्योन्याभावैतच्छब्दनिष्ठात्यन्ताभाववत्त्वरहित अनित्य एतद्घट, या तो एतत् शब्द होगा, उनमें रहने वाले अत्यन्ताभाव के प्रतियोगी का अधिकरण साध्य है।

पूर्ववत् यहाँ पर भी यदि एतद्घट को लेते हैं, तो व्याघात होगा। अतः पूर्वोक्तात्यन्ताभाववत्त्व रहित अनित्य एतत् शब्द को लेंगे। उसमें रहने वाले घटत्वात्यन्ताभाव के प्रतियोगी घटत्व का अधिकरण घट है। सपक्षों में साध्यसिद्धि पूर्वोक्तप्रकारेण करनी चाहिए। सप्तम अष्टम तथा नवम महाविद्यायें पञ्चम तथा षष्ठ से भिन्न है। पञ्चम तथा षष्ठ एतद्घटनिष्ठात्यन्ताभाव एवं एतत्शब्दनिष्ठात्यन्ताभाव को लेकर प्रवृत्त है। सप्तम अष्टम एवं नवम एतद्घटान्योन्याभाव एतत्शब्दनिष्ठात्यन्ताभाव को लेकर प्रवृत्त है।।९।।

दशममहाविद्या का साध्य सप्तम अष्टम तथा नवम के साध्य से भिन्न है। पूर्व में अन्योन्याभाव (भेद) एतद्घट का, तथा अत्यन्ताभाव एतत् शब्द वृत्तिधर्म का कहा था। यहाँ पर एतद्घटवृत्तिधर्म का अत्यन्ताभाव तथा एतत् शब्दान्योन्याभाव (शब्द भेद) कहा है।

**नित्यान्यः मेयत्वादिति।। इयं चैतद्घटनिष्ठात्यन्ताभावैतच्छब्दान्योन्याभावावुपादाय प्रवृत्ता। सप्तमी त्वेतद्घटान्योन्याभावैतच्छब्दनिष्ठात्यन्ताभावावुपादाय। तेनैतयोर्महान्भेदः। एवं वक्ष्यमाणयोरपि प्राचीनाभ्यां महान्भेदः।।१०।।**

**अयं घटः एतद्घटनिष्ठात्यन्ताभावैतच्छब्दान्योन्याभाववत्त्वरहितानित्यनिष्ठात्यन्ताभावाधिकरणं मेयत्वादिति।।११।।**

**अयं घटः एतद्घटनिष्ठात्यन्ताभावैतच्छब्दान्योन्याभाववत्त्वरहिता-**

---

भेदमाह—**इयं चेति। वक्ष्यमाणयोरिति।** एकादशीद्वादश्योः। **प्राचीनाभ्यामिति।** अष्टमीनवमीभ्यामित्यर्थः। शेषं पूर्ववत्।।१०।।

**भुवन.—अयं घटः एतद्घटेत्यादि।** एतद्घटनिष्ठात्यन्तभावैतच्छब्दान्योन्याभाववत्त्वरहितो योऽनित्यः शब्दादिस्तन्निष्ठा ये शब्दत्वादयस्तेषामत्यन्ताभाववान्घट इत्यर्थः।।११।।

**भुवन.—अयं घट इत्यादि।** एतद्घटनिष्ठस्य घटत्वादेरत्यन्ताभावः एतद्घटनिष्ठात्यन्ताभावः। एतद्घटनिष्ठात्यन्ताभावैतच्छब्दान्योन्याभाववत्त्व-

---

एतद्घटवृत्तिघटत्व का अत्यन्ताभाव तथा एतत् शब्दान्योन्याभाव (शब्दभेद) एतद्घटातिरिक्त तथा एतत् शब्दातिरिक्त सकल वस्तु में है। उससे भिन्न अनित्य एतद्घट होगा, या तो एतत् शब्द होगा, उसका भेद साध्य है। यहाँ पर भी यदि एतत् घट को लेते हैं, तो घट भेद घट में नहीं सिद्ध होगा। अतः तद्भिन्न अनित्य एतत् शब्द को लेंगे। उसका भेद एतत् घट में सिद्ध है। सपक्ष आकाशादि में साध्य सिद्धि पूर्वोक्तप्रकारेण करनी चाहिए।।१०।।

दशम में पूर्वोक्त से भिन्न अनित्य का भेद साध्य था। एकादश में पूर्वोक्त से भिन्न अनित्यवृत्तिधर्म के अत्यन्ताभाव का अधिकरणत्व साध्य कहा है। एतद् घटवृत्तिघटत्व के अत्यन्ताभाव वाले तथा एतत् शब्दान्योन्याभाव (शब्दभेद) वाले से भिन्न एतद्घट, व एतत् शब्द में से व्याघातदोषभिया एतत् शब्द को लेंगे, शब्द में रहने वाले शब्दत्व के अत्यन्ताभाव का अधिकरण घट है। आकाशादि सपक्षों में साध्यसिद्धि पूर्वोक्तप्रकारेण होगी।।११।।

एकादश में अनित्यवृत्ति धर्म के अत्यन्ताभाव का अधिकरणत्व साध्य था। द्वादश में अनित्यवृत्ति अत्यन्ताभाव के प्रतियोगी का अधिकरणत्व साध्य

**नित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणं मेयत्वादिति।।१२।।**

**अयं घटः एतद्घटान्यशब्दत्वात्यन्ताभववत्त्वरहितानित्यान्यः मेयत्वादिति।। इयं चैतद्घटान्योन्याभावपक्षतत्तुल्यमात्रनिष्ठशब्दत्वात्यन्ताभावावुपादाय प्रवृत्ता पक्षतत्तुल्यान्यतमे यत्र कुत्रापि शब्देऽनित्यत्वं गमयति।**

---

रहितो योऽनित्यः शब्दादिस्तन्निष्ठो योऽत्यन्ताभवस्तस्य यः प्रतियोगी घटत्वादिस्तदधिकरणं घट इत्यर्थः।।१२।।

**भुवन.**—पुनरपि सप्तम्यादिमहाविद्या एवाष्टादशयावत्किञ्चिद्भेदेनाह—**अयं घट एतद्धटान्येत्यादि।** शब्दत्वस्य अत्यन्ताभावः शब्दत्वात्यन्ताभावः। स विद्यते येषु ते शब्दत्वात्यन्ताभाववन्तः, शब्दव्यतिरिक्ताः सर्वे पदार्थाः। ततो विशेषणविशेष्यकर्मधारयः। एतद्घटान्ये च ते शब्दत्वात्यन्ताभाववन्तश्च, एतद्धटान्यशब्दत्वात्यन्ताभाववन्तः। तदभावस्तद्वत्त्वं। तेन रहितश्चासौ अनित्यश्चैतद्घटो वा शब्दो वा। तस्मादन्यो घट इत्यर्थः। तत्र घटो घटादन्यो न संभवति। तस्मादनित्यशब्दादन्यो घट इति भावः। सप्तमीमहाविद्यतोऽस्या भेदमाह—**इयं चैतद्घटान्योन्याभावपक्षतुल्यमात्रेति।** पक्षो मूलानुमानापेक्षया पक्षीकृतो विवक्षितः कश्चिच्छब्दस्तत्तुल्याः। पक्षतुल्या

---

है। एतद्घटवृत्तिघटत्व के अत्यन्ताभाव वाले तथा एतत् शब्दान्योन्याभाव (शब्दभेद) वाले से भिन्न अनित्य एतत् घट, एवं एतत् शब्द में से व्याघातदोष के भय से एतत् शब्द को लेगें। उसमें रहने वाले घटत्वात्यन्ताभाव के प्रतियोगी घटत्व का अधिकरण घट है। शेष पूर्ववत्।।१२।।

सप्तममहाविद्या से लेकर अष्टादश तक सकल महाविद्यायें किञ्चित् भेद से प्रवृत्त है। त्रयोदशमहाविद्या का साध्य पूर्वोक्तमहाविद्याओं के साध्यों के कुछ अंश में विलक्षण है। **'एतद्घटान्यशब्दत्वात्यन्ताभाववत्त्वरहितानित्यान्य'** एतद्घट से भिन्न तथा शब्दत्वात्यन्ताभाव वाले से भिन्न एतद्घट, या तो शब्द होगा। एतद्घट को लेने पर व्याघात होगा। अतः शब्द को लेगे, उसका भेद घट में है।

यह महाविद्या एतद्घटान्योन्याभाव पक्षीकृतशब्द तथा पक्षीकृत शब्द तुल्य शब्दवृत्तिशब्दत्व के अत्यन्ताभाव को लेकर प्रवृत्त है। अतः यह पक्षीकृत शब्द तथा पक्षीकृतशब्द तुल्य शब्द में से अन्यतम (किसी एक) में अनित्यत्व

**सप्तमी त्वेतद्घटान्योन्याभावैतच्छब्दनिष्ठात्यन्ताभावावुपादाय प्रवृत्ता निष्कृष्यैतस्मिन् शब्देऽनित्यत्वं गमयति। तेनैतयोर्महान्भेदः। एवमुत्तरयोरपि प्राचीनाभ्यां महान्भेदः।।१३।।**

**अयं घटः एतद्घटान्यशब्दत्वात्यन्ताभाववत्त्वरहितानित्यनिष्ठात्यन्ताभावाधिकरणं मेयत्वादिति।।१४।।**

---

जगन्निष्ठा अपरे शब्दास्तदुभयनिष्ठं यच्छब्दत्वं तदत्यन्ताभावमुपादाय इयं प्रवृत्ता सती पक्षतत्तुल्यानां मध्येऽन्यतरस्मिन्यत्र कुत्रापि शब्देऽनित्यत्वं साधयति। सप्तमी त्वेतच्छब्देति भणनात्सर्वशब्दमध्यादेकं शब्दं। **निष्कृष्येति।** पृथक्कृत्य। **एतस्मिन्निति।** विवक्षिते शब्देऽनित्यत्वं गमयतीति तेनैतयोर्महान्भेदो ज्ञातव्यः। **एवमुत्तरयोरपीति।** चतुर्दशीपञ्चदश्योर्महाविद्ययोः। प्राचीनाभ्यामिति। अष्टमीनवमीरूपाभ्यामित्यर्थः।।१३।।

**भुवन.**—अयं घट एतद्घटान्येत्यादि। एतद्घटादन्ये ये शब्दत्वात्यन्ताभाववन्तो विश्वपदार्थाः तद्वत्त्वरहितानित्यो घटो वा, शब्दो वा। तन्निष्ठा धर्मा घटत्वादयो वा शब्दत्वादयो वा। तेषामत्यन्ताभाववान्घटः साध्यते। तत्र घटत्वात्यन्ताभाववान्घट इति साधने व्याघातः। तस्माच्छब्दत्वाद्यत्यन्ता-

---

बोधित करती है। सप्तममहाविद्या एतद्घटान्योन्याभाव एतत् शब्दनिष्ठात्यन्ताभाव को लेकर प्रवृत्त है। सप्तममहाविद्या एतत् शब्दमात्र में अनित्यत्वबोधित करती है। यह शब्द सामान्य में अनित्यत्व बोधित करती है। अतः दोनो में महान् भेद है। इसी प्रकार आगे की दोनों का भेद समझना चाहिए। सपक्ष आकाशादि में अनित्यशब्द का भेद है ही। तथा एक अनित्य शब्द का दूसरे शब्द में भेद है।।१३।।

त्रयोदशमहाविद्या के साध्य से कुछ भिन्न चतुर्दश महाविद्या का साध्य है। पूर्व में एतद्घटभिन्नशब्दत्वात्यन्ताभाववत्त्वरहित अनित्य का भेद साध्य था। इसमें तादृश अनित्य वृत्तिधर्म के अत्यन्ताभाव का अधिकरणत्व साध्य है।

एतद्घटभिन्न तथा शब्दत्वात्यन्ताभाववत् एतत् घट, तथा शब्द से भिन्न सकल वस्तु है। उस वस्तु से भिन्न एतद्घट, या शब्द है। यहाँ पर भी यदि एतत् घट को लेंगे तो तद्वृत्तिघटत्वादि के अत्यन्ताभाव का अधिकरणत्व घट मे नहीं सिद्ध होगा। अतः पूर्वोक्तरहित अनित्य शब्द को

**अयं घटः एतद्घटान्यशब्दत्वात्यन्ताभाववत्त्वरहितानित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणं मेयत्वादिति।। एतद्घटान्यस्मिन् शब्दत्वात्यन्ताभाववति एतद्घटान्यशब्दत्वात्यन्ताभाववत्त्वं धर्मः। तद्रहितत्वमुपादायैतन्महाविद्यात्रयम्।।१५।।**

---

भाववान्घटः प्रसिध्यति। शब्दत्वादि चानित्यनिष्ठं तदैव स्यात्, यदि शब्दोऽनित्यः स्यादिति शब्दानित्यत्वसिद्धिः।।१४।।

**भुवन.—अयं घटः एतद्घटान्येति।** एतद्घटान्ये ये शब्दत्वात्यन्ताभाववन्तोऽत्यन्ताभाववन्तो विश्वपदार्थास्तद्वत्त्वरहिताऽनित्यः साध्यपक्षे शब्दे एव, तन्निष्ठो योऽत्यन्ताभावस्तत्प्रतियोगिनो ये घटत्वादयो धर्माः, तदधिकरणं घट इति भावार्थः एतन्महाविद्यात्रयोपयोगिनं धर्मं दर्शयति—**एतद्घटान्यस्मिन्नित्यादि।।१५।।**

---

लेगे। उसमें रहने वाले शब्दत्व के अत्यन्ताभाव का अधिकरण घट है। वह शब्दत्वधर्म अनित्य निष्ठ तभी होगा। जब शब्द अनित्य माना जाय। शेष पूर्ववत्।।१४।।

पञ्चदशमहाविद्या का साध्य पूर्वोक्त महाविद्यासाध्यों से भिन्न है। अनित्य में रहने वाले अत्यन्ताभाव के प्रतियोगी का अधिकरणत्व है। एतद्घट भिन्न शब्दत्वात्यन्ताभाववत् शब्देतर सकल होगे, उनसे भिन्न एतद्घट, तथा शब्द होगा। एतद्घट, को लेने पर व्याघात दोष है। क्योंकि घटवृत्ति अत्यन्ताभाव के प्रतियोगी का अधिकरण घट नहीं हो सकता। अतः भिन्न अनित्य शब्द को लेगे, उसमें रहने वाले घटत्वात्यन्ताभाव, के प्रतियोगी घटत्व का अधिकरण घट है। शब्द जब अनित्य रहेगा, तभी अनित्यवृत्ति अत्यन्ताभाव के प्रतियोगी का अधिकरण घट होगा। इस प्रकार शब्द अनित्य सिद्ध हुआ। सपक्ष आकाशादि भी अनित्यशब्दवृत्ति आकाशत्वाद्यत्यन्ताभाव के प्रतियोगी आकाशत्वादि के अधिकरण है ही। शब्द में साध्य सिद्ध करने के लिए पूर्वोक्त से भिन्न अनित्य एतद्घट को लेगें। उसमें रहने वाले शब्दत्वात्यन्ताभाव के प्रतियोगी शब्दत्व का अधिकरण शब्द है।।१५।।

**अयं घटः एतद्घटनिष्ठात्यन्ताभावशब्दत्वात्यन्ताभाववत्त्वरहिता-नित्यान्यः मेयत्वादिति।।१६।।**

**अयं घटः एतद्घटनिष्ठात्यन्ताभावशब्दत्वात्यन्ताभाववत्त्वरहिता-नित्यनिष्ठात्यन्ताभावाधिकरणं मेयत्वादिति।।१७।।**

**अयं घटः एतद्घटनिष्ठात्यन्ताभावशब्दत्वात्यन्ताभाववत्त्वरहिता-**

---

**भुवन.**—अयं घटः एतद्घटनिष्ठात्यन्ताभावेत्यादि। एतद्घटनिष्ठस्य अत्यन्ताभावश्च। तद्वत्त्वरहितो योऽनित्यो दृष्टान्तधर्मपक्षे एतद्घट एव। साध्यधर्मपक्षे तु शब्द एव। तस्मादन्यो घट इत्यर्थः॥१६॥

**भुवन.—अयं घटः एतद्घटनिष्ठात्यन्ताभावेत्यादि।** एतद्घटनिष्ठस्य घटत्वादेरत्यन्ताभावश्च शब्दत्वस्यात्यन्ताभावश्च। तौ विद्येते येषां ते तथा। तद्वत्त्वरहितानित्यौ एतौ द्वावेव। तन्निष्ठा ये धर्मास्तेषां योऽत्यन्ताभावस्त-दधिकरणं घटः। अत्रानित्यशब्दनिष्ठशब्दत्वात्यन्ताभाववान्घट इति परमार्थः॥१७॥

**भुवन.—अयं घटः इत्यादि।** एतद्घटनिष्ठस्यात्यन्ताभावश्च शब्दत्वा-

---

सोलहवें का साध्य पूर्वोक्तसाध्यों से भिन्न है। एतद्घटवृत्तिघटत्वादि के अत्यन्ताभाव वाले तथा शब्दत्वात्यन्ताभाव वाले घट एवं शब्देतर वस्तु से भिन्न अनित्य के भेद वाला घट है। यहाँ पर भी पूर्वोक्त से भिन्न अनित्य एतद्घट या शब्द होगा। घट को लेने पर व्याघात है। अत: घटत्वात्यन्ताभाववत् तथा शब्दात्वात्यन्ताभाववत् से भिन्न अनित्यशब्द को लेगें उसका भेद घट में है। शब्द जब अनित्य रहेगा तभी अनित्य निष्ठशब्दत्व, उसका का भेद घट में सिद्ध होगा। शेष पूर्ववत्॥१६॥

सप्तदश का साध्य षोडश के साध्य से कुछ अंशो में भिन्न है। पूर्व में घटत्वात्यन्ताभाववत् तथा शब्दत्वात्यन्ताभाववत् से भिन्न अनित्य का भेद साध्य था। सत्तरहवें में पूर्वोक्त से भिन्न अनित्यवृत्तिधर्म के अत्यन्ताभाव का अधिकरणत्व साध्य है। तादृश से भिन्न अनित्य एतद्घट या शब्द होगा। एतद्घट को लेने में व्याघात है। अत: शब्द को लेंगे शब्दवृत्ति शब्दत्व के अत्यन्ताभाव का अधिकरण घट है॥१७॥

अष्टादश का साध्य षोडश तथा सप्तदश के साध्य के सदृश होकर किञ्चित् अंश में भिन्न है। घटत्वात्यन्ताभाववत् तथा शब्दत्वात्यन्ताभाववत्

**नित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणं मेयत्वादिति।। एतद्घटनिष्ठस्य अत्यन्ताभावश्च शब्दत्वात्यन्ताभावश्च एतद्घटनिष्ठात्यन्ताभावशब्द-त्वात्यन्ताभावौ। तदुभयरहितत्वं प्रकृतमहाविद्यात्रयोपयोगि।।१८।।**

**अयं घटः एतद्घटनित्यनिष्ठत्वरहितैतच्छब्दनिष्ठाधिकरणं मेयत्वा-दिति।। एतस्मिन्घटे नित्ये च ये वर्तन्ते तेषु एतद्घटनित्यनिष्ठत्वं धर्मः।**

---

त्यन्ताभावश्च। तद्वत्त्वरहितानित्यनिष्ठश्चासौ अत्यन्ताभावश्च। तस्य प्रतियोगिनो ये घटत्वादयो धर्मास्तेषामधिकरणं घट इत्याशयः। एतन्महाविद्यात्रयसंबन्धिनं धर्ममतिदिशति—**एतद्घटनिष्ठस्यात्यन्ताभाव इत्यादि।** पाश्चात्यमहाविद्यात्रय-मेतद्घटान्योन्याभावमुपादाय प्रवृत्तम्। एतन्महाविद्यात्रयं त्वेतद्घटनिष्ठात्यन्ता-भावमुपादायेति स्फुट एव भेदः॥१८॥

**आनं.**—अधिकरणमित्युक्ते व्याप्त्यसिद्धिर्नित्येषु तदसम्भवादत उक्तम्—नित्यनिष्ठत्वरहितेति। घटान्तरप्रवृत्तिरहितेन स्वमात्रनिष्ठधर्मेणा-र्थान्तरत्वं निवर्तयति—एतदिति। एतद्घटनित्यनिष्ठत्वरहित एतदवृत्तिर्वा नित्यवृत्तिरहितो वा। आद्यः पक्षे व्याहतः, द्वितीयस्तु शब्दनिष्ठो धर्मः पक्षे सिध्यन्ननित्यत्वं शब्दस्य भावयेदिति भावः। व्याकरोति—एतद्घट इति। विशेषणकृत्यमाह—**घटत्वादिनेति।**

**भुवन.**—अथाभिनवप्रकारेण महाविद्यान्तराणि प्राह—**अयं घटः एतद्घटनित्यनिष्ठत्वेत्यादि।** एतद्घटश्च नित्याश्च एतद्घटनित्याः। तेषु निष्ठा येषां ते एतद्घटनित्यनिष्ठास्तेषां भावस्तत्त्वं। तेन रहितश्चासावेतच्छब्दनिष्ठश्च

---

से भिन्न अनित्यवृत्तिधर्म के अत्यन्ताभाव के प्रतियोगी का अधिकरणत्व साध्य है।

यहाँ पर पूर्वोक्त से भिन्न अनित्य एतद्घट या शब्द होगा। घट को लेने पर व्याघात है, अतः शब्द को लेगें शब्दवृत्ति घटत्वात्यन्ताभाव के प्रतियोगी घटत्व का अधिकरण घट है। शेष पूर्ववत्॥१८॥

उन्नीसवें का साध्य पूर्वोक्तमहाविद्याओं के साध्यों से भिन्न है। **'एतद्घटनित्यनिष्ठत्वरहितैतच्छब्दनिष्ठाधिकरणम्'** एतद्घटवृत्ति तथा नित्यवृत्ति से भिन्न शब्दवृत्तिधर्म का अधिकरण घट है। एतद्घटवृत्तिधर्म में तथा नित्यवृत्तिधर्म में एतद्घटनित्यनिष्ठत्वधर्म है। एतादृश निष्ठत्वरहित धर्म जो शब्दवृत्ति हो उसका अधिकरणत्व घट में सिद्ध करना है।

**तद्रहितश्चैतद्घटनिष्ठत्वरहितो वा, नित्यनिष्ठत्वरहितो वा। आद्यः पक्षे व्याहतः। नित्यनिष्ठत्वरहितस्तु पक्षीकृतशब्दनिष्ठस्तर्ह्येव स्याद्यदि पक्षीकृतः शब्दो नित्यो न भवेत्। पक्षीकृतशब्दनित्यत्वे तन्निष्ठस्य नित्यनिष्ठत्वेन तद्रहितत्वानुपपत्तेः। तेन नित्यनिष्ठत्वरहितः पक्षीकृतशब्दनिष्ठो घटे सिध्यन् पक्षीकृतशब्दानित्यत्वमन्तर्भाव्य सिध्यतीति। एतद्घटनित्यनिष्ठत्वरहिताधिकरणमित्युक्ते घटत्वादिना शब्दनित्यत्वेऽप्युपपद्यमानेन एतद्घटनिष्ठेन अर्थान्तरता स्यात्। तन्निवृत्यर्थमेतच्छब्दनिष्ठग्रहणम्। एतच्छब्दनिष्ठाधिकरणमित्युक्ते शब्दनित्यत्वेऽप्युपपद्य-**

---

तस्याधिकरणं घट इत्यर्थः। अत्र साध्यो धर्मो विश्वप्रतियोगिको घटशब्दान्योन्याभावः। दृष्टान्तधर्मस्तु पक्षान्योन्याभावः सर्वत्र द्रष्टव्यः। अथैतां महाविद्यां व्याचरीकरोति—**एतस्मिन्नित्यादि**। अथान्त्यविशेषणं विमुच्य व्यावृत्तिचिन्तां करोति—**एतद्घटनित्यनिष्ठत्वरहितेत्यादि। घटत्वादिनेति।** घटत्वादिना यथोक्त-युगलावृत्तित्वान्नित्येष्ववर्तमानेन घटे च वर्तमानेन शब्दस्य नित्यत्वेऽपि साध्ये उपपद्यमानेनार्थान्तरता स्यात्। तन्निवृत्यर्थमेतच्छब्दनिष्ठेति पदग्रहणम्। अथाद्यविशेषणं परित्यज्य व्यावृत्तिं चिन्तयति—**एतच्छब्दनिष्ठेत्यादि।** एवमपि मेयत्वादिभिरेतच्छब्दघटनिष्ठैः शब्दनित्यत्वरूपार्थान्तरता तथाविधैवेति

---

एतद्घट में रहने वाले तथा नित्यों में रहने वाले धर्मो में एतद्घटनित्यनिष्ठत्व धर्म है। एतादृशनिष्ठत्वरहित शब्दवृत्तिधर्म एतद्घट निष्ठत्व रहित यदि लेगें उसका अधिकरण घट को कहें तो व्याघात दोष होगा। अतः अनित्यनिष्ठत्वरहित शब्दवृत्ति को लेगें। वह धर्म होगा नित्यान्यत्व (नित्य भेद) उसका अधिकरण घट है।

नित्यनिष्ठत्वरहित धर्म शब्दवृत्ति तभी होगा, जब शब्द नित्य नहीं होगा। पक्षीकृत शब्द यदि नित्य रहेगा तो उसका धर्म नित्यनिष्ठ होने से उसमें अनित्यनिष्ठत्व अनुपन्न होगा। इस प्रकार नित्यनिष्ठत्वरहित होता हुआ शब्दवृत्तिधर्म नित्यान्यत्व घट में सिद्ध होता हुआ, शब्द में अनित्यत्व का अन्तर्भाव कर के सिद्ध होगा।

अब साध्य के घटकपदों का फल विचार करते हैं। यदि शब्दनिष्ठ अंश को न रखवें, एतद्घटनित्यनिष्ठत्वरहिताधिकरणम् कहे तो ऐसा धर्म घटत्व भी होगा। घटत्वधर्म घटवृत्ति होते हुए भी नित्यवृत्ति न होने के कारण उभयावृत्ति है। यानी एतद्घट नित्यवृत्तित्वरहित है। उसका अधिकरण घट

**मानैर्मेयत्वादिभिरेतद्घटनिष्ठैरर्थान्तरता स्यात्। तन्निवृत्त्यर्थमेतद्घटनित्य-निष्ठत्वरहितग्रहणम्। नित्यनिष्ठत्वरहितैतच्छब्दनिष्ठाधिकरणमित्युक्ते नित्य-पदार्थेषु साध्याभावः। तन्निवृत्त्यर्थमेतद्घटग्रहणम्। यद्यपि नित्यपदार्थेषु नित्यवृत्तित्वरहितो नास्ति, तथाप्येतद्घटनित्यनिष्ठत्वरहितः एतद्घटा-न्योन्याभावः एतच्छब्दनिष्ठोऽस्त्येवेति नित्यपदार्थेषु साध्यानुगम-सिद्धिः।।१९।।**

---

तन्निवृत्त्यर्थमेतद्घटनित्यनिष्ठेत्यादिपदोपादानम्। **यद्यपि नित्यपदार्थेषु नित्य-वृत्तित्वेत्यादि।** यद्यपि दृष्टान्तीक्रियमाणेषु नित्येषु पक्षान्योन्याभावादिर्यो धर्मो विचार्यते स नित्यवृत्तित्वरहितो न स्यात्, तथाप्येतद्घटनित्यरूपयुगला-वृत्तित्वेनैतद्घटनित्यवृत्तित्वरहितो भवत्येव। स च पक्षीकृतघटादन्यत्र सर्वत्र वर्तमानत्वेनैतच्छब्दनिष्ठोऽस्त्येवेति तेन पक्षान्यत्वादिना धर्मेण नित्येषु साध्यानुगमो द्रष्टव्यः। घटान्तरवृत्तित्वरहितेन पक्षीकृतघटैतच्छब्दमात्रनिष्ठधर्मेण अर्थान्तरत्वनिवर्तनायैतदिति पदं द्रष्टव्यम। एतद्घटनित्यनिष्ठत्वरहितः एतद्घटावृत्तिर्वा, नित्यवृत्तित्वरहितो वा। आद्यः पक्षे व्याहतः। द्वितीयस्तु पूर्वोक्तः शब्दनिष्ठो धर्मः पक्षे सिध्यन्ननित्यत्वं शब्दस्य साधयेदिति भावः।।१९।।

---

शब्द के नित्य होने पर भी सिद्ध है। अतः अर्थान्तरता दोष होगा। उसकी निवृत्ति के लिए एतच्छब्दनिष्ठ कहा घटत्वधर्म शब्दवृत्ति नहीं है। यदि विशेष्यांश एतच्छब्दनिष्ठाधिकरणं घटः कहे तो घटवृत्तिधर्म मेयत्व आदि को लेकर अर्थान्तरता होगी। शब्द के नित्य रहने पर भी शब्दनिष्ठमेयत्व आदि का अधिकरण घट हो सकता है। जब एतद्घट नित्यनिष्ठत्व रहित शब्दनिष्ठधर्म को लेगें तो मेयत्वादिधर्म एतद्घटनित्यनिष्ठत्व रहित नहीं होगे। मेयत्वधर्म एतद्घट तथा नित्यनिष्ठ भी है।

नित्यनिष्ठत्व एतच्छब्दनिष्ठाधिकरण कहेंगे तो घट में साध्य सिद्धि हो जायेगा; परन्तु नित्यों में नित्यनिष्ठत्वरहितधर्म नहीं सिद्ध हो सकेगा। अतः एतद्घट पद दिया। यद्यपि नित्यपदार्थों में नित्यवृत्तित्वरहित धर्म नहीं है। तथापि एतद्घट नित्यनिष्ठत्वरहित एतद्घटान्योन्याभाव एतच्छब्दवृत्ति होता हुआ नित्यों में भी है। घटान्योन्याभाव (घटभेद) नित्यनिष्ठ होते हुए भी एतद्घटवृत्ति न होने के कारण युगलावृत्ति (एतद्घटनित्यनिष्ठत्वरहित) है। तथा एतत् शब्द में विद्यमान है। उसका अधिकरण नित्य है।।१९।।

**अयं घटः शब्देतरानित्यनित्यवृत्तित्वरहितैतच्छब्दनिष्ठाधिकरणं मेयत्वादिति।। पूर्वमहाविद्यायामेतद्घटग्रहणस्य यत्प्रयोजनं तदेवात्र शब्देतरा नित्यग्रहणस्य। शेषं पूर्ववत्।।२०।।**

---

**आनं.**—**शब्देतरेति**। शब्दादितरस्मिन्ननित्ये च ये वर्तन्ते तेषु शब्देतरा-नित्यवृत्तित्वं धर्मः, तद्रहितश्चासावेतच्छब्दनिष्ठश्च तस्याधिकरणमित्यर्थः। एतच्छब्दनिष्ठाधिकरणमित्युक्ते मेयत्वादिनार्थान्तरमत आह—**नित्येति**। नित्य-वृत्तित्वरहितैतच्छब्दनिष्ठाधिकरणमित्युक्ते नित्येषु साध्यासिद्धिरत उक्तम्—**अनित्यनित्यवृत्तित्वरहितेति**। यद्यपि नित्यनिष्ठेषु नित्यवृत्तित्वराहित्यं नास्ति, तथाप्यनित्यवृत्तित्वे सति नित्यवृत्तित्वं नास्त्येव। अनित्यनित्यवृत्तित्व-रहिताधिकरणमित्युक्ते घटत्वेन अर्थान्तरत्वमत आह—**एतच्छब्दनिष्ठेति**। अनित्यवृत्तित्वरहितैतच्छब्दनिष्ठाधिकरणमित्युक्तेऽप्रसिद्धविशेषणत्वम्। न हि शब्दस्यानित्यत्वसिद्धेः प्रागनित्यनित्यवृत्तित्वरहितः शब्दनिष्ठः सिध्यतीत्यत उक्तम्—**शब्देतरेति**। शब्देतरानित्यनित्यवृत्तित्वरहितैतच्छब्दनिष्ठत्वशब्देतर-नित्यान्यत्वमनित्येषु, नित्येषु च शब्देतरानित्यान्यत्वमिति व्याप्तिसिद्धिः। शब्देतरानित्यनित्यवृत्तित्वरहितश्च नित्यमात्रवृत्तिर्वाऽनित्यमात्रवृत्तिर्वा। आद्यः पक्षे व्याहतः। द्वितीयस्तु शब्दनिष्ठः पक्षे सिध्यन्ननित्यत्वं शब्दस्य गमयतीत्यर्थः।

**भुवन.**—अयं घटः शब्देतरानित्येत्यादि। शब्दादितरे च ते अनित्याश्च शब्देतरानित्याः, शब्देतरानित्याश्च ते नित्याश्च शब्देतरानित्यनित्याः। तद्वृत्तिषु शब्देतरानित्यनित्यवृत्तित्वं धर्मः। तद्रहितश्चासौ एतच्छब्दनिष्ठश्च। तस्याधिकरणं घट इत्यर्थः। एवंविधश्च साध्यधर्मोऽत्र विश्वप्रतियोगिकघटशब्दान्योन्या-भावादिः। स च यदि शब्दो नित्योऽङ्गीक्रियते, तदा नित्ये शब्दे शब्देतरानित्ये च घटे वर्तनाच्छब्देतरानित्यनित्यवृत्तित्वरहितो न भवति। तस्माच्छब्दस्यानित्य-

---

शब्देतर अनित्यनित्यवृत्ति धर्म रहित एतच्छब्दवृत्तिधर्म का अधिकरण घट है। शब्दभिन्न अनित्यनित्यधर्मों में शब्देतरानित्यनित्यवृत्तित्वधर्म है। उससे रहित धर्म जो शब्दवृत्ति हो ऐसा धर्म होगा। अनित्यप्रतियोगिक एवं नित्यप्रतियोगिक भेद वह शब्दवृत्ति भी है। तथा घटवृत्ति भी है। उभयवृत्तिरहितधर्म साध्य है। यदि शब्द को नित्य मानेगे तो शब्दवृत्तिधर्म उक्तभेद नित्यवृत्ति ही होगा। तथा शब्देतर अनित्यघटवृत्ति भी होगा। नित्यशब्दवृत्ति होते हुए अनित्यघटवृत्ति भी हो गया उभयावृत्तिरहित नहीं होगा। जब शब्द स्वयं अनित्य होगा, तब शब्दवृत्ति अनित्यनित्य-

**अयं घटः शब्देतरानित्यनिष्ठशब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितानित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणं मेयत्वदिति। ये शब्दे-**

---

त्वमङ्गीकार्यम्। अत्र नित्यपदार्थेषु दृष्टान्तेषु शब्दनित्यान्यतरत्वादिर्वा शब्देतरानित्यान्यत्वादिर्वा धर्मो द्रष्टव्यः। अनित्यनित्यवृत्तित्वरहितैतच्छब्दनिष्ठाधिकरणमित्युक्ते वादिनः अप्रसिद्धविशेषणत्वम्। गगनादौ सपक्षेऽनित्यनित्यवृत्तित्वरहितस्य शब्दनिष्ठस्य च शब्दगगनान्यतरत्वादेर्धर्मस्य वादिनः क्वाप्यप्रसिद्धेः। तदर्थं शब्देतरेतिपदग्रहणम्। शब्देतरानित्यपदं तु वादिप्रतिवादिनोरुभयोरप्यप्रसिद्धविशेषणतापरिहारद्वारेण पूर्वानुमाने एतद्घटपदवन्नित्येषु साध्यसिद्ध्यर्थमुपात्तं। तथैव चाह—**पूर्वमहाविद्यायामेतद्घटेत्यादि**।।२०।।

**आनं.—शब्देतरानित्यनिष्ठेति।** शब्देतरानित्यनिष्ठश्चासावत्यन्ताभावश्च शब्देतरानित्यनिष्ठात्यन्ताभावः, तत्प्रतियोगित्वरहितः शब्देतरानित्यनिष्ठश्चासौ शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितश्च, स चायमनित्यनिष्ठात्यन्ताभावस्य प्रतियोगी, तस्याधिकरणमित्यर्थः। अधिकरणमित्युक्ते वाच्यत्वेनार्थान्तरं वारयति—**अत्यन्ताभावप्रतियोगीति।** अत्यन्ताभावप्रतियोग्य-

---

प्रतियोगिकभेद शब्देतर अनित्यवृत्तिरहित तथा नित्यवृत्ति रहित भी होगा। ऐसे शब्देतरानित्यवृत्तित्वरहित तथा नित्यवृत्तित्वरहित शब्दवृत्तिधर्म शब्देतरानित्यत्वान्यत्व नित्यत्वान्यत्व का अधिकरण घट होगा।

सपक्ष अनित्यों में शब्देतरानित्यनित्यवृत्तित्वरहित एतत्शब्दनिष्ठधर्म शब्देतरनित्यान्यत्व है। नित्यों में शब्देतरानित्यान्यत्व है। शब्देतरानित्यनित्यवृत्तित्वरहित धर्म नित्यमात्रवृत्ति होगा। या अनित्यमात्रवृत्ति होगा। प्रथमपक्ष में व्याघात है। द्वितीय पक्ष अनित्यमात्रवृत्तिधर्म शब्दवृत्ति होकर पक्ष में सिद्ध होता हुआ शब्द में अनित्यत्व का बोधक है। यदि शब्देतर को साध्यघटक नहीं रखेंगे तो शब्दनिष्ठधर्म शब्दगगनान्यतरत्व की सपक्ष गगनादि में अप्रसिद्ध होने से वादी अप्रसिद्ध विशेषणतादोष दे सकता है। शब्देतरानित्य उभयवादी मत सिद्ध है। पूर्व महाविद्या में जो प्रयोजन एतद्घट पद का है। वही प्रयोजन यहाँ पर शब्देतरानित्यपद का है। शेष पूर्ववत्।।२०।।

ईक्कीसवें महाविद्या का साध्य पूर्वोक्त साध्यों से पूर्णतया भिन्न है। **'शब्देरानित्यनिष्ठशब्देरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितानित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणं'** घटः 'शब्देतर अनित्य में रहने वाले तथा

**तरानित्यनिष्ठाः शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगिनश्च तेषु शब्देतरानित्यनिष्ठत्वे सति शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वं धर्मः। तद्रहितश्चासौ अनित्यनिष्ठात्यन्ताभावप्रतियोगी च, तदधिकरणं तदाश्रय इत्यर्थः। उभयत्र अनित्यनिष्ठश्चासौ अत्यन्ताभावश्चेति समासः। अनित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणमित्युक्ते स्तम्भाद्यनित्यनिष्ठात्यन्ताभावप्रतियोगिभिर्घटत्वादिभिरेतद्घटनिष्ठैः प्रकृतशब्दनित्यत्वेऽप्युपपद्यमाने-**

---

धिकरणमित्युक्ते नित्यनिष्ठात्यन्ताभावस्य प्रतियोगिकार्यत्वेन अर्थान्तरमत उक्तम्—**अनित्यनिष्ठात्यन्ताभावेति।** अनिनिष्ठात्यन्ताभावस्य प्रतियोगिकार्यत्वेन अर्थान्तरमत उक्तम्—**अनित्यनिष्ठात्यन्ताभावेति।** अनित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणमित्युक्ते स्तम्भनिष्ठात्यन्ताभावप्रतियोगिघटत्वेन अर्थान्तरमत उक्तम्—**नित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितेति।** अनित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितानित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणमित्युक्ते व्याघातोऽत उक्तम्—**शब्देतरेति।** शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितानित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणमित्युक्ते व्याप्त्यसिद्धिः। नित्यमात्रनिष्ठानां शब्देतरानित्यनिष्ठात्यन्तभावप्रतियोगित्वेन तद्रहितत्वाभावात्, अत उक्तम्—**अनित्यनिष्ठेति।** अनित्यनिष्ठत्वे सति यच्छब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वं तन्नित्यमात्रनिष्ठं धर्मेषु नास्तीति साध्यसिद्धिः। नित्येष्वनित्येष्वपि स्तम्भत्वकुम्भत्वादीनां स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वरहितत्वात्कार्यान्तरनिष्ठात्यन्ताभावप्रतियोगित्वात्साध्यसिद्धिः। अनित्यनिष्ठशब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितानित्यनिष्ठात्यन्ताभावप्रतियोग्य-

---

शब्देतर अनित्यवृत्ति अत्यन्ताभाव के प्रतियोगित्व से रहित अनित्य में रहने वाले अत्यन्ताभाव के प्रतियोगी का अधिकरणत्व घट में साध्य है।

शब्देतर अनित्यवृत्ति जो शब्देतरानित्यनिष्ठान्यन्ताभाव, उसके प्रतियोगी में शब्देतरवृत्तित्वविशिष्ट शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वधर्म है। उस धर्म से भिन्न जो अनित्यनिष्ठात्यन्ताभाव का प्रतियोगी घटत्व उसका अधिकरण घट है।

यहाँ पर शब्देतरानित्यनिष्ठ दो बार पठित है। प्रथम अत्यन्ताभाव के प्रतियोगिधर्म का विशेषण है। द्वितीय अत्यन्ताभाव का विशेषण है। घट उस अनित्यनिष्ठात्यन्ताभाव के प्रतियोगी का अधिकरण है। जो शब्द से भिन्न अनित्य में रहने वाले तथा शब्देतर अनित्यवृत्ति अत्यन्ताभाव के प्रतियोगिधर्म

**रर्थान्तरता स्यात्। तन्निवृत्यर्थं शब्देतरानित्यनिष्ठशब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितग्रहणम्। शब्देतरानित्यनिष्ठशब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहिताधिकरणमित्युक्ते मेयत्वादिभिरेतद्घटनिष्ठैः प्रकृत-**

---

धिकरणमित्युक्तेऽपि प्रकारान्तरेण व्याप्तिभङ्गः। शब्दानित्यत्वसिद्धेः पूर्वं शब्दमात्रनिष्ठानामनित्यनिष्ठत्वासिद्धेः, शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितत्वासिद्धेश्च। तत उक्तं **शब्देतरानित्यनिष्ठेति।** शब्दमात्रधर्मस्य शब्देतरानित्यनिष्ठत्वे सति यच्छब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वं तन्नास्तीति साध्यानुगमः। घटे च शब्देतरानित्यनिष्ठशब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितः सिध्यन्ननित्यनिष्ठत्वरहितो न सिध्यति। तेन शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितः सिध्येत्। स चानित्यनिष्ठात्यन्ताभावप्रतियोगी सिध्यन्ननित्यत्वं शब्दस्य गमयति। शब्देतरानित्यमात्रनिष्ठस्य तन्मात्रनिष्ठात्यन्ताभावप्रतियोगित्वादिति भावः। व्याचष्टे—**ये शब्देतरेति।** कृत्यमाह अनित्यनिष्ठेति।

**भुवन.—अयं घटः शब्देतरानित्यनिष्ठेत्यादि।** शब्दादितरे येऽनित्याः शब्देतरानित्याः, शब्देतरानित्येषु निष्ठा येषां ते शब्देतरानित्यनिष्ठाः। शब्दादितरे येऽनित्यास्तनिष्ठश्चासौ अत्यन्ताभावश्च शब्देतरानित्यनिष्ठात्यन्ताभावः। तस्य प्रतियोगिनः शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगिनः। शब्देतरानित्यनिष्ठाश्च ते शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगिनश्च। एवंविधाश्च धर्मा एकैकानित्यनिष्ठाः परस्परं सर्वेऽपि पटत्वस्तम्भत्वादयो ज्ञेयाः। तेषां भावस्तत्त्वं तेन रहिताः। शब्दत्वाकाशत्वादयः परस्परत्वविवक्षारहिता घटत्वादयोऽपि च। **अनित्यनिष्ठात्यन्ताभावेति।** अनित्यनिष्ठश्चासौ अत्यन्ता-

---

से रहित है। शब्देतर अनित्यपटनिष्ठ शब्देतर अनित्यस्तम्भनिष्ठपटत्वात्यन्ताभाव के प्रतियोगी पटत्व रहितानित्यनिष्ठ घटत्वात्यन्ताभावप्रतियोगी घटत्व का अधिकरण घट है।

साध्यघटकपदों में अधिकरणम् यह विशेष्य है। उसका मुख्य विशेषण अत्यन्ताभावप्रतियोगी है, उसका विशेषण है, अनित्यनिष्ठ इस प्रकार अनित्यनिष्ठघटत्वात्यन्ताभाव के प्रतियोगी घटत्व का अधिकरण घट है। परन्तु ऐसा साध्य रखने पर शब्द में अनित्यत्व नहीं सिद्ध होगा। क्योंकि अनित्यस्तम्भनिष्ठघटत्वात्यन्ताभाव के प्रतियोगी घटत्व का अधिकरण घट

**शब्दनित्यत्वेऽप्युपपद्यमानैरर्थान्तरता स्यात्। तन्निवृत्त्यर्थमनित्यनिष्ठात्यन्ताभावप्रतियोगिग्रहणम्।**

---

भावश्च, तस्य प्रतियोगिनः अनित्यनिष्ठात्यन्ताभावप्रतियोगिनः। शब्देतरानित्यनिष्ठशब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितश्चासौ अनित्यनिष्ठात्यन्ताभावप्रतियोगी च तस्याश्रयो घट इति विग्रहः। अत्र प्रथमविशेषणविचारणायामाकाशत्वशब्दत्वस्तम्भत्वमेयत्वादयः उपपद्यन्ते। तत्राकाशत्वादयो यद्यपि शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहिता न सन्ति, तथापि शब्देतरानित्यनिष्ठत्वे सति यच्छब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वं तत्त्वरहिता एवेति। ये च शब्दत्वादयस्तेऽपि च यद्यपि शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहिता न सन्ति, तथापि शब्देतरानित्यनिष्ठत्वे सति यच्छब्देतरानित्यनित्यनिष्ठात्यन्ताभावप्रतियोगित्वं तत्त्वरहिता एव।

ये च घटत्वस्तम्भत्वादयस्तेऽपि यद्यपि शब्देतरानित्यनिष्ठाः सन्ति, तथापि शब्देतरानित्यनिष्ठत्वे सति यच्छब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वं तत्त्वरहिता एव। मेयत्वादयोऽपि शब्देतरानित्यनिष्ठत्वे सति यच्छब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वं तत्त्वरहिता एवेति। द्वितीयविशेषणस्यायमर्थः। अनित्यशब्दनिष्ठो योऽत्यन्ताभावस्तस्य प्रतियोगी पूर्वविशेषणविशिष्टश्च यो घटत्वादिर्धर्मस्तदाधारो घट इत्यर्थः। पूर्वविशेषणविशिष्टमपि घटत्वमनित्यनिष्ठात्यन्ताभावप्रतियोगि तदैव स्यात्, यदि शब्दोऽनित्यः स्यात्। गगनादीनां नित्यत्वेनोभयसंमतत्वात्। शब्देतरानित्यपटादिनिष्ठात्यन्ताभावप्रतियोगित्वे च घटत्वादिधर्मस्य शब्देतरानित्यनिष्ठत्वे सति शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वेन तद्रहितत्वानुपपत्तेः, शब्दस्य चेतरशब्देन पृथक्कृतत्वात्पारि-

---

शब्द के नित्य रहने पर भी सिद्ध है। अतः प्रतियोगी को विशिष्टप्रतियोगित्वरहितत्व से विशेषित किया। उक्त प्रतियोगित्व के विशेषण दो है, शब्देतरनित्यनिष्ठत्व तथा शब्देतरानित्यनिष्ठात्यन्ताभाव है।

यहाँ पर यदि प्रथमविशेषण शब्देतरनित्यनिष्ठ को नहीं रख्खें तो आकाशादिनित्यों में साध्य सिद्ध नहीं होगा। आकाशत्वादि धर्म यद्यपि शब्देतरानित्य (स्तम्भादि) तन्निष्ठात्यन्ताभाव आकाशत्वात्यन्ताभाव उसके प्रतियोगित्व से रहित नहीं हैं। तथापि शब्देतरानित्यनिष्ठत्वविशिष्ट जो शब्देतरानित्यनिष्ठात्यन्ताभाव प्रतियोगित्व उससे रहित हैं ही। शब्दत्वादिधर्म यद्यपि शब्देतरानित्यनिष्ठात्यन्ताभाव के प्रतियोगित्व से रहित नहीं हैं। तथापि

**शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितानित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणमित्युक्तेऽप्रसिद्धविशेषणत्वम्। नित्यमात्रनिष्ठानां धर्माणां**

---

शेष्यादनित्यः शब्द एव स्यादिति भावः। आकाशत्वशब्दत्वादयो घटे व्याघातादेव साधयितुं न शक्यन्ते। प्रमेयत्वादीनां चात्यन्ताभावप्रतियोगित्वमेवाघटमानकं, तेषां सर्वपदार्थनिष्ठत्वात्। कुतस्तरामनित्यनिष्ठात्यन्ताभावप्रतियोगित्वमिति। तस्मात्तेषां घटमध्ये साधने निषेधः प्रकट एव। अथाद्यविशेषणं परित्यज्य व्यावृत्तिचिन्तां करोति। **अनित्यनिष्ठात्यन्ताभावेत्यादि।** एवं च क्रियमाणे घटत्वादिभिः शब्दस्य नित्यत्वरूपार्थान्तरता स्यात्। तन्निवृत्त्यर्थं शब्देतरानित्येत्यादि।

अयमाशयः। यद्यप्यनेन पूर्वविशेषणेनापि च घटत्वादय एवायान्ति, तथाप्युत्तरं विशेषणं यदि पूर्वविशेषणेन सह विचार्यते तदा शब्दस्यानित्यत्वमेव सिध्यति, न तु नित्यत्वम्। अथ द्वितीयविशेषणसाफल्यमाह— **शब्देतरानित्यनिष्ठेत्यादि।** एवमप्युक्ते मेयत्वादिभिः शब्दस्य नित्यत्वरूपार्थान्तरता तथैवेति तद्व्यवच्छेदाय अनित्यनिष्ठात्यन्ताभावेत्यादि। मेयत्वादीनां सकलवस्तुनिष्ठत्वेन अत्यन्ताभावप्रतियोगित्वस्यैवानुपपत्तेरनित्यनिष्ठात्यन्ताभावप्रतियोगित्वस्य सुतरामभावात्। अनित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितानित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणमित्युक्ते च स्पष्ट एव व्याघातः स्यात्। अतः शब्देतरेति पदं ज्ञेयम्।

**आनं.**—नित्यपदार्थेषु साध्यसिद्धिमुपपादयति—**नित्यमात्रेति।** शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगी नित्येषु नास्तीत्यर्थः। **एवमिति।** शब्दमात्रनिष्ठानां शब्देतरानित्यनिष्ठत्वं नास्ति, तथा शब्देऽनित्यमात्रे च

---

शब्देतरानित्यनिष्ठत्वविशिष्ट जो शब्देतरानित्यनिष्ठात्यन्ताभाव उसके प्रतियोगित्व से रहित ही हैं। तथा शब्देतरानित्यनित्यनिष्ठात्यन्ताभाव के प्रतियोगित्व से रहित हैं ही। घटत्वस्तम्भत्वादि यद्यपि शब्देतरानित्यनिष्ठ ही हैं, तथापि शब्देतरानित्यनिष्ठत्वविशिष्ट शब्देतरानित्यनिष्ठ अत्यन्ताभाव के प्रतियोगित्वरहित ही हैं। इसी प्रकार मेयत्व धर्म भी शब्देतरानित्यनिष्ठत्वविशिष्ट शब्देतरानित्यनिष्ठ अत्यन्ताभाव के प्रतियोगित्वरहित है। इस प्रकार पूर्वविशेषण विशिष्ट घटत्व अनित्यनिष्ठ अत्यन्ताभाव का प्रतियोगी तभी होगा। जब शब्द अनित्य होगा।

पुनः प्रथम शब्देतरानित्यनिष्ठरूप विशेषण का फल बता रहे है। यदि शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितानित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणम्

**शब्देतरानित्यनिष्ठात्यन्ताभवप्रतियोगित्वेन तद्रहितत्वानुपपत्तेः। एवं शब्द-मात्रनिष्ठानां शब्दनित्यमात्रनिष्ठानां च। एतद्घटव्यतिरिक्तशब्देतरानित्याश्च पक्षतुल्या इति न तन्मात्रनिष्ठेषु साध्यप्रसिद्धिः। अतोऽप्रसिद्ध-विशेषणतानिरासार्थं शब्देतरानित्यनिष्ठग्रहणम्। यद्यपि नित्यमात्रनिष्ठा धर्माः शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगिनः, तथापि शब्देतरानित्य-निष्ठत्वे सति यत् शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वं, तद्रहिता एवेति नित्यमात्रनिष्ठेषु साध्यप्रसिद्धिः। एवं शब्दत्वादिष्वपि शब्देतरानित्य-निष्ठशब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितः शब्देतरानित्यनिष्ठ-रहितो वा स्यात्, शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितो वा।**

---

निष्ठानामपि तन्नास्तीत्यर्थः। शब्देतरानित्यनिष्ठधर्माणामनित्यनिष्ठात्यन्ता-भावप्रतियोगित्वं शब्दानित्यत्वसिद्धेः प्रागदुरधिगममित्याह—**एतद्घटव्यति-रिक्तेति।** नित्यमात्रनिष्ठानामनित्यनिष्ठात्यन्ताभावप्रतियोगित्वाच्छब्देतरानित्य-निष्ठग्रहणेऽपि न साध्यसिद्धिरत्राह **यद्यपीति।** कथं शब्दतदितरनित्येषु साध्यसिद्धिरत्राह—**एवमिति।** शब्दत्वादिषु शब्दमात्रधर्मेषु शब्देतरानित्य-निष्ठत्वाभावाच्छब्दे साध्यासिद्धिः। शब्देतरानित्यानां पक्षतुल्यत्वात्तत्र संदेहो न दोषः इत्यर्थः। घटस्यैवंभूतधर्माधिकरणत्वेऽपि कथं शब्दानित्यत्वमत्राह—**शब्देतरेति।** शब्देतरानित्यनिष्ठत्वरहितोऽपि तन्नित्यत्वे सति तन्निष्ठात्यन्ता-भावप्रतियोगित्वरहितो भवतीत्यर्थः। शब्देतरानित्यनिष्ठात्यन्ताभावप्रति-योगित्वरहितसिद्धावपि कथं विवक्षितसिद्धिरत्राह—**द्वितीयस्येति।** आकाशादि निष्ठात्यन्ताभावप्रतियोगित्वेन किं न स्यादत्राह—**गगनादीनामिति।** स्तम्भादि-निष्ठात्यन्ताभावप्रतियोगित्वेन तथात्वं स्यादत्राह—**शब्देति।** शब्देतरानित्य-

---

कहे तो नित्यमात्रवृत्तिधर्म शब्देतरानित्यनिष्ठात्यन्ताभाव के प्रतियोगी होने के कारण प्रतियोगित्वरहित नहीं होंगे। इस प्रकार शब्दमात्रवृत्तिधर्म, तथा शब्द एवं नित्य मात्रवृत्तिधर्म भी प्रतियोगित्व रहित नहीं होंगे। अतः प्रतियोगी का विशेषण शब्देतरानित्यनिष्ठत्व बनाया।

शब्देतरानित्यनिष्ठत्वविशिष्ट तादृश अत्यन्ताभावप्रतियोगित्व रहित है ही। घटातिरिक्त शब्देतर अनित्यपदार्थ पक्षतुल्य हैं। अतः उनमें साध्यप्रसिद्धि न होना दोष नहीं है। इसी लिए अप्रसिद्धविशेषणता दोष परिहार के लिए शब्देतरानित्यनिष्ठ पद दिया है। एवं यदि शब्देतर को प्रथम अनित्यनिष्ठ तथा द्वितीय अनित्यनिष्ठ का विशेषण न बनाया जाय तो अनित्यनिष्ठ एवं

**आद्यः पक्षे व्याहतः। द्वितीयस्य तु अनित्यनिष्ठात्यन्ताभावप्रतियोगित्वं तर्ह्येव स्यात्, यद्यनित्यः शब्दः स्यात्। गगनादीनां नित्यत्वात्। शब्देतरानित्यमात्रवृत्तेश्च शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वानुपपत्तेश्च। तेन शब्दानित्यत्वसिद्धिः।।२१।।**

---

निष्ठत्वरहितोऽपि तन्नित्यत्वे सति तन्निष्ठात्यन्ताभावप्रतियोगित्वरहितो भवतीत्यर्थः। शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितसिद्धावपि कथं विवक्षितसिद्धिरत्राह—**द्वितीयस्येति।** आकाशादिनिष्ठात्यन्ताभावप्रतियोगित्वेन किं न स्यादत्राह—**गगनादीनामिति।** स्तम्भादिनिष्ठात्यन्ताभावप्रतियोगित्वेन तथात्वं स्यादत्राह—**शब्देति।** शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्व-रहितस्य तद्वत्त्वं व्याहतमित्यर्थः। परिशेषसिद्धमाह—**तेनेति।**

**भुवन.**—अथाद्यं शब्देतरानित्यनिष्ठेतिपदं मुक्त्वा व्यावृत्तिं करोति—**शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वेत्यादि।** इत्युक्ते अप्रसिद्ध-विशेषणत्वमाह—**अप्रसिद्धविशेषणत्वमिति।** अस्मिन्विशेषणद्वये विचार्यमाणे एवंविधधर्माणां सपक्षे अनुपपद्यमानत्वमित्यर्थः। कथमप्रसिद्धविशेषणत्व-मित्याह—**नित्यमात्रनिष्ठधर्माणामित्यादि।** नित्यत्वाकाशत्वादयो धर्मा नित्य-मात्रनिष्ठास्तेषामित्यर्थः। **एवं शब्दमात्रनिष्ठानामिति।** शब्दमात्रनिष्ठाः शब्दत्वश्रावणत्वादयो धर्मास्तेषाम्। **शब्दनित्यमात्रनिष्ठानां चेति।** शब्दनित्य-मात्रनिष्ठा धर्माः शब्देतरानित्यान्यत्वादयः। तेषामपि च शब्देतरानित्य-निष्ठात्यन्ताभावप्रतियोगित्वेन तद्रहितत्वानुपपत्तेरिति पूर्वेण सम्बन्धः। तर्ह्येतद्घटव्यतिरिक्तशब्देतरानित्येषु दृष्टान्तीक्रियमाणेषु साध्यप्रसिद्धिः कथं भविष्यतीत्याशङ्क्याह—**एतद्घटव्यतिरिक्तेत्यादि।** एतद्घटः पक्षीकृतो घटः, शब्देतरेति पदेन वर्जितत्वान्मूलानुमानपक्षश्च शब्दः, तौ मुक्त्वा अपरे ये भावा अनित्याः पटादयस्ते सर्वेऽपि पक्षतुल्याः। यथा पक्षः सन्दिग्धसाध्यः, तथा

---

अनित्यनिष्ठात्यन्ताभाव के प्रतियोगित्वरहित तथा अनित्यनिष्ठात्यन्ताभाव प्रतियोगी का अधिकरण साध्य होगा। जो व्याघातदोषग्रस्त है। जो अनित्यनिष्ठ अत्यन्ताभाव के प्रतियोगित्वरहित है। वह अनित्यनिष्ठ अत्यन्ताभाव का प्रतियोगी कैसे होगा।

एवं शब्दत्वादिधर्मों में शब्देतरानित्यनिष्ठशब्देतरानित्यनिष्ठात्यन्ता-भावप्रतियोगित्वरहित धर्म, या तो शब्देतरानित्यनिष्ठत्वरहित होगा, या तो

तेऽपि सन्दिग्धसाध्या इत्यर्थः। **इति न तन्मात्रनिष्ठेष्विति।** एतद्घट-शब्दव्यतिरिक्तानित्यमात्रेषु पूर्वोक्तविशेषणोपपन्नानां धर्माणामसंभवेन न साध्यप्रसिद्धिरन्वेषणीया। अतोऽप्रसिद्धविशेषणत्वव्यवच्छेदाय शब्देतरानित्य-निष्ठपदोपादानम्।

यद्यपि शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितेति विशेषणेन केवलेन आकाशत्वादयो धर्मा नोपपद्यन्ते, तथापि शब्देतरानित्यनिष्ठपदे प्रक्षिप्ते एतद्विशेषणद्वययोगे उपपद्यन्ते एव। तथैव चाह—**यद्यपि नित्यमात्रनिष्ठा धर्मा इत्यादि।** एवं च नित्यमात्रनिष्ठाकाशत्वादिना शब्दमात्रनिष्ठशब्दत्वादिना च साध्यप्रसिद्धौ सिद्धायामाकाशादयः शब्दश्चात्र दृष्टान्तीकार्याः। एवं च मूलानुमानपक्षं शब्दमेव पक्षीकृत्य प्रवृत्ता महाविद्याः परित्यज्य अन्यासु सर्वास्वपि शब्दोऽपि यथायोगं दृष्टान्तीकार्यः इति व्यञ्जयति—**एवं शब्दत्वादिष्वपीति।** एवं शब्दे दृष्टान्तीक्रियमाणे शब्दत्वादिना धर्मेण साध्यप्रसिद्धिर्द्रष्टव्येति भावार्थः। अनित्यनिष्ठशब्देतरा-नित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितानित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरण-मित्युक्ते च वादिमतेन शब्दे अप्रसिद्धविशेषणत्वं स्यात्। वादिमतेन शब्दमात्रनिष्ठानामनित्यनिष्ठत्वेन शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वेन च तद्रहितत्वासिद्धेः। तदर्थं शब्देतरेति पदं ज्ञेयम्।

तथा च शब्दमात्रनिष्ठधर्मस्य शब्देतरानित्यनिष्ठत्वे सति यच्छब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वं तद्रहितत्वमेवेति तेन साध्यानुगमः शब्दे द्रष्टव्य इति। घटस्यैवं भूतधर्माधिकरणत्वेऽपि कथं शब्दानित्यत्व-मित्यत्राह—**शब्देतरानित्यनिष्ठेत्यादि। आद्यः पक्षे व्याहत इति।** आद्यः शब्देतरानित्यनिष्ठत्वरहितो धर्मः पक्षे घटे यः शब्देतरसर्वानित्येषु न वर्तते सोऽनित्ये घटे कथं वर्तते इति व्याघातेन बाधितः। सपक्षे चासौ प्रयोजकः। यतः स धर्मः आकाशत्वशब्दत्वादिरूपः शब्देतरानित्यनिष्ठत्वरहितत्वेन शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितोऽस्ति। तथा अनित्यस्तम्भादि-

---

शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहित, यदि प्रथम स्वीकार करें तो पक्षीभूत घट में व्याघात होगा। शब्देतर अनित्यनिष्ठत्वरहितधर्म को शब्देतर अनित्यघट में सिद्ध करना व्याघात दोष है। जो शब्देतर किसी अनित्य में नहीं है। वह शब्देतर अनित्य घट में कैसे रहेगा। द्वितीय पक्ष के मानने पर शब्द में अनित्यत्व सिद्ध होता है। यतः अनित्यनिष्ठअत्यन्ताभावप्रति-योगित्व तभी होगा जब शब्द अनित्य होगा।

**अयं घटः एतद्घटैतच्छब्दव्यतिरिक्तनिष्ठात्यन्ताभावप्रतियोगित्व-**

---

निष्ठात्यन्ताभावप्रतियोगी चेति। द्वितीयस्य तु शब्देतरानित्यनिष्ठात्यन्ता-भावप्रतियोगित्वरहितत्वरूपधर्मस्य अनित्यनिष्ठात्यन्ताभावप्रतियोगित्व-रूपान्त्यविशेषणविशिष्टत्वं तदैव स्यात्, यद्यनित्यः शब्दः स्यादिति। आकाशादिनिष्ठात्यन्ताभावप्रतियोगित्वेन द्वितीयस्यानित्यनिष्ठात्यन्ताभाव-प्रतियोगित्वं किं न स्यादित्याह—**गगनादीनां नित्यत्वादिति।** गगनादयो हि नित्यत्वेनोभयोरपि वादिप्रतिवादिनोः संमताः। अतस्तन्निष्ठात्यन्ता-भावप्रतियोगित्वेऽपि द्वितीयधर्मस्यानित्यनिष्ठात्यन्ताभावप्रतियोगित्वं न स्यादित्यर्थः। तर्हि स्तम्भादिनिष्ठात्यन्ताभावप्रतियोगित्वेन अनित्यनिष्ठा-त्यन्ताभावप्रतियोगित्वं भविष्यतीत्याशङ्क्य ब्रूते—**शब्देतरानित्यमात्र-वृत्तेश्चेत्यादि।**

शब्दादितरे ये अनित्याः पदार्थास्तन्मात्रवृत्तेर्घटत्वादेर्धर्मस्य। **शब्देतरानित्येति।** शब्देतरानित्यनिष्ठश्चासौ अत्यन्ताभावश्च, तस्य यत्प्रति-योगित्वं तस्यानुपपत्तेः शब्देतरानित्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितस्य तद्वत्त्वं व्याहतमित्यर्थः। परिशेषाच्छब्दानित्यत्वसिद्धिमभिधत्ते—**तेनेत्यादि।** तेन कारणेन द्वितीयधर्मस्य शब्दानित्यत्वं विना अनित्यनिष्ठात्यन्ता-भावप्रतियोगित्वान्यथानुपपत्तेः शब्दस्यानित्यत्वमङ्गीकार्यमिति शब्दानित्यत्व-सिद्धिरित्यर्थः।।२१।।

**आनं.—अयमिति।** एतद्घटश्चैतच्छब्दश्चैतद्घटैतच्छब्दौ, ताभ्यां व्यति-रिक्तनिष्ठोऽत्यन्ताभावः, तस्य प्रतियोगित्वरहितः, स चायमनित्यनिष्ठात्यन्ता-भावप्रतियोगी, तस्याधिकरणमित्यर्थः। मेयत्वादिव्यावृत्त्यर्थमनित्यनिष्ठात्यन्ता-भावप्रतियोगीत्युक्तम्। स्तम्भाद्यनित्यनिष्ठात्यन्ताभावप्रतियोगिघटत्वव्यावृत्त्यर्थ-मेतद्घटव्यतिरिक्तैतन्निष्ठात्यन्ताभावप्रतियोगित्वरहितग्रहणम्। एतच्छब्दव्यति-

---

गगनादिनित्यपदार्थ शब्देतरपटाद्यनित्यनिष्ठात्यन्ताभाव के प्रतियोगी होने पर अनित्यनिष्ठगगनत्वाद्यत्यन्ताभाव के प्रतियोगी के अधिकरण है। एवं घटत्व पटत्वादिधर्म भी परस्पर शब्देतरानित्यनिष्ठ होकर शब्देतरानित्य-निष्ठात्यन्ताभाव के प्रतियोगित्व से रहित अनित्यनिष्ठात्यन्ताभाव के प्रतियोगी के अधिकरण है। अतः अनित्यपदार्थ शब्द ही है, जिसमें रहने वाले अत्यन्ताभाव के प्रतियोगी के अधिकरण सकल पदार्थ हो रहे हैं।।२१।।

बाईसवें का साध्य 'एतद्घट तथा एतच्छब्द से भिन्न में रहने वाले अत्यन्ताभाव के प्रतियोगित्वरहित अनित्यनिष्ठ अत्यन्ताभाव के प्रतियोगी का

**रहितानित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणं मेयत्वादिति।। एतद्घटै-तच्छब्दव्यतिरिक्तनिष्ठात्यन्ताभावप्रतियोगिषु एतद्घटैतच्छब्दव्यतिरिक्त-**

---

रिक्तनिष्ठात्यन्ताभावप्रतियोगित्वरहितानित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणत्वमेतच्छब्दानित्यत्वसिद्धेः प्रागप्रसिद्धमित्यत उक्तम्—**एतद्घटेति**। घटव्यतिरिक्तनिष्ठात्यन्ताभावप्रतियोगित्वरहितः एतद्घटादन्यनिष्ठः एतदनित्यघटनिष्ठात्यन्ताभावप्रतियोगी च, तदधिकरणत्वं घटादन्यत्र सर्वत्रास्तीति व्याप्त्यनुगमः। एतस्मिन्घटे एतच्छब्दव्यतिरिक्तनिष्ठात्यन्ताभावप्रतियोगित्वरहितो नित्यनिष्ठात्यन्ताभावप्रतियोगी सिध्यन्ननित्यत्वं शब्दस्य साधयेदित्याशयः॥२२॥

**भुवन.—अयं घटः एतद्घटैतच्छब्दव्यतिरिक्तनिष्ठात्यन्ताभावप्रतियोगित्वरहितानित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणमिति।** एतद्घटश्च एतच्छब्दश्च एतद्घटैतच्छब्दौ। ताभ्यां व्यतिरिक्तमेतद्वयरहितं सर्वं विश्वम्। तन्निष्ठाश्चासौ अत्यन्ताभावश्च, तस्य प्रतियोगी एतद्घटैतच्छब्दव्यतिरिक्तनिष्ठात्यन्ताभावप्रतियोगी। तद्भावस्तत्त्वं। तेन रहितो वियुतः अनित्यनिष्ठो योऽत्यन्ताभावस्तस्य प्रतियोगी। एतद्घटैतच्छब्दव्यतिरिक्तनिष्ठात्यन्ताभावप्रतियोगित्वरहितश्चासौ अनित्यनिष्ठात्यन्ताभावप्रतियोगी च घटत्वरूपो यो धर्मस्तस्याधिकरणमाधारो घट इत्यक्षरार्थः।

भावार्थस्त्वयम्। एतद्घटैतच्छब्दव्यतिरिक्तनिष्ठात्यन्ताभावप्रतियोगिनौ हि द्वावेव धर्मौ स्याताम्। एतद्घटमात्रनिष्ठो घटत्वादिर्वा एतच्छब्दमात्रनिष्ठः शब्दत्वादिर्वा। एतद्घटैतच्छब्दद्वयादन्येषां सर्वपादार्थानां व्यतिरिक्तपदेन सङ्गृहीतत्वात्। तत्र साध्यधर्मपक्षे एतद्घटैतच्छब्दव्यतिरिक्तनिष्ठात्यन्ताभावप्रतियोगी शब्दत्वादिरेक एवैतच्छब्दमात्रनिष्ठो विवक्ष्यते न त्वेतद्घटमात्रनिष्ठो घटत्वादिः। एतद्घटैतच्छब्दव्यतिरिक्तनिष्ठात्यन्ताभावप्रतियोगित्वेन रहितस्तु एतद्घटनिष्ठो घटत्वादिरेव। तत्प्रतियोगित्वरहिता यद्यपि स्तम्भत्वाकाशत्वादयोऽपि भवन्ति, तथापि ते पक्षिते घटे विरोधेन साधयितुं न शक्यन्ते। तस्माद्घटत्वादिरेव तत्र साध्यः। स चानित्यनिष्ठात्यन्ताभावप्रतियोगी तदैव स्यात्, यदि शब्दोऽनित्यः स्यात्। एतद्घटैतच्छब्दद्वयान्यसर्वपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वस्य आद्य-

---

अधिकरणत्व' है। एतद्घट एवं एतत् शब्द से भिन्न में रहने वाले अत्यन्ताभाव के प्रतियोगी एतद्घटमात्रनिष्ठधर्म घटत्वादि, या तो एतत् शब्दमात्रनिष्ठ धर्म शब्दत्वादि होंगे। अब यदि घटनिष्ठघटत्व को लेते हैं,

**निष्ठात्यन्ताभावप्रतियोगित्वं धर्मः। तद्रहितश्च एतद्घटमात्रनिष्ठात्यन्ताभावप्रतियोगी वा एतच्छब्दमात्रनिष्ठात्यन्ताभावप्रतियोगी वा। आद्यः पक्षे व्याहतः। द्वितीयस्य तु अनित्यनिष्ठात्यन्ताभावप्रतियोगित्वमेतच्छब्दानित्यत्वमनधिगम्य दुरधिगममित्येतच्छब्दानित्यत्वसिद्धिः।।२२।।**

---

विशेषणेन निषिद्धत्वात्। अवशिष्टस्य घटस्य शब्दस्यैव च सद्भावात्तत्र घटत्वं घटरूपानित्यनिष्ठात्यन्ताभावप्रतियोगीति व्याहतम्। तस्माच्छब्दरूपो यः अनित्यस्तन्निष्ठो यः अत्यन्ताभावस्तत्प्रतियोगि घटत्वं, तस्याश्रयो घटः। तथा च शब्दानित्यत्वसिद्धिरिति।

दृष्टान्तधर्मपक्षे त्वेतद्घटैतच्छब्दव्यरिक्तनिष्ठात्यन्ताभाप्रतियोगि घटत्वम्। तत्त्वरहितास्तु शब्दत्वाकाशत्वादयः। ते चैतद्घटरूपो योऽनित्यस्तन्निष्ठात्यन्ताभावप्रतियोगिन एव। तेषामधिकरणं दृष्टान्तीभूताः शब्दाकाशादय इत्यर्थः मेयत्वादिव्यावृत्त्यर्थमनित्यनिष्ठात्यन्ताभावप्रतियोगीत्युपात्तम्। स्तम्भाद्यनित्यनिष्ठात्यन्ताभावप्रतियोगिघटत्वेन सिद्धसाधनताव्यावृत्यर्थमेतच्छब्दव्यतिरिक्तनिष्ठात्यन्ताभावप्रतियोगित्वरहितग्रहणम्। अयं घटः एतच्छब्दव्यतिरिक्तनिष्ठात्यन्ताभावप्रतियोगित्वरहितानित्यनिष्ठात्यन्ताभावप्रतियोग्यधिकरणमित्येतावत्येव चोच्यमानेऽप्रसिद्धविशेषणत्वम्। एवंविधस्य धर्मस्योभयसिद्धस्य शब्दानित्यत्वसिद्धेः प्राग् दृष्टान्तेऽनुपपद्यमानत्वादत उक्तमेतद्घटेति। इति व्यावृत्तिचिन्ता।

अथैतदनुमानस्यार्थं व्याचष्टे—**एतद्घटैतच्छब्देत्यादि**। शब्दानित्यत्वसिद्धिप्रदर्शनार्थं द्वेधा विकल्पयति—**तद्रहितश्चैतद्घटमात्रनिष्ठात्यन्ताभावप्रतियोगी वेत्यादि**। पक्षीकृतघटमात्रनिष्ठश्चासौ अत्यन्ताभावश्च, तस्य प्रतियोगी। एतद्घटमात्रनिष्ठान्धर्मान्विना शब्दस्तम्भात्मादिसर्वपदार्थनिष्ठः शब्दत्वस्तम्भत्वात्मत्वादिः सर्वोऽपि धर्मसमूहो ज्ञातव्यः। **एतच्छब्दमात्रेत्यादि**। एतच्छब्दमात्रनिष्ठश्चासौ अत्यन्ताभावश्च तस्य प्रतियोगी। एतच्छब्दमात्रनिष्ठान्

---

तो व्याघात होगा। जो घटत्वधर्म एतद्घट एतत् शब्दव्यतिरिक्त निष्ठ अत्यन्ताभाव का प्रतियोगी है, वह तादृश अत्यन्ताभाव के प्रतियोगित्व से रहित कैसे होगा। अतः एतत् शब्दमात्रवृत्ति शब्द को पूर्वोक्त अत्यन्ताभाव के प्रतियोगित्वेन ग्रहण करेंगे। उससे भिन्न तथा अनित्यनिष्ठ अत्यन्ताभाव का प्रतियोगी घटत्व है, उसका अधिकरण घट है। घटत्वधर्म अनित्यनिष्ठ अत्यन्ताभाव का प्रतियोगी तभी होगा। जब शब्द अनित्य होगा। सपक्ष आकाशादि भी पूर्वोक्तात्यन्ताभावप्रतियोगित्वरहित अनित्यशब्दनिष्ठ

**अथ विपक्षं पक्षीकृत्य प्रवर्तमाना महाविद्याभेदाः। तद्यथा– शब्दोऽनित्यः इत्यत्र गगनादिर्विपक्ष इति स्थिते,**

---

शब्दत्वादिधर्मान् विना नित्यानित्यसर्वपदार्थधर्मो घटत्वपटत्वाकाशत्वादिकः सर्वोऽपि ज्ञातव्यः। तत्राद्यस्य पक्षे व्याघातं ब्रूते-**आद्य इत्यादि।** आद्य एतद्घटमात्रनिष्ठात्यन्ताभावप्रतियोगिरूपधर्मः पक्षे घटे व्याहतः। न हि शब्दत्वपटत्वाकाशत्वादिको धर्मो घटे साधयितुं शक्यते। घटस्य स्वरूपहानिप्रसङ्गादिति स्फुटः एव व्याघातः। द्वितीयस्य पक्षे सिद्धिमाह— **द्वितीयस्येत्यादि।** द्वितीयस्य एतच्छब्दमात्रनिष्ठात्यन्ताभावप्रतियोगिलक्षणस्य घटत्वादिधर्मस्य। अनित्यनिष्ठश्चासौ अत्यन्ताभावश्च, तस्य प्रतियोगित्वं द्वितीयविशेषणविशिष्टत्वमित्यर्थः।

**एतच्छब्दानित्यत्वमनधिगम्येत्यादि।** एतच्छब्दानित्यत्वं विना द्वितीयस्य धर्मस्य अनित्यनिष्ठात्यन्ताभावप्रतियोगित्वं न स्यात्। शब्द-व्यतिरिक्तपदार्थात्यन्ताभावप्रतियोगित्वस्य आद्यविशेषणेन निरस्तत्वात्। तस्माच्छब्द एवानित्योऽङ्गीकार्यः। तथा च शब्दानित्यत्वसिद्धिरिति। एतासु महाविद्यासु अष्टादशमहाविद्या आद्यमहाविद्योक्तामेव कारिकामाश्रित्य नवनवभङ्ग्यतरेण प्रवृत्ताः। अपरमहाविद्याप्रवर्तककारिकास्तु निपुणैर्ग्रन्थान्तरतो ज्ञातव्याः। एवमग्रेऽपि यत्र नोक्तास्तत्र स्वयमेवाभ्यूह्याः। इति सपक्षं पक्षीकृत्यं प्रयुक्ता द्वाविंशतिर्महाविद्या दर्शिताः॥२२॥

**आनं.**—विपक्ष इति स्थिते। गगनं पक्षीकृत्य प्रयुज्यत इति शेषः।

**भुवन.**—अथ विपक्षं पक्षीकृत्य प्रवृत्ता महाविद्या दर्शयति— **अथेत्यादि।** महाविद्याभेदा दर्श्यन्ते इति शेषः। तद्यथेति तदुपन्यासार्थः।

---

आकाशत्वादि प्रतियोगिक अत्यन्ताभाव के प्रतियोगी आकाशत्वादि के अधिकरण है। शब्द में साध्य सिद्धि करने के लिए एतद्घट एतत् शब्द व्यतिरिक्त निष्ठात्यन्ताभाव के प्रतियोगित्वेन घटत्व को लेगें उससे भिन्न अनित्यपट आदि उसमें रहने वाले शब्दत्वात्यन्ताभाव के शब्दत्वप्रतियोगी का अधिकरण शब्द है। शेष पूर्ववत्॥२२॥

इस प्रकार सपक्ष को पक्ष बनाकर प्रवृत्त बाईस महाविद्यानुमानों का प्रयोग समाप्त हुआ।

**विपक्षपक्षकमहाविद्यानुमान**—अब विपक्ष को पक्ष बनाकर प्रवृत्त महाविद्याओं का विवेचन किया जा रहा है। शब्दोऽनित्यः कृतकत्वात् घटवत्

**१गगनं एतच्छब्देतरानित्यनित्यवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वादिति।। अत्र वक्ष्यमाणासु च घटो दृष्टान्तः। अनित्यनिष्ठाधि-**

---

**शब्दोऽनित्य इत्यत्रेति।** शब्दोऽनित्यःकृतकत्वात्, यन्नानित्यं न तत्कृतकं, यथा गगनम् इत्यत्र मूलानुमाने गगनादिर्विपक्षः इति स्थिते, गगनं पक्षीकृत्यं प्रयुज्यते इत्यध्याहारः।

**आनं.**—एतच्छब्देतरानित्ये नित्ये च ये वर्तन्ते तेष्वेतच्छब्देतरानित्यनित्यवृत्तित्वं धर्मः। तद्रहितश्चासावनित्यनिष्ठश्च तस्याधिकरणमित्यर्थः। अधिकरणमित्युक्ते शब्दाधिकरणत्वं सिद्धं वारयति—**अनित्यनिष्ठेति।** अनित्यनिष्ठाधिकरणमित्युक्ते मेयत्वादिना अर्थान्तरत्वं वारयितुमाह—

---

इस अन्वयव्यतिरेकि अनुमान में सपक्ष घट तथा विपक्ष आकाशादि नित्यपदार्थ है। महाविद्यानुमान केवलान्वयी है, अतः सभी सपक्ष ही होंगे। मूलानुमान के जो विपक्ष है, वे भी महाविद्या के सपक्ष है। अतः उनमें भी साध्य सिद्धि की जा रही है। विपक्षपक्षक साध्य भी शब्द में अनित्यत्व के साधक होते हैं। यहाँ पर जिस महाविद्यानुमान का प्रयोग किया जा रहा है। उसकी मूल कारिका—

**अपक्षसाध्यवद्वृत्ति विपक्षान्वयि यन्न तत्।**
**साध्यवद्वृत्तितायुक्तं साध्यते साध्यवर्जिते।।**

जो साध्य पक्षातिरिक्त साध्यवाले (सपक्ष) एवं साध्याभाव वाले (विपक्ष) में न रहता हो, तथा जो पक्षभूतशब्द के आश्रय आकाश से भिन्न विपक्ष आत्मादि में न रहता हो, ऐसे धर्म की सिद्धि पक्षीभूतशब्द में की जाती है। यहाँ पर पक्ष गगन को बनाया है। साध्य है गगन व शब्दमात्र में रहने वाला धर्म, अथवा गगन एवं शब्द से इतर का गगन या शब्द में रहने अयोन्याभाव (भेद) अनित्यनिष्ठाधिकरणत्व रूपेण साध्य है। अतः अनित्यघटादि सपक्ष है। एवं विपक्ष आत्मादि नित्यपदार्थ होगे। उक्त साध्य किसी विपक्ष में नहीं है।

गगनं **'एतच्छब्देतरानित्यनित्यवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वात् घटवत्'** एतत् शब्द से इतर अनित्य वा नित्यपदार्थों में न रहने वाले अनित्यवृत्तिधर्म का अधिकरण गगन है। इस शब्द से भिन्न अनित्यवृत्ति या नित्यवृत्तिधर्मों में एतच्छब्देतरानित्यनित्यवृत्तित्व धर्म है। उससे रहित धर्म गगन

**करणमित्युक्ते मेयत्वादिभिरनित्यनिष्ठैरेतच्छब्दनित्यत्वेऽप्युपपद्यमानैरर्थान्तरता स्यात्, तन्निवृत्त्यर्थमेतच्छब्देतरानित्यनित्यवृत्तित्वरहितग्रहणम्। एतच्छब्देतरानित्यनित्यवृत्तित्वरहिताधिकरणमित्युक्ते नित्यत्वतदवान्तरधर्मैर्गगननिष्ठैरेतच्छब्देऽप्युपपद्यमानैरर्थान्तरता स्यात्। तन्निवृत्यर्थमनित्यनिष्ठ-**

---

**नित्यवृत्तित्वरहितेति।** नित्यवृत्तित्वरहितानित्यनिष्ठाधिकरणत्युिक्ते व्याघातोऽत उक्तम्—**अनित्यनित्यवृत्तित्वरहितेति।** अनित्यनित्यवृत्तित्वरहिताधिकरणमित्युक्तौ नित्यत्वेनार्थान्तरत्वमत आह—**अनित्यनिष्ठेति।** अनित्यवृत्तित्वरहितानित्यनिष्ठाधिकरणमित्युक्ते व्याघातः स्यादित्युक्तं **अनित्यनित्य-वृत्तित्वरहितेति।** अनित्यनित्यवृत्तित्वरहितानित्यनिष्ठाधिकरणमित्युक्ते व्याघातः, यस्य कस्यचिदपि गगनधर्मस्यानित्यनित्यवृत्तिरहितस्य नित्यमात्रवृत्तेरनित्यनिष्ठत्वायोगादत उक्तम्—**शब्दतरेति।** न चैवं व्याघातः। शब्दानित्यत्वोपगमेन गगनशब्दमात्रवृत्तेर्गगनशब्दसंबन्धादेरुपगमे प्रतिज्ञातार्थपर्यवसानात्। शब्देतरानित्यनित्यवृत्तित्वरहितानित्यनिष्ठः तु अनित्येषु शब्देतरानित्यत्वमस्ति। नित्यानां पक्षतुल्यत्वेन सपक्षत्वाभाव इति व्याप्त्यनुगमो द्रष्टव्यः। विशेषणकृत्यमाह—**अनित्यनिष्ठेति।** नित्ये गगनेऽनित्यवृत्तित्वधर्मस्तथापि व्याहत एवेत्यत आह—**यद्यपीति। गगनेऽव्याहत इति।** अव्याहत इति च्छेदः।।१।।

१ **भुवन.**—तत्र प्रथमं

**अपक्षसाध्यवद्वृत्तिविपक्षान्वयि यत्र तत्।**
**साध्यवद्वृत्तितायुक्तं साध्यते साध्यवर्जिते।।**

---

एवं शब्दमात्र में रहने वाला गगन और शब्द का सम्बन्ध होगा। या तो गगन एवं शब्द से भिन्न अनित्य तथा नित्य का गगन और शब्द में रहने वाला भेद होगा। गगन एवं शब्द का सम्बन्ध एतत् शब्द से इतर में वृत्ति भी नहीं तथा अनित्यशब्द वृत्ति है। यतः सम्बन्ध दोनो सम्बन्धियों में रहता है, अतः गगन भी उसका अधिकरण है। जब शब्देतर अनित्यनित्य के भेद को लेंगे, तो वह भी शब्देतर अनित्यघटादि नित्य अत्मादि में न रहता हुआ शब्दवृत्ति है ही। गगन पक्ष कोटि ये प्रविष्ट है अतः शब्देतर से गृहीत नहीं होगा। इस प्रकार शब्देतर के भेद का अधिकरण गगन भी होगा।

अब साध्यघटक प्रत्येक पदों के फल का विचार कर रहे हैं। यदि अनित्यनिष्ठाधिकरणम्, साध्य रखखें तो मेयत्वादिधर्म को लेकर अर्थान्तरता-

**ग्रहणम्। नित्यवृत्तित्वरहितानित्यनिष्ठाधिकरणमित्युक्ते व्याघातः। न हि नित्यनिष्ठत्वरहितो नित्ये गगने च वर्तते इति संभवति। तन्निवृत्त्यर्थमेतच्छब्देतरानित्यग्रहणम्। यद्यपि गगने नित्यवृत्तित्वरहितो धर्मो व्याहतः, तथापि एतच्छब्देतरानित्यनित्ये च ये वर्तन्ते तेषु यदेतच्छब्देतरानित्यरानित्यवृत्तित्वं धर्मः, तद्रहितो धर्मो गगनेऽव्याहतः। एतच्छब्देतरनित्यवृत्तित्वरहितानित्यनिष्ठाधिकरणमित्युक्तेऽपि व्याघातः। यस्य कस्यचिदपि गगनधर्मस्य एतच्छब्देतरनित्यगगननिष्ठत्वेन तद्रहितत्वानुपपत्तेः। तन्नि-**

---

इति कारिकामाश्रित्य या प्रवृत्ता तामाह—**गगनमेतच्छब्देतरानित्यनित्येत्यादि।** व्याख्या। गगनं पक्षः। एतच्छब्दादितरे येऽनित्या एतच्छब्देतरानित्याः। ते च नित्याश्च एतच्छब्देतरानित्यनित्याः। तत्र वृत्तिर्येषां ते एतच्छब्देतरानित्यनित्यवृत्तयः, तेषां भावस्तत्त्वं। तेन रहितः। अनित्ये निष्ठा यस्य सोऽनित्यनिष्ठः। शब्देतरानित्यनित्यवृत्तित्वगगनशब्दसंबन्धादिर्वा विश्वप्रतियोगिकः शब्दाकाशान्योन्याभावादिर्वा। स च नित्ये गगन एव वर्तनाच्छब्देतरानित्ये च कस्मिंश्चिदप्यवर्तनाच्छब्देतरानित्यनित्यरूपयुगलवृत्तित्वरहित एव।

स च धर्मोऽनित्यवृत्तिस्तदैव स्यात्, यदि शब्दोऽनित्यः स्यात्। तस्य च धर्मस्य गगने वर्तनेऽपि गगनस्य नित्यत्वेनोभयवादिसंमतत्वादनित्यवृत्तित्वं न स्यात्। तस्माद्गले पादुकान्यायेनोभयोर्विवादापन्नत्वाच्छब्दस्यैवानित्यत्वमङ्गीकार्यम्। एवंविधश्चात्र धर्मो मेयत्वसत्त्ववाच्यत्वादिर्न घटते। तस्य नित्यानित्यरूपयुगलवृत्तित्वात्। नित्यत्वादिश्चानित्यवृत्तीतिपदेन निरस्तः। अनित्यमात्रवृत्तिरनित्यत्वादिश्च पक्षितगगने नित्ये न सम्भवति। तस्मात्पूर्वोक्तो गगनशब्दसंबन्धादिरेव साध्यधर्मोऽत्र ज्ञेयः। अत्र च दृष्टान्तीक्रियमाणेषु

---

दोष होगा। मेयत्वादिधर्म अनित्य वृत्ति हैं ही, उसका अधिकरण गगन है। शब्द के नित्य रहने पर भी एतादृश साध्य की सिद्धि हो सकती है। इसलिए एतच्छब्देतरानित्यनित्यवृत्तित्वरहित कहा मेयत्वादिधर्म शब्देतरानित्य नित्यवृत्ति ही हैं। शब्देतरानित्यनित्यवृत्तित्वरहित नहीं है। अनित्यनिष्ठ पद न रख कर एतच्छब्देतरानित्यनित्यवृत्तित्वरहिताधिकरणम्, साध्य रखें तो नित्यत्व धर्म तथा गगनमात्रवृत्ति गगनत्व शब्देतर अनित्यनित्योभयवृत्ति नहीं है। उभयवृत्तित्वरहित धर्म गगन में सिद्ध होने से सिद्धसाधनतादोष होगा। तथा एतादृशधर्म शब्द के नित्य रहने पर भी सिद्ध है, अतः अर्थान्तरतादोष होगा। इसलिए अनित्यनिष्ठपद दिया।

**वृत्त्यर्थमनित्यग्रहणम्। एतच्छब्देतरनित्यनिष्ठत्वरहितधर्मस्य गगने व्याहतत्वेऽपि एतच्छब्देतरानित्यनिष्ठत्वरहितधर्मस्य अव्याहतत्वात्। एतच्छब्देतरानित्यनिष्ठत्वरहितानित्यनिष्ठाधिकरणमित्युक्ते चाप्रसिद्धविशेषणत्वम्। न हि एतच्छब्दानित्यत्वसिद्धेः पूर्वं एतच्छब्देतरानित्यनिष्ठत्वरहितस्य अनित्यनिष्ठत्वं शक्यमधिगन्तुम्। तन्निवृत्त्यर्थं नित्यग्रहणम्।**

---

घटादिषु अनित्येषु घटत्वादिः शब्देतरानित्यत्वादिर्वा धर्मा मन्तव्यः। नित्यानां शब्दस्य चात्र पक्षतुल्यत्वेन सपक्षत्वाभावो न दोषपोषायेति। तथैव च प्रतिपादयति—**अत्र वक्ष्यमाणासु चेत्यादि।** घट इत्युपलक्षणं। तेन पटस्तम्भादयस्तद्धर्माश्च सर्वेऽप्यनित्या ग्राह्याः। अथाद्यं विशेषणं परित्यज्य व्यावृत्तिचिन्तां करोति—**अनित्यनिष्ठेत्यादि।** तथोक्ते च मेयत्वादिभिर्नित्यत्वरूपाऽर्थान्तरता स्यात्। तन्निवृत्त्यर्थमेतच्छब्देतरानित्येत्यादि। तथा च मेयत्वादीनां शब्देतरानित्यनित्यवृत्तित्वेन रहितत्वानुपपत्तेर्नार्थान्तरता। **तदवान्तरैरिति।** नित्यत्वादवान्तरैर्गगनैकत्वादिभिरित्यर्थः। **तथाप्येतच्छब्देतरेत्यादि।** यद्यपि नित्यवृत्तित्वरहितानित्यनिष्ठाधिकरणमित्युक्ते व्याघातः स्यात्, तथापि सम्पूर्णप्रथमविशेषणविचारणायां युगलावृत्तित्वेनैवंविधो धर्मो गगने उपपद्यते एव। **यस्य कस्यचिद्गगनधर्मस्येति।** गगनगतैकत्वनित्यत्वव्यापकत्वादेर्गगनधर्मस्य नित्यनिष्ठत्वेन तद्रहितत्वानुपपत्तेर्व्याघात इत्यर्थः। अप्रसिद्धविशेषणत्वं भावयति—**नहीत्यादि।** अत्र दृष्टान्ते घटादौ एवंविधस्य धर्मस्याप्रसिद्धता। यद्यपि शब्दस्यानित्यत्वे एवंविधो धर्मः शब्दानित्यत्वादिः

---

यदि नित्यवृत्तित्वरहिताधिकरणं कहें तो व्याघातदोष होगा। नित्यवृत्तित्वरहित धर्म नित्य गगन में सम्भव नहीं है। अतः शब्देतरानित्य कहा। यद्यपि गगन में नित्यवृत्तित्वरहित धर्म नहीं सम्भव है, तथापि जो धर्म प्रयेयत्वादि शब्देतरानित्यनित्य वृत्ति हैं। उनमें शब्देतरानित्यनित्यवृत्तित्व (उभयवृत्तित्व) है, उससे भिन्न गगनमात्रवृत्ति धर्म है। यदि शब्देतरानित्य न रख कर मात्र एतच्छब्देतरनित्यवृत्तित्वरहितानित्यनिष्ठाधिकरणम् रखें तो जिस किसी गगनधर्म को लेंगे वह शब्देतरनित्यनिष्ठ होने के कारण शब्देतरनित्यवृत्तित्वरहित नहीं होगा। अतः शब्देतर अनित्य पद दिया। यदि नित्यपद को साध्यघटक न बनायें एतच्छब्देतरानित्यनिष्ठत्वरहिताधिकरणम् कहे तो अप्रसिद्धविशेषणतादोष होगा। जब तक शब्द में अनित्यत्व सिद्ध नहीं हो जाता, तब तक एतच्छब्देतरानित्यनिष्ठत्वरहित धर्म का अनित्यनिष्ठत्व नहीं सिद्ध हो सकता। अतः नित्य ग्रहण किया। एतच्छब्देतरानित्यनिष्ठत्वरहिता-

**एतच्छब्देतरानित्यनिष्ठत्वरहितानित्यनिष्ठाप्रसिद्धत्वेऽपि, एतच्छब्देतरानित्यनित्यनिष्ठत्वरहितानित्यनिष्ठस्य एतच्छब्देतरानित्यत्वादेः सुप्रसिद्धत्वात्। एतच्छब्देतरानित्यनित्यवृत्तित्वरहितो धर्मः १ एतच्छब्देतरानित्यमात्रवृत्तिर्वा, २ नित्यमात्रवृत्तिर्वा, ३ एतच्छब्दैतच्छब्देतरानित्यमात्रवृत्तिर्वा, ४ एतच्छब्दमात्रवृत्तिर्वा, ५ एतच्छब्दगगनव्यत्तिरिक्तनित्यमात्रवृत्तिर्वा,**

---

शब्दादितरे ये भावा अनित्यास्तन्निष्ठत्वरहितो विद्यते, अनित्यशब्दवृत्तित्वाधिकरणं च, तथापि शब्दानित्यत्वसिद्धेः पूर्वमन्यत्र घटपटादावेवंविधधर्मो नोपपद्यते। तेनाप्रसिद्धविशेषणत्वमित्यर्थः।

**आनं.**—शब्दानित्यत्वमन्तरेण व्यापकापर्यवसानं दर्शयितुमाह—**एतच्छब्देतरानित्यनित्यनिष्ठत्वरहितो धर्म इति।**

**भुवन.**—अथ पक्षशब्दानित्यत्वमन्तरेण साध्यापर्यवसानं दर्शयितुं आद्यविशेषणविचारणोपपन्नं धर्मं षोढा विकल्पयति—**एतच्छब्देतरानित्यनित्यवृत्तित्वरहितो धर्म इत्यादि। १ एतच्छब्देतरानित्यमात्रवृत्तिर्वेति।** एवंविधो घटत्वपटत्वादिः। **२ नित्यमात्रवृत्तिर्वेति।** नित्यत्वादिः। **३ एतच्छब्दैतच्छब्देतरानित्यमात्रवृत्तिर्वेति।** एतस्मिन् शब्दे एतच्छब्देतरानित्यमात्रे च घटादौ वृत्तिर्यस्य स तथा। एवंविधश्च विश्वप्रतियोगिको घटैतच्छब्दान्योन्याभावादिः। **४ एतच्छब्दमात्रवृत्तिर्वेति।** एतच्छब्दत्वादिः **५ एतच्छब्द-**

---

नित्यनिष्ठ धर्म अप्रसिद्ध होने पर भी एतच्छब्देतरानित्यनित्यवृत्तित्वरहितानित्यनिष्ठ एतच्छब्देतरानित्यत्वादि प्रसिद्ध ही है। एतच्छब्देतरानित्यत्व धर्म शब्देतरानित्यवृत्ति होते हुए भी नित्यवृत्ति न होने के कारण उभयवृत्तिरहित तथा अनित्यवृत्ति है।

अब यह विचार हो रहा है, कि एतच्छब्देतरानित्यनित्यवृत्तित्वरहित धर्म किसे माना जाय, जो अनित्यवृत्ति होता हुआ गगनवृत्ति है। इसमें छः कल्प किया है। शब्द से भिन्न अनित्य नित्य उभयवृत्तिधर्म (१) एतच्छब्द से इतर अनित्यमात्रवृत्ति हो सकता है। (२) नित्यमात्रवृत्ति हो सकता है (३) एतच्छब्द तथा एतच्छब्द से भिन्न अनित्यमात्रवृत्ति धर्म हो सकता है। उक्त धर्म एतच्छब्द एवं एतच्छब्द से इतर अनित्यमात्रवृत्ति होने पर भी एतच्छब्देतर अनित्यनित्योमय वृत्ति नहीं है। (४) एतच्छब्दमात्रवृत्ति धर्म शब्देतर अनित्य नित्यवृत्ति नहीं है। (५) एतत् शब्द गगन व्यतिरिक्त नित्यमात्र वृत्ति, अर्थात् जो धर्म इस शब्द में रहता हुआ गगनातिरिक्त नित्य में रहता है।

**६ एतच्छब्दगगनमात्रवृत्तिर्वा। प्रथमतृतीयचतुर्थपञ्चमा गगने व्याहताः। द्वितीयस्तु अनित्यनिष्ठग्रहणेन दूरं निरस्तः। षष्ठस्य तु अनित्यनिष्ठत्वमेतच्छब्दानित्यत्वमन्तर्भाव्यैव। सिध्यति। गगननित्यत्वस्योभयवादिसिद्धत्वादित्येतच्छब्दानित्यत्वसिद्धिः।।१।।**

---

**गगनव्यतिरिक्तनित्यमात्रवृत्तिर्वेति।** एतस्मिम् शब्दे गगनव्यतिरिक्ते नित्यमात्रे च वृत्तिर्यस्य स तथा। एवंविधश्च धर्मो विश्वप्रतियोगिक आत्मैतच्छब्दान्योन्याभावादिः। **६ एतच्छब्दगगनमात्रवृत्तिर्वेति।** एतस्मिन् शब्दे गगनमात्रे च वृत्तिर्वर्तनं यस्यासौ तथा। एवंविधश्च धर्मो गगनशब्दसंबन्धादिः।। प्रथमतृतीयचतुर्थपञ्चमानां गगने विरुद्धत्वेन व्याघातमाचष्टे—**प्रथमतृतीयचतुर्थेत्यादि। द्वितीयस्त्विति।** द्वितीयो नित्यत्वादिर्यद्यपि गगने वर्तमानों नित्यमात्रवृतिर्भवति, तथाप्यनित्यनिष्ठत्वरूपद्वितीयविशेषणविशिष्टत्वं तस्य न स्यादिति स दूरं निरस्तः। पष्ठस्याभ्युपगमेन परिशेषाच्छब्दानित्यत्वसिद्धिमाह—**षष्ठस्य तु अनित्यनिष्ठत्वं** गगनस्य नित्यत्वाच्छब्दानित्यत्वं विना नोपपद्यते इति अनित्यः शब्दः स्वीकर्तव्यः।।१।।

---

(६) एतच्छब्दगगनमात्रवृत्ति धर्म। उक्त धर्म भी एतत् शब्द तथा गगन में रहने पर भी शब्देतर अनित्यनित्यवृत्ति नहीं है।

प्रथमकल्प में तृतीयकल्प में चतुर्थकल्प में तथा पञ्चमकल्प में व्याघातदोष है। प्रथमकल्प शब्द से इतर अनित्यमात्रवृत्तिधर्म की नित्यगगन में वृत्तिता कहना व्याघात दोष है। तृतीय कल्प एतच्छब्द तथा एतच्छब्देतर अनित्यमात्र में रहने वाले धर्म का अधिकरण गगन को कहना व्याघात दोष है। चतुर्थ कल्प एतच्छब्दमात्र में रहने वाले धर्म का अधिकरण गगन को कहना व्याघात है। पञ्चमकल्प एतच्छब्द में तथा गगनातिरिक्तनित्य में रहने वाले को गगन में वृत्ति कहना व्याघात है। द्वितीय कल्प नित्यमात्रवृत्ति धर्म का अधिकरण गगन हो सकता है। परन्तु उक्तधर्म को अनित्यनिष्ठ भी होना चाहिए नित्यमात्रवृत्ति धर्म अनित्यवृत्ति कदापि भी नहीं सकता। अतः अवशिष्ट षष्ठकल्प एतत् शब्द तथा गगन मात्र में रहने वाला धर्म लेगें।

वह धर्म होगा गगन एवं शब्द का सम्बन्ध। वह अनित्यशब्दवृत्ति होता हुआ गगन वृत्ति है। एतच्छब्द तथा गगन का सम्बन्ध अनित्यवृत्ति होकर गगनवृत्ति है। ऐसा मानने पर गगन या शब्द में से एक को अनित्य मानना होगा। गगन वादी तथा प्रतिवादी दोनों के यहाँ नित्यत्वेन अभिमत है। प्रत्यासत्त्या शब्द दो अनित्य मानना होगा। इस प्रकार शब्द में अनित्यत्व का अन्तर्भाव करके गगन में साध्य सिद्ध होता है।।१।।

**गगनं शब्दत्वरहितानित्यनित्यवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वादिति।। प्राचीना महाविद्या पक्षीकृतशब्दविशेषान्योन्याभावमुपादाय प्रवृत्ता पक्षीकृतशब्दविशेषेऽनित्यत्वं गमयति। इयं तु पक्षतत्तुल्यसाधारणशब्दत्वात्यन्ताभावमुपादाय प्रवृत्ता पक्षतत्तुल्यान्यतमस्मिन् शब्दे अनित्यत्वं गमयति इत्येतयोर्महान् भेदः।।२।।**

---

**आनं.**—**गगनमिति।** शब्दत्वरहिते शब्दत्वात्यन्ताभाववत्यनित्ये नित्ये च ये वर्वन्ते तेषु शब्दत्वरहितानित्यनित्यवृत्तित्वं धर्मः। तद्रहितश्चासावनित्यनिष्ठश्च तस्याधिकरणमित्यर्थः। विशेषणकृत्यं साध्यपर्यवसानं च पूर्ववत्। प्राचीनमहाविद्यायामप्ययमेवार्थः साधितः इत्यत आह—**प्राचीनेति।** एतच्छब्देतरेतिविशषणात्पक्षीकृतशब्दविशेषणान्योन्याभावमुपादयेत्यर्थः। इयमपि तथेति नेत्याह—**इयं त्विति।** पक्षः एतच्छब्दः। तत्तुल्याः अन्ये शब्दास्तेषां साधारणस्य शब्दत्वस्यात्यन्ताभावमित्यर्थः।।२।।

**भुवन.**—पूर्वामेव महाविद्यामेतच्छब्देतरेतिपदस्थाने शब्दत्वरहितेतिपदग्रहणेन भङ्ग्यन्तरेणोदाहरति—**गगनं शब्दत्वरहितानित्यनित्येत्यादि।** शब्दत्वेन रहिताः शब्दत्वात्यन्ताभाववन्तः। ते च तेऽनित्याश्च शब्दत्वरहितानित्याः। एतावता ये शब्दत्वसहितास्तेषां सर्वेषामप्यनित्येभ्यो निष्कर्षः कृतः। शेषं पूर्ववत्। प्राचीनमहाविद्यातोऽस्या भेदमावेदयति—**प्राचीनेत्यादि।** प्राचीनमहाविद्या एतच्छब्देतरेति भणनाद्विवक्षितस्यैव कस्यचिच्छब्दस्य अन्योन्याभावमुपादाय प्रवत्ता सती शब्दविशेष एवानित्यत्वं साधयति। इयं तु शब्दत्वरहितेतिभणनात्पक्षः एतच्छब्दः, तत्तुल्या अन्ये शब्दास्तेषां साधारणस्य शब्दत्वस्यात्यन्ताभावमादाय प्रवृत्ता पक्षतत्तुल्यान्यतमस्मिन् शब्देऽनित्यत्वसाधिका। सर्वशब्दानित्यत्वगमिकेयमित्यर्थः। इत्यनयोर्भेदः।।२।।

---

प्रथम महाविद्या का साध्य एतच्छब्देतरघटित था। द्वितीय शब्दत्वरहित अर्थात् शब्दत्वात्यन्ताभाववत् घटित है। दोनों में शब्दस्वरूपेण भेद होते भी अर्थ साम्यता है। एतच्छब्देतर (एतच्छब्दान्य) जो होगा वह शब्दत्वरहित (शब्दत्वात्यन्ताभाववान्) होगा ही। शेष पूर्ववत् है। दोनों महाविद्याओं में वास्तविक भेद यह है, कि प्रथममहाविद्या पक्षीकृतशब्दविशेष के अन्योन्याभाव को लेकर प्रवृत्त पक्षीकृत शब्दविशेष में अनित्यत्व की गमक है। एतच्छब्द पद से किसी शब्द विशेष का ही ग्रहण होता है। यह पक्षीकृतशब्द तथा उसके तुल्य शब्द साधारण के शब्दत्व धर्मात्यन्ताभाव को लेकर प्रवृत्त है।

**गगनं एतच्छब्देतरानित्यगगनवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वादिति। पूर्वमहाविद्या नित्यमात्रमुपादाय प्रवृत्ता, इयं तु पक्षीकृतनित्यविशेषमुपादायेति विशेषः। शेषं पूर्ववत्।।३।।**

---

**आनं.**—एतच्छब्देतरेति। एतच्छब्देतरानित्ये गगने च ये वर्न्तते, तेष्वेतच्छब्देतरानित्यगगनवृत्तित्वं धर्मः। तद्रहितश्चासावनित्यनिष्ठश्च, तस्याश्रय इत्यर्थः। नित्यत्वतदवान्तरधर्मव्यावृत्यर्थं अनित्यनिष्ठेत्युक्तम्। मेयत्वादिव्यावृत्यर्थं—**गगनवृत्तित्वरहितेति।** व्याघातपरिहारार्थं **अनित्यगगनवृत्तित्वरहितेति।** अनित्यगगनवृत्तित्वरहितो नित्यनिष्ठश्चानित्यमात्रवृत्तिरिति स्थिते गगने न संभवतीत्यत आह—**शब्देतरेति।** पक्षतुल्ये क्वापि साध्यपर्यवसानं वारयति—**एतदिति।** एतच्छब्देतरवृत्तित्वरहिताधिकरणमित्युक्ते व्याघातः। एतच्छब्देतरानित्यवृत्तित्वरहिताधिकरणमित्यपि नित्यत्वेनार्थान्तरमित्यादि स्वयमूह्यम्। एतच्छब्देतरानित्यगगनवृत्तित्वरहितो नित्यनिष्ठश्च धर्मो गगनान्यत्वं पक्षातिरिक्ते सर्वत्रास्तीति व्याप्त्यनुगमः। गगने त्वेतच्छब्देतरानित्यगगनवृत्तित्वरहितः एतच्छब्दगगनमात्रवृत्तिरनित्यनिष्ठः सिध्यन्ननित्यत्वमेतच्छब्दस्य गमयतीति भावः। प्रथममहाविद्यातोऽस्या भेदमाह—**पूर्वेति।**

---

इस प्रकार उक्तमहाविद्या पक्षीकृतशब्द तथा पक्षतुल्य अन्य शब्द साधारण में अनित्यत्व की गयक है। अत दोनों के साध्य में महान् भेद है।।२।।

तृतीय महाविद्या पूर्वमहाविद्याओं से विलक्षण है। प्रथम तथा द्वितीय महाविद्यायें नित्यमात्र (नित्यसाधारण) को लेकर प्रवृत है। तृतीयमहाविद्या नित्यविशेष (गगनवृत्तित्व) को लेकर प्रवृत्त है। शेष पूर्ववत् है। एतच्छब्देतर अनित्य एवं गगनवृत्तित्वरहित जो अनित्य उसमें रहने वाले धर्म का अधिकरण गगन है। एतच्छब्दभिन्न अनित्य तथा गगन में वृत्ति जो धर्म उनमें एतच्छब्देतरानित्यगगनवृत्तित्वधर्म है। उससे भिन्न धर्म है, एतच्छब्दवृत्ति तथा गगनमात्रवृत्ति एतच्छब्दगगनान्यतरत्व वह शब्द निष्ठ भी है। तथा गगन वृत्ति है। उस को अनित्यवृत्ति होना चाहिए। गगन में नित्यत्व उभयवादि अभिमत है। अत: शब्द में अनित्य मानना होगा। इस प्रकार शब्द में अनित्यत्व सिद्ध हुआ।

यह महाविद्या उक्त कारिका का आश्रय लेकर प्रवृत्त है।

---

**भुवन.**—अथ

**'अपक्षसाध्यवद्वृत्तिविपक्षे पक्षिते न यत्।**
**साध्यवद्वृत्तितायुक्तं साध्यते तद्विपक्षगम्।।'**

इति कारिकामाश्रित्य या प्रवर्तते तां ब्रूते—**गगनमेतच्छब्दे-तरानित्यगगनवृत्तित्वेत्यादि।** एतच्छब्देतरानित्याश्च गगनं च, तत्र वृत्तिर्येषां, तेषां भावस्तत्त्वं धर्मः, तद्रहितश्चासावनित्यनिष्ठश्च तस्याश्रयो गगनमित्यर्थः। नित्यत्वतदवान्तरधर्मव्यावृत्त्यर्थमनित्यनिष्ठेत्युक्तम्। मेयत्वादिव्यावृत्त्यर्थमे-तच्छब्देतरानित्यगगनवृत्तित्वरहितेत्युपात्तम्। गगनवृत्तित्वरहितानित्यनिष्ठाधि-करणत्युक्ते व्याघातः, तन्निवृत्त्यर्थमनित्येति। अनित्यगगनवृत्तित्वरहितो-ऽनित्यनिष्ठश्चानित्यमात्रवृत्तिरनित्यत्वादिर्गगने नित्ये न सम्भवतीत्युक्तं शब्दे-तरेति। पक्षतुल्ये यत्र कापि शब्दे साध्यपर्यवसानवाराणाय एतदिति। इति व्यावृत्तिचिन्ता। एतच्छब्देतरानित्यगगनवृत्तित्वरहितोऽनित्यनिष्ठश्च धर्मो गगनान्यत्वं पक्षातिरिक्ते सर्वत्रास्तीति व्याप्त्यनुगमः। गगने तु एतच्छब्तेतरानित्यगगनवृत्तित्वरहितः एतच्छब्दगगनमात्रवृत्तिरेतच्छब्दगगनान्य-तरत्वादिरनित्यनिष्ठः सिध्यन् अनित्यत्वमेतच्छब्दस्य साधयतीत्याशयः। प्रथममहाविद्यातोऽस्या भेदं प्रदर्शयति—**पूर्वमहाविद्या नित्यमात्रमित्यादि।** पूर्वमहाविद्यायां नित्येतिभणनात्सर्वे नित्यपदार्थाः स्वीकृताः। अत्र तु नित्यपदस्थाने पक्षीकृतं गगनमेव न्यस्तमित्यनयोर्विशेषः।।३।।

---

**अपक्षसाध्यवद्वृत्तिविपक्षे पक्षिते न यत्।**
**साध्यवद्वृत्तितायुक्तं साध्यते तद्विपक्षगम्।।**

जो धर्म विपक्ष को पक्ष बनाने पर सपक्षवृत्ति हो तथा विपक्ष में वृत्ति न हो उस धर्म को विपक्ष में सपक्षवृत्तित्वेन सिद्ध किया जाता है। यहाँ पर एतच्छब्दगगनान्यतरत्व धर्म साध्य है। जो पक्षीकृतगगन भिन्न सपक्षशब्दवृत्ति भी है। तथा विपक्ष एतच्छब्द गगन भिन्न घटादिवृत्ति नहीं है। उसे अनित्यनिष्ठत्वेन साध्याभाववत् विपक्ष गगन में सिद्ध किया जाता है। उक्त अनुमान के विपक्ष (अनित्यत्वाभाववत्) घट आदि में सिद्ध होने वाला एतच्छेतरानित्यगगनवृत्तित्वरहितानित्यनिष्ठधर्म गगनान्यत्व होगा, वह सपक्ष अनित्यशब्दवृत्ति होता हुआ विपक्षघटादिवृत्ति भी है।।३।।

**गगनं शब्दत्वरहितानित्यगगनवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वादिति।। एतस्मिंश्च महाविद्याचतुष्टये गगनेतरनित्यानां प्रकृतशब्दादेश्च पक्षतुल्यत्वम्।।४।।**

---

**आनं.**—चतुर्थमहाविद्या द्वितीयमहाविद्यावद्व्याख्येया। अनित्यनित्यवृत्तित्वरहितानित्यनिष्ठः पक्षतत्तुल्यशब्देषु गगनातिरिक्तनित्यपदार्थे च नास्तीति व्याप्तिभङ्ग इत्यत आह—**एतस्मिन्निति।** तृतीयचतुर्थमहाविद्ययोर्गगनान्यत्वं गगनातिरिक्ते सर्वत्रास्तीति व्याप्तिसिद्धेरेतस्मिन्प्रकरणमहाविद्याचतुष्टये प्रथमद्वितीयमहाविद्याद्वये वक्ष्यमाणमहाविद्याद्वये चेत्यर्थः।

**भुवन.—गगनं शब्दत्वरहितानित्यगगनेत्यादि।** शब्दत्वरहिताः शब्दत्वात्यन्ताभाववन्तः। ते च तेऽनित्याश्च शब्दत्वरहितानित्याः। ते च गगनं च, तत्र वृत्तिर्येषां ते तथा। शेषं तृतीयमहाविद्यावद्व्याख्येयम्। एतच्छब्देतरानित्यनित्यवृत्तित्वरहितानित्यनिष्ठादिर्धर्मः शब्देषु गगनातिरिक्तनित्यपदार्थेषु च नास्तीति व्याप्तिभङ्ग इत्यत आह—**एतस्मिंश्चेति।** तृतीयचतुर्थमहाविद्ययोर्गगनान्यत्वं पटादौ शब्दे च सर्वत्रास्तीति व्याप्तिसिद्धेः, प्रथमद्वितीयमहाविद्याद्वये वक्ष्यमाणमहाविद्याद्वये चेत्यर्थः।।४।।

---

चतुर्थमहाविद्या कुछ अंश में द्वितीयमहाविद्या सदृश है, कुछ अंश में तृतीयसदृश है। द्वितीय में शब्दत्वात्यन्ताभावबोधक शब्दत्वरहित पद साध्य का घटक है। वृत्तित्वनिरूपक नित्यपद नित्यसामान्य का बोधक है। तृतीय में एतच्छब्देतर पद शब्दविशेषनिरूपितभेद का बोधक है। वृत्तित्व का निरूपक गगनपद नित्यविशेष का बोधक है।

चतुर्थ में शब्दत्वरहित एवं गगनवृत्तित्व दोनों पदों का प्रयोग है। अतः उभयविलक्षण है। शब्दत्वरहित (शब्दत्वात्यन्ताभाववत्) अनित्य एवं गगन वृत्तित्वरहित अनित्यवृत्तिधर्म का अधिकरण गगन है। यहाँ पर भी शब्दत्वरहित अनित्यगगनवृत्तित्व रहित धर्म शब्दगगनान्यतरत्व होगा। वह शब्दवृत्ति होता हुआ गगन वृत्ति भी है। उक्तधर्म को अनित्यवृत्ति होकर गगनवृत्ति होना चाहिए। गगन में नित्यत्व उभयवादि अभिमत है। अतः शब्द को ही अनित्य मानना होगा। तादृशवृत्तित्वरहितधर्म गगनान्यत्व भी है, जो शब्द वृत्ति होते हुए गगनातिरिक्त सभी पदार्थों में है। अतः व्याप्तिभंङ्ग भी नहीं हुआ। शेषपूर्ववत्।।४।।

**गगनं एतच्छब्देतरानित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहितानेकनिष्ठाधिकरणं मेयत्वादिति।। एतच्छब्देतरानित्यनित्यवृत्तिरहितानेकनिष्ठाधिकरणमित्युक्ते नित्यत्वतदवान्तरैरनेकनिष्ठैरर्थान्तरता स्यात्। तन्निवृत्त्यर्थमनेकनित्यनिष्ठत्वरहितग्रहणम्। एतच्छब्देतरानित्यनिष्ठत्वरहितानेकनित्यनिष्ठत्वरहिताधिकरणमित्युक्ते गगनमात्रनिष्ठैरेकत्वादिभिरेतच्छब्दमात्रनित्यत्वेऽप्युपपद्यमानैरर्थान्तरता स्यात्। तन्निवृत्त्यर्थमनेकनिष्ठग्रहणम्।**

---

**आनं.—गगनमिति।** शब्देतरानित्यनित्यवृत्तित्वरहितश्चासावनेकनित्यवृत्तित्वरहितोऽनेकनिष्ठश्च। तस्याधिकरणमित्यर्थः। गगनमात्रनिष्ठैकत्वादिव्यावृत्त्यर्थमनेकनिष्ठग्रहणम्। नित्यत्वव्यावृत्त्यर्थमनेकनित्यवृत्तित्वरहितग्रहणम्। नित्यवृत्तित्वरहितानेकनिष्ठाधिकरणमित्युक्ते व्याघातोऽत उक्तम्—**अनेकनित्येति।** अनेकनित्यवृत्तित्वरहितानेकनिष्ठाधिकरणमित्युक्ते गगनसंयोगयोः संन्धेनार्थान्तरत्वमत उक्तम्—**नित्यवृत्तत्वरहितेति।** व्याघातपरिहारार्थमेवैतच्छब्देतरानित्यग्रहणम्। अत्रैतच्छब्दगगनमात्रवृत्तिः सिध्यन्ननेकनित्यवृत्तित्वरहितः एतच्छब्दस्यानित्यत्वं गमयेदिति भावः।

**५ भुवन.—**

**'अपक्षसाध्यवद्वृत्तिविपक्षान्वयवर्जितः।**
**नानाविपक्षवृत्त्यन्यभिन्नधर्मोऽस्ति पक्षिते।।'**

---

पञ्चमविद्या पूर्वोक्तमहाविद्याओं से विलक्षण है। एतच्छब्द से भिन्न अनित्य एवं नित्य में एक साथ न रहता हो तथा अनेक (एक से अधिक) नित्य में न रहता हो, एवं एक से अधिक में रहता हो ऐसे धर्म का अधिकरण गगन है। ऐसा धर्म यहाँ पर भी एतच्छब्दगगनान्यतरत्व होगा, या तो एतत्शब्द एवं गगन सम्बन्ध होगा। ये दोनों धर्म शब्देतर नित्यगगनवृत्ति है, तथा शब्देतर अनित्यवृत्ति होकर गगनवृत्ति नहीं हैं। अतः उभयवृत्तिरहित हैं। नित्यगगनमात्रवृत्ति धर्म एतच्छब्दगगनान्यतरत्व एक से अधिक नित्य में न रहने के कारण अनेकनित्यवृत्तित्वरहित भी है। तथा एतत् शब्द तथा गगन दोनों में वृत्ति होने से अनेक वृत्ति भी है।

यह महाविद्या उक्त कारिका का आश्रय लेकर प्रवृत्त है।

**अपक्षसाध्यवद्वृत्तिविपक्षान्वयवर्जितः ।**
**नाना विपक्षवृत्त्यन्यभिन्न धर्मोऽस्ति पक्षिते ।।**

**अनेकनित्यवृत्तित्वरहितानेकनिष्ठाधिकरणमित्युक्ते घटाकाशान्यतरत्वादिना अर्थान्तरता स्यात्। तन्निवृत्त्यर्थमेतच्छब्देतरानित्यनित्यवृत्तित्वहितग्रहणम्।**

---

एतां कारिकामाश्रित्य विपक्षपक्षीकरणेन प्रवृत्तामाह—**गगनमेतच्चब्देतरानित्यनित्यवृत्तित्वरहितानेकनित्यवृत्तित्वरहितानेकनिष्ठाधिकरणमिति।** अनेके च ते नित्याश्च अनेकनित्याः तद्वृत्तित्वरहितः। एकस्मिन् गगनादौ निष्ठा यस्य असावेकनिष्ठः। न एकनिष्ठोऽनेकनिष्ठः। अनेकनित्यवृत्तित्वरहितश्चासावनेकनिष्ठश्च स तथा। एतच्छब्देतरानित्यनित्यवृत्तित्वरहितश्चासावनेकनित्यवृत्तित्वरहितानेकनिष्ठश्च तस्याधारो गगनमित्यर्थः। एवंविधश्च धर्मः पक्षे विश्वप्रतियोगिकः शब्दाकाशान्योन्याभावादिर्ज्ञेयः। स च गगन एव नित्ये वर्तनादेतच्छब्दादितरस्मिंश्च कस्मिंश्चिदप्यनित्ये अवर्तनात् एतच्छब्देतरानित्यनित्यवृत्तित्वरहितः एव। तथा शब्दाकाशयोर्द्वयोरपि वर्तनादनेकनिष्ठश्चाप्यस्त्येव। स चानेकनित्यवृत्तित्वरहितस्तदैव, यदि शब्दोऽनित्यः स्यादिति पारिशेष्याच्छब्दानित्यत्वसिद्धिरिति। अत्र च पूर्वोक्तविशेषणोपपन्नमेतच्छब्देतरानित्यत्वैतच्छब्देतरकार्यत्वादिकमुपादाय अनित्येषु साध्यप्रसिद्धिर्द्रष्टया।

---

ऐसा धर्म जो विपक्ष में वृत्ति न हो तथा सपक्ष में वृत्ति हो तथा नाना विपक्षवृत्तिधर्मों से जो इतर उनसे भिन्न होकर पक्ष एवं सपक्ष में वृत्ति हो वह पक्ष में सिद्ध किया जाता है।

शब्दगगनान्यतरत्वधर्म विपक्षघटादिवृत्ति नहीं है। तथा सपक्षशब्दवृत्ति है। एवं अनेक घटादि विपक्षवृत्ति घटत्वादि से इतर गगनत्व शब्दत्व उनसे भिन्न होता हुआ पक्ष गगन एवं सपक्ष शब्द में वृत्ति है। अब साध्यघटक प्रत्येकपदों का फल विचार करते है। यदि अनेकनित्यवृत्तित्वरहितपद न रख्खें तो नित्यवृत्ति नित्यत्वधर्म या नित्यवृत्ति अजन्यत्वादि धर्मो को लेकर अर्थान्तरता दोष होगा ऐसे धर्म भी शब्देतर नित्यमात्रवृत्ति होने के कारण अनित्यनित्योभयवृत्ति रहित तथा अनेकनित्यवृत्ति भी है। ऐसा धर्म शब्द के नित्य रहने पर भी गगन में सिद्ध है। अतः अर्थान्तरतादोष है। इसलिए अनेकनित्यनिष्ठत्वरहित साध्य का विशेषण बनाया। उक्त नित्यवृत्ति नित्यत्वादि अनेकनित्यवृत्ति ही हैं, उससे भिन्न नहीं हैं। यदि एतच्छब्देतर से अनित्य मात्र को लें नित्यपद साध्यघटक न करें तो, एतच्छब्दभिन्न अनित्यवृत्ति रहित तथा अनेकनित्यवृत्तिरहित गगनमात्रवृत्ति धर्म एकत्व गगनत्वादि को लेकर अर्थान्तरतादोष होगा। गगनमात्रवृत्तिधर्म शब्देतर

**एतच्छब्देतरानित्यनित्यवृत्तित्वरहितो धर्मः १ एतच्छब्देतरानित्य-**

---

गगनेतरनित्यानां शब्दस्य च पक्षतुल्यत्वान्न तेषु साध्याभावः कलङ्कपङ्क-शङ्काकरः। एवमुत्तरमहाविद्यायामपि ज्ञेयम्। **नित्यत्वतदवान्तरैरिति।** नित्यत्वं च तदवान्तरधर्माश्च व्यापकत्वादयः तैः। मनःपरमाण्वादौ नित्यत्वसद्भावेऽपि व्यापकत्वादीनामभावात्तेषामवान्तरत्वम्। **गगनमात्रनिष्ठैरेकत्वादिभिरिति।** गगनैकत्वादिभिरित्यर्थः। **घटाकाशान्यतरत्वादिनेति।** घटाकाशयोरन्यतरत्वं हि घटेऽप्याकाशेऽपि च वर्तते एव, उभयानुगतधर्मत्वात्। यथा चैत्रमैत्रयोरन्यतरः इत्युक्ते चैत्रोऽपि वा लभ्यते मैत्रोऽपि वेति। तेनैकस्मिन्नेव नित्ये वर्तमानत्वेन अनेकनित्यवृत्तित्वरहितेन घटाकाशद्वयेऽपि वर्तमानत्वेन चानेकनिष्ठेन नित्यत्वरूपार्थान्तरता। तद्व्यवच्छेदायैतच्छब्देतरानित्येत्यादि। तथा च घटाकाशान्यतरत्वादेरनित्ये घटे नित्ये चाकाशे वर्तमानत्वेनैतच्छब्देतरानित्य-नित्यवृत्तित्वरहितत्वानुपपत्तेरित्यर्थः।

**आनं.**—एतच्छब्दस्यानित्यत्वमन्तरेण व्यापकापर्यवसानं दर्शयितुं संभावितप्रकारानाह—**एतच्छब्देतरानित्यमात्रवृत्तिर्वेति।।५।।**

---

अनित्यवृत्तित्वरहित है, तथा गगनमात्र में रहने के कारण अनेकनित्य-वृत्तित्वरहित भी है। एतादृश धर्म की गगन में शब्द के नित्यरहने पर भी सिद्धि हो सकती है। अतः शब्देतर नित्यवृत्तित्व रहित भी साध्यघटक बनाया। गगनमात्रवृत्ति धर्म शब्देतर नित्यवृत्ति ही है। नित्यवृत्तित्वरहित नहीं है।

यदि अन्तिमविशेषण अनेकनिष्ठपद साध्य का घटक न बनायें तो पुनः गगनमात्रनिष्ठ एकत्वादिधर्म को लेकर अर्थान्तरतादोष होगा। गगनमात्रनिष्ठ धर्म शब्देतर अनित्यवृत्ति होकर नित्यगगनवृत्ति नहीं है। इस प्रकार शब्द के नित्य रहने पर भी एतादृश धर्म की सिद्धि गगन में हो सकती है। अतः अनेकनिष्ठपद साध्य का घटक बनाया। गगनामात्रवृत्तिधर्म अनेकनिष्ठ नहीं है। यदि अनेक नित्यवृत्तित्वरहितानेकनिष्ठाधिकरणम् साध्य रख्खें तो घट गगनान्यतरत्व को लेकर अर्थान्तरता दोष होगा। घट गगनान्यतरत्व अनेकनित्यवृत्तित्वरहित भी है। तथा घट एवं गगन में रहने के कारण अनेकनिष्ठ भी है। एतादृश धर्म शब्द के नित्य रहने पर भी गगन में सिद्ध है। अतः शब्देतर अनित्यनित्यवृत्तित्वरहित कहा। घट गगनान्यतरत्वधर्मं अनित्यघटवृत्ति तथा नित्यगगनवृत्ति हैं उससे रहित नहीं हैं।

यतः एतच्छब्देतरानित्यनित्यवृत्तित्वरहित अंश के विना साध्यस्वरूप असम्भव है, अतः प्राथम्येन एतच्छब्देतरानित्यनित्यवृत्तित्वरहितधर्म कैसा लें

**मात्रवृत्तिर्वा, २ नित्यमात्रवृत्तिर्वा, ३ एतच्छब्दैतच्छब्देतरानित्यमात्रवृत्तिर्वा, ४ एतच्छब्दमात्रवृत्तिर्वा, ५ एतच्छब्दगगनव्यतिरिक्तनित्यमात्रवृत्तिर्वा, ६ एतच्छब्दगगनमात्रवृत्तिर्वा। प्रथमतृतीयचतुर्थपञ्चमा गगने व्याहताः। द्वितीयोऽप्येकनित्यवृत्तिर्वा स्यात्, एकैकनित्यवृत्तिर्वा स्यात्। प्रथमोऽनेकनित्यवृत्तित्वरहितग्रहणेन निरस्तः। द्वितीयोऽनेकनिष्ठग्रहणेन निरस्तः।**

---

**भुवन.**—एतच्छब्दानित्यत्वमन्तरेण साध्यसिद्धेरपर्यवसानं दर्शयितुं प्रथमविशेषणोद्भूतान् षड्धासंभावितविकल्पानाविर्भावयति—**एतच्छब्देतरानित्यनित्येत्यादि। १ एतच्छब्देतरानित्यमात्रवृत्तिर्वेति।** एतच्छब्देतरानित्यत्वादिरेकैकानित्यमात्रवृत्तिर्घटपटत्वादिर्वा। **२ नित्यमात्रवृत्तिर्वेति।** नित्यत्वादिरेकैकनितयवृत्तिरात्मत्वादिर्वा। **३ एतच्छब्दैतच्छब्देतरानित्यमात्रवृत्तिर्वेति।** एतच्छब्दानित्यान्यतरत्वादिर्विश्वप्रतियोगिको घटैतच्छब्दान्योन्याभावादिर्वा। **४ एतच्छब्दमात्रवृतिर्वेति।** एतच्छब्दत्वादिः। **५ एतच्छब्दगगनव्यतिरिक्तनित्यमात्रवृत्तिर्वेति।** गगनानित्यान्यत्वादिर्विश्वप्रतियोगिक आत्मैतच्छब्दान्योन्याभावादिर्वा। **६ एतच्छब्दगगनमात्रवृत्तिर्वेति।** एतच्छब्दाकाशसंबन्धादिः। अत्रापि प्रथमतृतीयचतुर्थपञ्चमानां पक्षे व्याघातमभिधत्ते—**प्रथमेत्यादि।** द्वितीयं द्विधा विकल्पयति—**द्वितीयोऽप्यनेकेत्यादि।** प्रथमस्य मध्यविशेषणविशिष्टत्वाभावमाख्याति—**प्रथोऽनेकेत्याद।** द्वितीयस्य अन्त्यविशेषणेन

---

इसमें छः कल्प किया है। इनमें से कौन साध्यानुरूप है, इसका विचार करते है। (१) शब्देतर अनित्यनित्योभयवृत्तित्वरहित धर्म, एतच्छब्देतरानित्यमात्रवृत्ति है या (२) शब्देतरानित्यवृत्ति तथा अनित्यमात्रवृत्तिधर्म एवं नित्यमात्रवृत्तिधर्म भी उभयवृत्तिरहित है। अथवा (३) एतत्शब्द तथा शब्देतरानित्यमात्रवृत्तिधर्म, यह धर्म भी नित्यवृत्ति न होने के कारण उभयवृत्तिरहित ही है। (४) एतच्छब्दमात्रवृत्तिधर्म भी उभयवृत्तिरहित ही है। (५) अथवा एतच्छब्दगगनव्यतिरिक्तनित्यमात्रवृत्तिधर्म। या (६) एतच्छब्दगगनमात्रवृत्तिधर्म इनमें से प्रथम, तृतीय, चतुर्थ, तथा पञ्चम कल्प स्वीकार करने पर गगन में व्याघात दोष है। प्रथम एवं तृतीय कल्प में इसलिए व्याघात है कि वह धर्म अनित्यमात्रवृत्ति कहे गये है। अतः तदतिरिक्तगगनवृत्ति कैसे होगे। चतुर्त कल्प में इसलिए व्याघात है, कि वह धर्म शब्दमात्रवृत्ति है। पञ्चमकल्प में इसलिए व्याघात है, कि वह धर्म शब्द तथा गगन से अतिरिक्त नित्यमात्रवृत्ति है। द्वितीयकल्प में विचार कर रहे है। नित्यमात्रवृत्तिधर्म अनेकनित्यों में रहने

**षष्ठस्तु एतच्छब्दानित्यत्वमन्तर्भाव्य सिध्यति। एतच्छब्दनित्यत्वे गगनैतच्छब्दनिष्ठस्य अनेकनित्यनिष्ठत्वेन तद्रहितत्वानुपपत्तेः।।५।।**

**गगनं शब्दत्वरहितानित्यनित्यनिष्ठत्वरहितानेकनिष्ठत्वरहितानेक-**

---

निरासमाचष्टे—**द्वितीयोऽनेकेत्यादि।** षष्ठस्य पक्षे सिद्धिं ब्रूते—**षष्ठस्त्वे-तच्छब्दानित्यत्वेत्यादि।** एतच्छब्दनित्यत्वसिद्धौ दूषणमुद्घोषयति **एतच्छब्द-नित्यत्व इत्यादि।** अयमाशयः। आकाशो नित्यत्वेनोभयवादिनोरपि संमतः। तत्र शब्दोऽपि यदि नित्योऽङ्गीकियते, तदा शब्दाकाशसंबन्धादेर-नेकनित्यनिष्ठत्वमेव स्यात्, न तु तद्रहितत्वम्। अनेकनित्यवृत्तित्वरहितत्वं चात्र प्रोक्तम्। तस्माच्छब्दस्यानित्यत्वमास्थेयमेवेति।।५।।

**आनं.**—उत्तरमहाविद्यायामेतच्छब्देतरस्थाने शब्दत्वरहितपदं निहितम्। शेषं पूर्ववत्। कथमत्र व्याप्त्यनुगमोऽत्राह—**एतयोश्चेति।** शब्देतरानित्यत्वं शब्देतरनित्यत्वं शब्देतरकार्यत्वं च कथितविशेषणमनित्येषु सिद्धम्। गगनेतरा-नित्यशब्दानां शब्दस्य च पक्षतुल्यत्वाद्व्याप्त्यनुगम इत्यर्थः।।६।।

**भुवन.—गगनं शब्दत्वरहितेत्यादि।** अस्यां महाविद्यायां पूर्व-महाविद्योक्तैतच्छब्देतरपदस्थाने शब्दत्वरहितपदं निदधे। शेषं पूर्ववत्। कथमेतयोर्व्याप्त्यनुगमोऽत्राह—**एतयोश्चेति।** पञ्चमीषष्ठ्योर्महाविद्ययोरित्यर्थः।

---

वाला, कि एक-एक नित्य में रहने वाला। अनेकनित्यवृत्तिधर्म का अनेक-नित्यवृत्तित्वरहितपद से निराश हो गया। एकनित्यनिष्ठ धर्म का निराश अनेकनिष्ठपद से हो जाता है। अतः षष्ठ कल्प शब्द को अनित्य मानने पर सिद्ध होगा। यदि शब्द नित्य होगा तो एतच्छब्दगगनमात्रवृत्तिधर्म अनेकनित्यवृत्ति ही हो जायेगा। अनेकनित्यवृत्तित्वरहित नहीं होगा। इस प्रकार एतच्छब्दगगनान्यतरत्व एतच्छब्द भिन्न अनित्यवृत्ति हो कर नित्यगगन वृत्ति नहीं है। तथा गगनातिरिक्तनित्यों में नहीं रहता अतः अनेकनित्यवृत्तित्वरहित है। शब्द एवं गगन दोनों में रहता है। अतः अनेक निष्ठ भी है। सपक्ष अनित्यघटादियों में गगनान्यत्व या घटत्वादि एतच्छब्देतर अनित्यनित्योभय-वृत्तित्वरहित तथा अनेकनित्यवृत्तित्वरहित अनेक घटादिनिष्ठ है, उसके अधिकरण प्रत्येक घट हैं। सकल नित्यपदार्थपक्षतुल्य हैं। शेषं पूर्ववत्।।५।।

षष्ठ महाविद्या पञ्चममहाविद्या के समान ही है। दोनों के साध्यो में अर्थसाम्यता है। एतच्छब्देतर शब्दत्वरहित साध्यघटकपदों के भेद से साध्य

**निष्ठाधिकरणं मेयत्वादिति।। एतयोश्च महाविद्ययोरेतच्छब्देतरानित्यत्वादिकमुक्तविशेषणोपपन्नमुपादाय साध्यप्रसिद्धिर्द्रष्टव्या। शेषं पूर्ववत्।।६।।**

**गगनं गगनेतरनित्यगगनवृत्तित्वरहितैतच्छब्दनिष्ठाधिकरणं मेयत्वादिति।। गगनेतरनित्ये गगने च ये वर्तन्ते तेषु गगनेतरनित्यगगनवृत्तित्वं**

---

**एतच्छब्देतरानित्यत्वादिकमिति।** एतच्छब्दादितरे ये भावास्तेषामनित्यत्वादिकं धर्ममित्यर्थः। आदिशब्देन एतच्छब्देतरकार्यत्वादिग्रहः। गगनेतरनित्यानां शब्दस्य च पक्षतुल्यत्वान्न तत्र व्याप्त्यभावेऽपि दोषः।।६।।

**आनं.—गगनेति।** गगनेतरनित्यवृत्तिषु गगनवृत्तिषु च गगनेतरनित्यगगनवृत्तित्वं धर्मः। तद्रहितश्चासावेतच्छब्दनिष्ठश्च तदधिकरणमित्यर्थः। गगनमधिकरणमित्युक्ते शब्दाधिकरणत्वेनार्थान्तरमत उक्तम्—**शब्दनिष्ठेति।** पक्षतुल्ये क्वापि साध्यसिद्धिं व्यावर्तयितुमेतच्छब्दनिष्ठाधिकरणमित्युक्तम्। तथापि मेयत्वादिकं प्रसक्तमप्यावर्तयति—**गगनवृत्तित्वरहितेति।** व्याघातपरिहारार्थ—**गगनेतरनित्यवृत्तित्वरहितेति।** गगनेतरनित्यवृत्तित्वरहितैतच्छब्दनिष्ठाधिकरणमित्युक्तेऽप्रसिद्धविशेषणत्वं, शब्दनिष्ठस्य नित्यवृत्तित्वरहितत्वस्य शब्दानित्यत्वसिद्धेः पूर्वं दुरधिगमत्वादत उक्तम्—**गगनेतरनित्यगगनवृत्तित्वरहितेति।** गगनान्यत्वमुक्तरूपं गगनातिरिक्ते सर्वत्रास्तीति साध्यसिद्धिः। व्याप्तिबलादेतच्छब्दगगनमात्रवृत्तिगगनेतरनित्यगगनवृत्तित्वरहितः सिध्यन्ननित्यत्वमेतस्य शब्दस्य साधयेदिति तात्पर्यम्। गगने तद्रहितधर्मसिद्ध्या कथमेतच्छब्दानित्यत्वमत आह—**तद्रहितश्चेति।** एतच्छब्दगगनवृत्तेः कया अनुपपत्त्या साध्यसाधकत्वमत्राह—**एतच्छब्दत्वनित्यत्वे इति।**

**भुवन.—गगनं गगनेतरनित्येस्यादि।** गगनेतरनित्यवृत्तित्वे सति गगनवृत्तिषु गगनेतरनित्यगगनवृत्तित्वं धर्मः तद्रहितश्चासौ एतच्छब्दनिष्ठश्च,

---

स्वरूप में भेद दिखाई देता है। दोनों पदों का अर्थ एक है। शब्दत्वरहित शब्दत्वान्यन्ताभाववत् शब्देतर सभी अनित्य व नित्यपदार्थ हैं। अन्य अंश में दोनों साध्यों की साम्यता ही है। शेष पूर्ववत्।।६।।

सप्तममहाविद्या का साध्य पूर्वोक्तमहाविद्याओं के साध्य से पूर्णतया भिन्न है। गगन से भिन्न नित्य एवं गगन में जो नहीं रहता तथा एतत् शब्द में रहता है, उसका अधिकरण गगन है। गगनेतरनित्य में तथा गगन में जो वृत्तिधर्म है। उनमें गगनेतरनित्यगगनवृत्तित्व धर्म है। उससे रहित धर्म

**धर्मः। तद्रहितश्च धर्मः १ गगनेतरनित्यमात्रवृत्तिर्वा, २ गगनमात्रवृत्तिर्वा, ३ एतच्छब्देतरानित्यगगनवृत्तिर्वा, ४ एतच्छब्दगगनवृत्तिर्वा। आद्यो गगने व्याहतः। द्वितीयतृतीयौ शब्दनिष्ठग्रहणेन निरस्तौ। चतुर्थस्तु एतच्छब्दानित्यत्वमन्तर्भाव्य सिध्यति। एतच्छब्दनित्यत्वे गगनैतच्छब्दनिष्ठस्य गगनेतरनित्यगगननिष्ठत्वेन तद्रहितत्वानुपपत्तेरित्येतच्छब्दानित्यत्वसिद्धिः।**

---

तदधिकरणं गगनमित्यर्थः। गगनान्यत्वमुक्तरूपं गगनातिरिक्ते सर्वत्रास्तीति व्याप्तिसिद्धिः। व्याप्तिबलादेतच्छब्दगगनमात्रवृत्तिर्गननेतरनित्यगगनवृत्तित्वरहितः सिध्यन् अनित्यत्वमेतस्य सब्दस्य साधयेदिति तात्पर्यम्। अथ प्रथम विशेषणोपपन्नं धर्मचतुष्टयमाचष्टे—**तद्रहितश्च धर्म इत्यादि। १ गगनेतर-नित्यमात्रवृत्तिर्वेति।** आत्मत्वादिः। **२ गगनमात्रवृत्तिर्वेति।** गगनैकत्वादिः। **३ एतच्छब्देतरानित्यगगनवृत्तिर्वेति।** विश्वप्रतियोगिको घटाकाशान्योन्या-भावादिः। स च गगनेतरनित्येषु अवर्तनान्नित्ये गगने एव च वर्तनाद्यथोक्तयुगलावृत्तित्वेन गगनेतरनित्यगगनवृत्तित्वरहितो विद्यते एव। **४ एतच्छब्दगगनवृत्तिर्वेति।** विश्वप्रतियोगिकः एतच्छब्दाकाशान्योन्याभावादिः।

---

या तो (१) गगन से भिन्न नित्यमात्र में रहने वाला धर्म होगा, या तो (२) गगनामात्र में रहने वाला धर्म होगा। गगनेतरनित्यमात्रवृत्तिधर्म यतः गगनेतरनित्यमात्रवृत्ति है। अतः गगनेतरनित्यवृत्ति होकर गगनवृत्ति नहीं है। गगनमात्र वृत्ति धर्म भी गगनेरनित्यवृत्ति नहीं है। अतः ये दोनों उभयवृत्तित्व रहित ही हैं। अथवा (३) एतत् शब्द से भिन्न अनित्य एवं गगनवृत्तिधर्म को लें उक्त धर्म भी गगनेतर नित्यवृत्ति न होने के कारण उभयवृत्तित्व रहित ही है। या (४) एतच्छब्द एवं गगन में रहने वाला। यह धर्म भी गगनेतर नित्य में न होने के कारण उभयवृत्तित्वरहित है।

उस उभयवृत्तित्वरहित धर्म को लेना है, जो एतच्छब्दवृत्ति हो, तथा उसका अधिकरण गगन हो सके? उक्त चारो कल्पो में प्रथम नहीं लिया जा सकता। यतः गगनेतरनित्यमात्रधर्म की गगन में अधिकरणता व्याघातदोष युक्त है। द्वितीय तृतीय कल्प भी गृहीत नहीं किये जा सकते। यतः वे धर्म शब्दनिष्ठ नहीं हैं। अतः चतुर्थ कल्प एतच्छब्दगगनवृत्तिधर्म का अधिकरण गगन को कहना होगा। वह धर्म शब्द में अनित्यत्व सिद्धिपुरःसर गगनवृत्ति होगा। यतः शब्द को यदि अनित्य न माना जाय तो एतच्छब्दगगनवृत्तिधर्म गगनेतरनित्यवृत्ति ही हो जायेगा। गगनवृत्ति है ही, उभयवृत्तित्व रहित नहीं होगा।

**एतच्छब्दनिष्ठाधिकरणमित्युक्ते मेयत्वादिभिरेतच्छब्दनित्यत्वेऽप्युपद्यमानैरर्थान्तरता स्यात्। तन्निवृत्यर्थ गगनेतरनित्यगगनवृत्तित्वरहितग्रहणम्। गगनेतरनित्यगगनवृत्तित्वरहिताधिकरणमित्युक्ते गगननिष्ठैरेकत्वादिभिरेतच्छब्दनित्यत्वेऽप्युपपद्यमानैरर्थान्तरता स्यात्। तन्निवृत्यर्थमेतच्छब्दनिष्ठग्रहणम्।**

**गगनेतरनित्यवृत्तित्वरहितैतच्छब्दनिष्ठाधिकरणमित्युक्ते चाप्रसिद्ध-**

---

अन्येषामसम्भवेन चतुर्थं पक्षे साधयति—**चतुर्थस्त्वेतच्छब्दानित्यत्वमित्यादि।** इदमत्र रहस्यम्—गगनं हि नित्यत्वेन वादिप्रतिवादिनोरुभयोरपि सम्मतम्। शब्दोऽपि यदि नित्यत्वेनाङ्गीकियते, तदा एतच्छब्दाकाशान्योन्याभावो गगनेतरनित्ये एतच्छब्दे गगने च वृत्तित्वेन तत्सहित एव स्यात्, न तु तद्रहितः। तस्माच्छब्दस्यानित्यत्वमेवाङ्गीकार्यम्। शब्दानित्यत्वान्तर्भावसिद्धिमेवाविर्भावयति—**एतच्छब्दनित्यत्वे इत्यादि। अप्रसिद्धविशेषणत्वमित्यादि।** यावता शब्दस्यानित्यत्वं सिद्धं नास्ति, तावता शब्दनिष्ठानां शब्दत्वादीनां गगनेतरनित्यवृत्तित्वेन परैर्भाट्टादिभिरङ्गीकृतत्वात् गगनेतरनित्यवृत्तित्वरहितत्वं न स्यात्। तन्निवृत्यर्थं गगनग्रहणम्।

**आनं.**—शब्दनित्यत्वाङ्गीकारिमते शब्दधर्मस्य गगनेतरनित्यवृत्तित्व-

---

अब साध्यघटक प्रत्येकपद के फल का विचार कर रहे हैं। यदि विशेषण कोटि में प्रविष्ट सभी पदों को हटाकर **'एतच्छब्दनिष्ठाधिकरण'** साध्यस्वरूप रखें तो शब्दवृत्ति प्रमेयत्वादिधर्मों को लेकर अर्थान्तरता होगी। शब्द के नित्य रहने पर भी शब्दनिष्ठ प्रमेयत्वधर्म गगनवृत्ति है ही। अतः साध्य का विशेषण **'गगनेतरनित्यगगनवृत्तित्वरहित'** कहा। प्रमेयत्त्वादिधर्म गगनेतरनित्यवृत्ति भी है, तथा गगनवृत्ति भी है। उभयवृत्तित्व रहित नहीं है।

यदि अधिकरणत्व का एतच्छब्दनिष्ठत्व को न विशेषण बनायें **'गगनेतरनित्यगगनवृत्तित्वरहिताधिकरणं'** साध्य स्वरूप रखें तो गगनवृत्ति एकत्वादिधर्म को लेकर अर्थान्तरतादोष होगा।

गगनवृत्ति एकत्व गगनेतरनित्यवृत्ति नहीं है, अतः गगनेतरनित्यवृत्तित्व विशिष्ट गगनवृत्ति नहीं हुआ। उसका अभाव गगनवृत्ति एकत्व में सिद्ध है। वह एकत्व शब्द के नित्य रहने पर गगनवृत्ति है। अतः अर्थान्तरतादोष होगा। जब एतच्छब्दनिष्ठत्व को विशेषण बना दिया तो गगनवृत्ति एकत्व नहीं ले सकते, क्यों कि वह धर्म शब्दवृत्ति नहीं है। यदि साध्यविशेषणकोटि से

**विशेषणत्वम्। एतच्छब्दानित्यत्वसिद्धेः पूर्वमेतच्छब्दनिष्ठानां गगनेतर-नित्यनिष्ठत्वेन परैरङ्गीकृतत्वादिति तन्निवृत्यर्थं गगनग्रहणम्। गगनेतर-नित्यवृत्तित्वरहितैतच्छब्दनिष्ठाप्रसिद्धत्वेऽपि गगनेतरनित्यगगनवृत्तित्वरहि-तैतच्छब्दनिष्ठस्य गगनान्योन्याभावादेः सुप्रसिद्धत्वात्। गगनवृत्तित्व-रहितैतच्छब्दनिष्ठाधिकरणमित्युक्ते व्याघातः। तन्निवृत्यर्थं गगनेतरनित्य-ग्रहणम्। गगनवृत्तित्वरहितस्य गगने व्याहतत्वेऽपि गगनेतरनित्यगगन-वृत्तित्वरहितस्य अव्याहतत्वात्।।७।।**

---

विरहस्याप्रसिद्धत्वं तथापि दुष्परिहरमत्राह—**गगनान्योन्याभावदेरिति।** आदि शब्देन गगनमात्रनिष्ठात्यन्ताभावो गृह्यते।।७।।

**भुवन.**—तथापि अप्रसिद्धविशेषणत्वपरिहारः कथमत आह—**गगनेतरनित्यवृत्तित्वेत्यादि। गगनान्योन्याभावादेरिति।** आदिपदेन गगनमात्र-निष्ठस्यात्यन्ताभावो गृह्यते। ततो गगनान्यत्वादेर्गगनेऽवर्तनाद्गगनेतरनित्येषु च वर्तनाद्युगलावृत्तित्वेन गगनेतरनित्यगगनवृत्तित्वरहितत्वं, एतच्छब्दे वर्त-मानत्वादेतच्छब्दनिष्ठत्वं च विद्यते एव। तस्माद्गगनान्यत्वादेर्दृष्टान्ते सुप्रसिद्ध-त्वमित्यर्थः। **व्याघात इति।** यो गगनवृत्तित्वरहितः स गगनवृत्तिः कथं साध्यत इति व्याघातः प्रकट एव। तन्निवृत्यर्थं गगनेतरनित्यग्रहणम्। तथा च कथं तद्व्यवच्छेद इत्यत आह—**गगनवृत्तित्वरहितस्येत्यादि।** न्यूनविशेषण-

---

गगनपद को हटाकर 'गगनेतरनित्यवृत्तित्वरहितैतच्छब्दनिष्ठाधिकरणं साध्य-स्वरूप कहें तो साध्याप्रसिद्धिदोष होगा। एतच्छब्द के अनित्यत्व सिद्धि के पूर्व शब्द नित्यत्ववादी मीमांसक एतच्छब्दवृत्तिधर्मों को गगनेतरनित्यवृत्तित्वेन स्वीकार करते हैं। अतः गगन को साध्यविशेषणीभूत वृत्तित्वरहितत्व का घटक बनाया। गगनेतरनित्यवृत्तित्वरहित एतच्छब्दवृत्तिधर्म के अप्रसिद्ध रहने पर भी गगनेतरनित्यगगनवृत्तित्वरहित एतच्छब्दवृत्तिधर्म गगनान्योन्याभाव (गगनभेद) घटपटादि में तथा एतच्छब्द में सिद्ध है। गगनवृत्तित्वरहित एतच्छब्दनिष्ठाधिकरणं साध्य बनाने पर व्याघातदोष होगा। गगनवृत्तित्वरहित की गगन में सिद्धि करना व्याघातदोषग्रस्त है। अतः गगनेतरनित्य पद दिया। गगनवृत्तित्वरहितधर्म की गगन में सिद्धि करना भले ही व्याघातदोष ग्रस्त हो, गगनेतरनित्यगगनवृत्तित्वरहितधर्म की सिद्धि करने में व्याघातदोष नहीं है। न्यूनविशेषणविशिष्ट में व्याघातदोष रहने पर भी सम्पूर्ण विशेषणविशिष्ट में व्याघातदोष नहीं है। वह धर्म होगा गगन शब्दान्यतरत्व, एतादृश धर्म

**गगनं गगनेतरनित्यगगनवृत्तित्वरहितशब्दनिष्ठाधिकरणं मेयत्वादिति। पूर्वमहाविद्यायां निष्कृष्य एतस्मिन् शब्देऽनित्यत्वसिद्धिः। अस्यां तु यत्र क्वापि शब्देऽनित्यत्वसिद्धिरिति भेदः। एवमन्यत्रापि निष्कृष्य शब्द-विशेषानित्यत्वसाधकत्वयत्किञ्चिच्छब्दानित्यत्वसाधकत्वाभ्यां महाविद्याभेदो द्रष्टव्यः।।८।।**

**गगनं अनेकनित्यवृत्तित्वरहितैतच्छब्दनिष्ठाधिकरणं मेयत्वादिति।**

---

विशिष्टस्य व्याघातेऽपि, सम्पूर्णविशेषणविशिष्टस्य न व्याघात इत्यर्थः।।७।।

**आनं.**—प्राचीनमहाविद्यातो भेदनास्तित्वशङ्कां वारयितुमाह—**पूर्वेति।।८।।**

**भुवन.—गगनं गगनेतरनित्यगगनवृत्तित्वरहितेत्यादि।** पाश्चात्यानुमाने एतच्छब्दनिष्ठेत्युक्तेरेक एव विशिष्टः शब्दो गृहीतः। अत्र त शब्दनिष्ठेति-भणनात् सामान्येन यःकश्चिच्छब्दः इति पूर्वस्या अस्या महान्भेदः, तथैव चाभिदधाति—**पूर्वमहाविद्यायामित्यादि।।८।।**

**आनं.—अनेकेति।** अनेकनित्यवृत्तित्वरहितश्चासावनेतच्छब्दनिष्ठश्च तस्याधिकरणमित्यर्थः। एतच्छब्दनिष्ठाधिकरणमित्युक्ते मेयत्वादिनार्थान्तरं व्यावर्तयति—**नित्यवृत्तित्वरहितेति।** व्याघातं परिहरति—**अनेकनित्यवृत्ति-त्वरहितेति।** तथापि गगननिष्ठैकत्वादिनार्थान्तरत्वमत आह—**एतच्छब्द-निष्ठेति।** अनेकनित्यवृत्तित्वरहितः एतच्छब्दनिष्ठः एतच्छब्देतरनित्यान्योन्या-

---

गगन तथा शब्द वृत्ति रहते हुए भी गगनेतर नित्यवृत्ति न होने के कारण उभयवृत्तित्वरहित है। सपक्ष नित्य आत्मादि में तथा अनित्यघटादि में गगनान्योन्याभाव उक्त उभयवृत्तिरहित है। शेष पूर्ववत्।।७।।

अष्टममहाविद्या का साध्य भी सप्तमहाविद्या के साध्यतुल्य ही है। सप्तम से अष्टम में मात्र इतना भेद है, कि, सप्तम में एतत् शब्द (शब्द विशेष) में अनित्यत्व सिद्ध होता है। अष्टम में शब्द सामान्य में अनित्यत्वसिद्ध किया गया है। अनुमान का समन्वय पूर्ववत् करना है।।८।।

नवम महाविद्यानुमान द्वारा अनेक नित्यवृत्तित्वरहित एतच्छब्दवृत्ति धर्म को गगन में सिद्ध किया गया है। यहाँ विचारणीय यह है, कि किस अनेकनित्यवृत्तित्वरहितधर्म को लिया जाय जो एतच्छब्दवृत्ति होकर गगन में

**अनेकनित्यवृत्तित्वरहितः गगनवृत्तित्वरहितो वा एतच्छब्दवृत्तित्वरहितो वा उभयवृत्तिर्वा। गगनवृत्तित्वरहितो गगने व्याहतः। एतच्छब्दवृत्तित्वरहितश्च एतच्छब्दनिष्ठग्रहणेन निरस्तः। गगनैतच्छब्दनिष्ठस्य च अनेकनित्य-निष्ठत्वरहितत्वं तर्ह्येव स्यात, यद्ययं शब्दो नित्यो न स्यात्। एतच्छब्दनित्यत्वे गगनैतच्छब्दनिष्ठस्य अनेकनित्यनिष्ठत्वेन तद्रहितत्वानुप-**

---

भावो नित्येषु सिद्ध इति व्याप्तिसिद्धिः। नित्यानां पक्षतुल्यत्वाद्गगनै-तच्छब्दमात्रवृत्तिरनेकनित्यवृत्तित्वरहितो गगने भवन्नेतच्छब्दानित्यत्वं गमयेदिति भावः। अनेकनित्यवृत्तित्वरहितैतच्छब्दनिष्ठः किं गगनवृत्तिरुत एतच्छब्द-वृत्तित्वरहितः, उत गगनैतच्छब्दमात्रवृत्तिरिति विकल्प्याद्यौ निरस्यति—**गगनेत्यादिना**। तृतीयमङ्गीकृत्याह—**गगनैतच्छब्दनिष्ठस्येति**। शेषं स्पष्टम्।।९।।

**भुवन.—गगनमनेकनित्यवृत्तित्वरहितेत्यादि**। अनेकनित्यवृत्तित्व-रहितश्चासौ एतच्छब्दनिष्ठश्च तस्याधिकरममित्यर्थः। अनेकनित्यवृत्तित्वरहितः एतच्छब्दनिष्ठः एतच्छब्देतरनित्यत्वात्यन्ताभावादिरेतच्छब्दानित्येषु सिद्धः इति व्याप्तिसिद्धिः। गगनेतरनित्यानां च पक्षतुल्यत्वम्। तेन न तेषु साध्याभावो दोषपोषकः। गगनैतच्छब्दमात्रवृत्तिगनैतच्छब्दान्यतरत्वादिरनेकनित्यवृत्तित्वरहितो गगने भवन्नेतच्छब्दानित्यत्वं गमयेदिति भावः। अनेकनित्यवृत्तित्वरहितै-तच्छब्दनिष्ठः किं, १ गगनावृत्तः, २ उत एतच्छब्दवृत्तित्वरहितः, ३ उत गगनैतच्छब्दमात्रवृत्तिरिति त्रेधा विकल्प्य आद्यौ निरस्यति—**गगनवृत्तित्वे-त्यादिना**। तृतीयमङ्गीकृत्याह—**गगनैतच्छब्दनिष्ठस्येति**। **एतच्छब्देतरेति**। शब्दस्य नित्यत्वमद्यापि विवादास्पदीभूतम्। तेनैतस्माच्छब्दादितरेषामात्मादीनां

---

रहता है। इस में तीन कल्प किया गया है। (१) गगनवृत्तित्वरहित धर्म, गगनेतर किसी एक नित्य में रहने वाला धर्म, अनेकनित्यवृत्तित्वरहित है। (२) या एतच्छब्दवृत्तित्वरहितधर्म, वह भी किसी एकनित्य में रहता है, अतः अनेकनित्यवृत्तित्वरहित होगा। (३) अथवा गगनशब्दोभयवृत्तिधर्म वह भी जब तक शब्द में नित्यत्वनिश्चय नहीं हुआ तब तक नित्यगगन वृत्ति होने पर भी अन्यनित्य में न रहने के कारण अनेकनित्यवृत्तित्वरहित है ही। प्रथम पक्ष को नहीं स्वीकार कर सकते गगनवृत्तित्वरहित धर्म को गगन में वृत्ति कहना व्याघातदोष है। द्वितीय पक्ष भी नहीं गृहीत कर सकते एतच्छब्दवृत्तित्व रहित धर्म एतच्छब्दवृत्ति नहीं हो सकता। अतः तृतीयपक्ष गृहीत करेंगे, गगन तथा एतच्छब्द में रहने वाला धर्म, अनेकनित्यवृत्तित्वरहित तभी होगा जब

**पत्तेरेतच्छब्दानित्यत्वसिद्धिः। एतच्छब्देतरनित्यत्वात्यन्ताभावमुपादाय एतच्छब्दघटादौ साध्यप्रसिद्ध्या सपक्षत्वं, गगनव्यतिरिक्तनित्यादीनां च पक्षतुल्यत्वम्।।९।।**

**गगनं अनेकनित्यनिष्ठत्वरहितशब्दनिष्ठाधिकरणं मेयत्वादिति।। इयं च महाविद्या यत्र क्वचन शब्देऽनित्यत्वं गमयतीति पूर्वमहाविद्यातो भिद्यते।।१०।।**

---

यन्नित्यत्वं तदत्यन्ताभावमुपादायेत्यर्थः। यतः शब्देतरनित्यत्वात्यन्तभावः एतच्छब्दे घटादौ चाप्यस्ति। यदि च शब्देतरेतिपदेन नित्येभ्यः शब्दो बहिः कर्षितो न स्यात्, तदा **भाट्टै**र्नित्यत्वात्यन्ताभावस्य शब्देऽनङ्गीकृतत्वात् शब्दस्य दृष्टान्तत्वं न स्यात्। तस्माच्छब्दस्य दृष्टान्तत्वार्थं शब्देतरपदग्रहणम्।।९।।

**भुवन.—गगनमनेकनित्येति।** अस्या व्याख्यानं पूर्ववदेव बोद्धव्यम्। प्राचीनमहाविद्यातोऽस्या भेदाभावशङ्कामपाकर्तुमाह—**इयं चेति।।१०।।**

---

शब्द को अनित्य माने, यदि शब्द को नित्य मानेंगे तो गगनैतच्छब्दवृत्ति धर्म अनेकनित्यवृत्तित्वरहित नहीं होगा। गगन का नित्यत्व उभयवादी अभिमत है, यदि शब्द भी नित्य मान लिया जाय तब गगनैतच्छब्दवृत्तिधर्म अनेकनित्यवृत्ति ही हो जायेगा। अमेकनित्यवृत्तित्वरहित नहीं होगा।

सपक्षघटादि में शब्देतर आत्मादिनित्यवृत्तिनित्यत्वा का अत्यन्ताभावधर्म किसी एक नित्य में न रहने के कारण अनेकनित्यवृत्तित्वरहित है। तथा शब्देतरनित्यवृत्तिनित्यत्वप्रतियोगिक अभाव एतच्छब्द में भी है, अतः एतच्छब्दवृत्ति भी होगा। नित्यों से शब्द को पृथक् करने के लिए शब्देतरपद आवश्यक है। अन्यथा शब्द में नित्यत्वात्यन्ताभाव न मानने वाले भाट्टमीमांसकों के मत में शब्द दृष्टान्त नहीं होगा। उस अनेक नित्यवृत्तित्वरहित धर्म की गगन में सिद्धि आपेक्षित है। जो शब्दवृत्ति हो। गगनातिरिक्त नित्य पक्षतुल्य है। अतः वहाँ पर हेतु के रहने तथा साध्यसन्देह होने पर व्यभिचार नहीं है।।९।।

दशममहाविद्यानुमान नवम के समान ही है। दोनो में मात्र इतना भेद है, कि नवममहाविद्यानुमान द्वारा किसी शब्द विशेष में अनित्यत्व सिद्ध होता है। दशम द्वारा शब्द सामान्य में अनित्यत्व सिद्ध होता है। दशममहाविद्या जिस किसी शब्द में अनित्यत्व की गमक है।।१०।।

**गगनं गगनैतच्छब्दवृत्तित्वरहितनित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्व-रहितनित्यत्वाव्याप्यनित्यनिष्ठत्वरहिताधिकरणं मेयत्वात् घटवदिति।। अत्र च नित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितं नित्यत्वं, तदेव च नित्यत्वाव्याप्यनित्यनिष्ठत्वरहितं, नित्यत्वस्य नित्यनिष्ठत्वेऽपि नित्यत्व-व्याप्यत्वेन नित्यत्वाव्याप्यत्वरहितत्वात्। नित्यत्वस्य च गगनैतच्छब्दा-**

---

**आनं.—गगनमिति।** गगने एतस्मिन् शब्दे च ये वर्तन्ते तेषु गगनैतच्छब्दवृत्तित्वं धर्मः। तद्रहितश्च नित्यत्वव्यतिरिक्तत्वे सति नित्यत्वव्याप्यत्वरहितश्च, नित्यत्वाव्याप्यत्वे सति नित्यनिष्ठत्वरहितश्च। तस्याधिकरणमित्यर्थः। अधिकरणमित्युक्ते मेयत्वादिप्रसक्तिं व्यावर्तयति—**नित्यनिष्ठत्वरहितेति।** नित्यनिष्ठत्वरहिताधिकरणमित्युक्ते व्याप्त्यसिद्धिः, नित्यपदार्थेषु तदसम्भवादत उक्तम्—**नित्यत्वाव्याप्येति।** नित्यत्वस्य नित्यनिष्ठत्वेऽपि नित्यत्वव्याप्यत्वेन तदव्याप्यत्वे सति यन्नित्यनिष्ठत्वं (तत्?) नास्तीति नित्येषु साध्यसिद्धिः। नित्यत्वाव्याप्यनित्यनिष्ठरहिताधिकरणमिति च नित्यत्वेनार्थान्तरमत उक्तम्—**नित्यत्वव्याप्यत्वरहितेति।** नित्यत्वस्य नित्यत्वव्याप्यत्वेऽपि नित्यत्वव्यतिरिक्तवे सति तद्व्याप्यत्वाभावात्पुनरपि तेनैवार्थान्तरं व्यावर्तयति—**गगनैतच्छब्दवृत्तित्वरहितेति।।११।।**

**भुवन.—गगनं गगनैतच्छब्देत्यादि।** गगने एतस्मिन् शब्दे च ये वर्तन्ते तेषु गगनैतच्छब्दवृत्तित्वं धर्मः। तद्रहितश्चासौ नित्यत्वव्यतिरिक्तत्वे सति नित्यत्वव्याप्यत्वरहितश्च, स चासौ नित्यत्वाव्याप्यत्वे सति नित्यनिष्ठत्व-रहितश्च, तस्याधिकरणं गगनमित्यर्थः। अत्र साध्यो धर्मः पक्षे नित्यत्वम्। तस्य च द्वितीयतृतीयविशेषणविशिष्टस्यापि नित्ये शब्देऽङ्गीकियमाणे नित्ये गगने नित्ये च शब्दे वर्तनाद्गगनैतच्छब्दवृत्तित्वमेव स्यात्, न तु गगनैतच्छब्द-निष्ठत्वरहितत्वम्। तस्मान्नित्यत्वस्याविशेषणविशिष्टत्वानुपपत्तेः शब्दस्या-

---

ग्यारहवें महाविद्या का साध्य पूर्वोक्तसाध्यों से विलक्षण है। गगन पक्ष में गगन तथा एतत् शब्दवृत्तित्वरहित नित्यत्वव्यतिरिक्त नित्यत्वव्याप्यत्व-रहित तथा नित्यत्वाव्याप्यत्वविशिष्टनित्यत्वव्याप्यत्वरहित धर्म का अधि-करणत्व साध्य है। यहाँ पर साध्य धर्म नित्यत्व है। नित्यत्व नित्यत्व का व्याप्य तो है, परन्तु नित्यत्वव्यतिरिक्त जो नित्यत्वव्याप्य आकाशत्वादि उनसे रहित है। यह नित्यत्वधर्म नित्यत्व के अव्याव्य नित्यवृत्ति जो प्रमेयत्वादिधर्म उनसे भी रहित है। पुनश्च इस नित्यत्व को गगनवृत्ति होकर एतत् शब्दवृत्ति

**निष्ठत्वरहितत्वं तर्ह्येव स्यात्, यद्येतस्मिन् शब्देऽनित्यत्वं स्यादित्येतच्छब्दानित्यत्वसिद्धिः। इयं च महाविद्या पूर्वमेव व्याख्याता।।११।।**

**गगनं गगनशब्दवृत्तित्वरहितनित्यत्वव्यतिरिक्तनित्यत्वव्याप्यत्वरहितनित्यत्वाव्याप्यनित्यनिष्ठत्वरहिताधिकरणं मेयत्वादिति।।१२।।**

---

नित्यत्वमङ्गीकार्यम्। दृष्टान्ते च घटपटादौ घटत्वादिरनित्यत्वादिर्वा धर्मोऽवबोध्यः। अत्र च शब्दो गगनेतरनित्याश्च पक्षतुल्या इति न तेषु साध्यप्रसिद्धिः। सङ्क्षेपेण व्याचष्टे—**अत्र च नित्यत्वेत्यादि।** इयं च महाविद्या पूर्वमेव पक्षपक्षीकरणप्रवृत्तमहाविद्योदाहहरणावसरे सविस्तरं व्याख्यातेत्यतिदिशति—**इयं चेति।।११।।**

**भुवन.—गगनं गगनशब्दवृत्तित्वेत्यादि।** एतस्याः पाश्चात्यायाश्च महाविद्यायाः पृथगुपादानकारणं पूर्ववदेव वेदनीयम्। इति विपक्षं पक्षीकृत्य प्रवृत्ता द्वादशमहाविद्या उदाह्रियन्त।।१२।।

**अथ साध्यं पक्षीकृत्य प्रवर्तमाना महाविद्याभेदा दर्श्यन्ते यथा–**

---

नहीं होना चाहिए। यदि शब्द को भी नित्य मान लिया जाये तथा गगन का नित्यत्व उभयवादि सम्मत है। तब तो नित्यत्व, नित्य गगन तथा एतत् शब्दवृत्ति ही होगा। गगनवृत्तित्वविशिष्ट एतत् शब्दवृत्तित्व रहित नहीं होगा। अतः प्रत्यासत्या शब्द को अनित्य मानना होगा। तभी नित्यत्व, गगन एतत् शब्दोमयवृत्तित्व रहित होगा। इस प्रकार शब्द में अनित्यत्व सिद्ध हुआ। इस महाविद्या की पूर्व में पक्षोदेश्यकमहाविद्याओं के उदाहरण में सम्यग् व्याख्या की गयी है।।११।।

बारहवें महाविद्या का साध्य ग्यारहवे के समान ही है। दोनों में मात्र इतना भेद है, ग्यारहवें में एतत् शब्द यानी शब्द विशेष में अनित्यत्व सिद्ध किया गया है, बारहवें में शब्दसामान्य यानी जिस किसी शब्द में अनित्यत्व सिद्ध किया गया है।।१२।।

विपक्ष को पक्ष बनाकर शब्द में अनित्यत्वसाधक बारह महाविद्याओं का उदाहरण सहित व्याख्यान करने के बाद साध्य को पक्ष बनाकर शब्द में अनित्यत्व साधक महाविद्याओं का प्रयोग उदाहरण सहित. कर रहे हैं।

**अनित्यत्वं अनित्यत्वान्योन्याभावव्यतिरिक्तैतच्छब्दनिष्ठात्यन्ताभाव-प्रतियोगिनिष्ठत्वरहिताधिकरणं मेयत्वात् घटवदिति। अनित्यत्वा-न्योन्याभावव्यतिरिक्तश्चासौ एतच्छब्दनिष्ठात्यन्ताभावप्रतियोगिनिष्ठश्च। तस्य धर्मः अनित्यत्वान्योन्याभावव्यतिरिक्तैतच्छब्दनिष्ठात्यन्ताभावप्रतियोगित्वम्।**

---

**आनं.—अनित्यत्वमिति।** अनित्यत्वान्योन्याभावप्रतियोगित्वमनित्यत्वस्य नास्तीति तन्निष्ठो धर्मः प्रतियोगित्वनिष्ठत्वरहित इत्यर्थान्तरत्वमत आह—**अत्यन्ताभावेति।** घटनिष्ठात्यन्ताभावप्रतियोगिनिष्ठत्वरहिताधिकरणत्वेन तथाप्यर्थान्तरत्वं, घटेऽनित्यत्वात्यन्ताभावाभावात्, अनित्यत्वं तदप्रतियोगीत्यनित्यनिष्ठधर्मस्य तथात्वादत उक्तम्—**एतच्छब्दनिष्ठेति।** एतच्छब्दनिष्ठात्यन्ताभावप्रतियोगित्वाद्घटादिनिष्ठधर्माः एतच्छब्दनिष्ठात्यन्ताभावप्रतियोगिनिष्ठाः एवेति घटादिषु साध्याभावाव्याप्तिभङ्गोऽत आह—**अनित्यत्वान्योन्याभावव्यतिरिक्तेति।** अनित्यत्वान्योन्याभावव्यतिरिक्तत्वे सत्येतच्छब्दनिष्ठात्यन्ताभावप्रतियोगिनिष्ठत्वरहितो नित्यत्वान्योन्याभावः सर्वत्रेति व्याप्तिसिद्धिः। एतच्छब्दानित्यत्वाभावे नित्यत्वस्यैतच्छब्दनिष्ठात्यन्ताभावप्रतियोगित्वात्तन्निष्ठधर्माणामेतच्छब्दनिष्ठात्यन्ताभावप्रतियोगिनिष्ठत्वात्तद्रहिताधिकरणमनित्यत्वस्य न स्यादित्येतच्छब्दानित्यत्वसिद्धिरिति भावः॥१॥

**भुवन.**—अथ साध्यं पक्षीकृत्य प्रवर्तमानमहाविद्याभेदा दर्श्यन्ते तथा—**अनित्यत्वं अनित्यत्वान्योन्याभावेत्यादि।** अनित्यत्वस्यान्योन्याभावः, तस्माद्व्यतिरिक्तश्चासौ एतच्छब्दनिष्ठो योऽत्यन्ताभावः, तत्प्रतियोगिनिष्ठश्च तत्त्वेन रहितो यो धर्मः, तस्याधिकरणमनित्यत्वमिति विग्रहः। इदमत्राकूतम्। एतस्मिन् शब्दे निष्ठो योऽत्यन्ताभावस्तस्य प्रतियोगिनः एतच्छब्दमात्रनिष्ठैतच्छब्दत्वादिव्यतिरिक्ता घटत्वपटत्वादयः सर्वपदार्थधर्माः, तेषु निष्ठाः

---

**साध्यपक्षकमहाविद्यानुमान–**

महाविद्याओं द्वारा शब्द में अनित्यत्व सिद्ध करना लक्ष्य है। अब साध्यभूत अनित्यत्व को पक्ष बनाकर एतादृश साध्य की सिद्धि करेंगे जिससे परम्परया शब्द में अनित्यत्व सिद्ध हो सके। अनित्यत्वपक्ष में अनित्यत्वा-न्योन्याभाव (अनित्यत्वभेद) से अतिरिक्त एतत्शब्दवृत्ति अत्यन्ताभाव के प्रतियोगिवृत्ति रहित धर्म का अधिकरणत्व साध्य है। अनित्यत्वान्योन्याभाव (अनित्यभेद) से अतिरिक्त शब्द में रहने वाले अत्यन्ताभाव के प्रतियोगी

**तद्रहितश्च अनित्यत्वान्योन्याभावो वा स्यात्, एतच्छब्दनिष्ठात्यन्ताभावप्रतियोगिनिष्ठत्वरहितो वा। आद्यो व्याहतः। न हि अनित्यत्वमनित्यत्वव्यतिरिक्तमिति संभवति। एतच्छब्दनिष्ठात्यन्ताभावप्रतियोगिनिष्ठत्वरहितश्च अनित्यत्वे तर्ह्येव स्यात्, यद्यनित्यत्वमेतच्छब्दनिष्ठात्यन्ताभावप्रतियोगि न**

---

घटवृत्तित्वपटवृत्तित्वादयोऽनित्यत्वान्योन्याभावोऽपि च। तस्याप्यनित्यत्वं विना सर्वत्र वर्तनात्परम् अनित्यत्वान्योन्याभावव्यतिरिक्तेति पदेन घटादिषु व्याप्तिसिद्ध्यर्थमनित्यत्वान्योन्याभावो घटवृत्तित्वादिभ्यः पृथक् कृतः। ततश्चानित्यत्वान्योन्याभावव्यतिरिक्तैतच्छब्दनिष्ठात्यन्ताभावप्रतियोगिनिष्ठत्वेन रहिता ये धर्मास्तद्वदनित्यत्वमिति। एवंविधं च धर्मद्वयं स्यात्तदेवाह—**अनित्यत्वेति।** अनित्यत्वान्योन्याभावो वा, एतच्छब्दनिष्ठात्यन्ताभावप्रतियोगिनिष्ठत्वरहितो वा। **आद्यः पक्षे व्याहत इति।** न ह्यनित्यत्वान्योन्याभावोऽनित्यत्वे संभवति। भिन्नयोरेव द्वयोरन्योन्याभावस्य संभवात्। न चानित्यत्वमनित्यत्वाद्भिन्नमिति संभवति।

द्वितीयं पक्षे साधयति—**एतच्छब्देति।** एतच्छब्दनिष्ठात्यन्ताभावप्रतियोगिनो घटत्वादयः एतच्छब्दत्वादिव्यतिरिक्ताः सर्ववस्तुधर्माः, तेषु निष्ठाः घटवृत्तित्वादयः। घटत्वादिष्वपि घटवृत्तित्वादिधर्मसम्भवात्। तद्रहितश्च साध्यो धर्मः पक्षेऽनित्यत्वे एतच्छब्दवृत्तित्वलक्षणः। स चानित्यत्वे पक्षिते तदैव स्यात्, यद्यनित्यत्वं एतच्छब्दनिष्ठो योऽत्यन्ताभावस्तस्य प्रतियोगि न स्यात्।

इदमत्र हृदयम्। यद्यनित्यत्वस्य अत्यन्ताभावः शब्दनिष्ठः स्यात्, तदा शब्दवृत्तित्वलक्षणो धर्मोऽप्यनित्यत्वे पक्षिते न स्यात्। अनित्यत्वस्य शब्देऽवर्तमानत्वेन शब्दवृत्तिमङ्गीकार्यम्। तथा च शब्दत्वादिधर्मेषु यथा शब्दवृत्तित्वमस्ति, तथा अनित्यत्वेऽपि शब्दवृत्तित्वमस्ति। ततो तथा यथा

---

में एतादृश प्रतियोगित्वधर्म है। उससे रहित धर्म अनित्यत्वान्योन्याभाव होगा, या एतत् शब्दनिष्ठात्यन्ताभावप्रतियोगिनिष्ठत्वरहित धर्म होगा। प्रथमपक्ष में व्याघातदोष है। अनित्यत्व का भेद अनित्यत्व में कहना व्याघात है। द्वितीयपक्ष एतत् शब्दनिष्ठात्यन्ताभावप्रतियोगिनिष्ठत्वरहित धर्म अनित्यत्व में तभी सिद्ध होगा। जब शब्द अनित्य होगा। शब्द यदि नित्य मान लिया जाय तो शब्द में रहने वाले अनित्यत्वात्यन्ताभाव का प्रतियोगी ही अनित्यत्व हो जायेगा। एतत् शब्दनिष्ठात्यन्ताभावप्रतियोगिनिष्ठत्वरहित नहीं होगा।

समन्वय एतत् शब्दवृत्ति जो अत्यन्ताभाव उसके प्रतियोगी, एतत् शब्दमात्रवृत्ति एतत्शब्दत्वादि से अतिरिक्त घटत्वपटत्वादिसकलपदार्थवृत्तिधर्म

**स्यात् इत्यनित्यत्वस्यैतच्छब्दनिष्ठत्वसिद्धिः। अनित्यत्वान्योन्याभावमुपादाय घटादौ साध्यप्रसिद्धिः।।१।।**

**अनित्यत्वं अनित्यत्वान्योन्याभावव्यतिरिक्तशब्दनिष्ठात्यन्ताभाव-प्रतियोगिनिष्ठत्वरहिताधिकरणं मेयत्वादिति। इयं च महाविद्या यत्र क्वचन शब्देऽनित्यत्वं गमयति, पूर्वा च निष्कृष्ट शब्दविशेषे इति भेदः।।२।।**

**यावन्तश्च मूलानुमानपक्षं पक्षीकृत्य प्रवृत्ता महाविद्याभेदाः, तावन्तः साध्यमपि पक्षीकृत्य प्रयोक्तव्याः। यथा–**

---

शब्दत्वश्रावणत्वाद्य; शब्दधर्मास्तथा अनित्यत्वमपि शब्दधर्मत्वेन स्वीकर्तव्यम्। तथा च परिशेषादनित्यत्वं शब्दस्यायातमेवेत्येतच्छब्दानित्यत्व-सिद्धिरिति। **अनित्यत्वान्योन्याभावमिति**। अनित्यत्वस्य योऽन्योन्याभावोऽन्यत्वं तस्य घटात्मादौ नित्यानित्ये तद्धर्मेषु च सर्वत्र सद्भावाद्व्याप्तिसिद्धि-र्ज्ञेयेत्यर्थः।।१।।

**भुवन.—अनित्यत्वमित्यादि**। व्याख्यानं पूर्ववद्बोद्धव्यम्। प्राच्य-महाविद्यातोऽस्या भेदमुद्भावयति—**इयं चेत्यादि**।।२।।

आनं.—**स्वेति**। स्वस्मिन्नितरस्मिंश्च ये वर्तन्ते तेषु स्वस्वेतरवृत्तित्वं

---

होंगे, उनमें वृत्तिधर्म घटवृत्तित्वादि तथा अनित्यत्वान्योन्याभाव भी होगा। अनित्यत्वान्योन्याभाव (अनित्यत्वभेद) अनित्यत्व से अतिरिक्त सभी में रहता है। अनित्यत्वान्योन्याभावव्यतिरिक्त साध्यविशेषण कर देने पर घटादि सपक्षो में अनित्यत्वान्योन्याभावव्यतिरिक्त एतत्शब्दवृत्ति अत्यन्ताभावप्रतियोगित्व रहित अनित्यत्व साध्य की सिद्धि होती है। अथवा अनित्यत्वान्योन्या-भावव्यतिरिक्त एतत्शब्दनिष्ठात्यन्ताभावप्रतियोगिनिष्ठत्वरहित धर्म अनित्य-त्वान्योन्याभाव अनित्यत्वं न (अनित्यत्वभेद) को लेंगे वह अनित्यत्व से अतिरिक्त सभी नित्यनित्यपदार्थो में है।।१।।

अनित्यत्वपक्षक दोनो महाविद्यानुमानो के साध्यो में विशेष अन्तर नहीं है। मात्र इतना भेद है। प्रथम महाविद्यानुमान द्वारा एतत् शब्द (शब्दविशेष) में अनित्यत्व सिद्ध किया गया है। द्वितीयमहाविद्यानुमान द्वारा शब्द सामान्य जिस किसी शब्द में अनित्यत्वसिद्धि की गयी है।।२।।

इस प्रकार जितने महाविद्यानुमान मूलानुमान शब्दोऽनित्यः कृतत्वात् शब्दपक्ष को लेकर प्रवृत्त है। उतने महाविद्यानुमान साध्य अनित्यत्व को लेकर

**अनित्यत्वं स्वस्वेतरवृत्तित्वरहितैतच्छब्दनिष्ठधर्मवत् मेयत्वादिति। शब्दनिष्ठस्य धर्मः शब्दनिष्ठधर्मः। एवं महाविद्या प्रयोज्या सूर्वत्र।।१।।**

---

धर्मः। तद्रहितश्चासावेतच्छब्दनिष्ठधर्मश्च, तद्वत्त्वस्याधिकरणमित्यर्थ। अनित्यत्वमेतच्छब्दनिष्ठधर्मवदित्युक्ते शब्दनिष्ठं शब्दत्वं, तस्य धर्मो ज्ञेयत्वं, तदधिकरणमर्थान्तरमित्यनित्यत्वमत उक्तम्—**स्वेतरवृत्तिंत्वरहिततेति**। अप्रसिद्धविशेषणत्वपरिहाराय स्वस्वेतरेत्युक्तम्। पक्षान्योन्याभावमादाय व्याप्तिसिद्धिः। स्वस्वेतरवृत्तित्वरहितशब्दनिष्ठधर्मः स्वेतरमात्रशब्दनिष्ठवृत्तिर्वाऽनित्यत्वमात्रवृत्तिर्वा। आद्यो व्याहतः। द्वितीयः शब्दनिष्ठधर्मः सिध्यन्ननित्यत्वस्यैतच्छब्दधर्मत्वं गमयेदित्येतच्छब्दानित्यत्वसिद्धिरिति भावः। **एवं सर्वत्रेति।** अनित्यत्वमनित्यत्वान्योन्याभावाव्याप्यैतच्छब्दनिष्ठधर्मवन्मेयत्वाद्धटवदित्यादावित्यर्थः॥१॥

**भुवन.—यावन्त इति।** यावन्तो महाविद्याभेदाः मूलानुमानपक्षं शब्दं पक्षीकृत्य प्रवृत्तास्तावन्तः साध्यमनित्यत्वरूपमपि पक्षीकृत्य प्रयोक्तव्याः। यथा—**अनित्यत्वं स्वस्वेतरेत्यादि।** स्वमनित्यत्वं, स्वेतरदनित्यत्वादन्यद्विश्वमपि। तयोः स्वस्वेतरवृत्तित्वं धर्मः, तद्रहितश्चासौ एतच्छब्दनिष्ठस्य धर्मश्च। तद्वत्तस्याधिकरममित्यर्थः। अनित्यत्वमेतच्छब्दनिष्ठधर्मवदित्युक्ते एतच्छब्दनिष्ठमेतच्छब्दत्वं, तस्य धर्मो ज्ञेयत्वं, तदधिकरणमनित्यत्वमित्यर्थान्तरम्। अत उक्तं—**स्वेतरवृत्तित्वरहितेति।** अप्रसिद्धविशेषणत्वपरिहाराय स्वेत्यूचे। पक्षान्योन्याभावमादाय व्याप्तिसिद्धिः। स च पक्षादन्यत्र

---

प्रवृत्त होंगे। उदाहरण के रूप में शब्दपक्ष में अनित्यत्व साधक प्रथम महाविद्याऽनुमान को लिया है। अनित्यत्वं स्वस्वेतरवृत्तित्वरहित एतत् शब्दनिष्ठधर्मवत् मेयत्वात्। स्वस्वेतरवृत्तित्वरहित पद से पूर्ववत् स्वस्वेतर (युगल) वृतित्वाभाववत् धर्म को लेना है। स्वस्वेतरवृत्ति प्रमेयत्वादिधर्म है। प्रमेयत्वधर्म भी प्रमेय होने के कारण स्ववृत्ति है, तथा प्रमेयत्वातिरिक्त सकल प्रमेयों में रहने के कारण स्वेतरवृत्ति भी है। सत्ताधर्म भी सत्ता में रहते हुए सकलभापदार्थों में रहने के कारण स्वेतरवृत्ति भी है। इससे भिन्न धर्म जो एततृशब्द में वृत्ति हो वह अनित्यत्वपक्ष में साध्यत्वेनाभिमत है। स्वस्वेतरवृत्तित्वरहित धर्म, या स्वेतर (अनित्यत्वपक्षेतर) शब्दमात्रनिष्ठ धर्म हो सकता है, अथवा अनित्यत्वमात्रवृत्ति धर्म हो सकता है। स्वेतरशब्दमात्रवृत्तिधर्म स्व (अनित्यत्व) वृत्ति न होने के कारण युगलवृत्ति नहीं है। तथा अनित्यत्व-

**इति साध्यं पक्षीकृत्य प्रयुक्ता महाविद्या दर्शिताः।**

---

सर्वत्र वर्तमानत्वेन शब्दनिष्ठेष्वपि वर्तनाच्छब्दनिष्ठस्य शब्दत्वश्रावणत्वादेर्धर्म एवेति। अत्र च पक्षे साध्यो धर्मोऽनित्यत्वमात्रवृत्तिरनित्यत्वभिन्नविश्वान्यत्वादिः। स चानित्यत्वे एव वर्तनादन्यत्र चावर्तनात्स्वेतरवृत्तित्वरहित एव। स च शब्दनिष्ठधर्मस्तदैव स्यात्, यद्यनित्यत्वं शब्दनिष्ठं स्यात्। तच्चेतच्छब्दनिष्ठं जातं तदानीमनित्यः शब्दो जात एवेत्यभिप्रायः। कर्मधारयव्यावृत्तिमाह— **शब्दनिष्ठस्य धर्म इति। एवमिति।** अनित्यत्वमेतच्छब्दवृत्तित्वव्यतिरिक्तै-तद्धर्मत्वरहिताधिकरणं मेयत्वात् घटवदित्यादिमहाविद्या सर्वत्र प्रयोज्येत्यर्थः। एतव्द्याख्या। एतच्छब्दवृत्तित्वव्यतिरिक्ता ये एतद्धर्मा अनित्यत्वधर्माः। तत्त्व-रहितश्च धर्मः पक्षावृत्तिर्वा, एतच्छब्दवृत्तित्वं वा। आद्यः पक्षे व्याहतत्वाद्-दृष्टान्तोपयोगी। द्वितीयस्तु पक्षे सिद्ध्यन्ननित्यत्वमेतच्छब्दस्य साधयेदिति भावः। विशेषव्याख्यानं त्वस्याः पक्षपक्षीकरणप्रवृत्ततृतीयमहाविद्यावद्बोद्ध-व्यम्।।१।।

---

वृत्तिधर्म भी स्वेतरवृत्ति न होने के कारण युगलवृत्ति नहीं है। यदि प्रथमपक्ष स्वेतर (अनित्यत्वेतर) वृत्तिधर्म को अनित्यत्व में सिद्ध करेंगे, तो व्याघातदोष होगा। अतः अनित्यत्वमात्रवृत्तिधर्म को शब्दवृत्तित्वेन अनित्यत्वपक्ष में कहना है। वह तभी सम्भव है, जब शब्द को अनित्य माना जाय। शब्द के नित्य रहने पर अनित्यत्ववृत्तिधर्म शब्दवृत्ति नहीं हो सकता। इस प्रकार अनित्यत्व साध्य को पक्ष बनाकर स्वस्वेतरवृत्तित्वरहित एतत्शब्दनिष्ठत्व साध्य के द्वारा शब्द में अनित्यत्वसिद्ध हुआ। सपक्ष नित्यानित्यसकलपदार्थों में पक्षान्यो-न्याभाव (अनित्यत्वपक्षभेद) को लेकर व्याप्ति बन जायेगी। पक्षान्योन्याभाव भी पक्ष (अनित्यत्व) में न रहने के कारण तथा एतत् शब्दवृत्ति होने के कारण स्वस्वेतरवृत्तित्वरहित एतत् शब्दवृत्ति ही है। इसी प्रकार सभी महाविधाओं का प्रयोग साध्यपक्षकत्वेन शब्द में अनित्यत्वसाधन के लिए करना चाहिए।।१।।

इस प्रकार साध्य को पक्ष बनाकर महाविद्यानुमान प्रयोग किया गया। अब साध्याभाव को पक्ष बनाकर प्रवृत्तमहाविद्यानुमानो के प्रयोग बता रहे है।

**साध्याभावपक्षकमहाविद्यानुमान**—साध्य अनित्यत्व है, साध्याभाव अनित्यत्वात्यन्ताभाव (नित्यत्व) है। उसको पक्ष बनाकर अनित्यत्वात्यन्ता-भावान्योन्याभावव्यतिरिक्त एतत्शब्दनिष्ठाभाव का प्रतियोगित्व साध्य है।

**अथ साध्याभावं पक्षीकृत्य प्रवर्तमाना महाविद्याभेदा यथा-**

**अनित्यत्वात्यन्ताभावः अनित्यत्वात्यन्ताभावान्योन्याभावव्यतिरिक्तै-तच्छब्दनिष्ठाभावप्रतियोगी मेयत्वात् घटवत् इति।। अनित्यत्वात्यन्या-**

---

**आनं.**—एतच्छब्दनिष्टाभावप्रतियोगीत्युक्ते सिद्धसाधनम्, अनित्यत्वात्यन्ताभावान्योन्याभावस्यैतच्छब्देऽभावादत उक्तम्—**अनित्यत्वात्यन्ताभावान्योन्याभावव्यतिरिक्तेति**। प्रागभावादिः किं न स्यादत्राह—**तस्येति**। अत्यन्ताभावस्यानाद्यनन्तत्वादित्यर्तः।।१।।

**भुवन.**—अथ साध्याभावं पक्षीकृत्य प्रवर्तमानमहाविद्याभेददिदर्शयिषया प्राह—**अथ साध्याभावमित्यादि**। साध्यं शब्दानित्यत्वादिकं, तस्य योऽभावस्तं साध्याभावमित्यर्थः। महाविद्यां दर्शयति **अनित्यत्वास्यात्यन्ताभावोऽनित्यत्वात्यन्ताभावेत्यादि। 'तत्तादात्म्यनिषेधान्यतत्स्थाभावविरोधिता'** इति कारिकार्द्धमाश्रित्येयं महाविद्या प्रवृत्ता। अनित्यत्वात्यन्ताभावो नित्यत्वं पक्षः। अनित्यत्वात्यन्ताभावो नित्यत्वं तस्य योऽन्योन्याभावः, तस्माद्व्यतिरिक्तो

---

**'तत्तादात्म्यनिषेधान्यतत्स्थाभावविरोधिता'** इस कारिका के अंश को लेकर उक्त महाविद्यानुमान प्रवृत्त है। तत् यानी पक्ष के तादात्म्याभाव (अन्योन्याभाव) से भिन्न अभीष्ट शब्दादिवृत्ति जो संसर्गाभाव उसका प्रतियोगित्व साध्य है। यहाँ पर अनित्यत्वात्यन्ताभाव (नित्यत्व) पक्ष है। उसमें साध्य है, **'अनित्यत्वात्यन्ताभाव'** (नित्यत्व) के अन्योन्याभाव (नित्यत्वभेद) से अतिरिक्त एतत् शब्दनिष्ठ अत्यन्ताभाव का प्रतियोगित्व'। नित्यत्वप्रतियोगिक एतत्‌शब्दनिष्ठ दो अभाव हो सकते है। नित्यत्वप्रतियोगिकात्यन्तभाव, या तो नित्यत्वप्रतियोगिकान्योन्याभाव, (नित्यत्वभेद) प्रागभाव प्रध्वंसाभाव नित्यत्व का सम्भव ही नहीं है। अनित्यत्वात्यन्ताभावान्योन्याभावव्यतिरिक्तपद साध्य का विशेषण कर देने से नित्यत्वान्योन्याभाव (नित्यत्वभेद) एतत् शब्दवृत्ति लिया नहीं जा सकेगा। प्रत्यासत्या नित्यत्वात्यन्ताभाव एतत् शब्दवृत्तित्वेन गृहीत होगा, उसका प्रतियोगित्व नित्यत्व में सिद्ध है। अनित्यत्वात्यन्ताभाव एतत् शब्द निष्ठ तभी होगा जब शब्द को अनित्य माना जायेगा। शब्द को नित्य मानने पर नित्यत्व शब्दवृत्ति होगा नित्यत्वात्यन्ताभाव शब्द में नहीं रहेगा। इस प्रकार अनित्यत्व साध्य के अभाव नित्यत्व में उक्त साध्यसिद्धि द्वारा भी शब्द में अनित्यत्व सिद्ध हुआ। सपक्ष नित्यानित्यपदार्थों में नित्यत्वभेदातिरिक्त शब्दवृत्ति अभाव स्वधर्मान्योन्याभाव है। स्व में स्वधर्म का अत्यन्ताभाव न रहने

**भावस्य चान्योन्याभावव्यतिरिक्तोऽभावः अत्यन्ताभाव एव। तस्य प्राक्प्रध्वंसाभावविरहात्। अनित्यत्वात्यन्तभावावस्य चात्यन्ताभावोऽनित्यत्वमेवेत्येतच्छब्दानित्यत्वसिद्धिः।।१।।**

---

यः एतच्छब्दनिष्ठोऽभावस्तस्य प्रतियोगीति। इदमत्र तत्त्वम्। नित्यत्वप्रतियोगिनौ एतच्छब्दनिष्ठौ द्वावभावौ सम्भवतः, अन्योन्याभावो वा, अत्यन्ताभावो वा। प्रागभावप्रध्वंसाभावौ च नित्यत्वस्य न सम्भवतः। तस्य सदा स्थायित्वेनोत्पत्तिविनाशाभावात्। तत्र चानित्यत्वात्यन्ताभावान्योन्याभावव्यतिरिक्तपदेन नित्यत्वान्योन्याभावस्यैतच्छब्दनिष्ठाभावेभ्यो निषेधात् नित्यत्वमेतच्छब्दनिष्ठात्यन्ताभावस्यैव प्रतियोगि साध्यते। तथा च नित्यत्वस्यात्यन्ताभावः शब्दे तदैव स्यात्, यद्यनित्यः शब्दः स्यादित्यर्थः। व्याख्यानं तु उक्तार्थमेव—**अनित्यत्वात्यन्ताभावस्य चात्यन्ताभावइति।** 'परस्परविरोधे हि न प्रकारान्तरस्थितिः' इति न्यायादनित्यत्वात्यन्ताभावात्यन्ताभावोऽनित्यत्वमेवेत्यनित्यत्वसिद्धिरेतच्छब्दस्येति। इह च घटाकाशादयो दृष्टान्ताः सर्वेऽपि ज्ञेयाः, तद्धर्माश्च। तत्र च नित्यत्वान्योन्याभावव्यतिरिक्तः एतच्छब्दनिष्ठोऽभावः स्वस्वान्योन्याभावावादिः तस्य प्रतियोगित्वं धर्मो ज्ञेयः। तथात्रापि शब्दः सपक्ष एव। यतः शब्दोऽपि शब्दनिष्ठात्यन्ताभावप्रतियोग्येव। न हि

---

पर भी स्वधर्म का भेद सर्व अनुभव सिद्ध है। शब्दः न शब्दत्वम् शब्द में शब्दत्वभेद अनुभव सिद्ध है। जिस प्रकार स्वधर्मभेद शब्द में है, उसी प्रकार सभी पदार्थों में है। इस प्रकार जितने महाविद्यानुमान मूलानुमान के पक्ष, शब्द को लेकर प्रवृत्त है। वे सभी महाविद्यानुमान साध्याभाव को पक्ष मानकर साध्यविशेष की सिद्धि करते हुए शब्द में अनित्यत्व के साधक होगे।

दृष्टान्त के रूप में पूर्ववत् शब्दपक्ष में अनित्यत्व साधक प्रथममहाविद्यानुमान को लिया है। अनित्यत्वात्यन्ताभाव (नित्यत्व) स्वस्वेतरवृत्तित्वरहित एतत् शब्दनिष्ठधर्मवान् मेयत्वात्, स्व-पक्षीभूतनित्यत्व स्वेतर नित्यत्वभिन्न सकलपदार्थ उनमें रहने वाले धर्म से अतिरिक्त जो शब्द में न रहता हो उस धर्म का आश्रय नित्यत्व है। ऐसा धर्म पक्षान्यान्यत्व पक्ष का अभेद नित्यत्वतादात्म्य होगा। वह धर्म नित्यत्व मात्र में रहता है, स्ववृत्ति हो कर स्वेतर वृत्ति न होने के कारण स्व स्वेतर वृत्तित्वरहित है। तथा शब्दवृत्ति भी नहीं है। नित्यत्वतादात्म्य शब्दावृत्तित्वेन नित्यत्वपक्ष में तभी

**यावत्यश्च महाविद्या मूलानुमानपक्षं पक्षीकृत्य प्रवत्ताः, तावत्यः साध्यात्यन्ताभावमपि फक्षीकृत्य प्रयोक्तव्याः। यथा–**

**अनित्यत्वात्यन्ताभावः स्वस्वेतरवृत्तित्वरहितैतच्छब्दानिष्ठधर्मवान् मेयत्वात् घटवदिति।।१।।**

---

शब्दे शब्दोऽस्ति। शब्दे शब्दत्वादिधर्माणामेव भावात्। शब्दत्वादौ च शब्दनिष्ठोऽभावः शब्दत्वाद्यन्योन्याभावादिः, तत्प्रतियोगित्वं च शब्दत्वादीनां व्यक्तमेवेति तेषामपि सपक्षता, इति न केवलान्वयित्वभङ्गशङ्कापि विधेयेत्यर्थः।।१।।

**आनं.**—एतच्छब्दनिष्ठो न भवतीत्येतच्छब्दानिष्ठस्तस्य धर्मस्तद्वानित्यर्थः। अनित्यत्वात्यन्ताभावस्यैतच्छब्दनिष्ठत्वे तद्धर्मस्यैतच्छब्दनिष्ठधर्मत्वात् एतच्छब्दनिष्ठधर्मवत्त्वायोगात् अनित्यत्वात्यन्ताभावः एतच्छब्दनिष्ठो न भवतीत्येतच्छब्दानित्यत्वसिद्धिरिति भावः। मेयत्वादिनार्थान्तरं व्यावर्तयितुं स्वेतरवृत्तित्वरहितग्रहणम्। अप्रसिद्धविशेषणत्वपरिहाराय स्वस्वेतरेत्युक्तम्। पक्षान्योन्याभावमादाय साध्यानुगमः।।१।।

**भुवन.**—पक्षपक्षीकरणप्रवृत्तमहाविद्यानामत्राप्यतिदेशं कुर्वाणः प्रथमां साध्याभावं पक्षीकृत्य प्रवृत्तामाह यथा—**अनित्यत्वात्यन्ताभावः स्वस्वेतरेत्यादि।** स्वं नित्यत्वं, स्वेतरत् नित्यत्वान्यद्विश्वं तद्वृत्तित्वरहितः। एतच्छब्दे निष्ठो न भवतीत्येतच्छब्दानिष्ठः, तस्य धर्मः एतच्छब्दानिष्ठधर्मः। स्वस्वेतरवृत्तित्वरहितश्चासौ एतच्छब्दानिष्ठधर्मश्च, स विद्यते यत्रासौ तद्वान्। नित्यत्वं

---

सिद्ध होगा, जब शब्द नित्य न हो, शब्द यदि नित्य होगा तो नित्यत्व तादात्म्य शब्दवृत्ति ही होगा, शब्दावृत्ति नहीं होगा।

इस प्रकार साध्याभाव को पक्ष बनाकर शब्दावृत्ति नित्यत्वतादात्म्य की सिद्धि करते हुए शब्द में अनित्यत्व परम्परया सिद्ध होता है। सपक्ष नित्यानित्य सकल पदार्थों में पक्षान्यवृत्तिधर्म को लेकर व्याप्ति बन जायेगी। पक्षान्यवृत्तिधर्म घटत्व आकाशत्व आदि पक्ष में न रहते हुए पक्षेतरवृत्ति है। अतः स्वस्वेतरवृत्तित्वरहित है, तथा शब्दवृत्ति भी नहीं है। यतः स्वस्वेतर वृत्तित्वरहित शब्दावृत्तित्वेन साध्य है, अतः शब्द सपक्ष नहीं हो सकता। शब्दावृत्ति धर्म शब्द में सिद्धि करना व्याघात दोष है। इसी प्रकार साध्याभाव को पक्ष बनाकर अन्यमहाविद्यानुमानो का प्रयोग भी करना चाहिए। इस प्रकार

**इति साध्याभावपक्षीकरणप्रवृत्तमहाविद्योपायः प्ररूपितः।**

**अथ पक्षनिष्ठधर्मं पक्षीकृत्य प्रवर्तमाना महाविद्याभेदा यथा–**

**शब्दत्वं शब्दत्वव्यतिरिक्तैतच्छब्दनिष्ठत्वरहितशब्दत्वव्यतिरिक्तानित्यत्वात्यन्ताभावव्यतिरिक्तत्वरहितान्यत् मेयत्वादिति।। ये शब्दत्व-**

---

स्वस्वेतरवृत्तित्वरहितैतच्छब्दानिष्ठधर्माश्रयः इत्यर्थः। अत्र नित्यत्वे पक्षे पक्षान्यान्यत्वं धर्मः। स च पक्षे एव वर्तनात्, अन्यत्र चावर्तनात् स्वस्वेतरवृत्तित्वरहितोऽस्ति। स चैतच्छब्दानिष्ठस्य धर्मस्तदैव स्यात्, यदि नित्यत्वमेतच्छब्दानिष्ठं स्यात्। नित्यत्वं च यदि नैतच्छब्दनिष्ठं, तदैतच्छब्दस्यानित्यत्वं जातमेवेत्येतच्छब्दस्य अनित्यत्वसिद्धिरिति। अत्र च दृष्टान्ते सर्वत्र पक्षान्यत्वं धर्मः। स च पक्षेऽवर्तमानत्वेन पक्षादन्यत्र सर्वत्र वर्तमानत्वेन च स्वस्वेतरवृत्तित्वरहितो घटत्वाकाशत्वादौ वर्तमानत्वेन चैतच्छब्दानिष्ठस्य घटत्वादेरपि धर्म एवेति घटाकाशशब्दादौ सर्वत्रापि तेन धर्मेण साध्यप्रसिद्धिर्द्रष्टव्येति तत्त्वार्थः।

**एवमनित्यत्वात्यन्ताभावः सम्प्रतिपन्नैतद्धर्मत्वानाक्रान्ताधिकरणं मेयत्वाद्धटवदित्यादयोऽपि महाविद्याः** यथा सम्भवमुदाहर्तव्याः अत्र च सम्प्रतिपन्नैतद्धर्मत्वानाक्रान्तो धर्मः पक्षावृत्तिर्वा विप्रतिपन्नमेतच्छब्दानिष्ठत्वं वा। आद्यः पक्षे व्याहत इति तेन सर्वत्र दृष्टान्ते साध्यसिद्धिः। द्वितीयस्तु विप्रतिपन्नैतच्छब्दानिष्ठत्वरूपः पक्षे सिद्ध्यन्ननित्यत्वमेतच्छब्दस्य गमयेदिति तात्पर्यम्।।१।।

**आनं.—शब्दत्वमिति।** शब्दत्वव्यतिरिक्तत्वे सत्येतच्छब्दनिष्ठरहितश्चासौ शब्दत्वव्यतिरिक्तत्वे सति अनित्यत्वात्यन्ताभावव्यतिरिक्तत्वरहितश्च,

---

साध्याभावपक्षक महाविद्यानुमानों का प्रायोग दिखा कर पक्षनिष्ठधर्म को पक्ष वनाकर महाविद्यानुमान का प्रयोग दिखा रहे है। पक्षशब्दवृत्तिधर्म शब्दत्व को पक्ष मानकर ऐसे साध्य की पक्षधर्म में सिद्धि करेंगे जो शब्द को अनित्य माने विना सिद्ध न हो सके।।१।।

## पक्षवृत्तिधर्मपक्षकमहाविद्यानुमान

शब्दत्व पक्ष में शब्दत्वव्यतिरिक्ति जो एतत् शब्दवृत्तिधर्म इससे भिन्न तथा शब्दत्वव्यतिरिक्ति अनित्यत्वात्यन्ताभाव (नित्यत्व) अतिरिक्ति से भिन्न जो

**व्यतिरिक्ता एतच्छब्दनिष्ठाश्च तेषु शब्दत्वव्यतिरिक्तत्वे सति एतच्छब्द-निष्ठत्वं धर्मः। ये च शब्दत्वव्यतिरिक्तत्वे सति अनित्यत्वात्यन्ताभाव-व्यतिरिक्ताः, तेषु शब्दत्वव्यतिरिक्तत्वे सति अनित्यत्वात्यन्ताभाव-व्यतिरिक्तत्वं धर्मः। शब्दत्वव्यतिरिक्तैतच्छब्दनिष्ठत्वरहितश्चासौ शब्दत्व-व्यतिरिक्तानित्यत्वात्यन्ताभावव्यतिरिक्तत्वरहितश्च। ततोऽन्यत् भिन्न-मित्यर्थः।**

---

ततोऽन्यद्भिन्नमित्यर्थः। शब्दत्वमन्यदित्युक्ते यतः कुतश्चिदन्यत्वेनार्थान्तरमत उक्तम्—**अनित्यत्वात्यन्ताभावव्यतिरिक्तत्वरहितेति**। तथापि व्याप्तिभङ्गः, अनित्यत्वात्यन्ताभावे एतदभावादत उक्तम्—**शब्दत्वव्यतिरिक्तेति**। एवमपि न प्रकृतसाध्यसिद्धिः, अनित्यत्वात्यन्ताभावाद्यत्किञ्चिन्निष्ठान्यत्वोपपत्तेरत उक्तम्—**एतच्छब्दनिष्ठत्वरहितेति**। तथापि व्याप्तिभङ्गः, नित्यत्वात्यन्ताभावे कथितरूपसाध्याभावादय उक्तम्—**शब्दत्वव्यतिरिक्तैतच्छब्दनिष्ठत्वरहितेति।** पक्षान्योन्याभावमादायैव साध्यानुगमः। अनेतन्निष्ठादनित्यत्वात्यन्ताभावादन्यत्वं सिध्यदेतस्मिन्ननित्यत्वं गमयेदिति भावः। व्याचष्टे—**ये शब्दत्वेति**।।१।।

**भुवन.**—इदानीं **'काचित्साध्याभावमित्यादि'** इत्यत्रादिपदेन व्यञ्जित-महाविद्यान्तरप्रकारप्ररूपणाय प्राह—**अथ पक्षनिष्ठं धर्ममित्यादि**। पक्षः शब्दः, तन्निष्ठं शब्दत्वादिधर्ममित्यर्थः। महाविद्यामुदाहरति—**यथा, शब्दत्वं शब्दत्वव्यतिरिक्तेत्यादि**। शब्दत्वव्यतिरिक्ता ये एतच्छब्दनिष्ठाः श्रावण-त्वादयः, तत्त्वरहितश्चासौ शब्दत्वव्यतिरिक्तत्वे सत्यनित्यत्वात्यन्ताभावो नित्यत्वं, तव्द्यतिरिक्ता ये घटत्वाकाशत्वादयः तत्त्वरहितश्च। तस्मादन्यद्भिन्नं शब्दत्वमित्यर्थः। शब्दत्वमन्यदित्युक्ते यतः कुतश्चिदन्यत्वेनार्थान्तरत्वम्। अत

---

धर्म उसका भेद शब्दत्व में साध्य है। शब्दत्वव्यतिरिक्त एतत् शब्द निष्ठ श्रावणत्वादि धर्म रहित तथा अनित्यत्वात्यन्ताभाव (नित्यत्व) से भिन्न घटत्वादि धर्म रहित जो पक्षान्योन्याभाव (शब्दत्वभेद) का भेद शब्दत्व में सिद्ध हुआ।

जो धर्म शब्दत्वव्यतिरिक्त एतत् शब्दनिष्ठ है, उसमें शब्दत्वव्यतिरिक्त एतत् शब्द निष्ठत्वधर्म है। तथा जो शब्दत्वव्यतिरिक्त अनित्यत्वात्यन्ताभाव (नित्यत्व) व्यतिरिक्त है, उनमें शब्दत्वव्यतिरिक्त अनित्यत्वात्यन्ताभाव व्यतिरिक्त धर्म है। जो धर्म उभय रहित हो उसका भेद शब्दत्व में साध्यत्वेन अभिप्रेत है।

**शब्दत्वव्यतिरिक्तैतन्निष्ठत्वरहितश्च शब्दत्वं वा स्यात्, एतच्छब्द-निष्ठत्वरहितो वा। आद्येऽन्यत्वं व्याहतम्। न हि शब्दत्वं शब्दत्वान्यदिति संभवति। तेन पक्षनिष्ठत्वरहितान्यत्वं सिध्यति। स च पक्षनिष्ठत्वरहितः, अनित्यत्वात्यन्ताभावव्यतिरिक्तो वा, अनित्यत्वात्यन्ताभावो वा। आद्य-व्यावृत्त्यर्थं शब्दत्वव्यतिरिक्तानित्यत्वात्यन्ताभावव्यतिरिक्तत्वरहितग्रहणम्। शब्दत्वव्यतिरिक्तत्वे सति यदनित्यत्वात्यन्ताभावव्यतिरिक्तत्वं तद्रहितश्च**

---

उक्तम्—अनित्यत्वात्यन्ताभावव्यतिरिक्तत्वरहितेति। तथापि नित्यत्वान्य-त्वेनार्थान्तरता व्याप्तिभङ्गश्च, नित्यत्वे नित्यत्वान्यत्वाभावात्। अत उक्तम्—**शब्दव्यतिरिक्तेति।** एवमपि न प्रकृतसाध्यसिद्धिः, नित्यत्वाद्यत्किञ्चि-न्निष्ठादन्यत्वोपपत्तेः। अत उक्तमेतच्छब्दनिष्ठत्वरहितेति। तथापि व्याप्तिभङ्गः, नित्यत्वे एव कथितरूपसाध्याभावात्। अत उक्तं शब्दत्वव्यतिरिक्तैतच्छब्द-निष्ठत्वरहितेति। पक्षान्योन्यभावमुपादाय साध्यानुगमो द्रष्टव्यः। पक्षे त्वेतच्छब्दनिष्ठत्वरहितानित्यत्वान्यत्वं सिद्ध्यत् एतच्छब्देऽनित्यत्वं गमयतीति भावः। अथैनां महाविद्यां व्याचष्टे—**ये शब्दत्वव्यतिरिक्ता इत्यादि।।१।।**

**आनं.**—तथापि कथं साध्यपर्यवसानमत्राह—**स च पक्षनिष्ठत्वरहित इति।** घटत्वव्यतिरिक्तत्वे सति शब्देतरानित्यनिष्ठत्वरहितश्चानित्यनिष्ठश्च, ततोऽन्यदित्यर्थः। घटत्वमन्यदित्युक्ते सुखादेरन्यदिति सिद्धसाधनमत उक्तम्—**अनित्यनिष्ठान्यदिति।** एवमपि घटत्वादिशब्देनार्थान्तरमत उक्तम्—**शब्दे-तरानित्यनिष्ठत्वरहितेति।** शब्देतरानित्यनिष्ठत्वरहितानित्यनिष्ठान्यदित्युक्तेऽ-प्रसिद्धविशेषणत्वं, शब्दानित्यत्वसिद्धेः प्रागेवं रूपसाध्यासिद्धेरत आह।

---

उभयाभाव का भेद साध्य है। प्रथमविशेषणविशिष्ट शब्दत्व व्यतिरिक्त एतत् शब्दनिष्ठरहितधर्म, दो हो सकते हैं, शब्दत्व या एतत् शब्दवृत्तित्व-रहित, प्रथम नहीं ले सकते क्योंकि एतादृश धर्म का भेद पक्षीभूतशब्दत्व में साधनीय है। शब्दत्व का भेद शब्दत्व में सम्भव नहीं है। अतः द्वितीय पक्ष लेंगे एतत् शब्दनिष्ठधर्म श्रावणत्वादिरहित घटत्वादि उसका भेद शब्दत्व में है। उक्त धर्म को द्वितीय विशेषण से विशेषित करेंगे, उसमें भी दो पक्ष है, शब्दत्वव्यतिरिक्त होकर अनित्यत्वात्यन्ताभाव (नित्यत्व) व्यतिरिक्त का भेद अनित्यत्वात्यन्ताभावव्यतिरिक्त होगा। या तो अनित्यत्वत्यन्ताभाव होगा। प्रथमपक्ष स्वीकार नहीं किया जा सकता। यतः शब्दत्वव्यतिरिक्त अनित्यत्वा-त्यन्ताभावव्यतिरिक्तत्वरहित अनित्यत्वात्यन्ताभाव (नित्यत्व) होगा। उसका भेद

**शब्दत्वं वा स्यात्, अनित्यत्वात्यन्ताभावो वा। आद्येऽन्यत्वं न सिध्यति। न हि शब्दत्वं शब्दत्वादन्यदिति संभवति। तेन शब्दनिष्ठत्वरहिता-नित्यत्वात्यन्ताभावान्यत्वं पक्षे सिध्यति इत्यनित्यत्वात्यन्ताभावविरह-रूपानित्यत्वसिद्धिः शब्दे।।१।।**

---

**भुवन.**—अथाद्यविशेषणविशिष्टं धर्मद्वयं स्यात्। तदेवाह—**शब्दत्वं वा स्यात्, एतच्छब्दनिष्ठत्वरहितो वेति। आद्येऽन्यत्वमिति।** शब्दत्वं च यथोक्तविशेषणविशिष्टमप्युपद्यते, परं तत्पक्षे व्याहतम्। तस्यैव शब्दत्वस्य, तस्मादेव शब्दत्वादन्यत्वासम्भवात्। भिन्नयोरेव द्वयोरन्तयत्वसम्भवात्। तेन द्वितीयान्यत्वं सिद्ध्यति। तथापि कथं प्रकृतसाध्यपर्यवसानमत्राह—**स च पक्षनिष्ठत्वरहित इति।** मूलानुमानापेक्षया पक्षोऽत्र शब्दो ग्राह्यः। पक्षनिष्ठत्वरहितमपि द्वेधा विकल्पयति—**अनित्यत्वात्यन्ताभावेत्यादि।** अनित्यत्वात्यन्ताभावो नित्यत्वम्। तद्व्यतिरिक्तो हि धर्मो नित्यत्वं विना घटत्वपटत्वगगनत्वादिकः सर्वोऽपि। द्वितीयविकल्पमाह—**अनित्यत्वात्यन्ता-भावोवेति।** नित्यत्वं वेत्यर्थः। तत्राद्यस्य निरासाय द्वितीयविशेषण-साफल्यमाह—**आद्यव्यावृत्त्यर्थमित्यादि।** तथा च द्वितीयविशेषणेन घटत्वा-काशत्वादिसर्वधर्माणां निषिद्धत्वेन अवशिष्टं धर्मद्वयमेव स्यात्। तदेव चाह—**शब्दत्वमिति।** शब्दत्वं वा अनित्यत्वात्यन्ताभावो नित्यत्वं वा। आद्यान्यत्व-

---

शब्दत्व में है। वह शब्दत्वव्यतिरिक्त नहीं होगा। अतः शब्दत्वव्यतिरिक्तविशिष्ट जो अनित्यत्वात्यन्ताभावव्यतिरिक्तत्व रहित धर्म है। वह शब्दत्व होगा या अनित्यत्वात्यन्ताभाव होगा। प्रथमपक्ष स्वीकार करने पर शब्दत्व का भेद शब्दत्व में नहीं सिद्ध होगा। उक्त अनित्यत्वात्यन्ताभावधर्म का शब्दवृत्तित्वरहितत्वेन शब्दत्व में भेद साध्य है। वह तभी सम्भव होगा, जब शब्द नित्य न हो, शब्द के नित्य रहने पर अनित्यत्वात्यन्ताभाव (नित्यत्व) शब्दवृत्ति ही हो जायेगा। इस प्रकार अनित्यत्वात्यन्ताभावान्यरूपत्वेन अनित्यत्व की शब्द में सिद्धि होती है। उसका भेद शब्दत्व में सिद्ध होता है। धर्म तथा धर्मी का भेद उभयवादी अभिमत है। यद्यपि शब्दत्व पक्ष में नित्यत्वभेद सिद्ध ही है। अतः सिद्धसाधन दोष होगा, तथापि शब्दवृत्ति रहित जो नित्यत्व है, उसका भेद शब्दत्व में साध्य है। वह तभी सिद्ध होगा जब शब्द अनित्य हो। शब्द को नित्य मानने पर उसका भेद तो शब्दत्व में सिद्ध होगा, परन्तु शब्दावृत्तिनित्यत्व का भेद शब्दत्व में सिद्ध नहीं होगा।

**इति पक्षनिष्ठधर्मपक्षीकरणप्रवृत्ता महाविद्या न्यदर्शि।**

**अथ सपक्षनिष्ठं धर्मं पक्षीकृत्य प्रवर्तमाना महाविद्याभेदा यथा–**

---

सिद्धौ असंभवं ब्रूते—**न हि शब्दत्वमित्यादि।** पक्षे द्वितीयान्यत्वसिद्धौ एतच्छब्दानित्यत्वसिद्धिमाह—**तेन शब्दनिष्ठत्वेत्यादि।** शब्दनिष्ठत्वरहितो योऽनित्यत्वात्यन्ताभावो नित्यत्वं, तस्मादन्यत्वं पक्षे शब्दत्वे सिध्यति। अयमाशयः—यद्यपि पक्षिते शब्दत्वे नित्यत्वान्यत्वे साध्यमाने सिद्धसाधनता स्यात्, तथापि शब्दनिष्ठत्वरहितं यन्नित्यत्वं तस्मादन्यत्वं शब्दत्वस्य तदैव स्यात्, यद्यनित्यः शब्दः स्यादित्येतच्छब्दानित्यत्वसिद्धिः अत्र च शब्दत्वान्यत्वधर्ममुपादाय घटपटाकाशादौ तद्धर्मेषु घटत्वादिषु साध्यप्रसिद्धिर्द्रष्टव्या। एवं शब्देऽपि साध्यप्रसिद्धिर्ज्ञेया यतो धर्मधर्मिणोर्वैशेषिकादिमते भिन्नत्वेन शब्दत्वान्यत्वधर्मः शब्देऽपि सिद्ध एवेति परमार्थः॥१॥

---

सपक्ष नित्यानित्यपदार्थों में शब्दत्वान्यत्व को लेकर व्याप्ति बन जायेगी। शब्दत्वान्यत्व शब्दत्वव्यतिरिक्त एतत् शब्दनिष्ठ श्रावणत्वादिधर्मों से रहित भी है। तथा शब्दत्वव्यतिरिक्त अनित्यत्वान्ताभावव्यतिरिक्त भी है। उसका भेद घटादिवृत्तिघटत्वादिधर्मों में सिद्ध है। इस प्रकार पक्षनिष्ठधर्म को पक्ष बनाकर, उक्त साध्यसिद्धि द्वारा शब्द में अनित्यत्व सिद्ध किया॥१॥

**'सपक्षवृत्तिधर्मपक्षक महाविद्यानुमान।'**

अब सपक्षवृत्तिधर्म को पक्ष बनाकर शब्द में अनित्यत्व सिद्ध कर रहे हैं। शब्दपक्षक अनित्यत्वसाधक अनुमान में सपक्ष घट है। उसका धर्म घटत्व को पक्ष बनाकर ऐसे साध्य की सिद्धि करते हैं, जो शब्द में अनित्यत्वसिद्ध हुए विना न सिद्ध हो सके। घटत्वपक्ष में घटत्वव्यतिरिक्त शब्देतर अनित्यवृत्तिशून्य अनित्यवृत्तिधर्म का भेद साध्य है।

शब्देतर अनित्य घटपटादि होंगे, उनके धर्म घटत्व पटत्वादि हैं, यतः घटत्वव्यतिरिक्तत्व साध्य का विशेषण बनाया है। अतः घटत्वव्यतिरिक्त-पटस्तम्भादिवृत्तिधर्म पटत्वस्तम्भत्वादि होंगे, उनसे भिन्न अनित्यवृत्तिधर्म या तो घटत्व होगा, या तो शब्देतरानित्यवृत्तिशून्य शब्दवृत्तिधर्म होगा। तादृशधर्म का भेद साध्य है। प्रथमपक्ष में व्याघातदोष है। घटत्व का भेद घटत्व में सिद्ध करना व्याघातदोष है। स्व का भेद स्व में नहीं रहता। अतः शब्देतरानित्यवृत्तिरहित शब्दवृत्तिधर्म का भेद घटत्व में सिद्ध हुआ। यदि शब्द को अनित्य न माना जाये, तो शब्दवृत्तिधर्म अनित्यवृत्ति नहीं होगा, जिसका भेद घटत्व में

**घटत्वं घटत्वव्यतिरिक्तशब्देतरानित्यनिष्ठत्वरहितानित्यनिष्ठान्यत् मेयत्वात् घटवदित्यादयः।।१।।**

**अथ विपक्षनिष्ठं धर्मं पक्षीकृत्य प्रवर्तमाना महाविद्याभेदा यथा–**

---

**आनं.—घटत्वव्यतिरिक्तेति।** घटत्वव्यतिरिक्तशब्देतरानित्यनिष्ठत्वरहितश्च घटत्वं वा, शब्देतरानित्यवृत्तिरहितो वा। आद्यान्यत्वं व्याहतं, द्वितीयस्तु अनित्यनिष्ठत्वविशेषणः सिध्यन्ननित्यत्वं शब्दे गमयेदिति भावः। आदिपदेन घटरूपं स्वव्यतिरिक्तशब्देरानित्यनिष्ठत्वरहितानित्यनिष्ठान्यत् मेयत्वाद्धटवदित्यादिसंग्रहः।।१।।

**भुवन.**—अथ सपक्षनिष्ठं धर्मं पक्षीकृत्य प्रवर्तमानमहाविद्याभेदा यथा—**घटत्वं घटत्वव्यतिरिक्तेत्यादि।** शब्दादितरे च ते अनित्याश्च शब्देतरानित्याः। तेषु निष्ठाः पटत्वस्तम्भत्वादयः। घटत्वव्यतिरिक्ताश्च ते शब्देतरानित्यनिष्ठाश्च। तेषां भावः तत्त्वम्। तेन रहितः। अनित्ये पटादौ निष्ठा येषां ते तथा। घटत्वव्यतिरिक्तशब्देतरानित्यनिष्ठत्वरहितश्चासौ अनित्यनिष्ठश्च। ततोऽन्यत् घटत्वमित्यर्थः। घटत्वमन्यदित्युक्ते ज्ञानादेरन्यदिति सिद्धसाधनम्। अत उक्तम्—**अनित्यनिष्ठान्यदिति।** एवमपि पटत्वान्यत्वादिना अर्थान्तरत्वम्। अत उपात्तं—**शब्देतरानित्यनिष्ठत्वरहितेति।** शब्देतरानित्य-

---

साध्यत्वेन अभिप्रेत है। अतः शब्द में अनित्यत्व सिद्ध होता हैं। यदि शब्देतरानित्यनिष्ठत्वरहित अनित्यनिष्ठ का भेद साध्य करते हैं, तो शब्द के अनित्यत्वसिद्धि के पूर्व एतादृश साध्य अप्रसिद्ध होने के कारण साध्याप्रसिद्धिदोष होगा। अतः घटत्वव्यतिरिक्तत्व साध्य का विशेषण बनाया। घटत्वान्यत्व घटत्वव्यतिरिक्तशब्देतरानित्यवृत्तित्वरहित अनित्यनिष्ठधर्म, घटत्वेतर अनित्यवृत्तिधर्मों में सिद्ध है। उसका भेद सभी नित्यानित्य पदार्थो में है।।१।।

**'विपक्षवृत्तिधर्मपक्षकमहाविद्यानुमान'**

अब विपक्षनिष्ठधर्म को पक्ष बनाकर एतादृश साध्य की सिद्धि कर रहे है। जो शब्द में अनित्यत्व सिद्धि के विना न सिद्ध हो सके। आकाशगत एकत्वं (एकत्वसंख्यावत्व) को पक्ष बनाया आकाशगत एकत्वव्यतिरिक्तनित्य निष्ठत्वरहित एतत् शब्द से इतर अनित्यनिष्ठत्वरहित धर्म का भेद साध्य बनाया है हेतु पूर्ववत् मेयत्व है। घट दृष्टान्त है। (आकाशगत एकत्व-व्यतिरिक्तविशिष्टनित्यनिष्ठत्वरहित एतत्शब्दभिन्नानित्यनिष्ठरहित धर्म भेद) साध्य है।

**आकाशगतमेकत्वं आकाशगतैकत्वव्यतिरिक्तनित्यनिष्ठत्वरहितै-तच्छब्देतरानित्यनिष्ठत्वरहितधर्मान्यत्, मेयत्वात् घटवदिति।।१।।**

---

निष्टत्वरहितानित्यनिष्ठान्यदित्युक्ते च अप्रसिद्धविशेषणत्वम्। शब्दानित्यत्व-सिद्धेः प्रागेवंरूपसाध्यासिद्धेः। अतो घटत्वव्यतिरिक्तेति पदग्रहणम्। इति व्यावृत्तिचिन्ता। अत्राद्यविशेषणेन घटत्वव्यतिरिक्तेत्यस्य शब्देतरेत्यस्य च भणनाद्, घटत्वं शब्दत्वधर्मांश्च मुक्त्वा अन्य अनित्यपदार्थधर्माः सर्वेऽपि निषिद्धाः, अनित्यनिष्ठेति द्वितीयविशेषणेन च नित्यधर्मा अपि। इति विशेषणद्वयेन घटत्वशब्दनिष्ठव्यतिरिक्तनित्यानित्यनिष्ठसर्वधर्मनिषेधे सति द्विधा धर्मा अवशिष्यन्ते घटत्वं वा शब्दमात्रनिष्ठाः शब्दत्वादयो वा। तत्र घटत्वं घटत्वादन्यदिति न संभवति। तस्माच्छब्दमात्रनिष्ठाच्छब्दत्वादेर्घटत्व-मन्यदिति सिध्यति। शब्दत्वादेश्चानित्यनिष्ठेतिद्वितीयविशेषणविशिष्टत्वं तदैव स्यात्, यद्यनित्यः शब्दः स्यादिति शब्दानित्यत्वसिद्धिरिति। इह च पक्षघटत्वान्यत्वमादाय घटादौ सर्वत्र साध्यप्रसिद्धिरन्वेषणीया। घटवदित्यादयः इत्यत्रादिपदेन १ 'घटरूपं **स्वव्यतिरिक्तशब्देतरानित्यनिष्ठत्वरहितानित्यान्यत् मेयत्वाद्घटवत्' २ 'घटगन्धो घटगन्धव्यतिरिक्तशब्देतरानित्यनिष्ठत्वरहिता-नित्यनिष्ठान्यत् ज्ञेयत्वाद्घटवत्'** इत्यादिसङ्ग्रहः।।१।।

इति सपक्षनिष्ठधर्मपक्षीकरणप्रवृत्ता महाविद्या न्यरूपि।

**आनं.**—आकाशगतैकत्वव्यतिरिक्ते सति नित्यनिष्ठत्वरहितश्चा-सावेतच्छब्देतरानित्यनिष्ठत्वरहितश्च धर्मस्तस्मादन्यदित्यर्थः। आकाशगत-

---

अब साध्यघटकपदों का फलविचार करते हैं। यदि आकाशगत एक-त्वमन्यत् मात्र साध्यस्वरूप रख्वें, तो आकाशगत एकत्व के भेद को गगनान्यत्वेन लेकर सिद्धसाधनतादोष दे सकते थे। गगनान्यत्व गगन से भिन्न सभी में सिद्ध है। उसका भेद आकाशगत एकत्व में है, जो शब्द को नित्य मानने पर भी सिद्ध हो सकता है। अतः अर्थान्तरदोष भी हो सकता है। यदि आकाशगत एकत्वव्यतिरिक्तनित्यनिष्ठत्वरहितमात्र कहें तो घटान्यत्व को लेकर अर्थान्तरदोष होगा। घटान्यत्व भी आकाशगत एकत्वव्यतिरिक्त नित्यनिष्ठत्वरहित है। उसका भेद शब्द के नित्य रहने पर भी आकाशगत एकत्व में सिद्ध है। अतः एतत्शब्दभिन्न अनित्यनिष्ठत्वरहितत्व साध्य का विशेषण बनाया। आत्मत्वान्यत्वधर्म को लेकर अर्थान्तरतादोष परिहार के लिए नित्यनिष्ठत्वरहित पद दिया। अन्यथा आत्मत्वान्यत्वधर्म भी आकाशगत

मेकत्वमन्यदित्युक्ते गगनान्यदिति सिद्धमत उक्तम्—**धर्मान्यदिति**। घटत्वव्यावृत्त्यर्थमनित्यनिष्ठत्वरहितग्रहणम्। सुखादिव्यावृत्त्यर्थं नित्यनिष्ठत्वरहितग्रहणम्। अत्र क्वचिदनित्यत्वसिद्धिनिवारणाय—**एतच्छब्देतरेति**। अप्रसिद्धविशेषणत्वपरिहारार्थमाकाशगतैकत्वव्यतिरिक्तेतिग्रहणम्। एकत्वस्य स्वान्यत्वायोगादेतच्छब्दमात्रनिष्ठान्नित्यनिष्ठत्वरहितात् अन्यत्वमेतदनित्यं गमयेदिति भावः।

**भुवन.**—इदानीं विपक्षनिष्ठं धर्मं पक्षीकृत्य प्रवर्तमानमहाविद्याभेदा यथा—**आकाशगतमेकत्वमाकाशगतैकत्वव्यतिरिक्तनित्यनिष्ठत्वरहितैतच्छब्देतरानित्यानिष्ठत्वरहितधर्मान्यदिति**। आकाशगतं यदेकत्वं एकत्वसंख्यावत्त्वं, तव्द्यतिरिक्तत्वे सति ये नित्यनिष्ठाः तत्त्वरहितश्चासौ, एतच्छब्दादितरे येऽनित्यास्तन्निष्ठत्वरहितश्च यो धर्मस्तस्मादन्यदित्यर्थः। आकाशगतमेकत्वमन्यदित्युक्ते गगनान्यत्वेन सिद्धसाधनमत उक्तं धर्मान्यदिति। तथा चोच्यमाने घटत्वान्यत्वेनैवार्थान्तरत्वम्, अतस्तव्द्यावृत्त्यर्थमेतच्छब्देतरानित्यनिष्ठत्वरहितेति। पदमुपाददे। आत्मत्वाद्यन्यत्वव्यावृत्तये च नित्यनिष्ठत्वरहितेत्यङ्गीचकाणम्। एतावत्येव च प्रणिगद्यमाने उभयप्रसिद्धदृष्टान्ताभावेनाप्रसिद्धविशेषणत्वं बोभूयते। अतस्तव्द्यवच्छेदार्थमाकाशगतैकत्वव्यतिरिक्तेति पदं निदधे। इति व्यावृत्ति चिन्ता।। अत्र प्रथमविशेषणेन आकाशगतैकत्वं विना सर्वेऽपि नित्यधर्मा निषिद्धाः। द्वितीयविशेषणेन च शब्दधर्मान् विना सर्वेऽप्यनित्यधर्मा निषिद्धाः। तत्राकाशगतैकत्वव्यतिरिक्तनित्यनिष्ठत्वरहितः

---

एकत्व व्यतिरिक्त एतत्शब्द भिन्न अनित्यनिष्ठत्वरहित है। उसका भेद शब्द को नित्य मानने पर भी आकाशगत एकत्व में सिद्ध हो जायेगा। आकाशगत एकत्वव्यतिरिक्तपद न देने पर उभयमतसिद्ध दृष्टान्त अप्रसिद्ध होने से साध्याप्रसिद्धिदोष होगा। अतः आकाशगत एकत्वव्यतिरिक्त पद दिया।

प्रथम विशेषण देने पर आकाशगत एकत्वव्यतिरिक्त सभी नित्यधर्मों की व्यावृत्ति हो गयी। द्वितीयविशेषण देने पर शब्दधर्म के अतिरिक्त सभी अनित्यधर्मों की व्यावृत्ति हो गयी। आकाशगत एकत्वव्यतिरिक्त नित्यनिष्ठत्वरहित धर्म आकाशगत एकत्व होगा, या तो अनित्यनिष्ठ धर्म होगा। प्रथमपक्ष में व्याघात दोष है। आकाशगत एकत्व का भेंद आकाश गत एकत्व में नहीं सिद्ध हो सकता। अतः द्वितीयपक्ष मान्य होगा। द्वितीयपक्ष अनित्यनिष्ठधर्म दो प्रकार का हो सकता है। एतत्शब्द भिन्न अनित्यनिष्ठ,

**महाविद्यासमुद्रस्य खण्डनाखण्डलस्य च।**
**मम नूतनमार्गेऽपि न च किञ्चिदगोचरः ।।३।।**

---

आकाशगतैकत्वं वा, अनित्यनिष्ठो वा। तत्राद्यान्यत्वं पक्षे नोपसंहर्तुं शक्यम्। आकाशगतैकत्वमाकाशगतैकत्वादन्यदिति व्याघातात्। द्वितीयस्तु द्वेधा स्यात्, एतच्छब्देतरानित्यनिष्ठो वा, एतच्छब्दमात्रनिष्ठो वा। प्राच्यस्तु एतच्छब्देतरानित्यनिष्ठत्वरहितेतिद्वितीयविशेषणेन निरस्तः। एतच्छब्दमात्रनिष्ठात्तु नित्यनिष्ठत्वरहितेत्याद्यविशेषणांशविशिष्टादेतच्छब्दत्वादेः पक्षस्यान्यत्वं तदैव स्यात्, यद्यनित्य एतच्छब्दः स्यादित्येतत्छब्दानित्यत्वसिद्धिरिति भावः। आकाशगतैकत्वरूपपक्षान्यत्वधर्मेण च सर्वत्र शब्दघटाकाशादौ तद्धर्मेषु च साध्यानुगमो द्रष्टव्यः।।१।।

इति विपक्षनिष्ठधर्मपक्षीकरणप्रवृत्तामहाविद्या प्रादर्शि। तत्प्रदर्शने चादिपदसूचिता अपि महाविद्या न्यरूप्यन्तेति महाविद्याप्रयोगवक्तव्यता समाप्ता।

**आनं.**—महाविद्याया आत्मनश्च सर्वविषयत्वमन्येभ्योऽतिशयमाह—**महाविद्यासमुद्रस्येति।।१।।**

**भुवन.**—अथात्मनः सर्वविषयमन्येभ्योऽतिशयं श्लोकेनाविर्भावयति—**महाविद्यासमुद्रस्येत्यादि।** महाविद्योत्थापनप्रवृत्तस्य **वादीन्द्रस्य** नूतनमार्गे

---

या एतत् शब्द मात्रनिष्ठधर्म, प्रथमपक्ष तो एतत्शब्देतर अनित्यनिष्ठत्वरहित-विशेषण देने से व्यावृत्त हो गया। अवशिष्ट एतत् शब्द मात्र निष्ठधर्म का भेद नित्यनिष्ठत्वरहितत्वेन आकाशगत एकत्व में साध्य है। यदि शब्द नित्य होगा तो शब्द वृत्तिधर्म में नित्यनिष्ठत्व होगा। अतः शब्द को अनित्य मानना होगा। आकाशगत एकत्व पक्षान्यत्व सभी नित्यानित्यसपक्षों में रहने से व्यातिभङ्ग की आशङ्का नहीं है।।१।।

इस प्रकार विपक्षधर्म को पक्ष बना कर महाविद्यानुमान द्वारा शब्द में अनित्यत्व सिद्ध किया। इसी प्रकार अन्यमहाविद्या अनुमानों का प्रयोग विपक्षधर्म को पक्ष बना कर किया जा सकता है। यहाँ से महाविद्यानुमान प्रयोग समाप्त।

श्री वादीन्द्र पण्डित ने इस ग्रन्थ में महाविद्यानुमान का खण्डन किया है। किसी सिद्धान्त को खण्डन से पूर्व उसका ज्ञान आवश्यक होता है।

नवीनमहाविद्याप्रकारदर्शनरूपेऽपि न किञ्चिन्महाविद्यावक्रमार्गप्रवर्तनादिकमगोचरोऽविषय इति संटङ्कघटना। मम किंविशिष्टस्य। **महाविद्यासमुद्रस्येति।** परप्रयुक्तमहाविद्यानामर्थपरिज्ञानान्नवीनतदनुमानविधानाञ्च तत्समुद्रस्य। यथा समुद्रे रत्नजलादिकं सर्वं लभ्यते तथा महाविद्याव्यवस्थापनतदर्थपरिज्ञानादिकं महाविद्यास्वरूपं सकलं मयि प्राप्यते इत्यर्थः। एतावता महाविद्यापरिज्ञानादेव सामर्थ्यमस्ति, तद्दूषणोत्पादनशक्तिस्तु न भविष्यतीत्याशङ्क्याह—**खण्डनेति।** मम पुनः किंविशिष्टस्य। महाविद्याप्रयोगाणां यत् खण्डनं तत्र आखण्डलस्य शक्रस्य। यथा शक्रो वज्रेण दुर्द्धरभूधरप्रकरखण्डनपण्डितस्तथा अहमपि स्वशक्तिप्रयुक्तयुक्त्युक्तिपङ्क्त्या महाविद्याप्रयोगखण्डनपण्डितिमप्रचण्ड एवेत्यर्थः। आद्यविशेषणेन सर्वमहाविद्याव्यवस्थापनविषये स्वस्य परमं कौशल्यमाविश्चके। द्वितीयविशेषणेन तु तत्प्रयोगखण्डनापाण्डित्यमिति परमार्थः।।३।।

अतः महाविद्यानुमान के खण्डन से पूर्व महाविद्या का स्वरूप तथा उसका प्रयोग दर्शाया गया। इस का उल्लेख ग्रन्थारभ्भ के द्वितीय श्लोक में ही कर दिया था, कि भगवान् शंकर के भक्त वादीन्द्र चन्द्र के उदय काल में महाविद्यादोष रूप कैरव कुड्मल का विकाश होगा ही। परन्तु उन दोषों के निवारण में पूर्णतया वादीन्द्रचन्द्र सामर्थ्य रखते है। उसी सामर्थ्य का स्थापन तृतीय श्लोक में कर रहे है।

महाविद्या सागर स्वरूप, तथा महाविद्या के खण्डन में इन्द्र के समान मुझ वादीन्द्रचन्द्र के खण्डनमार्ग में कोई बाधा नहीं है। इसलिए कि मैं भलीभांति समझ कर खण्डन कर रहा हूँ। कोई यह न समझ ले कि महा विद्यानुमानों को विना समझे ही खण्डन कर दिया है। अतः प्रथम विशेषण द्वारा वता दिया कि महाविद्यासमुद्र हूँ। अर्थात् जिस प्रकार सकल रत्न समुद्र में उपलब्ध होते है। उसी प्रकार मुझ में महाविद्यानुमानों का तत्व उपलब्ध है। अर्थात् मैं महाविद्यानुमानों को सम्यग् रूपेण जानता हूँ। परन्तु महाविद्या का समर्थक नहीं हूँ। यह द्वितीय विशेषण द्वारा वता दिया। जिस प्रकार देवराज इन्द्र दुर्द्धर भूधरों के खण्डन में सामर्थ्य रखते है, उसी प्रकार मैं महाविद्यानुमानों के खण्डन में सामर्थ्य रखता हूँ। अतः यह महाविद्यानुमान मेरे खण्डनमार्ग के प्रतिबन्धक नहीं होगे। इससे यह भी बोधित कर दिया कि महाविद्यानुमानों का विषय अविदित नहीं है। इसी लिए महाविद्यानुमानों के खण्डन में प्रवृत्त ग्रन्थकार, खण्डन करने से पूर्व अनेकविद्यमहाविद्यानुमानों का प्रदर्शन किया है।

**महाविद्यादूषणे प्रवृत्तस्य तद्व्याख्यानमसंगतमिति चेत्। न। महाविद्यावादिना किं सभ्यविदितार्थप्रतिवादिदुरधिगममहाविद्याप्रयोगान्तरम् अज्ञानेन प्रतिवादिनं निगृह्यात्मनो विजयो भावनीयः, किं वा प्रतिवादिविदितार्थमहाविद्यादूषणाऽप्रतिभया प्रतिवादिनं निग्रह्यान्मनो विजयो भावनीयः। नाद्यः यतः।**

---

**आनं.**—'उन्मीलन्ति महाविद्यादोषकैरवकोरकाः।' इति प्रतिज्ञाविरोधं शङ्कते—**महाविद्यादूषणेति।** महाविद्यावादिना प्रतिवादिन्युद्भाव्यमानमज्ञान-निग्रहं खण्डयितुं महाविद्याव्याख्यानमसंगतमिति मत्वा परिहरति—**नेति।**

**भाव.**—अथ 'उन्मीलन्ति महाविद्यादोषकैरवकोरकाः' इति प्रतिज्ञा-विरोधं महाविद्याव्याख्यातुः शङ्कते—**महाविद्यादूषणेति।** महाविद्यावादिना प्रतिवादिन्युद्भाव्यमानमज्ञाननिग्रहं खण्डयितुं महाविद्याव्याख्यानं सङ्गतमिति मत्वा विकल्पद्वयेन परिहरत्ति—**महाविद्यावादिनेत्यादि।** महाविद्यावादिना पूर्वपक्षवादिना वैशेषिकादिना किं सभ्यैर्विदितार्था ज्ञातार्थाः प्रतिवादिभिश्च दूरधिगमा दुर्ज्ञेया या महाविद्यास्तासां प्रयोगानन्तरमज्ञानेन महाविद्याया अपरिज्ञानेन प्रतिवादिनं निगृह्यात्मनो विजयो भाव्यः। द्वितीयविकल्पमाह—**किं वेत्यादि।** किं वा प्रतिवादिना विदितार्या ज्ञातार्था या महाविद्यास्तासां यद्दूषणं तदप्रतिभया प्रतिवादिन एव तदुत्पादनाशक्त्या प्रतिवादिनं निगृह्य स्वस्य विजयो भाव्यः। तत्र प्रथमविकल्पमुत्थापयति—**नाद्य इति।**

---

यहाँ पर यदि कोई आशङ्का करे, कि महाविद्या के दोषदान में प्रवृत्त ग्रन्थकार का महाविद्या का व्याख्यान असङ्गत है। उसमें कह रहे हैं, कि वादी प्रयुक्त महाविद्याप्रयोग के वाद सभ्यजन (मध्यस्थ) विदित अर्थ का अवबोध प्रदिवादी को नहीं है। एतादृश अज्ञाननामक निग्रह दिखाकर निगृहीत मत कर दे। क्यों कि वाद या जल्प कथा में वादी तथा प्रतिवादी को निग्रहस्थान का ध्यान रख कर पक्ष प्रतिपक्ष का ख्यापन करना होता है। अतः महाविद्यानुमानखण्डन में प्रवृत्त ग्रन्थकार प्रथमपरिच्छेद में महाविद्यानुमान के विविधस्वरूपों का प्रतिपादन किया। अब वादी यह नहीं कह सकता, कि प्रतिवादी ने महाविद्यास्वरूप को विना समझे खण्डन किया है। अतः अज्ञाननामक निगृहस्थान द्वारा निगृहीत हो गया! अथवा वादी के पूर्वपक्ष का उच्चारण किये विना ही प्रतिवादी ने खण्डन किया तो मध्यस्थ यह

**इति गूढमहाविद्याव्याख्याकौतूहलच्छलात् ।**
**दूरे निरस्तमस्माभिरज्ञानं प्रतिवादिनः ।।४।।**

**यद्वा सम्यक्साधनापरिस्फूर्तौ सौगतादीन् प्रति महाविद्याः प्रयोक्तव्याः,**

---

अत्र हेतुमभिधत्ते—**यत इत्यादि।** यतः कारणादित्येवं प्रकारेण गूढमहाविद्याव्याख्यां कुर्वद्भिः अस्माभिः प्रतिवादिनो महाविद्याविषयमज्ञानं दूरे निरस्तमित्यर्थः।।४।।

इति श्रीहरकिङ्करन्यायाचार्यपरमपण्डितभट्टावादीन्द्रविरचिते महाविद्या-विडम्बने दूष्यविवको नाम प्रथमः परिच्छेदः।।१।।

**आनं.**—अप्रतिभानिग्रहमात्मनः परिहर्तुं महाविद्या ज्ञातव्या। अतोऽपि तद्व्याख्यानमुपयुक्तमित्याह—**यद्वेति।** पक्षे साध्यवतो धर्मिणो धर्मः केवलान्वयी व्यापकः साध्यः पक्षे च तद्भिन्ने तदन्यस्मिंश्च वृत्तित्वरहितेन अनुरञ्जितः स्वस्वेतरवृत्तित्वानाक्रान्त इत्यर्थः।

इति महाविद्याविडम्बनव्याख्याने श्रीमदानन्दपूर्णविचिते प्रथमः परिच्छेदः।

**भुवन.**—अज्ञाननिग्रहमात्मनः परिहर्तुं महाविद्या ज्ञातव्या। अतोऽपि तव्द्याख्यानमुपयुक्तमित्याह—**यद्वेति।** यद्वा वादिनः सम्यक् साधनापरिस्फूर्तौ सम्यक् स्वपक्षसाधनानुत्पत्तौ, महाविद्यापि प्रयोक्तव्या। अत्रार्थे दृष्टान्तमाचष्टे—**सम्यग्दूषणेत्यादि।** अयं भावः। यथा सम्यग दूषणापरिस्फुरणे जात्यादिः, आदि शब्दाच्छलादिः प्रयुज्यते। अनित्यः शब्दः कृतकत्वात्

---

समझ लेता है, कि प्रतिवादी वादी के अभिप्राय को न समझ पाने के कारण अनुत्तरित हो गया। अतः अप्रतिभा नामक निगृहस्थान द्वारा निगृहीत हो गया। इसमें प्रथम तो नहीं हो सकता क्योंकि महाविद्या की व्याख्या करके हमने यह सिद्ध कर दिया कि महाविद्या के विविध स्वरूपों से हम भलीभांति परिचित हैं। अतः वादी का यह कौतूहल, कि प्रतिवादी महाविद्या के स्वरूप को जानता नहीं है, वह समाप्त हो गया। इस प्रकार महाविद्या के व्याख्यान का प्रथम फल अज्ञाननिग्रह का परिहार है। अथवा वादी सभ्यक्तया स्वसाधन अनुत्पत्तिदशा में बौद्धों के प्रति महाविद्या का प्रयोग करता है। अतः महाविद्या स्वरूप आवश्य जानना होगा। प्रतिवादी सम्यक्तया उत्तर स्फुरित न होने

**सम्यग्दूषणापरिस्फूर्तौ जात्यादिवत्, इति तव्द्याख्यानं नानुपयोगि। यदाहुः शिवादित्यमिश्राः–**

**'पक्षतद्भिन्नवृत्तित्वरहितत्वानुरञ्जितः ।**
**धर्मः साध्यवतः साध्यो मेयत्वात्प्रतिभाक्षये ।।'** इति।

---

घटवदित्यादावनुमाने सम्यक् हेत्वाभासादिदूषणाप्रतिभाने यदि अनित्यघट-सार्म्यात् कृतकत्वात् अनित्यः शब्दः स्यात्तर्हि नित्याकाशसाधर्म्यात् अमूर्त्तत्वान्नित्योऽति किं न स्यादिति साधर्म्यसमादिजातिः प्रतिवादिना यथा प्रयुज्यते, तद्वद्बौद्धादीन् प्रति महाविद्यापि प्रयोज्येति तव्द्याख्यानमुपयुक्तमेवेति। अत्रार्थे **शिवादित्यमिश्रोक्त**मवतारयति—**यदाहुरित्यादि।**

पक्ष प्रकृतः शब्दादिः। तद्भिन्नाः शब्देतरे नित्यानित्यपदार्थाः तयोर्ये वर्तन्ते धर्मास्तेषु तद्वृत्तित्वं धर्मः, तेन यद्रहितत्वं तेनानुरञ्जितो मिश्रितः स्वस्वेतरवृत्तित्वानाक्रान्त इत्यर्थः। साध्यवतो धर्मिणोऽनित्यस्य धर्मो मेयत्वादिहेतुव्यापकः साध्यः साधनीयः। पक्षे इति शेषः। अनित्यनिष्ठसाध्य इति भावः केन हेतुना साध्यः इत्याह—**मेयत्वात्।** मानविषयो मेयः, तत्त्वात्। मेयत्वादित्युपलक्षणम्। तेन सत्त्वज्ञेयत्ववाच्यत्वादयोऽपि हेतवो ग्राह्याः। ननु किं वादिना सर्वदा महाविद्या प्रयोक्तव्या, य़द्वा प्रतिवादिनः प्रतिभाक्षये

---

से असत् उत्तर जाति या छल का आश्रय लेता है। जैसे वादी ने कृतत्व साधर्म्य से शब्द में अनित्यत्व साधन किया प्रतिवादी अमूर्तत्वसाधर्म्य से नित्यत्व साधन कर सकता है। क्योंकि कृतत्वधर्मवाला यदि अनित्य है। तो अमूर्त आकाश नित्य है। शब्द में दोनों धर्म विद्यमान है। अतः कार्यत्वेन शब्द अनित्य है। तो अमूर्तत्वेन आकाशवत् नित्य क्यों न हो जाय। इस प्रकार असत् उत्तर जाति के समान हेत्वाभासादिदोषदान में असमर्थ बौद्ध के प्रति महाविद्या का प्रयोग कर सकता है। जैसा कि शिवादित्यमिश्र ने कहा है। पक्षतद्भिन्नपक्षीभूतशब्दभिन्न नित्यानित्यधर्मवृत्ति से रहित तथा उससे मिश्रित स्वस्वेतरवृत्तित्वानाकान्त साध्यवत् धर्मी अनित्य के धर्म को मेयत्वादि हेतु का व्यापक बनाकर पक्ष में सिद्ध किया जाता है।

अब प्रश्न होता है कि वादी को सर्वदा महाविद्या का प्रयोग करना चाहिए या प्रतिवादी के प्रतिभाक्षय काल में, अथवा स्वयं प्रतिभाहीन होने पर करे। प्रथम पक्ष तो इसलिए नहीं मान्य होगा, कि यदि विना महाविद्या

**द्वितीयं तु पक्षं महाविद्यागोचरसुगमदूषणव्युत्पादनेन निराकारिष्यामः।।**

---

कर्तव्ये, स्वस्य प्रतिभाक्षये जाते वेत्याशङ्क्य, द्वितीयं द्विधाप्यङ्गीकरोति— **प्रतिभाक्षये इति।** आद्ये पक्षे प्रतिवादिनः प्रतिभाक्षये कर्तव्ये इति व्याख्येयम्। द्वितीये वादिनः प्रतिभाक्षये जाते सतीति। इयं च कारिका महाविद्याग्रन्थान्तरस्थिरता, अत्र ग्रन्थे **''अयं शब्दः स्वस्वेतरे''** त्यादि प्रथममहाविद्यार्थसङ्गहप्रतिपादिकावगन्तव्या।

द्वितीयं तु पक्षमित्यादि। महाविद्यार्थवेदिनोऽपि प्रतिवादिनस्तद्दूषणाप्रतिभानरूपं द्वितीयं पक्षम्। महाविद्यागोचरसुगमदूषणव्युत्पादनेनेति। केवलान्वयिभञ्जनासिद्धत्वाद्युद्भावनरूपेणाग्रेतनपरिच्छेदयोर्निराकरिष्याम-इत्यर्थः।

इति श्रीजिनशासन-गगनाङ्गणनभोमणिषड्दर्शनीरहस्याभिज्ञशिरोमणि-सुविहिताचार्यचक्रचूडामणि-श्रीतपागच्छशृङ्गारहारभट्टारक-प्रभुश्रीसोमसुन्दर-सूरिशिष्यश्रीभुवनसुन्दरसूरिविरचितायां महाविद्याविडम्बनवृत्तौ व्याख्यान-दीपिकायां दूष्यविवेकव्याख्यानो नाम प्रथमः परिच्छेदः समाप्तः।।



---

प्रयोग के स्वपक्षस्थापन परपक्षनिरास सम्भव हो तो क्यों दुरूह अनुमान का प्रयोग करेगा। द्वितीयकल्प में प्रतिवादी के प्रतिभाक्षय होने पर महाविद्या का प्रयोग करेगा, तथा उसका व्याख्यान भी आवश्यक होगा। अथवा वादी जब अपने पक्ष को अन्य प्रमाणों से सिद्ध करने में असफल होगा, तब महाविद्याप्रयोग रूप अमोध अस्त्र का प्रतिभाशून्य प्रतिवादी पर कर सकता है। परन्तु यह प्रयोग भट्टवादीन्द्रचन्द्र पर किया हुआ मोध हो जायेगा। यतः वादीन्द्रचन्द्र महाविद्याप्रयोग से पूर्णतया परिचित है। ग्रन्थकार आगे के परिच्छेदो में केवलान्वयी अनुमान का खण्डन करके तथा महाविद्यानुमान में असिद्धि आदि हेत्वाभास दिखा कर महाविद्यानुमान को अनुमानाभास सिद्ध कर दिया है।

**।। यहाँ से उत्तर प्रदेश के बाँदा जनपदान्तर्गत रमपुरवा ग्राम वास्तव्य श्रीमती रामावतारी व श्री रामरुचि त्रिपाठी के पुत्र व्याकरण वेदान्त आदि शास्त्रों निष्णान्त विद्वान् पं. श्री पारसनाथ द्विवेदी के शिष्य प्रो. रामकिशोर त्रिपाठी उपनाम चन्द्रिकाप्रसाद त्रिपाठी विरचित महाविद्याविडम्बन ग्रन्थ के प्रथम परिच्छेद की 'चन्द्रिका' भाषाटीका समाप्त हुई ।।**



## ।।अथ द्वितीयः परिच्छेदः।।

**अथ सर्वजगन्नाथं प्रणम्य करुणानिधिम्।**
**केवलान्वयिभङ्गार्थमर्थये पार्वतीपतिम्।।१।।**

---

**भुवन.**—अथ द्वितीयपरिच्छेदव्याख्या प्रक्रम्यते। 'आदावन्ते मध्ये च कल्पितमङ्गलानि शास्त्राणि प्रथन्ते' इति न्यायात् मध्यमङ्गलमाचरन्नाचष्टे—**अथ सर्वजगन्नाथमित्यादि।।१।।**

---

पं. राम किशोर त्रिपाठी (उपनाम चन्द्रिकाप्रसाद त्रिपाठि) कृत
'चन्द्रिका' भाषाटीका

**गिरीशं विश्वेशं गिरिपतिसुतालालिततनुं**
**भवानीशं भव्यं भवभयहरं भूतसचितम्।**
**गुणातीतं गुण्यं गुणिगणजनैः सेवितपदं**
**नमामो मान्येशं मदनमदमन्तारमनिशम्।।**

**'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते'** जिनके आदि में मङ्गल किया गया है, और मध्य में मङ्गलकिया गया है, तथा अन्त में मङ्गल किया गया है, वह शास्त्र यानी ग्रन्थ लोकप्रसिद्धि को प्राप्त होते हैं। इस उक्ति का पालन करते हुए ग्रन्थकार द्वितीयपरिच्छेद (ग्रन्थ के मध्य) में भी मङ्गल कर रहे हैं। एवं अध्ययन करने वाला छात्र तथा अध्यापन करने वाला आचार्य भी मङ्गलयुक्त हो जाय, और शिष्य परम्परा में उपदेश जाय कि मङ्गल आदि मध्य तथा अन्त में करना चाहिए। अतः ग्रन्थकार मङ्गल को ग्रन्थ का अवयव कर रहे हैं।

**अथ सर्वजगन्नाथम्**—जगत् के पालक करुणनिधि परमेश्वर को प्रणाम करके केवलान्वयी अनुमान का खण्डन करने के लिए पर्वतराज पुत्री के पति भगवान् शङ्कर को नमस्कार कर रहा हूँ। उक्त मङ्गलाचरण के माध्यम से द्वितीयपरिच्छेद का विषय भी प्रतिपादित है। इस परिच्छेद में केवलान्वयी अनुमानस्वरूप का खण्डन करते हुए अन्वयव्यतिरेकि अनुमान में केवलान्वयी प्रयोगरूप महाविद्या का खण्डन किया गया है। महाविद्यास्वरूप का खण्डन करते हुए ग्रन्थकार कह रहे हैं, कि यतः अन्वयिव्यतिरेकिस्वरूप को केवलान्वयिरूपता प्रदान कर देना महाविद्या है। जो सम्भव नहीं है, केवलान्वयिविशेषमहाविद्यानुमान तभी सम्भव है, जब उसमें केवलान्वयिहेतु

**केवलान्वयिहेतुविशेषो महाविद्या इत्युक्तम्। तन्न। केवलान्वयिहेतोरेव निर्वक्तुमशक्यत्वात्। तथाहि, किं केवलान्वयित्वाधारो हेतुः केवलान्वयी, किं वा केवलान्वयित्वाधारव्याप्यः। नाद्यः परमाणुः प्रत्यक्षः द्रव्यत्वात् घटवदिति, आकाशं अभिधेयं नित्यत्वात् गोत्ववदित्या-**

---

**भुवन.**—अथ महाविद्यालक्षणस्मारणपूर्वं तल्लक्षणखण्डनमेव प्रकमते—**केवलान्वयीत्यादि। निर्वक्तुमिति।** निश्चयेन वस्तुं निर्वक्तुम्। केवलान्वयिहेतोर्निरुक्तेरेव कर्तुमशक्यत्वादित्यर्थः। केवलान्वयिभङ्गाय द्वेधा विकल्पयति—**केवलान्वयित्वाधारो हेतुरिति।** केवलान्वयिहेतौ केवलान्वयित्वं नाम धर्मोऽस्ति, तस्याधारो हेतुः किं केवलान्वयी, किं वा केवलान्वयित्वाधारव्याप्यः। केवलान्वयित्वाधारो महाविद्यादिसाध्यम्। यतो यथा केवलान्वयिहेतौ केवलान्वयित्वं धर्मस्तथा केवलान्वयिनि महाविद्यादिसाध्येऽपि केवलान्वयित्वं धर्मोऽस्येव। अतः केवलान्वयित्वाधारोऽत्र महाविद्यादिसाध्यमेव। तेन व्याप्यः प्रमेयत्वादिहेतुः, स वा केवलान्वयीत्यर्थः। तत्राद्यं विघटयति—**नाद्य इति। परमाणुः प्रत्यक्ष इति।** अत्र परमाणुरित्युपलक्षणादन्ये 'चर्मचक्षुषामदृश्या व्योमात्मादयोऽपि पक्षतुल्यत्वेन ग्राह्याः। यथा व्योम प्रत्यक्षं द्रव्यत्वाद्घटवदित्यादि, इति तेषां पक्षतुल्यत्वेन न तैर्व्यभिचाराशङ्कापि चिन्तनीया। अत्र च यद् द्रव्यं तत्प्रत्यक्षमिति व्याप्तिसद्भावेऽपि रूपरसादिगुणेषु द्रव्यत्वाभावेन सपक्षैकदेशवृत्तित्वाद् द्रव्यत्वस्य केवलान्वयित्वाधारत्वम्। यतः सकलवस्तुनिष्ठस्यैव धर्मस्य त्वया

---

सम्भव हो। महाविद्यानुमा के हेतु को केवलान्वयी कैसे कहा जा सकता है। यहाँ पर दो कल्प पूर्वपक्षखण्डनरीत्या किये जा रहे हैं, केवलान्वयी हेतुघटक-केवलान्वयी पदार्थ क्या है। केवलान्वयित्व का आधार केवलान्वयी है, कि केवलान्वयित्वाधारव्याप्य केवलान्वयी है। केवलान्वयित्वधर्म केवलान्वयी में रहता है, अतः केवलान्वयित्व आधार केवलान्वयी हो सकता है। अथवा केवलान्वयित्व जिस प्रकार केवलान्वयिहेतु में है, उसी प्रकार केवलान्वयी महाविद्या के साध्य में भी केवलान्वयित्वधर्म है। उसका आधार महाविद्या का साध्य उसका व्याप्य प्रमेयत्वादि हेतु है।

यहाँ पर प्रथमपक्ष में दोष दिखा रहे हैं। केवलान्वयित्व का आधार केवलान्वयी कहोगे तो परमाणुः प्रत्यक्षः द्रव्यत्वात् घटवत्, आकाशम् अभिधेयं नित्यत्वात् गोत्ववत् इन दोनो अनुमानों का संग्रह नहीं होगा। यतः

**दीनामसंग्रहप्रसङ्गात्। नापि द्वितीयः। केवलान्वयित्वस्याद्याप्यनिरुक्तेः। किं सकलवस्तुनिष्ठत्वं केवलान्वयित्वं, उत अत्यन्ताभावप्रतियोगित्वविरहः। आद्ये पक्षे दूषणमाह–**

**'मानं हन्त न केवलान्वयवतो धर्मस्य सत्त्वे' इति।**

---

केवलान्वयित्वमभीप्सामासे। तच्च द्रव्यत्वस्य रूपादिसपक्षावृत्तित्वेन नास्ति। अतो द्रव्यत्वादावुक्तरूपकेवलान्वयित्वस्यासंभव इत्यर्थः। एवमाकाशमभिधेयमित्यत्र नित्यत्वस्यात्मादौ सपक्षे वर्तनेऽपि घटपटादावनित्ये ह्यवर्तमानत्वेन नित्यत्वस्य सकलनिष्ठत्वलक्षणं केवलान्वयित्वं नास्तीत्येतयोर्हेत्वोः केवलान्वयिष्वसंग्रहः प्रसज्जेत। अयमाशयः यदि सर्ववस्तुनिष्ठत्वं केवलान्वयित्वं स्वीक्रियते, तदा अनयोर्द्रव्यत्वनित्यत्वरूपहेत्वोः सपक्षैकदेशवृत्तित्वेन केवलान्वयित्वेऽपि सर्ववस्तुनिष्ठत्वाभावेन केवलान्वयिहेतुष्वसंग्रहः स्यात्, केवलान्वयिहेतुषु च संग्रहीतावेतौ हेतू इति। महाविद्यादीनां साध्यानां केवलान्वयित्वाधारत्वात्तद्व्याप्यस्य मेयत्वादेर्हेतोः केवलान्वयित्वमिति यो द्वितीयो विकल्पस्तमपि प्रत्याचष्टे—**नापि द्वितीय इति। केवलान्वयित्वस्य अद्याप्यनिरुक्तेरिति।** केवलान्वयित्वस्याद्यापि भवता निश्चितोक्तेरप्रतिपादनादित्यर्थः। अत एव केवलान्वयित्वं द्विधा प्रमेयत्वादीनामत्यन्ताभावस्य

---

सकलवस्तुनिष्ठ को आपने केवलान्वयी कहा है। द्रव्यत्व हेतु प्रत्यक्षयोग्य रूपरसादि गुणों में नहीं है। अतः सपक्षैकदेशवृत्ति (सपक्ष के एक देश में रहना) हो गया। एवम् आकाश में अभिधेयत्वसाधक नित्यत्व हेतु भी सपक्षैकदेश वृत्ति है। यतः अभिधेय घटादि अनित्य पदार्थ भी है। उनमें नित्यत्व हेतु न रहने के कारण अभिधेयत्व हेतु भी सपक्ष के एक देश में रह गया। इस प्रकार प्रत्यक्षत्वसाधक द्रव्यत्वहेतु तथा अभिधेयत्वसाधक नित्यत्वहेतु केवलान्वयी होने पर भी सपक्षैकदेश वृत्ति हो गये। सकलवस्तुनिष्ठ नहीं हुए अतः दोनों का केवलान्वयित्वेन संग्रह नहीं होगा।

प्रथमपक्ष का खण्डन करने बाद अब द्वितीयपक्ष का खण्डन करते हुए ग्रन्थकार कह रहे हैं, कि केवलान्वयित्वाधारव्याप्य को भी केवलान्वयी नहीं कह सकते। **लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः** लक्षण तथा प्रमाण द्वारा वस्तु की सिद्धि होती है। केवलान्वयित्व का लक्षण यदि सकलवस्तुनिष्ठत्व (सकलपदार्थों में रहना) या अत्यन्ताभावप्रतियोगित्वविरह (अत्यन्ताभाव का जो प्रतियोगी नहीं है)। प्रमेयत्वादि के अत्यन्ताभाव का जो प्रतियोगी उसका

---

यत्प्रतियोगित्वं तस्य विरहोऽभाव इति यावत्। प्रमेयत्वादीनां सर्वत्र वृत्तित्वेनात्यन्ताभावः क्वापि नास्तीति तद्रूपं वा केवलान्वयित्वम्। आद्यपक्षदूषणे प्राचीनाचार्यवचनमुदाहरति—

**मानं हन्त न केवलान्वयवतो धर्मस्य सत्त्वेऽपि च**

**स्वस्मिन्वृत्तिरवर्त्तनेन सहिता व्याघातसंत्रासिता।**

**साध्याभाववदाश्रितत्वविरहो धूमादिलब्धस्थिति-**

**र्व्याप्तिः, सा नहि केवलान्वयवता धर्मेण संगच्छते।।** इति।

हन्तेत्यामन्त्रणे। हन्त भोः केवलान्वयवतो धर्मस्य सत्त्वे मानं नास्ति। 'मानाधीना मेयसिद्धिरि'ति वचनादत्र प्रकृतधर्मे मानाभावेन प्रकृतधर्मरूपमेया-सिद्धिरित्यर्थः। शेषवृत्तव्याख्यानं तु परिपाट्या ग्रन्थाकारः स्वयमेव करिष्यतीति।

---

अभाव। प्रमेयत्वादि सर्वत्र विद्यमान है। अतः उसका अत्यन्ताभाव कहीं नहीं है। यही केवलान्वयित्व है। इन दोनों पक्षों में से प्रथमपक्ष सकलवस्तु-निष्ठत्वरूप केवलावयित्व में दोष दे रहे है।

**मानं हन्त**-केवलान्वयी धर्म की सत्ता में कोई प्रमाण नहीं है। इसका विस्तारपूर्वक विवरण ग्रन्थकार स्वयं मूलग्रन्थ में कर रहे हैं। प्रमेयत्वादि सकलवस्तु में रहते हैं, इस में प्रत्यक्षप्रमाण नहीं है। सकलवस्तु का जिसे प्रत्यक्ष होगा उसी को प्रमेयत्वादि का सकलवस्तु में रहना ज्ञात होगा। भाट्टमीमांसक किसी को सर्वज्ञ मानते नहीं। अतः सकलवस्तुनिष्ठत्वविषयक प्रत्यक्ष उनके मत में सिद्ध नहीं होगा। प्रमेयत्वादि के सकलवस्तुनिष्ठत्व में अनुमानप्रमाण भी नहीं है। **प्रमेयत्वादयः सकलवस्तुनिष्ठाः** मेयत्वादि-सकलवस्तु में रहते हैं। इस अनुमान में साध्याप्रसिद्धि दोष है। सकलनिष्ठत्व यदि साध्य ही हो गया, तो सपक्ष कौन होगा जहाँ पर साध्य प्रसिद्धि बता सकोगे। तथा सकलवस्तुनिष्ठत्व यदि प्रमाणान्तर सिद्ध हो तभी अनुमान द्वारा उसका साधन कर सकते हैं। प्रत्यक्षसिद्ध है ही नहीं। उसका दोष दिया जा चुका है। शाब्दमात्रसिद्ध वस्तु का यदि अनुमान द्वारा साधन करेगे तो **वसुधा शशविषाणोल्लिखिता वसुधात्वात्** इस अनुमान का साध्य शशविषोल्लेख भी सिद्ध हो जायेगा। यतः शशविषाण वस्तुशून्य होने पर भी शब्दाभिलप्य-मानज्ञान का विषय तो है ही।

**तथाहि–न तावत्प्रमेयत्वादीनां सकलवस्तुनिष्ठत्वे प्रत्यक्षं मानम्। सकलवस्तुनिष्ठत्वगोचरस्य प्रत्यक्षस्य परं प्रत्यसिद्धेः। नाप्यनुमानम्। मेयत्वादयः सकलवस्तुनिष्ठा इत्यादेरप्रसिद्धविशेषणत्वात्। सकलवस्तु-निष्ठत्वं प्रमेयत्वादिनिष्ठमित्यादेश्चाश्रयासिद्धेः। सकलवस्तूनि प्रमेयत्वाधार इत्यादेश्च दृष्टान्ताभावग्रस्तत्वात्। एतद्घटव्यतिरिक्तसकलवस्तूनि प्रमेयत्वा-**

---

**भुवन.**—तत्र प्रत्यक्षं प्रमाणमुतानुमानं वेति विकल्प्य प्रथमं प्रत्याह—**न तावादित्यादि।** परं भाट्टादिकं प्रति सकलवस्तुविषयप्रत्यक्षाभावात्। तैः सर्वज्ञानङ्गीकारादिति। द्वितीयं दूषयति—**नाप्यनुमानमित्यादि।** प्रमेयत्वादयः सकलवस्तुनिष्ठा इति साध्यम्, उत सकलवस्तुनिष्ठत्वं प्रमेयत्वादिनिष्ठमिति, किं वा सकलवस्तूनि प्रमेयत्वाधार इति, किं वैतद्धटव्यतिरिक्तसकलवस्तूनि प्रमेयत्वाधारः इति चतुर्धा विकल्प्य, प्रथमे दूषणमाख्याति—**प्रमेयत्वादय इति। अप्रसिद्धविशेषणत्वादिति।** एवंविधसाध्यस्य दृष्टान्ते क्वाप्यप्रसिद्धत्वेन अप्रसिद्धविशेषणो नाम पक्षदोषः स्यादित्यर्थः। सकलवस्तुनिष्ठत्वस्या-प्रामाणिकत्वादाश्रयासिद्धिर्द्वितीये स्यादित्युदीरयति—**सकलवस्तुनिष्ठत्वमिति।**

अयमत्र मथितार्थः। सकलवस्तुनिष्ठत्वमिति धर्मी, प्रमेयत्वादिनिष्ठमिति 'साध्यो धर्मः, अत्र च सकलवस्तुनिष्ठत्वरूपधर्मस्य धर्मिण एव सिद्धौ परमतेन प्रमाणाभावात्, यस्य कस्यापि हेतोरत्र प्रदीयमानस्याश्रयासिद्धत्वं स्यादेवेति। तृतीयः सर्वस्य पक्षतया दृष्टान्ताभावेन स्वसाध्यासाधकपक्षमात्र-वृत्तिरूपानध्यवसितदोषाक्रान्त इति भाषते—**सकलवस्तूनि प्रमेयत्वाधार इति।** प्रमेयत्वस्याधारः प्रमेयत्वाधारः। सकलवस्तुशब्देन सर्वस्यापि पक्षमध्ये संगृहीतत्वेन अधिकवस्त्वन्तराभावादत्र स्फुटमेव दृष्टान्ताभावग्रस्तत्वम्। तथा च मेयत्वादिहेतोः स्वसाध्यासाधकत्वेन पक्षमात्रवृत्तित्वेन चानध्यवसितत्वमिति।

---

यदि प्रमेयत्वादिनिष्ठ को सकलवस्तुनिष्ठत्व, अनुमान द्वारा साधन करें तो आश्रयासिद्धिदोष होगा। सकलवस्तुनिष्ठत्वरूप धर्म का धर्मी परमत से असिद्ध है। यतः सकलवस्तु का प्रत्यक्ष हुए बिना सकलवस्तु निष्ठत्व का परिज्ञान असम्भव है। भाट्टमीमांसक सर्वज्ञता का विरोधी है। अतः उक्त अनुमान में कोई भी हेतु बनायेंगे वह आश्रयासिद्धिदोषयुक्त होगा। यदि **सकलवस्तूनि प्रमेयत्वाधारः** सकलवस्तु पक्ष में प्रमेयत्वाधारत्व साधन करे, तो दृष्टान्ताप्रसिद्धिदोष है। सकलवस्तु पक्षकोटि में प्रसिष्ट हो गया तो दृष्टान्त कौन होगा तथा सकलवस्तु को पक्ष बनाने पर न तो को अन्वयी दृष्टान्त

**धारः प्रमेयत्वादित्यादेश्च साध्याविशिष्टत्वात्। एतद्घटव्यतिरिक्तसकलवस्तूनि प्रमेयत्वाधारः अभिधेयत्वादित्यादेश्च केवलान्वयित्वेन केवलान्वयिप्रामाण्ये विप्रतिपन्नं प्रत्यनुपादेयत्वादिति।**

---

तुर्ये विकल्पे मेयत्वं हेतुः अभिधेयत्वं वा। तत्र प्रमथं हेतुं निरस्यति। **एतद्घटव्यतिरिक्तेत्यादि।** अत्र च पूर्वोक्तदोषपरिजिहीर्षया सकलवस्तुमध्यादेतद्घटो दृष्टान्तार्थं पृथक्कृतः। **साध्याविशिष्टत्वादिति।** साध्यान्न विशिष्टः साध्याविशिष्टः। यथा साध्यं सकलवस्तूनां प्रमेयत्वाधारत्वादिकं विवादास्पदीभूतं, तथात्र मेयत्वादिति हेतुरपि साध्यरूपत्वेन विवादास्पदीभूत एव। तेन साध्याविशिष्टत्वं नामात्र हेतोर्दोषो भवत्येवेति। अथ द्वितीयं हेतुं निराचष्टे—**एतद्घटव्यतिरिक्तेत्यादि।** अत्र मेयत्वादिति हेतुस्थानेऽभिधेयत्वादिति हेतुरुक्तः। तथा च न साध्याविशिष्टत्वं, तस्मिन्नेव साध्ये तस्यैव हेतोस्तथात्वात्। अत्र च तथाऽभावात्। अतो दूषणान्तरमत्राह—**अभिधेयत्वादित्यादि।** केवलान्वयिहेतोः प्रामाण्यं विप्रतिपन्नं, प्रतिवादिनं प्रत्यनङ्गीकार्यत्वादित्यर्थः।

---

होगा न तो व्यतिरेकिदृष्टान्त होगा, अतः मेयत्वादिहेतु के व्यभिचारदोषग्रस्त होने से हेत्वाभास होगा।

यदि दृष्टान्ताप्रसिद्धिदोष को हटाने के लिए एतद्घटव्यतिरिक्तसकलवस्तुनि प्रमेयत्वाधारः कहें तो एतद्घटव्यतिरिक्तवस्तु पक्षकोटि में, दृष्टान्त कोटि एतद्घट हो जायेगा। इसमें भी दोषोद्भावन करते हुए ग्रन्थकार कह रहे हैं, कि उक्त अनुमान का हेतु यदि प्रमेयत्व रखते है, तो वह भी प्रमेयत्वाधारत्वादि के समान विवादित ही है। अतः साध्याविशिष्टनामक दोष होगा। जिस प्रकार साध्य सन्दिग्ध है। उसी प्रकार हेतु भी सन्दिग्ध है। यदि प्रमेयत्व के स्थान पर अभिधेयत्व हेतु रखवें तो पूर्वोक्तदोष का वारण तो सम्भव है। तथापि केवलान्वयिहेतु का प्रमाण्य न स्वीकार करने वाले प्रतिवादी के लिए उपादेय नहीं होगा। एततघटव्यतिरिक्तसकलवस्तुपक्षक प्रमेयत्वाधारत्वसाध्यक अनुमान में अन्यदोष का उद्भावन करते हुए ग्रन्थकार कह रहे हैं, कि एतद्घटव्यतिरिक्तसकलवस्तुशब्द से जो आपने प्रत्यक्ष तथा अनुमान द्वारा अधिगत किया उसे ही ले रहे हैं। या जिन वस्तुओं को आपने या अन्य ने प्रत्यक्ष तथा अनुमान प्रमाण द्वारा अधिगत किया है। अधिगत कर रहे है। अधिगत करेंगे। उन सभी को ले रहे हैं। प्रथमपक्ष में दोष है। यतः जिनवस्तुओं

**किञ्च एतद्घटव्यतिरिक्तसकलवस्तुशब्देन किं यावन्तो भवता प्रत्यक्षानुमानाभ्यामधिगतास्तावन्तो विवक्षिताः, किंवा यावन्तो भवता अन्यैश्च प्रत्यक्षानुमानाभ्यां ज्ञाताः ज्ञायन्ते ज्ञास्यन्ते च तावन्तः। नाद्यः। प्रत्यक्षानुमानाभ्यां यावन्तो भवताधिगतास्तावन्मात्रनिष्ठत्वसिद्धावपि सकल-वस्तुनिष्ठत्वासिद्धेः। नापि द्वितीयः। भवदधिगतवस्तुव्यतिरिक्तवस्तूनां भवदनधिगतत्वेन हेतोरप्रमिताश्रयत्वादिति।**

---

**भुवन.**—दूषणान्तरं भाषते—**किं चेत्यादि**। किं चेति दूषणान्तरा-भ्युच्चये। **तावन्मात्रनिष्ठत्वसिद्धावपीति**। प्रमेयत्वादीनामिति शेषः। **अप्रमिता-श्रयत्वादिति**। अप्रमितोऽज्ञातः आश्रयोऽन्याधिगतवस्तुरूपो यस्य स तथा, तद्भावस्तत्त्वं तस्मात्। भवदधिगतवस्तुव्यतिरिक्तवस्तूनां परैर्ज्ञातत्वेऽपि भवद-ज्ञातत्वेन भवत्प्रयुक्तहेतोरपरिज्ञाताश्रयत्वं स्यादिति भावः।

---

को प्रत्यक्ष या अनुमानप्रमाण द्वारा आपने अधिगत किया उन्हीं वस्तुओं में एतद्घट का भेद सिद्ध हो सकता है। वह भेद सकलवस्तुनिष्ठ नहीं होगा। द्वितीय पक्ष भी अनुपयुक्त है। यत: आप द्वारा अधिगत वस्तु से भिन्न आपद्वारा अनधिगत वस्तुपक्षक प्रमेयत्वाधारत्वसाध्यक अनुमान का हेतु अप्रमितपदार्थ आश्रित होगा। अन्य के द्वारा ज्ञात वस्तु में प्रमात्व निश्चय नहीं होता। अप्रमितपक्षक अनुमान में आश्रयासिद्धि दोष होता है।

तुष्टदुर्जनन्यायेन यदि अन्यपुरुषज्ञातवस्तु को प्रमित मान कर हेतु की आश्रयासिद्धिदोष का वारण कर भी दें, तथापि उक्त अनुमान द्वारा एतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्व मेयत्व में साध्यत्वेन अभिप्रेत है। सकलवस्तुनिष्ठत्व केवलान्वयी अपर पर्याय है। यहाँ पर केवलान्वयित्व कैसे सिद्ध कर सकते हैं। उक्त अनुमान द्वारा एतद्घटव्यतिरिक्तसकलवस्तु में प्रमेयत्वसिद्ध कर रहे है। एतद्घट पक्षवहिर्भूत होने से प्रमेयत्व को एतत् घटवृत्ति कहना तो असङ्गत होगा। इस प्रकार अवस्था विशेष में प्रमेयत्व का सकलवस्तुनिष्ठत्व ही असिद्ध है।

अब यदि आप एतद्घटनिष्ठप्रमेयत्व को प्रत्यक्षप्रमाण से सिद्ध मानते हैं। एतद्घटव्यतिरिक्त सकलवस्तुनिष्ठप्रमेयत्व को अनुमान प्रमाण द्वारा सिद्ध मानते हैं। तब तो आप प्रमाणद्वय का पर्यालोचन करके प्रमेयत्वादि केवलान्वयीधर्म का सकलवस्तुनिष्ठत्वसिद्धि स्वीकार किया जो सम्भव नहीं है। प्रमाणद्वयपर्यालोचन से प्रमेयत्वादि का सकलवस्तुनिष्ठत्व का तात्पर्य क्या है?

**अस्तु वा एतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्वं मेयत्वादीनामेतस्मादनुमानात्। सकलवस्तुनिष्ठत्वापरपर्यायं केवलान्वयित्वं तु कुतः प्रमेयत्वादीनां सिद्धम्।**

**अथ एतद्घटनिष्ठत्वं प्रमेयत्वादीनां प्रत्यक्षसिद्धम्। एतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्वं तु प्रकृतानुमानात्। तेन प्रमाणद्वयपर्यालोचनया**

---

**भुवन.**—ममाप्रमितत्वेऽप्यन्येषां प्रमातृणां प्रतिततत्वादाश्रयत्वोपपत्तेर्न हेतोराश्रयासिद्धत्वमिति परोक्तं चेतसि निधायाङ्गीकुर्वन्नप्याह—**अस्तु वैतद्घटव्यतिरिक्तेत्यादि। एतस्मादनुमानादिति।** एतद्घटव्यतिरिक्तसकलवस्तूनि प्रमेयत्वाधारः अभिधेयत्वादित्यतः **सकलवस्तुनिष्ठत्वेत्यादि।** सकलवस्तुनिष्ठत्वाख्यं केवलान्वयित्वं तु कुतः प्रमाणात्प्रमेयत्वादीनां सिध्यति। अयमर्थः। एतद्घटव्यतिरिक्तसकलवस्तूनामेतदनुमानात्प्रमेयत्वमस्तु। तथापि केवलान्वयित्वं प्रमेयत्वादीनां न सिध्यति। एतद्घटस्य पक्षाद्बहिष्कृतत्वेन प्रमेयत्वादीनामेतद्घटनिष्ठत्वस्यैवासिद्धेः सकलवस्तुनिष्ठत्वरूपकेवलान्वयित्वासिद्धिरिति।

**भुवन.**—प्रत्यक्षानुमानयोः प्रत्येकं सकलवस्तुनिष्ठत्वसाधकत्वाभावेऽपि सम्भूय तत्साधकत्वं भविष्यतीत्याशङ्कते—**अथैतद्घटनिष्ठत्वमित्यादि।** वक्ष्यमाणविकल्पासहतया परोक्तं परिहरति तन्नेति। परोक्तस्यार्थं पक्षत्रैधं विधाय पृच्छति। **प्रमाणद्वयेति।** 'किं प्रत्यक्षे'त्यादिः 'सिद्धि रित्यर्थः'

---

(१) प्रत्यक्षप्रमाणपर्यालोचन द्वारा सकलवस्तुनिष्ठत्वसिद्धि, तथा अनुमान प्रमाणपर्यालोचन द्वारा भी सकलवस्तुनिष्ठत्वसिद्धि मानते हैं; या (२) प्रत्यक्ष तथा अनुमान मिल कर प्रमेयत्वादि का सकलवस्तुनिष्ठत्व के साधक हैं मानते हैं, अथवा (३) प्रत्यक्षप्रमाण द्वारा प्रमेयत्वादि की एतद्घटनिष्ठत्वसिद्धि तथा अनुमानप्रमाण द्वारा एतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्वसिद्धि मानते हैं। जिससे प्रत्यक्ष तथा अनुमान द्वारा अवगत एतद्घटव्यतिरिक्तनिष्ठत्वविशिष्ट एतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्व होने से सकलवस्तुनिष्ठत्वप्रमेयत्वादि का अनुमान द्वारा सिद्ध हो जाता है।

प्रथम (१) पक्ष मान कर प्रमेयत्वादि का सकलवस्तुनिष्ठत्व नहीं सिद्ध कर सकते। यतः प्रत्यक्षप्रमाण एतद्घटमात्रनिष्ठत्व का ग्राहक है। तथा अनुमानप्रमाण एतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्व का ग्राहक है। सकलवस्तु-

**प्रमेयत्वादीनां सकलवस्तुनिष्ठत्वसिद्धिरिति ब्रूषे, तन्न। प्रमाणद्वय-पर्यालोचनया प्रमेयत्वादीनां सकलवस्तुनिष्ठत्वसिद्धिरिति कोऽर्थः। किं प्रत्यक्षपर्यालोचनया सकलवस्तुनिष्ठत्वसिद्धिः, अनुमानपर्यालोचनया च सकलवस्तुनिष्ठत्वसिद्धिरित्यर्थः, किंवा मिलितप्रत्यक्षानुमानपर्यालोचनया सकलवस्तुनिष्ठत्वसिद्धिरित्यर्थः। किंवा प्रत्यक्षतः एतद्घटनिष्ठत्व-सिद्धिः, प्रमेयत्वादीनामनुमानतश्चैतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्वसिद्धिः, तेन प्रत्यक्षानुमानावगतैतद्घटनिष्ठत्वे सति एतद्घटव्यतिरिक्तसकलवस्तु-निष्ठत्वात्सकलवस्तुनिष्ठत्वं प्रमेयत्वादीनामनुमीयते इत्यर्थो विवक्षितः। नाद्यः। प्रत्यक्षस्यैतद्घटमात्रनिष्ठत्वग्राहकत्वात्। अनुमानस्य चैतद्घट-**

---

इति पर्यन्तः प्रथमो विकल्पः। केवलेन प्रत्यक्षेणापि सकलवस्तुनिष्ठत्व-सिद्धिः, अनुमानेनापि च केवलेन सकलवस्तुनिष्ठत्वसिद्धिः प्रमेयत्वादीना-मित्यर्थः। 'किं वा मिलिते'त्यादिः 'सिद्धिरित्यर्थः' इत्यन्तो द्वितीयो विकल्पः केचिद् घटपटादयो भावाः प्रत्यक्षेण केचिच्च मन्दरादयोऽनुमानेन ज्ञायन्ते इति मिलितप्रत्यक्षानुमानाभ्यां प्रमेयत्वादीनां सकलवस्तुनिष्ठत्वसिद्धिरिति भावः। 'किं वा प्रत्यक्षत' इत्यादिः 'सिद्धिरिति' प्राप्तस्तृतीयो विकल्पः। तृतीयविकल्पस्य पर्यवसितार्थमाह—**तेन प्रत्यक्षानुमानेति**। तेन कारणेन प्रत्यक्षानुमानाभ्यामवगतं यदेतद्घटनिष्ठत्वे सत्येतद्घटव्यतिरिक्तसकलवस्तु-निष्ठत्वं, तस्मादत्रैतद्घटनिष्ठत्वे सत्येतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्वमिति सप्तम्याः खण्डितत्वेऽपि विवक्षितार्थप्रतिपादकत्वादखण्डं पदं ज्ञेयम्—**तेन कर्मधारयोपपत्तिरेवेति**। अथाद्यं पक्षं प्रतिक्षिपति—**नाद्य इत्यादि**। अयं भावः। आद्ये विकल्पे प्रत्यक्षेणाप्यनुमानेनापि च सकलवस्तुनिष्ठत्व-सिद्धिर्विवक्षिता। अत्र च प्रत्यक्षस्यैतद्घटनिष्ठत्वस्यानुमानस्य तदन्य-सर्ववस्तुनिष्ठत्वस्य च ग्राहकत्वं विवक्षितमिति प्रथमविकल्पस्य व्यक्त एव

---

निष्ठत्व प्रमेयत्वादि का प्रमाणैकगम्य नहीं हुआ। द्वितीय (२) प्रत्यक्ष तथा अनुमान मिलकर सकलवस्तुनिष्ठत्वप्रमा के जनक नहीं हो सकते। प्रत्यक्ष तथा अनुमान का मिलित प्रमाण नहीं माना जाता। तृतीय (३) पक्ष भी नहीं माना जा सकता प्रमेयत्वादि सकलवस्तुनिष्ठ है, एतद्घटनिष्ठ होते हुए एतद्घटव्यतिरिक्तसकलवस्तुनिष्ठ होने से। इस अनुमान में साध्याप्रसिद्धिदोष है। यदि साध्यप्रसिद्धि के लिए आप एतद्घटनिष्ठत्व होते हुए एतद्घट-व्यतिरिक्तसकलवस्तुनिष्ठ को सकलवस्तुनिष्ठत्व कहे जो प्रमाणद्वय से अवगत

**व्यतिरिक्तसकलवस्तुमात्रनिष्ठत्वग्राहकत्वाच्चेति। नापि द्वितीयः। प्रत्यक्षानुमानयोर्मिलितयोः सकलवस्तुनिष्ठत्वप्रमाजनकत्वस्य निष्प्रमाणकत्वादिति। नापि तृतीयः। प्रमेयत्वादयः सकलवस्तुनिष्ठाः, एतद्घटनिष्ठत्वे सति एतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्वादित्यादेरप्रसिद्धविशेषणत्वात्। एतद्घटनिष्ठत्वे सति एतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्वमेव सकलवस्तुनिष्ठत्वम्, तच्च प्रकृतप्रमाणद्वयावसितमिति नाप्रसिद्धविशेषणतेति चेत्। न। प्रमेयत्वादयः सकलवस्तुनिष्ठाः सकलवस्तुनिष्ठत्वादित्यादेः साध्याविशिष्टत्वात्।**

---

निरासः द्वितीयं निरस्यति—**नापीति।** मिलिते प्रत्यक्षानुमाने प्रमेयत्वादीनां सकलवस्तुनिष्ठत्वप्रमाजनके इत्यादेः साध्यस्य तथाविधहेतोरसम्भवेन निष्प्रमाणकत्वमित्यर्थः, तृतीयेऽपि किमेतद्घटनिष्ठत्वे सत्येतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्वं हेतुः, किं वा सरलवस्तुनिष्ठत्वमात्रमिति द्विधा विकल्प्याद्यं दूषयन्नाह—**नापि तृतीय इति। अप्रसिद्धविशेषणत्वादिति।** अत्र सकलवस्तुनिष्ठत्वस्य साध्यस्य दृष्टान्ते काप्यप्रसिद्धत्वेन पक्षस्याप्रसिद्धविशेषणत्वमित्यर्थः। अथ साध्यस्य प्रमाणतोऽप्रसिद्धत्वेऽप्रसिद्धविशेषणत्वमित्यर्थः। अथ साध्यस्य प्रमाणतोऽप्रसिद्धत्वेन पक्षस्याप्रसिद्धविशेषणत्वं, अत्र पुनः प्रणाणप्रसिद्धं साध्यमिति नोक्तो दोष इत्याशङ्कते—**एतद्घटनिष्ठत्वे सत्येतद्घटेत्यादि।** एतद्घटनिष्ठत्वं प्रमेयत्वादीनां प्रत्यक्षेणावगतम्, तद्भिन्नसकलवस्तुनिष्ठत्वं चानुमानेन। एतद्घटैतदन्यसकलवस्तुनिष्टत्वमेव च सकलवस्तुनिष्ठत्वमुच्यते। तच्च सकलवस्तुनिष्ठत्वं प्रकृतप्रमाणद्वयं प्रत्यक्षानुमानद्वयलक्षणं तेनावसितं ज्ञातमित्यर्थः। तथा च सकलवस्तुनिष्ठत्वस्य साध्यस्य प्रमाणप्रसिद्धत्वेन नाप्रसिद्धविशेषणतेति भावः।

---

है, अतः अप्रसिद्ध विशेषणतादोष नहीं होगा। तो ऐसा नहीं कह सकते इस स्थिति में अनुमान का स्वरूप प्रमेयत्वादि सकलवस्तु निष्ठ हैं, सकलवस्तुनिष्ठ होने से। ऐसा अनुमान प्रयोग होगा। तब तो हेतु तथा साध्य में अभेद सिद्ध होगा। साध्याविशिष्ट हेतु होने पर हेत्वाभ्यास दोष है। एतद्घटनिष्ठत्व प्रत्यक्षप्रमाण द्वारा तथा एतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्व अनुमानप्रमाण द्वारा अवगत हो भी जाय, तथापि एतद्घटनिष्ठत्व एतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्व में कोई प्रमाण नहीं है। यतः उभयनिष्ठत्व में एक 'प्रमाण नहीं है। इस प्रकार सकलवस्तुनिष्ठत्वरूप केवलान्वयी नहीं हो सकता।

**किञ्च एतद्घटनिष्ठत्वे प्रत्यक्षावगतेऽपि एतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्वे चानुमानावगतेऽपि, एतद्घटनिष्ठत्वे सति एतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्वे मानाभावस्य तदवस्थत्वादिति।**

**अत्यन्ताभावप्रतियोगित्वविरहः केवलान्वयित्वमिति द्वितीयपक्षेऽपि 'मानं हन्त न केवलान्वयवतो धर्मस्य सत्त्वे'**

---

द्वितीयविकल्पदूषणमुखेनैव अप्रसिद्धविशेषणत्वपरिहाराशङ्कामपाकुरुते—**नेति। प्रमेयत्वादय इति।** अत्र सकलवस्तुनिष्ठत्वमिति साध्यम्। हेतुरपि सकलवस्तुनिष्ठत्वादित्येवेति साध्यतुल्यत्वेन साध्याविशिष्टो हेतुः। यादृशं साध्यं तादृश एव हेतुरित्यर्थः। अयं भावः। प्रमाणद्वयावसितं साध्यमित्युक्तं, तत्र च प्रमेयत्वादयः सकलवस्तुनिष्ठा इत्याद्यनुमानं साध्याविशिष्टत्वादिदोषग्रस्तमिति प्रमाणद्वयावसितताभावादप्रसिद्धविशेषणतैवेति।

**भुवन.**—तृतीयविकल्पस्य प्रथमविकल्पे हेतोरसिद्धिश्चेत्याह—**किं चेत्यादि।** अयमाशयः। एतद्घटनिष्ठत्वं प्रमेयत्वादीनां प्रत्यक्षेण ज्ञातम्। तदन्यत्सकलवस्तुनिष्ठत्वं चानुमानेन। तथापि प्रमेयत्वादयः सकलवस्तुनिष्ठा एतद्घटनिष्ठत्वे सत्येतद्घटव्यतिरिक्तसकलवस्तुनिष्ठत्वादित्यादौ एतद्घटनिष्ठेत्यादिहेतुपरिच्छेदकस्यैकस्य प्रमाणस्याभावेन मानाभावस्तदवस्थ एवेत्यर्थः।

अथ केवलान्वयित्वस्य द्वितीयं विकल्पं निराचिकीर्षुराह—**अत्यन्ताभावेत्यादि।** अत्यन्ताभावस्य प्रतियोगी तन्निरूपकः। 'अभावनिरूपकः प्रतियोगी'ति तल्लक्षणात्। तस्य भावस्तत्त्वं, तस्य विरहोऽभावः। प्रमेयत्वादीनां सर्ववृत्तित्वेन अत्यन्ताभावप्रतियोगित्वं नास्तीति तदभाव एव केवलान्वयित्वमिति द्वितीयः पक्षः, तत्रापि प्रत्यक्षं मानमुतानुमानमिति पूर्ववद्विकल्प्य, तत्र प्रत्यक्षप्रमाणप्रतिक्षेपं कुरुते—**प्रमेयत्वादीत्यादि।** अत्रादिपदेनाभिधेयत्वादिग्रहः। प्रमेयत्वादिनिष्ठं च तदत्यन्तभावप्रतियोगित्वं च, तस्य विरहः, स एव गोचरो

---

द्वितीयपक्ष यदि अत्यन्ताभावप्रतियोगि का अभाव यदि केवलान्वयी माने तो इसमें दोष दे रहे है ग्रन्थकार **मानं हन्त** न....प्रमेयत्वादि सर्वपदार्थों में रहते है, अतः अत्यन्ताभावप्रतियोगित्वविरह ही केवलान्वयित्व है। इस पर ग्रन्थकार कह रहे है, कि एतादृशकेवलान्वयित्व में कोई प्रमाण नहीं है। यदि आप प्रत्यक्ष प्रमाण कहे तो उभयवादिसम्मत होना चाहिए। जो हम

**इत्येतदेवोत्तरम्। प्रमेयत्वादिनिष्ठात्यन्ताभावप्रतियोगित्वविरहगोचर-प्रत्यक्षस्य अस्मान्प्रत्यसिद्धत्वादिति।**

**प्रमेयत्वादयः अत्यन्ताभावप्रतियोगित्वरहिता इत्यादेः पूर्ववदप्रसिद्ध-विशेषणत्वादिना निरस्तत्वात्। अत्यन्ताभावप्रतियोगित्वं कुतश्चिव्द्यावृत्तं**

---

विषयो यस्य प्रत्यक्षस्य तत्तथा। एवंविधप्रत्यक्षस्यास्मान्प्रत्यसिद्धत्वात्। अयमर्थः। प्रमेयत्वादयोऽत्यन्ताभावप्रतियोगित्वरहितास्तदैव भवन्ति यदि प्रमेयत्वादीनामत्यन्ताभावः क्वापि न भवेत्। तथा च प्रमेयत्वादयः सर्वत्र सन्ति। एवंविधस्य प्रमेयत्वादीनामत्यन्ताभावप्रतियोगित्वविरहगोचरप्रत्यक्षस्या-स्मान् प्रतिवादिनः प्रत्यसिद्धत्वमिति।

**भुवन.**—द्वितीये प्रमेयत्वादिकं पक्षीकृत्यानुमानं प्रयुज्यते, अत्यन्ता-भावप्रतियोगित्वं वा प्रथमं पराकरोति—**प्रमेयत्वादय इत्यादि।** अत्राप्यादि-शब्देनाभिधेयत्वादिग्रहः। द्वितीयपक्ष प्रतिक्षिपति—**अत्यन्ताभावप्रतियोगित्व-मित्यादि।** अत्र यद्यन्मेयं तत्तत्कुतश्चिव्द्यावृत्तमिति नियमो नास्ति। अत्र हेतुमाह—**भवदभिमतेति।** भवदभिमता ये केवलान्वयिनो धर्माः प्रमेयत्व-वाच्यत्वादयः ते च भवन्मतेन मेयाः सन्ति, न कुतश्चिव्द्यावृत्ता इति तेषु व्यभिचार इत्यर्थः। अत्रैवानुमाने दोषान्तरमाह—**भवदभिमतकेवलान्वयित्व-विधुरेत्यादि।** भवदभिमतं यत्केवलान्वयित्वं सर्ववस्तुनिष्ठत्वं तेन विधुरो योऽत्यन्ताभावस्तस्य यत्प्रतियोगित्वं घटत्वादीनां तस्मादेवात्यन्ताभाव-प्रतियोगित्वस्य व्यावृत्तिसिद्धिमात्रेण अस्यात्यन्ताभावप्रतियोगित्वं कुतश्चिव्द्या-वृत्तमित्यादिरूपस्यानुमानस्योपपन्नत्वेन संजातत्वेन प्रमेयत्वादीनामत्यन्ताभाव-प्रतियोगित्वव्यावृत्तिरूपादर्थात्सिषाधयिषितादन्यो योऽर्थः स्वस्मात्स्वव्यावृत्ति-लक्षणस्तदर्थान्तरं, तेन ग्रस्तत्वाच्च। चकारो हेत्वन्तरसूचनार्थः। अयमभिप्रायः।

---

प्रतिवादियों के प्रति असिद्ध है। यतः हमलोग केवलान्वयित्व को प्रत्यक्षप्रमाणवेद्य नहीं मानते। यदि अनुमानप्रमाण द्वारा प्रमेयत्वादि का अत्यन्ताभावप्रतियोगित्वविरह सिद्ध करे तो दो प्रकार के अनुमान परिकल्पित हो सकते हैं। प्रमेयत्वादि को पक्ष वना कर अत्यन्ताभावप्रतियोगित्वविरह को साध्य बनायें। या अत्यन्ताभावप्रतियोगित्व को पक्ष बना कर कुतश्चिद्व्यावृत्ति को साध्य मेयत्व को हेतु माने। प्रथमपक्ष में ग्रन्थकार साध्याप्रसिद्धिरूपदोष दे रहे हैं। जिस अत्यन्ताभावप्रतियोगित्वविरह की सिद्धि आप प्रमेयत्वादि पक्ष

**मेयत्वादित्यादेश्च भवदभिमतकेवलान्वयिधर्मेषु भवन्मतेन अनैकान्तिकत्वादिति। भवदभिमतकेवलान्वयित्वविधुरात्यन्ताभावप्रतियोगित्वादेव अत्यन्ताभावप्रतियोगित्वस्य व्यावृत्तिसिद्धिमात्रेण अस्योपपन्नत्वेन अर्थान्तरताग्रस्तत्वाच्च। केवलान्वयिनः परं प्रति अगमकत्वाच्च। अत्यन्ताभावप्रतियोगित्वं प्रमेयत्वव्यावृत्तम्, अत्यन्ताभावप्रतियोगित्वव्यतिरिक्तप्रमेयत्व-**

---

यथा मेयत्ववाच्यत्वादयः सर्ववृत्तित्वेन भवन्मते केवलान्वयिनो वर्तन्ते, तथा खरविषाणादेरप्रामाणिकस्यात्यन्ताभावोऽपि सकलवस्तुनिष्ठत्वेन केवलान्वयित्ववानेव भवति। केबलान्वयित्वेन विधुरस्त्वत्यन्ताभावो घटत्वादिप्रतियोगिको ज्ञेयः। तस्य घटे वर्तमानत्वेन सकलवस्तुनिष्ठत्वाभावात्। तेन केवलान्वयित्वविधुरात्यन्ताभावप्रतियोगित्वादेव केवलान्वयित्वविधुरात्यन्ताभावप्रतियोगित्वस्य व्यावृत्तिः सिध्यति, न प्रमेयत्वादेः। एतदुक्तं भवति। अत्यन्ताभावप्रतियोगित्वेऽत्यन्ताभावप्रतियोगित्वं स्ववृत्तिविरोधान्नास्तीति स्वस्मादेय स्वव्यावृतिमात्रसिद्धौ अर्थान्तरमिति। अथ पुनरत्रैव हेतुदोषं भाषते— **केवलान्वयिन इति। परं प्रतीति**। परं प्रतिवादिनं प्रतीत्यर्थः। अथानुमानान्तरमाशङ्कते—**अत्यन्ताभावेति**। प्रमेयत्वाव्द्यावृत्तम् प्रमेयत्वव्यावृत्तम्। अत्यन्ताभावप्रतियोगित्वं प्रमेयत्वे न वर्तते इत्यर्थः। अत्यन्ताभावप्रतियोगित्व-

---

में कर रहे हैं, वह पूर्व में कही पक्षान्तर में सिद्ध होना चाहिए जो आप नहीं बता पायेंगे।

द्वितीय अत्यन्ताभावप्रतियोगित्वपक्षक कुतश्चिद्व्यावृत्तत्वसाध्यक अनुमान का प्रमेयत्व हेतु व्यभिचार दोष ग्रस्त है। यतः आप के मत में केवलान्वयिधर्म प्रमेयत्वादि में भी प्रमेयत्व है, परन्तु कुतश्चित्व्यावृत्तत्व नहीं है। प्रमेयत्वादिधर्म को केवलान्वयी मानने वालों के मत में प्रमेयत्व सर्वत्र विद्यमान होने से कुतश्चिद्व्यावृत्त (कही पर न रहना) नहीं है।

इस पक्ष ये अर्थान्तरदोष भी है। अन्य अर्थः अर्थान्तर जिस अनुमान द्वारा अत्यन्ताभावप्रतियोगित्व में कुतश्चिद्व्यावृतत्व साध्य की सिद्धि करके अत्यन्ताभावप्रतियोगित्वविरह सिद्ध कर रहे हैं। उस अनुमान से अत्यन्ताभावप्रतियोगित्व की व्यावृत्तिमात्र सिद्ध होती है। उसके लिए अनुमान प्रयोग व्यर्थ है। यदि अत्यन्ताभावप्रतियोगित्व की व्यावृत्तिमात्र अभिप्रेत है। तो वह आप के मतानुसार केवलान्वयित्वप्रतियोगिकभिन्न अत्यन्ताभावप्रतियोगिकत्व कथन मात्र से सिद्ध है। (केवलान्वयी प्रमेयत्वादि नहीं है प्रतियोगी जिस अत्यन्ता-

**निष्ठत्वरहितत्वात्, संप्रतिपन्नप्रमेयत्वानिष्ठवदित्यपि न। अत्यन्ताभावप्रतियोगित्वं प्रमेयत्वनिष्ठम्, अत्यन्ताभावप्रतियोगित्वव्यतिरिक्त-**

---

व्यतिरिक्तत्वे सति ये प्रमेयत्वनिष्ठाः प्रमेयवृत्तित्वादयस्तत्त्वरहितत्वादिति हेतुः। संप्रतिपन्ना वादिप्रतिवादिभ्यां प्रतिपन्ना ये प्रमेयत्वानिष्ठा द्रव्यत्व-घटत्वादयस्तद्वदित्यर्थः। अत्यन्ताभावप्रतियोगित्वं व्यावृत्तमित्युक्ते स्वतो व्यावृत्तत्वेनार्थान्तरत्वं स्यात्। अत उक्तं प्रमेयत्वव्यावृत्तमिति। अथ हेतु-व्यावृत्त्यचिन्ता। प्रमेयत्वनिष्ठत्वरहितत्वादित्युक्ते प्रतिवादिनं भाट्टादिकं प्रत्यसिद्धिः स्यात्, तन्मतेऽत्यन्ताभावप्रतियोगित्वस्य प्रमेयत्वनिष्ठत्वात्। अत उक्तमत्यन्ताभावप्रतियोगित्वव्यतिरिक्तेति। एवमुक्ते च हेतुरुभयवादिसंमतो जातः। यतः प्रमेयत्वनिष्ठाः सत्त्वप्रमेयवृत्तित्वादयो यथा सन्ति, तथा प्रतिवादिनो मतेऽत्यन्ताभावप्रतियोगित्वमपि प्रमेयत्वनिष्ठं विद्यते। तच्चात्यन्ता-भावप्रतियोगित्वव्यतिरिक्तेति पदेन बहिष्कृतम्। तथा चात्यन्ताभावप्रति-योगित्वव्यतिरिक्ता ये मेयत्वनिष्ठाः, तत्त्वरहितत्वमत्यन्ताभावप्रतियोगित्वस्य पक्षितस्यास्त्येवेत्यर्थः।

तुल्यबलत्वेन साध्याभावसाधकः प्रकरणसमापरपर्यायः सत्प्रतिपक्षः, तेन कलङ्कितमेतदिति परिहरति—**नेति**। प्रमेयत्वे वर्तमानमित्यर्थः—**अत्यन्ताभावेति**। अत्यन्ताभावप्रतियोगित्वव्यतिरिक्ता ये प्रमेयत्वाव्द्यावृत्ताः प्रमेयत्वावर्तमानाः घटत्वपटत्वद्रव्यत्वादयः, तत्त्वरहितत्वादिति हेतुः। अत्रापि प्रमेयत्वव्यावृत्तत्वरहितत्वादित्युक्तेऽत्यन्ताभावप्रतियोगित्वस्य महाविद्यावादिनो मते प्रमेयत्वाव्द्यावृत्तत्वेन पूर्ववद्धेतोरसिद्धता स्यात्। तत्परिहारार्थमत्यन्ताभाव-प्रतियोगित्वव्यतिरिक्तेति पदमुररीचक्रे। संप्रतिपन्ना ये प्रमेयत्वनिष्ठाः

---

भाव के तादृश अत्यन्ताभावप्रतियोगी घटपटादि पदार्थ है। तद्भिन्न केवलान्वयी पदार्थ, यदि आप उक्त कथन से सिद्ध माने, तो भी नहीं सम्भव, यतः उक्त कथन केवलान्वयी पदघटित है। जो प्रतिवादी को अभिमत नहीं है।

यदि अत्यन्ताभावप्रतियोगित्व पक्ष में प्रमेयत्वव्यावृत्तत्व की सिद्धि अत्यन्ताभावप्रतियोगित्वव्यतिरिक्तप्रमेयत्वनिष्ठत्वरहितत्व हेतु द्वारा करें (यतः अत्यन्ताभावप्रतियोगित्व पक्ष में अत्यन्ताभावप्रतियोगित्वविरहविशिष्ट प्रमेयत्व-निष्ठराहित्य है। अत्यन्ताभाव का प्रतियोगी प्रमेय नहीं होता। अतः अत्यन्ताभावप्रतियोगित्वरहितप्रमेयत्ववृत्तिधर्म का अभाव अत्यन्ताभावप्रति-

**प्रमेयत्वव्यावृत्तत्वरहितत्वात्, संप्रतिपन्नप्रमेयत्वनिष्ठवत् इत्यादिना सत्प्रतिपक्षितत्वात् तद्विरहेण सोपाधित्वाच्चेति।**

---

सत्त्ववाच्यत्वादयो धर्मास्तद्वदिति दृष्टान्तः। अत्र संप्रतिपन्ना ये प्रमेयत्वनिष्ठाः सत्त्ववाच्यत्वादयो धर्मास्तद्वदिति दृष्टान्तः। अत्र संप्रतिपन्नप्रमेयत्व-निष्ठवदित्यादिनेत्यत्रादिपदेन प्रमेयत्वमत्यन्ताभावप्रतियोगित्वव्यतिरिक्तै-तद्धर्मत्वानाक्रान्ताधिकरणं वस्तुत्वाद्घटवदित्यादीनां संग्रहः। न केवलं सत्प्रतिपक्षत्वं, प्रमेयत्वनिष्ठत्वाभावश्चोपाधिरपीत्याह—**तद्विरहेणेति**। तच्छब्देन सत्प्रतिपक्षानुमाने यत्साध्यं प्रमेयत्वनिष्ठत्वलक्षणं तत्परामृश्यते। तस्य विरहोऽभावस्तद्विरहः। तेनात्यन्ताभावप्रतियोगित्वं प्रमेयत्वव्यावृत्तमित्यनुमान-स्योपाधित्वं, प्रमेयत्वनिष्ठत्वाभावोऽत्रोपाधिरित्यर्थः। स चोपाधिर्यः प्रमेयत्व-व्यावृत्तः। स प्रमेयत्वनिष्ठत्वरहित इति साध्यव्याप्तिकः।

तथा योऽत्यन्ताभावप्रतियोगित्वव्यतिरिक्तप्रमेयत्वनिष्ठत्वरहितः स प्रमेयत्वनिष्ठत्वरहित इति साधनेन सहोपाधेर्व्याप्तिर्नास्ति। यतः पक्षीकृतेऽ-त्यन्ताभावप्रतियोगित्वेऽत्यन्ताभावप्रतियोगित्वव्यतिरिक्तमेयत्वनिष्ठत्वरहित-त्वमस्ति, न च प्रमेयत्वनिष्ठत्वरहितत्वं, तस्याद्यापि विवादास्पदत्वात्। तेन साधनाव्यापकश्चायमुपाधिः। तथात्र यत्प्रमेयत्वनिष्ठत्वरहितं नास्ति, तत्प्रमेय-त्वाव्द्यावृत्तमपि नास्ति, यथा सत्त्ववाच्यत्वादि, इति सत्त्वादेर्विपक्षस्योपाधे-र्व्यावर्त्यत्वेन पक्षेतरत्वाख्यमपि दूषणमुपाधेर्नाशङ्कनीयमिति प्रमेयत्वनिष्ठत्व-विरहेणात्यन्ताभावप्रतियोगित्वं प्रमेयत्वव्यावृत्तमित्यनुमानस्य सोपाधित्वं स्यादेवेति तात्पर्यार्थः।

---

योगित्व में, तथा प्रमेयत्वव्यावृत्तत्व भी है) तो नहीं कह सकते, यतः इस अनुमान के साध्याभाव का साधक अनुमानान्तर है। अतः उक्त अनुमान सत्प्रतिपक्षरूप हेत्वाभास से दूषित है।

उक्त अनुमान में ग्रन्थकार सत्प्रतिपक्ष दे रहे हैं। अत्यन्ताभाव-प्रतियोगित्वं, प्रमेयत्वनिष्ठम् अत्यन्ताभावप्रतियोगित्वव्यतिरिक्तप्रमेयत्व-व्यावृत्तत्वरहितत्वात्' पूर्व अनुमान में भी पक्ष अत्यन्ताभावप्रतियोगित्व था साध्य प्रमेयत्वव्यावृत्तत्व था, हेतु अत्यन्ताभावप्रतियोगित्वव्यतिरिक्तप्रमेयत्व-निष्ठत्वरहितत्व था। उत्तर अनुमान द्वारा उक्त पक्ष में प्रमेयत्वव्यावृत्तत्वाभाव प्रमेयत्वनिष्ठत्व की सिद्धि अत्यन्ताभावप्रतियोगित्वव्यतिरिक्तप्रमेयत्व व्यावृत्त-रहितत्व हेतु द्वारा कर रहे हैं। अत्यन्ताभावप्रतियोगित्वव्यतिरिक्त जो

**न च केवलान्वयित्वसिद्ध्यै महाविद्यापि प्रमेयत्वादीनां प्रभवति। वक्ष्यमाणसकलदोषग्रस्तत्वादिति। एवमुदयनादीनां मतमवलम्ब्य घटादि-निष्ठमत्यन्ताभावप्रतियोगित्वमङ्गीकृत्य अत्यन्ताभावप्रतियोगित्वं कुतश्चिद्व्या-वृत्तमित्यादिप्रयोगो निरस्तः।**

---

**भुवन.**—अथ प्रमेयत्वादयः संप्रतिपन्नैतद्धर्मत्वरहिताधिकरणं वस्तुत्वाद्घटवदित्यादिमहाविद्यया प्रमेयत्वादीनां केवलान्वयित्वं विप्रतिपन्नं सेत्स्यतीत्याशंक्य वावक्ति—**न च केवलेत्यादि।** प्रमेयत्वादीनां केवलान्वयित्वसिद्ध्यै महाविद्यापि न च प्रभवतीति पदान्वयः। वक्ष्यमाणाः सकलदोषाः सोपाधित्वासिद्धत्वादयस्तैर्व्याकुलत्वादिति—**उदयनादीनामिति। उदयनादिपूर्वाचार्याणाम्।**

---

प्रमेयत्वादिधर्म तद्व्यावृत्तप्रमेयत्वादि में न रहने वाले धर्म, घटत्वपटत्वादि उनका अभाव अत्यन्ताभावप्रतियोगित्वधर्म में है। यतः सकल पदार्थ प्रमेय है, अतः प्रमेयत्व अत्यन्ताभावप्रतियोगित्व में भी है।

उक्त अनुमान में सत्प्रतिपक्ष के अतिरिक्त प्रमेयत्वनिष्ठत्वाभाव उपाधि भी है। यतः प्रमेयत्वव्यावृत्तत्व साध्य का प्रमेयत्वनिष्ठत्वाभाव व्यापक है। जो प्रमेयत्वव्यावृत्त है, वह प्रमेयत्वनिष्ठत्वरहित है। जो अत्यन्ताभावप्रति-योगित्वव्यतिरिक्तप्रमेयत्वनिष्ठत्वरहित है वह प्रमेयत्वनिष्ठत्वरहित है, ऐसा नहीं कह सकते। यतः अत्यन्ताभावप्रतियोगित्व पक्ष में अत्यन्ताभावप्रतियोगित्व-व्यतिरिक्तप्रमेयत्वनिष्ठत्वरहितत्व है। परन्तु प्रमेयत्वनिष्ठत्वरहितत्व अभी निश्चित नहीं है।

अतः साधन की अव्यापक प्रमेयत्वनिष्ठत्वाभावरूप उपाधि हो गयी। प्रमेयत्वादि में केवलान्वयित्वसिद्धि के लिए महाविद्या अनुमान का प्रयोग भी उपाधि असिद्धत्व आदि दोष दूषित होने के कारण नहीं कर सकते है। यदि उदयनाचार्य आदि के मत का अवलम्बन करके घटादि में अत्यन्ताभावप्रतियोगित्व मानकर उस अत्यन्ताभावप्रतियोगित्व धर्मी में कुतश्चिद्व्यावृत्तत्व सिद्ध करें, तो वह भी सम्भव नहीं है। यतः जिनके मत में अत्यन्ताभावप्रतियोगित्व धर्म अभिमत है। उनके मत में उस अत्यन्ताभावप्रतियोगित्व में कुतश्चिद्व्यावृत्तत्व सिद्ध नहीं है। अतः अत्यन्ताभावप्रतियोगित्व में कुतश्चिद्व्यावृत्तत्व साधक अनुमान निरस्त है।

**वयं तु ब्रूमः—अत्यन्ताभावप्रतियोगित्वमेव नास्ति। कस्य धर्मित्वम्। अप्रामाणिकप्रतियोगिताको ह्यभावोऽत्यन्ताभावः, तत्प्रतियोगित्वं चाप्रामाणिकमेव। न चाप्रामाणिकनिष्ठमत्यन्ताभावप्रतियोगित्वं नाम धर्मः शक्योऽङ्गीकर्तुम्। प्रमाणविरहादिग्रस्तत्वात्।**

**अथ अन्योन्यप्राक्प्रध्वंसाभावव्यतिरिक्तः संसृज्यमानप्रतियोगिनिरूप्यः**

---

**भुवन.—अत्यन्ताभावाप्रतियोगित्वमेवेति।** अत्यन्ताभावप्रतियोगित्वरूपो धर्म एव यदि नास्ति, तर्हि कस्य धर्मित्वं घटते। धर्माधारो हि धर्मीतिव्यवस्थितेः। अत्यन्ताभावप्रतियोगित्वं निष्प्रमाणकत्वान्न हेतोराश्रय इति वक्तुमत्यन्ताभावस्वरूपमाह—**अप्रामाणिकेति।** अप्रामाणिकं शशशृङ्गादिप्रतियोगि यस्याभावस्य स तथा—**तत्प्रतियोगित्वमिति।** अत्यन्ताभावप्रतियोगित्वमित्यर्थः—**न चाप्रामाणिकनिष्ठमिति।** अप्रामाणिके खरविषाणादौ निष्ठं यदत्यन्ताभावप्रतियोगित्वं तद्रूपो धर्मः कथमङ्गीकारार्हः तत्र प्रमाणाभावात्।

**भुवन.**—अथानादिः सान्तः प्रागभावः, सादिरनन्तः प्रध्वंसाभावः, तादात्म्यनिषेधोऽन्योन्याभावः, अनादिरनन्तः संसर्गाभावोऽत्यन्ताभावः, इति

---

महाविद्याऽनुमान खण्डनकार कह रहे हैं, कि अत्यन्ताभावप्रतियोगित्व ही नहीं है। जब अत्यन्ताभावप्रतियोगित्व है ही नहीं किस धर्मी को पक्ष मानकर अनुमान प्रयोग करेंगे। अत्यन्ताभाव अप्रमाणिकप्रतियोगिक होता है। (प्रमाणसिद्ध नहीं है प्रतियोगी जिस अभाव का उसे अत्यन्ताभाव कहते है।) अप्रमाणिकप्रतियोगिताक अत्यन्ताभाव का प्रतियोगी भी अप्रमाणिक ही होगा। उस अप्रमाणिक प्रतियोगी के अप्रमाणिकप्रतियोगित्वरूप धर्म को पक्षरूपेण नहीं स्वीकार किया जा सकता। यदि अप्रमाणिक पक्षक अनुमिति होने लगे तो **'गगनारविन्दं सुरभि गगनारविन्दत्वात्'** यह अनुमान भी प्रतिष्ठित होने लगेगा। तो आश्रयासिद्धि निरवकाश हो जायेगी। पुनश्च अत्यन्ताभावप्रतियोगित्व धर्मी से यदि अत्यन्ताभावनिरूपकतया स्वीकार करें, तो भी नहीं कह सकते। यतः अत्यन्ताभाव का प्रतियोगी आश्रय आश्रयिभाव (निरूप्यनिरूपकभाव) सम्बन्ध होगा न कि कोई पदार्थविशेष वह भी अप्रमाणिक है।

अभाव चार प्रकार का होता है। अन्योन्याभाव, प्रागभाव, प्रध्वंसाभाव, तथा अत्यन्ताभाव, तादात्म्यनिषेध अन्योन्याभाव अनादिसान्त संसर्गाभाव

**इह भूतले घटो नास्तीत्यादिप्रतीतिसाक्षिकः कुम्भादीनामभावोऽत्यन्ताभावः, ब्रूषे, तन्न। इह भूतले घटो नास्तीत्यत्र एतद्घटैतद्भूतलाश्रयाश्रयिभावात्यन्ताभावस्यैव अनुभवसिद्धत्वात्।**

---

चतुर्धाऽभावः। तत्रात्यन्ताभावे प्रमाणमनुभव एवेत्यारेकते—**अथान्योन्यप्राक्प्रध्वंसेत्यादि।** घटस्य यः इह भूतलेऽत्यन्तमभावः, सोऽन्योन्याभावप्रागभावप्रध्वंसाभावत्रयाव्यतिक्तो भिन्नः। पुनः किंविशिष्टः—**संसृज्यमानप्रतियोगिनिरूप्य इति।** भूतलादिना संसृज्यमानः संश्लिष्यमाणो यो घटादिः प्रतियोगी तेन निरूप्योऽत्यन्ताभावः। **तत्प्रतियोगित्वं चेति।** तस्य अत्यन्ताभावस्य प्रतियोगित्वं तत्प्रतियोगित्वं, तदेव चात्यन्ताभावप्रतियोगित्वम्। **कुम्भादिनिष्ठमनुभवसिद्धमिति।** प्रत्यक्षप्रमाणसिद्धमित्यर्थः। अनुभवस्यान्यथैवोपपत्त्या परोक्तं तिरस्करोति—**तन्नेति। आश्रयाश्रयिभावेति।** आश्रयो भूतलम्, आश्रयी घटः, तयोर्भाव आश्रयाश्रयिभावः। एतद्घटैतद्भूतलयोर्यत्राश्रयाश्रयिभावः सम्बन्धस्तदत्यन्ताभावो न भवति, किं त्वयमाश्रयाश्रयिभावस्यैवात्यन्ताभावः। यतोऽत्रायं घटो न निषिध्यते, अपि तु एतद्घटैतद्भूतलयोः संसर्गो निषिध्यते। स चाप्रामाणिक एव। तस्य तत्रासत्त्वेन काल्पनिकत्वात्। तस्य तत्रासत्त्वं च यस्य घटस्यैतद्भूतलेन आश्रयाश्रयिभावो न जातो, नापि भविष्यति, तस्य घटस्यैतद्भूतलेनाश्रयाश्रयिभावस्य निष्प्रमाणकस्य विवक्षितत्वात्। अतोऽप्रामाणिकैतद्घटैतद्भूतलाश्रयाश्रयिभावात्यन्ताभावस्यैव प्रत्यक्षसिद्धत्वान्न घटस्यात्यन्ताभावोऽयमिति।

---

प्रागभाव, सादिरनन्त संसर्गाभाव प्रध्वंसाभाव, अनादिरनन्त संसर्गाभाव अत्यन्ताभाव, अब यदि अन्योन्याभाव, प्रागभाव, प्रध्वंसाभाव, से अतिरिक्त अत्यन्ताभाव को प्रमाणसिद्ध कहो, जो संश्लिष्ट घटादि प्रतियोगी से निरूप्य है। इह घटो नास्ति, इत्याकारक प्रतीतिसाक्षिक है। इस प्रकार घट आदि का अत्यन्ताभाव घटादि प्रतियोगी से निरूप्य है। अतः घटादिवृत्तिधर्म ही अत्यन्ताभावप्रतियोगित्व है। जो घटादि में विद्यमान है, ऐसा कहो, तो नहीं कह सकते। यतः इह घटो नास्ति इस प्रतीति द्वारा एतत् घट तथा एतत् भूतल के आश्रयाश्रयिभाव रूप (निरूप्यनिरूपकभावरूप) सम्बन्ध का निषेध होता है। जो निषेध का विषय होता है। वह ही प्रतियोगी कहलाता है। यहाँ पर प्रतियोगी सम्बन्ध है, न की पदार्थविशेष वह भी अप्रमाणिक है। घट और भूतल का कोई सम्बन्ध न रहने पर भी काल्पनिक सम्बन्ध भासमान हो रहा है। जिसका निषेध उक्त प्रतीति द्वारा बोधित होता है, जो अप्रमाणिक है।

**अथ यदीह भूतले घटाभावाभावः, तर्हि घटः स्यादिति ब्रूषे। तन्न। एतद्घटैतद्भूतलसंसर्गः आपाद्यते किंवा घटः। आद्ये आपाद्यासिद्धिः। द्वितीये तु इष्टापादनम्। क्वचिद् घटस्याप्यङ्गीकारात्।**

---

**भुवन.**—अथ घटाभावेऽपोद्यमाने घटभाव एवावशिष्यते इति शङ्कते—**अथ यदीहेत्यादि**। घटस्य अभावो घटाभावः, तस्याप्यभावो घटाभावाभावो, घट इत्यर्थः। **'द्वौ नञौ समाख्यातौ पूर्वोक्तमेवार्थं गमयतः'** इति न्यायात्। विकल्पद्वयेन एतत्परिहरति—**तन्नेति**। अत्रेति भूतले। **आद्य इति**। आद्ये विकल्पे आपाद्यस्य एतद्घटैतद्भूतलसंसर्गस्यासिद्धिः। यतोऽत्र भूतले यदि घटाभावाभावः स्यात्, तर्ह्येतद्घटैतद्भूतलसंसर्गः स्यादित्यत्रैतद्-घटैतद्भूतलसंसर्गः आपाद्यः। स चासिद्ध एव। अनिष्टप्रसञ्जनार्थमेवोक्तत्वेन तत्र तस्य काल्पनिकत्वादिति। यदीह भूतले घटाभावाभावः, तर्ह्येतद्-घटैतद्भूतलसंसर्गः स्यादित्यत्र तर्के आपाद्यासिद्धिर्नाम तर्कदूषणं स्यादिति न प्रथमो विकल्पोऽङ्गीकारार्हः इति भावार्थः—**द्वितीये त्विष्टापादनमिति**। घटाभावाभावे सति क्वापि भूतलादौ घटस्याप्यङ्गीकारात्।

---

यदि अत्यन्ताभाव तथा अत्यन्ताभावप्रतियोगी की प्रमाणिकता सिद्ध करने के लिए द्वितीय अभाव को प्रतियोगी स्वरूप मानो ('यदि इह भूतले घटाभावाभावः तर्हि घटः स्यात्') यदि इस भूतल में घट के अभाव का अभाव होता, तो प्रतियोगी घट रहता, इस प्रकार द्वितीय अभाव द्वारा प्रतियोगी की सत्ता सिद्ध करना चाहो, तो नहीं कर सकतें। यहाँ यह प्रश्न है, कि द्वितीय अभाव द्वारा इस घट का इस भूतल से सम्बन्धापादन कर रहे हो? कि प्रतियोगी घट का आपादन कर रहे हैं। प्रथमपक्ष स्वीकार नहीं है। यतः पूर्व में ही कह चुके है, कि घट और भूतल का संसर्ग काल्पनिक है। तर्कहीन होने से घटभूतल के संसर्ग का आपादन नहीं किया जा सकता। घटाभाव के अभाव होने पर घट और भूतल का संसर्ग ही रहे यह तर्कसंगत नहीं है। द्वितीय पक्ष हम मानते ही है। यतः घटाभाव के अभाव होने पर कही न कही भूतल में घट रहता है। पूर्व में जो द्वितीय अभाव को प्रतियोगीस्वरूप माना था। उसमें पुनः दोष दे रहे हैं। जो घटाभावाभाव को प्रतियोगी घट स्वरूप कह रहे हैं। वह घटाभावाभाव घट के प्रागभाव का अभाव है? कि घटप्रध्वंसाभाव का अभाव है? या घटान्योन्याभाव का अभाव है? इनमें से कोई नहीं हो सकता। यतः घटप्रागभाव, घटप्रध्वंसाभाव, तथा

**किञ्च घटाभावाभावः किं घटप्रागभावस्याभावः, किंवा घटप्रध्वंसस्याभावः, किंवा घटान्योन्याभावस्याभावः। त्रयमपि न। घटप्रागभावप्रध्वंसान्योन्याभावाभाववति घटे घटस्याविद्यमानत्वेन आपाद्यापादकयोर्व्याप्तिभङ्गादिति। नापि प्रागभावप्रध्वंसाभावान्योन्याभावव्यतिरिक्तसंसृज्य-**

---

**भुवन.**—किं च प्रागभावप्रध्वंसाभावान्योन्याभावरूपाभावत्रयाभावेन आपादकेन घटः आपाद्यते, किं वा तत्त्रयातिरिक्तसंसृज्यमानाभावेनेति द्विधा विकल्प्य आद्ये कल्पे आपाद्यापादकयोर्व्याप्तिविरहात्तर्कस्य प्रशिथिलमूलतेत्याह—**किं च घटाभावाभावः इत्यादि। घटप्रागभावेत्यादि।** घटे हि घटप्रागभावाद्यभावत्रयाभावसम्भवेन आत्माश्रयतापाताद्घटे घटाभावेन च यत्र घटाभावाभावस्तत्र घट इति व्याप्तिभङ्गात्। इदमत्र तत्त्वम्। अत्र घटाभावाभावः आपादकः, घटश्चापाद्यः, ततो घटप्रागभावप्रध्वंसाभावान्योन्याभावाभावोऽस्ति, न तु घटः इति आपाद्यापादकयोर्व्याप्तिभङ्ग इति। द्वितीयं प्रत्याह—**नापीति।** संसृज्यमानो भूतलेन सम्बद्ध्यमानो यो घटस्तस्याभावः। प्रागभावादिव्यतिरिक्तश्चासौ संसृज्यमानघटाभावश्च। एवंविधश्चाभावत्रयव्यतिरिक्तो घटस्याभावोऽत्यन्ताभाव एव। तस्याभावेनापद्यते किं तदित्याह—**अस्मिन्भूतले घटो वा एतद्भूतलघटसंसर्गो वा।** नापि युक्तमिति सम्बन्धः। कुत इत्याह—**प्रागभावेत्यादि।** प्रागभावादिव्यतिरिक्तस्य संसृज्यमानघटाभावस्य घटात्यन्ता-

---

घटान्योन्याभाव, घट में नहीं रहता। घटप्रागभाव, घटप्रध्वंसाभाव, तथा घटान्योन्याभाव, का अभाव घट में रहता है। तथापि घट में घट किसी सम्बन्ध से नहीं रहता। यदि अभाव का अभाव प्रतियोगी स्वरूप होता, तो घटप्रागभावाभाव तथा घटान्योन्याभावाभाव तथा घटप्रध्वंसाभावाभाव के अधिकरण में प्रतियोगी घट रहना चाहिए था। स्व में स्व की वृत्तिता नहीं हो सकती। अतः जहाँ जहाँ घटाभावाभाव है, वहाँ वहाँ प्रतियोगीघट है। यह व्याप्तिव्यभिचरित हो गयी। यतः घट में घटाभावाभाव के रहने पर भी घट में घट किसी सम्बन्ध से नहीं रहता।

घटप्रागभाव, प्रध्वंसाभाव, अन्योन्याभाव से अतिरिक्त संसर्ग सम्बन्ध से अन्य कोई अभाव नहीं है, जिस अभाव के अभाव को लेकर भूतल में घट की सत्ता, या भूतल घट संसर्ग, का आपादन किया जाना युक्ति सङ्गत हो। प्रागभाव प्रध्वंसाभाव से अतिरिक्त संसर्ग सम्बन्ध से अभाव हमारे मत में अप्रामाणिक है। यदि अत्यन्ताभाव को कथञ्चित् मान भी लें, तथापि

**मानघटाभावाभावेन अस्मिन् भूतले घट एतद्भूतलघटसंसर्गो वा आपाद्यते इति युक्तम्। प्रागभावप्रध्वंसाभावव्यतिरिक्तसंसृज्यमानघटाभावस्य अस्मन्मते निष्प्रमाणकत्वेन तदभावस्य गगनादौ घटैतद्भूतलघटसंसर्गव्याप्यत्वभङ्गादिति। नाप्येतद्घटैतद्भूतलाश्रयाश्रयिभावो युष्माकमस्माकं वा प्रसिद्ध इति।**

---

भावस्य अस्मन्मते निष्प्रमाणकत्वेन तदभावस्य संसृज्यमानघटाभावाभावस्य गगनादौ घटसंसर्गसद्भावेन घटश्चैतद्भूतलघटसंसर्गश्च ताभ्यां यद्व्याप्यत्वं तस्य भङ्गात्। अयं भावः। गगने यदा केनापि घटो मन्त्रशक्त्या स्तम्भितस्तदा गगने घटात्यन्ताभावाभावस्य सद्भावेऽपि, घटैतद्भूतलघटसंसर्गाभावाद्यत्र यत्र व्याप्यस्य घटात्यन्ताभावाभावस्य सद्भावः, तत्र तत्रैतद्भूतलस्थितघटैतद्भूतलघटसंसर्गयोर्व्यापकयोरभावेन घटैतद्भूतलघटसंसर्गाभ्यां घटात्यन्ताभावाभावस्य व्याप्यत्वभङ्गः स्यादेवेति। एतद्घटैतद्भूतलाश्रयाश्रयिभावस्य अप्रामाणिकत्वं नास्मत्सिद्धान्तमात्रसिद्धं, किन्तु भवतोऽपि संमतमेवेत्याह— **नाप्येतद्घटैतद्भूतलेत्यादि।** इदमत्रैदंपर्यम्। यस्य घटस्यान्यदेशस्थस्य एतद्भूतलेन सह संसर्गो न जातो, नापि भविष्यति, तस्य घटस्यैतद्भूतलेन सह संसर्गो निषिध्यते। स च युष्माकमस्माकं वा अप्रामाणिकत्वेन अप्रसिद्ध एव। प्रसिद्धत्वे निषेधासिद्धेरिति।

---

जहाँ जहाँ घटाभावाभाव है वहाँ वहाँ घटसंसर्ग है, ऐसा नहीं कह सकते, यत: गगन में किसी मन्त्रशक्ति द्वारा घट को स्थापित कर देने पर घटाभावाभाव के रहने पर भी घटभूतल संसर्ग नहीं है। अत: घटाभाव का अभाव रहने पर घटभूतल संसर्ग रहता ही है, यह व्याप्ति भी व्यभिचरित हो गयी। यदि आप घटाभावाभाव द्वारा घट तथा भूतल के आश्रयाश्रयिभाव के निषेध का निषेध कर के घट एवं भूतल के आश्रयाश्रयिभावसम्बन्ध को स्थापित करें, तो नहीं कर सकते, यत: आश्रयाश्रयिभाव कोई हमारे मत में तथा आप के मत में सम्बन्ध है ही नहीं।

पूर्व में जो एतद्घट तथा भूतल के आश्रयाश्रयिभाव का उभयमत में खण्डन किया, अब पूर्वपक्षत्वेन एतद्घटभूतल के आश्रयाश्रयिभाव को अप्रमाणिक सिद्ध करके एतद्घट तथा भूतल के आश्रयाश्रयिभाव की सिद्धि का उद्भावन करते हुए खण्डनकार कह रहे है।

**अथ एतद्धटैतद्भूतलाश्रयाश्रयिभावस्य अप्रामाणिकत्वात्तदभावोऽपि प्रामामिको न स्यात्। न हि अप्रामाणिकोऽभावः प्रामाणिको नामेत्यभिधत्से। तन्न। किमत्र अप्रामाणिकाभावत्वेन एतद्घटैतद्भूतलाश्रयाश्रयिभावाभावस्य अप्रामाणिकत्वमनुमीयते, किंवा अप्रामाणिकाभावत्वेन अप्रामाणिकत्व-**

---

**भुवन.**—अथ आश्रयाश्रयिभावस्याप्रामाणिकत्वात्तदभावस्याप्य-प्रामाणिकत्वमिति **शङ्कते अथैतद्घटैतद्भूतलेत्यादि। तदभावोऽपीति।** एतद्घटैतद्भूतलाश्रयाश्रयिभावाभावोऽपीत्यर्थः। अत्र युक्तिमाह—**नहीत्यादि।** अप्रामाणिकस्य आश्रयिभावादेरभावोऽप्रामाणिकाभावः। अभावनिरूप-कत्वात्प्रतियोगिनः, तदभावोऽपि तत्समान एव न्याप्य इत्यर्थः। विकल्पा-सहत्वेन परोदितं दूषयति—**तन्नेति। अप्राणिकाभावत्वेनेति।** अप्रामाणिक-स्याभावोऽप्रामाणिकाभावः, तस्य भावस्तत्त्वं, **अप्रमाणिकत्वमनुमीयते इति। एतद्घटैतद्भूतलाश्रयाश्रयिभावाभावोऽप्रमाणिकः** अप्रामाणिकाभावत्वात् खरविषाणाभाववदित्यनुमानं क्रियते। **किं वाप्रामाणिकेति।** अप्रामाणिक-स्याभावत्वेनाप्रामाणिकत्वमापाद्यते। यः एवापाद्यते स एव तर्कः, 'आपाद्याभिन्नत्वात्तर्कस्ये'ति वचनादनिष्टापादनरूपस्तर्को वापाद्यत इति।

---

यदि आप एतद्घट तथा भूतल के आश्रयाश्रयिभाव के अप्रमाणिक होने से तत्प्रतियोगिक अभाव को अप्रमाणिक कहते हो। यतः अप्रमाणिक प्रतियोगिक अभाव प्रमाणिक संज्ञा का लाभ नहीं कर सकता, तो नहीं कह सकते। उक्त विषय में दो कल्प है, प्रथम जो आप घट तथा भूतल के आश्रयाश्रयिभाव के अप्रामणिक होने से तत्प्रतियोगिक अभाव को अप्रमाणिक कहते हो, क्या यहाँ पर आप अप्रमाणिकाभावत्व हेतु द्वारा घटभूतल के आश्रयाश्रयिभावाभाव को पक्ष बना कर अप्रमाणिकाभावत्व हेतु द्वारा अप्रमाणिकत्व की सिद्धि अनुमानप्रमाण द्वारा कर रहे हो। 'एतद्घटभूतला-श्रयाश्रयिभावाभावः अप्रमाणिकः अप्रमाणिकाभावत्वात् खरविषाणाभाववत्' इस घट तथा भूतल का आश्रयाश्रयिभावाभाव अप्रमाणिक है, अप्रमाणिकाभाव होने से गदहा के सींग के अभाव के समान अथवा अर्थापत्तिप्रमाण द्वारा अप्रमाणिकाभावरूप उपपाद्यज्ञान से अप्रमाणिकत्वरूप उपपादकज्ञान की कल्पना करते हो।

प्रथमपक्ष युक्तिसङ्गत नहीं है। अप्रमाणिक अभाव के प्रमित न होने से तत्पक्षक अनुमान का हेतु आश्रयासिद्धि दोष से दूषित होकर हेत्वाभास

**मापाद्यते। नाद्यः। अप्रामाणिकाभावस्य प्रमितत्वे विरोधात्। अप्रमितत्वे चाश्रयासिद्धेः। अप्रामाणिकाभावप्रतीतिमनङ्गीकुर्वतो भवतो हेत्वप्रमितेश्चेति। नापि द्वितीयः। अप्रामाणिकाभावत्वाप्रामाणिकत्वयोः क्वचिदपि व्याप्त्यसिद्धेर्मूलशैथिल्यादिति। पूर्ववदापाद्यापादकयोरप्रसिद्धेश्च।**

---

एतावता इदमनुमानमापाद्यरूपस्तर्को वेति विकल्पौ इत्यर्थः। आद्ये विकल्पेऽप्रामाणिकाभावःप्रमितो न वेति द्वेधा विकल्प्य, कमेण दूषणोद्धोषणां विधत्ते—**अप्रामाणिकाभावस्येति।** अप्रामाणिकस्य अभाव इति समासः। **विरोधादिति।** यदि अप्रामाणिकाभावस्तर्हि कथं प्रमितः, अप्रामाणिकस्य प्रमाणाग्राह्यत्वेन तदभावस्यापि तथात्वादित्यभिप्रायेण विरोध इत्यर्थः। **अप्रमितत्वे इति।** अप्रामाणिकस्य आश्रयाश्रयिभावस्याभावः पक्षीकृतो यद्यप्रमितः प्रमाणेन न गृहीतः, तर्हि तस्मिन्नप्रमिते खरविषाणे इव प्रवर्तमानोऽप्रामाणिकाभावत्वादिति हेतुराश्रयासिद्धः स्यादित्यभिप्रायः। अथाप्रामाणिकाभावत्वादित्ययं हेतुरसिद्ध इत्याह—**अप्रामाणिकाभावप्रतीतिमिति। हेत्वप्रमितेश्चेति।** अप्रामाणिकाभावत्वादिहेतोर्भवन्मतेऽप्रामाणिकत्वादप्रसिद्धत्वेनासिद्धत्वमित्यर्थः। अथ द्वितीयं विकल्पमुत्थापयति। **नापि द्वितीय इति।** अप्रामाणिकत्वमापाद्यते इत्येवंरूपो द्वितीयोऽपि न। **अप्रामाणिकाभावेति।**

---

होगा। यतः उक्त अनुमान का हेतु भी अप्रमाणिकाभावत्व है, अप्रमाणिकाभाव की प्रतीति न स्वीकार होने के कारण हेतु भी स्वरूपतः असिद्ध है। द्वितीयकल्प भी युक्तिसङ्गत नहीं है। अर्थापत्तिप्रमाण वही पर चरितार्थ होता है, जहाँ पर उपपाद्य उपादक की व्याप्ति सिद्ध हो। उपपादकाभाव के व्यापकाभाव का प्रतियोगी उपपाद्य होता है। जैसे 'पीनो देवदत्तः दिवा न भुङ्क्ते' (मोटा देवदत्त दिन में नही खाता) यहाँ पर उपपादक यानी कारण भोजन है। उपपाद्य यानी कार्य मोटावन है। मोटापन के अन्यथा अनुत्पन्न होने से रात्रिभोजन की कल्पना की जाती है। उपपादकाभाव यानी भोजन के अभाव के व्यापकीभूताभाव का प्रतियोगी उपपाद्य यानी मोटापन है। जहाँ जहाँ भोजनाभाव है वहाँ वहाँ मोटापन का अभाव है। परन्तु उक्त स्थल में अप्रमाणिकाभाव तथा अप्रमाणिक दोनों के अप्रमाणिक होने के कारण कही पर व्यतिरेकव्याप्ति सिद्ध नहीं है। अतः व्याप्तिमूलक अर्थापत्ति प्रमाण निर्मूल होने से खण्डित है। अप्रमाणिकाभावरूप व्याप्य के तथा अप्रमाणिकत्व व्यापक के अप्रसिद्ध होने से उनके अभावों की व्याप्ति भी अप्रसिद्ध है।

**ननु असति तस्मिन् कस्याभावः इति चेत्। यस्मिन् असतीति त्वयोच्यते तस्यैव।**

---

अप्रामाणिकाभावत्वं व्याप्यम्। अप्रामाणिकत्वं व्यापकम्। तयोश्च यत्र अप्रामाणिकाभावत्वं तत्र अप्रामाणिकत्वमिति व्याप्त्यसिद्धेर्व्याप्त्यनुपपत्तेः। यतो विवक्षितभूतलेऽप्रामाणिकाश्रयाश्रयिभावाभावोऽप्रामाणिको न भवत्यस्माकं मते। तस्य चाक्षुषत्वेन प्रामाणिकत्वात्। **मूलशैथिल्यादिति**। तर्कस्य हि मूलं व्याप्तिः, तस्याश्चात्रासिद्धेः प्रशिथिलमूलतापरपर्यायो मूलशैथिल्याख्यस्तर्कदोषः स्यादेवेत्यर्थः। तथा अप्रामाणिकाभावप्रतीतिमनङ्गीकुर्वतो भवतः आपादकादेरसिद्धिरपि तर्कदोषः स्यादित्याह—**पूर्ववदापाद्यापादकयोरप्रसिद्धेश्चेति**। व्याप्योऽप्रामाणिकाभाव आपादकः, व्यापाकमप्रामाणिकत्वमापाद्यं तयोरप्रसिद्धेरिति। आपादकादिकं हि प्रसिद्धं वाच्यम्। तच्च भवन्मतेऽप्रामाणिकत्वेनाप्रसिद्धमिति युक्तं तदप्रसिद्ध्याख्यानमित्यर्थः।

**भुवन.**—अथ 'यदस्ति तन्मेयमि'ति नियमादप्रामाणिकत्वेन प्रतियोगिनः एतद्घटैतद्भूतलाश्रयाश्रयिभावादेरसत्त्वात् अभावो न स्यान्निरूपकाभावादित्याशङ्कते—**नान्वित्यादि**। तस्मिन्नाश्रयाश्रयिभावादौ प्रतियोगिनि असति असद्भूते कस्याभावः स्यादित्यर्थः पराशङ्कां मत्वा सिद्धान्तो प्रतिविधत्ते—**यस्मिन्नसतीति**। नन्वसति तस्मिन्नित्यत्र असतीति यस्मिन्विषये त्वयोच्यते, तस्यैवायमभावः। एतावता असत एवायमभाव इत्यर्थः।

---

अतः अर्थापत्तिप्रमाण द्वारा भी घट भूतल के आश्रयाश्रयिभाव के अभाव को अप्रमाणिक सिद्ध करके घटभूतल के आश्रयाश्रयिभाव का साधन नहीं कर सकते। पुनश्च पूर्वपक्षी के पक्ष को उद्भावित करते हुए खण्डन कर रहे है। यदि आप कहे कि एतद्घटभूतल का आश्रयाश्रयिभाव है ही तो उसका अभाव कैसे कह रहे है। तो नहीं कह सकते, यतः एतद्घटभूतल का आश्रयाश्रयिभाव न होने पर भी आप स्वीकार कर रहे हैं। उसका हम खण्डन करते हैं।

यदि आप अभाव के अभाव को प्रतियोगित्व कहे, असत् अभाव का अभाव प्रतियोगित्व है। जो अप्रामाणिक नहीं हो सकता। तो नहीं कह सकते। यतः अभाव का असद्रूपेण जो अभाव है, वह अभाव ·तथा अभावगत अभावत्वादिधर्म से भिन्न असत् वस्तु शशविषाणादि का अभाव है। जिसे अप्रामाणिकाभाववादी आचार्यों ने स्वीकार किया है। वह

**अथ अभावविरहरूपत्वं प्रतियोगित्वम्, तच्चाप्रामाणिकस्य न घटते इत्युच्यते। तन्न। अभावतद्धर्मादिव्यतिरिक्तस्य अप्रामाणिकाभाव इत्येतत्प्रतीतिगोचरस्य अप्रामाणिकाभावप्रतियोगित्वेन अप्रामाणिकाभाववादिभिः पूर्वाचार्यैरङ्गीकारात्। वयं तु निष्प्रतियोगिकमेवात्यन्ताभावं ब्रूमः। प्रतियोगित्वं हि धर्मविशेषः, न चासावप्रामाणिके संभवति।**

---

**भुवन.**—अथ प्रतियोगिलक्षणप्रणयनपूर्वमप्रामाणिकस्य प्रतियोगित्वाभावमारेकते—**अथाभावविरहरूपत्वमिति**। अभावस्य असद्रूपस्य यो विरहोऽभावस्तद्रूपत्वं प्रतियोगित्वम्। भावरूपत्वं प्रतियोगित्वमिति भावः। तच्चेति। तदेवंविधं प्रतियोगित्वमप्रामाणिकस्य असत्त्वेन न घटत इत्यर्थः। अभावानाश्रयत्वेऽभावादन्यत्वे च सति अभावप्रतीतिसमये प्रतीयमानत्वमात्रं प्रतियोगित्वमिति परिहरति—**तन्नेति**। **अभावतद्धर्मादीति**। अभावश्च, तद्धर्मा अभावत्वादयोऽभावधर्माश्च, अभावतद्धर्माः। अत्रादिपदेन प्रमातृसंग्रहः। तव्द्यतिरिक्तस्य खरविषाणादेः। **अप्रामाणिकेति**। अप्रामाणिकस्य प्रमाणाग्राह्यस्य वस्तुनोऽयमभावः, इत्येवंसम्बन्धपूर्विका या प्रतीतिस्तद्गोचरस्य तद्विषयस्येत्यर्थः अप्रामाणिकस्य योऽयमभावस्तस्य प्रतियोगित्वेन अप्रामाणिकस्य योऽभावस्तद्वादिभिः पूर्वाचार्यैरङ्गीकारात्स्वीकारादित्यर्थः अथ सर्वथैवाप्राणिकस्य प्रतीतिरनुचितेत्यत्राह—**वयमिति**। अत्यन्ताभावस्य कोऽपि प्रतियोगी नास्तीति वयमङ्गीकुर्म इत्यर्थः। अत्रैव युक्तिमाचष्टे—**प्रतियोगित्वं हीत्यादि**।

---

प्रतीतिमात्रसाक्षिक है। हम तो अप्रामाणिकाभाव को अप्रमाणिकप्रतियोगिक न कह कर निष्प्रतियोगिक अत्यन्ताभाव मानते हैं। जिस अभाव का कोई प्रतियोगी नहीं वह अप्रामाणिकाभाव कहलाता है। प्रतियोगित्व धर्मविशेष है। जो अप्रामाणिक में नहीं सम्भव है।

अब यदि आप यह कहें कि अप्रामाणिक में प्रतियोगित्व नहीं है, तो कैसे अप्रामाणिक अभाव कहते है। पूर्वपक्षी का आशय है, कि अभावसप्रतियोगिक होता। अतः प्रतियोगित्वरहित अप्रामाणिक अभाव कैसे हो सकता है। उत्तर में कहा जा रहा है, कि अप्रमाणिक अभाव को हम अप्रामाणिकाभावत्वधर्मवत्त्वेन स्वीकार करते है, न कि सप्रतियोगित्वेन।

**ननु यदि न अप्रामाणिके अभावप्रतियोगित्वं, कथं तर्ह्ययमप्रामाणिकोऽभावः इति। अप्रामाणिकाभावत्वरूपधर्माश्रयत्वादित्यवेहि।**

**अथ योग्यानुपलब्धिगम्यो ह्यभावः, प्रतियोगितद्धर्मव्यतिरिक्ता च प्रतियोगिप्रतीतिसामग्री योग्यता। अप्रामाणिकप्रतीतिसामग्री च भ्रान्ति-**

---

**भुवन.**—अप्रामाणिकप्रतियोगित्वानङ्गीकारेऽप्रामाणिकाभाव इति व्यपदेशस्य का गतिरित्याह—**ननु यदीत्यादि।** अप्रामाणिके एतद्घटैतद्भूतलाश्रयाश्रयिभावादौ यद्यभावप्रतियोगित्वं नास्ति, कथं तर्ह्ययमप्रामाणिकाभाव इत्युच्यते इत्यर्थः। अप्रामाणिकाभावोऽप्रामाणिकाभावत्वरूपधर्मविशेषाश्रयत्वाद्भविष्यतीत्यनेन परारेकां तिरस्कुरुते—**अप्रामाणिकाभावत्वरूपेति।** अप्रामाणिकाभावत्वरूपधर्माश्रयत्वाद्धेतोरप्रामाणिकाभाव इति वक्तुं युक्तमेवेति भावः।

**भुवन.**—परः 'अथ योग्यानुपलब्धी'त्यादि 'इति मन्यसे' इत्यन्तामप्रामाणिकाभावस्य प्रमित्यनुपपत्तिमाशङ्कते—**अथ योग्यानुपलब्धीत्यादि।** योग्यस्य घटादेरनुपलब्धिरनुपलम्भस्तया गम्यो ज्ञेयो ह्यभावः। यत्र दर्शनयोग्यस्य घटादेरनुपलब्धिस्तत्र तस्याभावः। यथा आलोकादिसामग्र्यां सत्यां मुण्डभूतले घटादेरभावः। अत्र योग्यानुपलब्धीत्युक्तं, अतो योग्यतालक्षणमाख्याति—**प्रतियोगितद्धर्मेति।** प्रतियोगिनो घटादयः तद्धर्माः घटत्वादयः, तेभ्यो व्यतिरिक्ता आलोकसद्भावादिका प्रतियोगिप्रतीतिकारिणी

---

पुनश्च एतद्घटभूतल के आश्रयाश्रयिभाव के अभाव अप्रामाणिक होने से तद्विषयकप्रतीति में अनुपपत्ति दे रहा है। पूर्वपक्षी का कथन है, कि योग्यानुपलब्धिगम्य अभावपदार्थ है। प्रतियोगी तथा प्रतियोगिधर्मातिरिक्त प्रतियोगी की प्रतीति समाग्री ही योग्यता है। अप्रामाणिकविषयकप्रतीति की समाग्री भ्रान्ति है। वह प्रतियोगी तथा प्रतियोगिधर्म से अतिरिक्त है। उक्त भ्रान्तिरूपसमाग्री के रहने पर आलोक आदि अन्य अपेक्षणीय चाक्षुष प्रत्यक्षसमाग्री के न रहने पर अप्रामाणिकविषय की अनुपलब्धि नहीं होती। अर्थात् उपलब्धि होती है। भ्रान्तिरूप योग्यता के रहने पर अप्रामाणिक विषय की प्रतीति होती है। अनुपलब्धिकाल में अप्रमाणिकोपलम्भकसमाग्रीरूपयोग्यता का अभाव रहता है। अतः अप्रामाणिकविषयक योग्यतासहित अनुपलब्धि के सम्भव न होने के कारण अप्रामाणिकविषयक अनुपलब्धि नहीं हो सकती है। इस प्रकार एतद्घटभूतल के आश्रयाश्रयिभाव का अभाव अनुपलब्धिप्रमा का विषय न होने के कारण अप्रमाणिक है।

**सामग्र्येव। सा च प्रतियोगितद्धर्मव्यतिरिक्तैव। तस्यां च सत्यामपेक्षणीयान्तराभावादनुपलब्धिर्नास्ति। अनुपलब्धौ च सत्यामप्रामाणिकोपलम्भसामग्रीरूपयोग्यता नास्ति। तेन योग्यतासहितानुपलब्धेरसम्भवादप्रामाणिकाभावप्रमितेरनुपपत्तिरिति मन्यसे, तन्न। चाक्षुषयोरप्रामाणिका-**

---

भूता, सामग्री योग्यता इत्युच्यते। प्रतियोगितद्धर्मव्यतिरिक्ता प्रतियोगिप्रमापकसामग्री योग्यतेत्यर्थः। प्रामाणिकप्रतियोगिनः सामग्रीमुक्त्वा अप्रामाणिकप्रतियोगिनस्तामाह—**अप्रामाणिकप्रतीतीति।** अप्रामाणिको निषेध्यमान आश्रयाश्रयिभावादिः तस्य या प्रतीतिः, तस्या या सामग्री सा पुनर्भ्रान्तिसामग्र्येव। प्रतियोगितद्धर्मयोःप्रतियोगिप्रतीतिहेतुत्वाद्योग्यतान्तर्भावः किं न स्यादत्राह—**सा च प्रतियोगीत्यादि।** सा च भ्रान्तिसामग्री। प्रतियोगी अप्रामाणिकः, तद्धर्माश्च अप्रामाणिकत्वादयस्तव्द्यतिरिक्तैवेत्यर्थः। तथापि योग्यानुपलब्धेरभावप्रमापकत्वे प्रकृते किमायातमित्यत आह—**तस्यां च सत्यामिति।** तस्यां भ्रान्तिसामग्र्यां सत्यामालोकाद्यपेक्षणीयान्तराभावादप्रामाणिकस्यानुपलब्धिर्नास्ति, किं तु अप्रामाणिकस्य सर्वदोपलब्धिरेवास्ति। भ्रान्तिसामग्र्यां भ्रान्त्युत्पत्तिनियमादित्यर्थः। यदि चाप्रामाणिकस्यानुपलब्धिरङ्गीकियते, तदा किं स्यादित्यत आह—**अनुपलब्धौ चेति।** यद्यप्रामाणिकस्यानुपलब्धिः स्यात्, तदा तस्यां सत्यामप्रामाणिकोपलम्भसामग्रीरूपा या योग्यता सैव नास्ति। तस्यां सत्यामुपलब्धेरेव सम्भवात्। अथ फलितं प्रादुश्चरीकरीति—**तेन योग्यतेत्यादि।** तेन कारणेन योग्यतासहितस्य अप्रामाणिकस्य या अनुपलब्धिस्तस्या असम्भवादप्रामाणिकस्य खरविषाणादेर्योऽभावस्तत्र या प्रमितिः प्रमाणं, तस्या अनुपपत्तिरघटमानतेति

---

इस पूर्वपक्षी के मत का खण्डन करते हुए सिद्धान्ती कह रहा है कि हमारे मत में अभाव प्रत्यक्षप्रमा का विषय है। न कि अनुपलब्धिप्रमा का। चाक्षुषप्रत्यक्षविषयीभूत एतद्घट तथा भूतल के आश्रयाश्रयिभाव के अभाव को हम प्रत्यक्षप्रमा का विषय मानते है। 'येनेन्द्रियेण यो विषयो गृह्यते तेनैवेन्द्रियेण तद्विषयगतजातिस्तदभावश्च गृह्यते' (जिस इन्द्रिय से जो विषय गृहीत होता है। उसी इन्द्रिय से तद्विषयगत जाति तथा उसका अभाव भी गृहीत गृहीत होता है) एतद्घट तथा भूतल चक्षुरिन्द्रिय के विषय (चक्षुरिन्द्रिय से गृहीत) होते है। यदि उनमें आश्रयश्रयिभावसम्बन्ध होता, तो चक्षुरिन्द्रिय से गृहीत होता है। नहीं है। अतः आश्रयाश्रयिभाव के अभाव का चाक्षुष

**श्रयाश्रयिभावाभावस्य चाक्षुषत्वाङ्गीकारात्। एवं त्वगादिगम्ययोर-प्रामाणिकाश्रयाश्रयिभावाभावस्य त्वगादिगम्यत्वात्, योग्यानुपलब्धेस्त्व-भावप्रमाजनकत्वमस्माकमनभिमतमेवेति न किञ्चिदेतत्।**

---

पदान्वर्थः। भावार्थस्त्वयम्। अप्रामाणिकं शशशृङ्गादि यद्वस्तु तद्यादृशमस्ति, तादृशं सर्वदैवास्ति, तस्य तुच्छत्वात्प्रकाशादिकारणान्तरानपेक्षत्वेन घटादिवत्कादाचित्कोपलम्भानुपलम्भासम्भवात्। तस्य च सामग्र्यपि भ्रान्तिरूपा यादृक्षास्ति तादृक्षीसर्वदैवास्ति। अतोऽप्रामाणिकस्य सर्वदा प्रतीतिसामग्री-सद्भावेन अनुपलब्धेरसम्भवात्सर्वदोपलब्धिरेव स्यात्। तथा चाप्रामाणिकस्य सर्वदोपलभ्यमानत्वेन योग्यानुपलब्धिगम्यत्वलक्षणोऽभाव एव न स्यादिति कथं तत्राभावे प्रणाणमुपपद्यत इति। मन्यत इति पर्यन्तं परोक्तमाशङ्क्य अप्रमाणिकाभावस्य प्रत्यक्षत्वाभ्युपगमेन सिद्धान्ती प्रतिविधत्ते—**तन्नेति।** चाक्षुषयोश्चक्षुर्ग्राह्ययोः एतद्घटैतद्भूतलयोर्योऽप्रामाणिकाश्रयाश्रयिभावस्तद-भावस्य चाक्षुषत्वाङ्गीकारात्।

अयमाशयः। त्वया अप्रामाणिकाभावे प्रतितेरनुपपत्तिरुक्ता। अस्माकं तु मते तत्र प्रत्यक्षमेव प्रमाणं स्फुरतीति। **एवं त्वगादीति।** त्वक् चर्म, स्पर्शनेन्द्रियमिति यावत्। आदिपदेन जिह्वादीनां ग्रहः। घोरान्धकारनिकरे त्वगादिना गम्ययोर्ज्ञेययोरेतद्घटैतद्भूतलादिकायोरेव योऽयमप्रामाणिकः आश्रयाश्रयिभावस्तदभावस्य त्वगादिगम्यत्वात् स्पार्शनप्रत्यक्षज्ञेयत्वादित्यर्थः। योग्यतासहितानुपलब्धेरसम्भवादिति यदुक्तं तत्रत्याह—**योग्यानुपलब्धे-रित्यादि।** अभावस्य या प्रमा प्रमितिस्तज्जनकत्वं योग्यानुपलब्धेरस्माकं नाभिमतमिति पूर्वोक्तं दूषणं न किञ्चिदित्यर्थः।

---

प्रत्यक्ष है। इस चाक्षुषप्रत्यक्षप्रमाविषयीभूत आश्रयाश्रयिभाव के अभाव को कैसे अप्रामाणिक कह सकते हैं। इसी प्रकार त्वगादि इन्द्रियगम्यविषय के आश्रया-श्रयिभाव के अभाव को हम त्वगादि इन्द्रियगम्य मानते हैं। अभावविषयकप्रमा का जनक योग्यानुपलब्धिरूपप्रमा हमारे मत में अभिमत नहीं हैं।

पुनश्च प्रतिवादी कह रहा है, कि अप्रामाणिकविषयक न तो अनुभव होता है न तो अनुभवजन्यसंस्कार होता है न तो तज्जन्यस्मृति होती है। यतः विषय विधया विषय भी अनुभव का जनक होता है। यदि अप्रामाणिक विषय ही नही है। तो तद्विषयक अनुभव कैसे होगा। न तो अत्यन्त असद्विषयक प्रमा होती है। न तो अत्यन्त असद् प्रतियोगिक अभाव विषयकप्रमा होती है। न तो शशविषाणविषथकप्रमा होती है। न तो

**न च कारणाभावादत्यन्तासद्गोचरानुभवाभावेन प्रतियोगिस्मृत्यनुपपत्तौ तदभावप्रमानुपपत्तिरिति युक्तम्। एतद्घटैतद्भूतलाश्रयाश्रयिभावादेर्वाक्यादिभ्योऽनुभवात्।**

**न च एतद्घटैतद्भूतलयोराश्रयाश्रयिभावस्य जातत्वाज्जनिष्यमाणत्वाद्वा कथं तस्यात्यन्ताभाव इति वाच्यम्। यस्य घटस्य**

---

**भुवन.**—प्रतियोगिनोऽप्रामाणिकस्य पूर्वानुभवसंस्काररूपद्वयाभावात्तत् स्मृतेरभावेन तदभावप्रमितिर्न स्यादत्राह—**न च कारणाभावादित्यादि।** अत्यन्तमसद्रूपं खरविषाणादि, तद्गोचरो योऽनुभवस्तस्याभावेन कुतस्तदभावः इत्याह—**कारणाभावादिति।** तथाविधं किञ्चित्कारणं नास्ति येनात्यन्तासतोऽनुभवः स्यादित्यर्थः, इत्यनुभवाभावेन प्रतियोगिनोऽप्रामाणिकस्य स्मृत्यनुपपत्तौ। **तदभावेति।** तस्यात्यन्तासतो योऽभावस्तत्र प्रमायाः प्रत्यक्षादेः प्रमितेरनुपपत्तिरिति न च युक्तमिति संटङ्कः। अत्र हेतुमाह—**एतद्घटैतद्भूतलेत्यादिवाक्यादिभ्य इति।** अत्र आदिपदेन लिङ्गाभाससंग्रहः।

**भुवन.**—एतद्घटैतद्भूतलसंयोगस्य जातत्वाज्जनिष्यमाणत्वाद्वा अत्यन्ताभावस्त्रिकालवर्तमानोऽयुक्त इत्याशङ्क्याह—**न चैतद्घटैतादित्यादि।** इति न च वाच्यमिति सम्बन्धः। अयमर्थः। यत्सर्वथा असद्रूपं खरविषाणादि, तस्यैवात्यन्ताभावो युक्तः, विवक्षितयोरेतयोस्तु घटभूतलयोराश्रयाश्रयिभावो जातो वा भावी वेति कथं तस्यात्यन्ताभावो युक्तिमानिति पराशङ्कां प्रदर्श्य सिद्धान्तवादी गूढस्वाभिप्रायमाविर्भावयति—**यस्य घटस्येत्यादि।** यस्य घटस्य एतद्भूतलेन सह आश्रयाश्रयिभावः सम्बन्धः कदापि न जातो नापि भावी,

---

शशविषाणाभावविषयकप्रमा होती है। एतद्घट भूतल के आश्रयाश्रयिभावविषयक यदि प्रमा नहीं है, तो आश्रयाश्रयिभावाभावविषयक भी प्रमा नहीं होगी। इस प्रतिवादी के मत का खण्डन करते हुए सिद्धान्ती कह रहा है, कि एतद्घटभूतल का आश्रयाश्रयिभाव शब्दजन्यप्रतीति का विषय है। उस शब्दजन्यप्रतीतिविषयीभूत एतद्घटभूतल के आश्रयाश्रयिभाव का अभाव हम कह रहे है। अत्यन्त असत् पदार्थ की भी शब्द द्वारा प्रतीति मानी जाती है।

पुनश्च प्रतिवादी एतद्घटभूतल के आश्रयाश्रयिभाव के अत्यन्ताभाव में आपत्ति दे रहा है। त्रिकालिक अभाव अत्यन्ताभाव कहलाता है। एतद्घटभूतल आश्रयाश्रयिभाव (घटभूतल संयोग) का अत्यन्ताभाव त्रिकालज्ञ पुरुष ही कह

**एतद्भूतलाश्रयाश्रयिभावो न जातो, नापि भविष्यति, तस्य घटस्य एतद्भूतलेन आश्रयाश्रयिभावो निष्प्रमाणक इति तदभावस्यात्यन्ताभावत्वेन स्वीकारात्।**

**यद्वा एतद्घटैतद्भूतलयोराश्रयाश्रयिभावो जातो भविष्यति वा, तदुभयव्यतिरिक्तो यः एतद्घटैतद्भूतलयोराश्रयाश्रयिभावो निष्प्रमाणकः, तस्याभावोऽत्यन्ताभावः। यः पुनरेतद्घटैतद्भूतलयोराश्रयाश्रयिभाव**

---

तस्य घटस्यैतद्भूतलेन विवक्षितभूतलेनाश्रयाश्रयिभावो निष्प्रमाणकः प्रमाणाग्राह्यः। प्रत्यक्षादेः प्रमाणस्य तत्रानुदयादिति, तदभावस्यैतद्-घटैतद्भूतलाप्रमाणिकाश्रयाश्रयिभावाभावस्यैव अत्यन्ताभावत्वेन स्वीकारादिति पदार्थः।

**भुवन.—**

**सर्वव्याख्याविकल्पानां द्वयमिष्टं प्रयोजनम् ।**

**पूर्वत्रापरितोषो वा व्याप्तिर्वा विषयान्तरे ।।**

इति विषयान्तरव्याप्त्यर्थं पक्षान्तरमाह—**यद्वा एतदित्यादि।** तदुभयव्यतिरिक्तो भूतभाव्येतदाश्रयाश्रयिभावद्वयभिन्नः आश्रयाश्रयिभावो न कदापि जातो न भावी यश्च वर्तमानः सोऽपि च। तस्यापि जन्मनोऽतीतत्वेन जातत्वात्। तेन तदुभयव्यतिरिक्तेत्यनेन भूतभाविभवद्व्यतिरिक्तोऽसन्नेवाश्रया-

---

सकता है। एतत् काल में घट भूतल का संयोग न रहने पर भी पूर्व में नहीं था, यह सामान्यजन कैसे प्रमाणित कर सकता है। तथा इस समय घट भूतल का संयोग न रहते हुए भविष्य में नहीं रहेगा यह भी सामानपुरुष प्रमाणित नहीं कर सकता, अतः घट तथा भूतल के आश्रयाश्रयिभाव (संयोग) का अत्यन्ताभाव नहीं कह सकते।

सिद्धान्ती उत्तर दे रहा है, कि जिस किसी घट का भूतल से संयोग होने पर भी सकल घट का भूतल से संयोग तो होगा नहीं। किसी न किसी घट का भूतल से संयोग नहीं हुआ होगा। तथा किसी न किसी घट का भूतल से इस समय भी संयोगाभाव है। तथा किसी न किसी घट का भूतल संयोगाभाव रहेगा। उक्त आश्रयाश्रयिभाव को यदि कोई मानता है, तो वह प्रत्यक्षादिप्रमाणों से अवेद्य होने से अप्रामाणिक है। उस अप्रामाणिक एतद्घट

**आसीत्, तस्येदानीमभावः प्रध्वंसः। यः पुनरेतद्घटैतद्भूतलयोराश्रयाश्रयिभावो भविष्यति, तस्येदानीमभावः प्रागभाव इति व्यवस्था।**

**अथ यदि इह भूतलेऽयं घटो नास्तीत्यत्र एतद्घटैतद्भूतलयोराश्रयाश्रयिभावो निष्प्रमाणकः प्रतिषिध्यते, तर्हि घटोत्पत्तेः प्रागूर्ध्वं च**

---

श्रयिभावोऽप्रामाणिक उपात्तः। ततस्तस्याभावोऽत्यन्ताभाव इति पक्षान्तरार्थः। एतस्मादनन्तरोक्तपक्षस्य निपेधमुखरचनावैचित्र्येणैव भेदो, न त्वर्थत इति भावः। कथं तर्ह्याश्रयाश्रयिभावस्य प्राक्प्रध्वंसाभावयोर्व्यवस्था इत्यत आह— **यः पुनरेतदित्यादि।**

**भुवन.**—अथ परो व्यवस्थाभङ्गं शङ्कते—**अथ यदीहेत्यादि।** यद्येवंविधः आश्रयाश्रयिभावो निष्प्रमाणकः सन् प्रतिषिध्यते, तदा अतिप्रसङ्गात्प्राक्प्रध्वंसाभावयोर्व्यवच्छेद एव न स्यादित्याह—**तर्हीत्यादि।** घटो यदोत्पन्नो नास्ति तदा मृद्रूपेषु घटावयवेषु यदा घटो निनष्टस्तदा कपालरूपेषु घटावयवेषु च घटो नास्तीत्यत्राप्येतद्घटैतद्घटावयवयोराश्रयाश्रयिभाव एव तत्कालीनो घटानुत्पादविनाशकालिको भवद्युक्त्या निष्प्रमाणकः सन् प्रतिषिध्यताम्। तस्य च प्रतिषेधे प्रागभावप्रध्वंसाभावावेव प्रतिषिद्धौ स्याताम्। अप्रामाणिकाभावस्य अत्यन्ताभावरूपत्वेन स्वीकारात्।

---

भूतल के आश्रयाश्रयिभाव का अत्यन्ताभाव हम स्वीकार करते है। प्रकारान्तर से सिद्धान्ती उत्तर दे रहा है। अथवा एतद्घट एवं भूतल का आश्रयाश्रयिभाव या तो पूर्व में उत्पन्न है, या तो उत्पन्न होने वाला है। इससे अतिरिक्त एतद्घटभूतल का आश्रयाश्रयिभाव अप्रामाणिक है। उसका अभाव अत्यन्ताभाव है। भूतभावि एतद्घटभूतल के आश्रयाश्रयिभाव के अतिरिक्त कोई भी आश्रयाश्रयिभाव प्रमाणसिद्ध नहीं है। जो वर्तमान में घट भूतल का आश्रयाश्रयिभाव है। वह भी उत्पन्न हो चुका है' अतः पूर्वकालिक है।

एवं पूर्वजात का एतत्कालावच्छेदेन अभाव प्रध्वंसाभाव है। तथा भावि वस्तु का एतत्कालावच्छेदेन अभाव प्रागभाव है। प्रागभावप्रध्वंसाभावातिरिक्त अत्यन्ताभाव में कोई प्रमाण नहीं है। इस प्रकार सिद्धान्ती ने भूतभावि घटभूतल के आश्रयाश्रयिभाव से अतिरिक्त आश्रयाश्रयिभाव को अप्रामाणिक बोधित करते हुए प्रागभावप्रध्वंसाभावातिरिक्त अत्यन्ताभाव को भी अप्रामाणिक प्रतिबोधित कर दिया।

**घटावयवेषु घटो नास्तीत्यत्रापि एतद्घटावयवैतद्घटयोराश्रयाश्रयिभाव एव तत्कालीनो निष्प्रमाणकः प्रतिषिध्यतामिति गतं प्राक्प्रध्वंसाभावाभ्यामित्युच्यते, तत्राप्योमित्येवोत्तरम्। द्विविध एव ह्यभावः, अन्योन्याभावोऽत्यन्ताभावश्चेति। यश्च कार्योत्पत्तिपूर्वक्षणे कार्यसमवायिकारणयोराश्रयाश्रयिभावो निष्प्रमाणकः, तस्यात्यन्ताभावः प्रागभाव इत्युच्यते। यश्च कार्योत्पत्त्युत्तरक्षणे कार्यसमवायिकारणयोराश्रयिभावो निष्प्रमाणकः, तस्यात्यन्ताभावः प्रध्वंस इत्युच्यते शास्त्रकारैः, न तु प्राक्प्रध्वसाभावौ अत्यन्ताभावाद्भिन्नाविति।**

---

तथा च सति गतमेव प्रागभावप्रध्वंसाभावाभ्यामित्यर्थः इति पूर्वपक्षिणोक्ते सिद्धान्त्याह—**ओमिति।** यत्त्वयाभ्यधायि तदेवमेव। एतदेवोपपादयति—**द्विविध इत्यादि।** अन्योन्याभावात्यन्ताभावरूपौ द्वावेवाभौ शास्त्रकाराणां संमतौ। प्राक्प्रध्वंसाभावौ तु अत्यन्ताभावरूपावेव, न तु भिन्नौ। एतदेव दर्शयति—**यश्चेति।** घटपटादिकं यत्कार्यं तस्योत्पत्तिपूर्वक्षणेऽनुत्पत्तिक्षणे। **कार्यसमवायीति।** कार्यं घटपटादिकं समवायिकारणं मृत्तिकातन्त्वादि, तयोर्य आश्रयाश्रयिभावोऽसद्भूतत्वान्निष्प्रमाणकस्तस्यात्यन्ताभावः प्रागभाव इति। **यश्चेति।** कार्यस्य घटादेरुत्पत्त्युत्तरक्षणे विनाशक्षणे कार्यसमवायिकारणयोर्घटमृदादिरूपयोराश्रयाश्रयिभावस्यात्यन्ताभावः प्रध्वंस इति।

---

पुनश्च प्रतिवादी आशङ्का कर रहा है, कि यदि इस भूतल में यह घट नहीं है, उक्त स्थल में एतद्घटभूतल के अप्रामाणिक आश्रयाश्रयिभाव का निषेध ही अत्यन्ताभाव है। तो घटोत्पत्ति के पूर्व घटावयव कपाल में तथा घटध्वंस के बाद घटावयव कपाल में जो घट का अभाव उस अभाव को तत्कालीन एतद्घट भूतल के निष्प्रामाणिक आश्रयाश्रयिभाव का निषेध ही कहें। प्रागभाव प्राध्वंसाभाव अलग मानने की क्या आवश्यकता है। इस आशङ्का का निराकरण सिद्धान्ती स्वीकृतिपुरःसर कर रहा है। प्रागभाव प्रध्वंसाभाव अतिरिक्तरूपेण अभाव ही नहीं। अभाव दो प्रकार का है, अन्योन्याभाव (भेद) तथा अत्यन्ताभाव (त्रैकालिकनिषेध) कार्योत्पत्तिपूर्वक्षण में कार्य तथा समवायिकारण का जो निष्प्रामाणिक आश्रयाश्रयिभाव का अभाव है, उसे प्रागभाव कह दिया जाता है। तथा कार्योत्पत्ति उत्तरक्षण यानी विनाशक्षण में जो कार्य तथा समवायि कारण के अप्रामाणिक आश्रयाश्रयिभाव का अभाव है, उसे प्रध्वंस कह दिया जाता है। अत्यन्ताभाव से भिन्न प्रागभाव प्रध्वंसाभाव नहीं है।

**यद्वा अनुत्पत्तिः प्रागभागः। स च निराश्रय एव। घटो नोत्पद्यते इत्येव प्रतीतेः। एवं विनाशः प्रध्वंसः। सोऽपि निराश्रय एव। घटो विनष्ट इत्याश्रयानवच्छेदेनैव प्रतीतेः। यस्तु समवायिकारणनिष्ठः कार्योत्पत्तेः प्रागूर्ध्वं च इहेदानीं घटो नास्तीत्यभावः प्रतीयते, स तूक्तरीत्या अत्यन्ताभाव एवेति।**

---

**भुवन.**—परमतप्रसिद्ध्या अभावस्वरूपं निरूपयति—**यद्वा अनुत्पत्तिरित्यादि।** घटादेरनुत्पत्तिः प्रागभावः। अनुत्पत्तेरपि कार्यसमवायिकारणयोराश्रयिभावाभाववदत्यन्ताभावतो न भेद इत्याह—**स चेति। आश्रयानवच्छेदेनेति।** आश्रयस्यापरिज्ञानेन समवायिकारणसंसर्गमन्तरेणेत्यर्थः। कस्तर्ह्यत्यन्ताभावोऽत्राह—**यस्तिति।** घटादिकार्यस्योत्पत्तौ विनाशे च समवायिकारणं मृत्स्नादि। 'स्वसमवेतकार्योत्पादकं समवायिकारणमि'ति। तल्लक्षणात्। तत्र यः समवायिकारणनिष्ठः कार्योत्पत्तेः पूर्वं पश्चाच्चेहेदानीं घटो नास्तीत्यभावः प्रतीयते, स तूक्ता या पूर्वत्र रीतिस्तया अत्यन्ताभाव एव।

---

पुनश्च प्रागभाव प्रध्वंसाभाव का निषेध करते हुए, घटभूतल के आश्रयाश्रयिभाव का निषेध कर रहे है। अथवा अनुत्पत्ति (उत्पत्त्यभाव) ही प्रागभाव है, वह भी आश्रयरहित है। घट उत्पन्न नहीं हुआ यही प्रतीति होती है। एवं विनाश ही प्रध्वंसाभाव है। वह भी आश्रय रहित ही है। घट नष्ट हो गया, यह प्रतीति आश्रयरहित ही है। 'स्वसमवेतकार्योत्पादकं समवायिकारणम्' अपने में समवाय सम्बन्ध से उत्पन्न होने वाले कार्य का उत्पादक समवायिकारण है। अतः जो समवायिकारण में घटादिकार्योत्पत्ति के पूर्व घटादिकार्याभाव को प्रागभाव तथा कार्योत्पत्त्युत्तर कार्यविनाश के पश्चात् जो समवायिकारण में घट का अभाव है, वह प्रध्वंसाभाव है। समवायिकारण में कार्याभाव की प्रतीति 'इदानीमत्र घटो नास्ति' इस समय यहाँ पर घट नहीं है। अत्यन्ताभाव से अतिरिक्त नहीं है।

अब प्रतिवादी एतद्घटभूतल के आश्रयाश्रयिभाव के अत्यन्ताभाव-विषयक प्रमाण की जिज्ञांसा कर रहा है। अत्यन्ताभाव प्रमित है, कि नहीं, यदि प्रमित नहीं है, तो अप्रसिद्ध होगा। यदि प्रमित है, तो अभावमात्र प्रमा का विषय है, कि एतद्घटभूतलाश्रयाश्रयिभावविशेषित अत्यन्ताभाव प्रमा का विषय है। यदि प्रथम कल्प माने तो अभावविशेष (आश्रयाश्रयिभाव-प्रतियोगिकाभाव) नहीं सिद्ध होगा। द्वितीय कल्प में निष्प्रमाणिकप्रतियोगिक

**अथ एतद्घटैतद्भूतलाश्रयिभावाभावे प्रमाणं प्रवर्तमानं किमभावमात्रं गोचरयति, किंवा एतद्घटैतद्भूतलाश्रयाश्रयिभावविशेषितमभावम्। आद्ये नाभावविशेषसिद्धिः। द्वितीयेऽपि निष्प्रमाणकविषयं प्रमाणं चेति व्याहतमित्युच्यते। तन्न। आभासप्रतिपन्ने निष्प्रमाणके तदभावविशेषस्यैव प्रमाणविषयत्वात्, स्मृते कुम्भादौ तदभावविशेषस्येव।**

---

**भुवन.**—अत्यन्ताभावः प्रमीयते न वा। न चेदसिद्धः, प्रमीयते चेत्तत्र विकल्पद्वयेनाशङ्कते—**अथैतद्घटेति।** एतद्घटैतद्भूतलयोर्यः आश्रयाश्रयिभावस्तदभावे प्रवर्तमानं प्रमाणमभावमात्रं गोचरयति, किंवा आश्रयाश्रयिभावेन विशेषितमभावम्। आश्रयाश्रयिभावं तदभावं च गोचरयतीत्यर्थः। पक्षद्वयमपि दूषयति—**आद्ये इति।** एतत्प्रतियोगिकोऽयमभावः इत्येवमभावविशेषस्यासिद्धिः। अभावमात्रस्यैव ग्रहणात्। **निष्प्रमाणकेति।** निष्प्रमाणकस्याश्रयाश्रयिभावादेर्विषयोऽप्रमाणं चेति व्याघातः। यदि निष्प्रमाणकविषयं तर्हि प्रमाणं कथमिति, अत्र प्रतिसमाधत्ते—**तन्नेति।** आभासेन प्रमाणाभासेन प्रतिपन्ने निष्प्रमाणके आश्रयाश्रयिभावादौ तदभावविशेषस्यैव प्रमाणविषयत्वात्। अयं भावः। संसर्गादिराभासप्रतिपन्नः। संसर्गाभावविशेषश्च प्रमाणप्रतिपन्नः। **स्मृते कुम्भादाविति।** यथा स्मृते कुम्भादौ मनसि सद्रूपत्वेनाभावात् निष्प्रमाणकेऽपि स्मृतकुम्भाभावविशेषस्य प्रमाणविषयत्वमित्यर्थः।

---

अभाव को प्रमित कहना होगा। यतः आश्रयाश्रमिभाव को आप प्रमित मानते ही नहीं। निष्प्रमाणिकप्रतियोगिक अभाव को प्रामाणिक कहना वदतो व्याघात होगा।

इसका उत्तर सिद्धान्ती दे रहा है, प्रमाणाभासमात्र से सिद्ध निष्प्रमाणिक एतद्घटभूतल के आश्रयाश्रयिभाव प्रतियोगिक अत्यत्याभाव को हम प्रामाणिक मानते है। जैसे स्मृतिविषयीभूत घटादि के मनसा असद्रूप सिद्ध रहने पर भी तत्प्रतियोगिक अत्यन्ताभाव को प्रामाणिक माना जाता है। उसी प्रकार एतद्घटभूतल के आश्रयाश्रयिभाव के प्रमित न रहने पर भी तत्प्रतियोगिकाभाव को प्रमित माना जाता है।

पुनश्च प्रतिवादी आशङ्का कर रहा है, कि निष्प्रमाणिकाभाव में क्या प्रमाण है। उत्तर में सिद्धान्ती कह रहा है, कि एतद्घट तथा भूतल के आश्रयाश्रयिभाव का अभाव चक्षुरिन्द्रिय से गृहीत होता है, अतः प्रत्यक्षप्रमाण है। एवं अनुमानप्रमाण भी है। अनुमान का आकार एतच्चक्षुः जन्यप्रमाणिक-

**अथ निष्प्रमाणकाभावे किं प्रमाणम्। एतद्घटैतद्भूतलाश्रयाश्रयिभावो नास्तीत्यादिप्रत्यक्षमेव। अनुमानं च एतच्चक्षुर्जन्यप्रामाणिकप्रतियोगिकविषयत्वरहिताभावप्रमाजनकं, चक्षुष्ट्वात् अन्यचक्षुर्वदित्यादिकम्। इत्यलमतिविस्तरेण।**

---

**भुवन.—एतच्चक्षुरित्यादि।** एतच्चक्षुर्देवदत्तादिविवक्षितचक्षुः। प्रामाणिकः प्रमाणग्राह्यः प्रतियोगी यस्याभावस्य स प्रामाणिकप्रतियोगिकः। स विषयो यस्य ज्ञानस्य तत्प्रामाणिकप्रतियोगिकविषयम्। एतच्चक्षुर्जन्यं च तत्प्रामाणिकप्रतियोगिकविषयं च, तस्य भावः तत्त्वम्। तेन रहितो योऽभावः तस्मिन् या प्रमा प्रमाणं तस्या जनकम्। अत्रैतच्चक्षुर्जन्यप्रामाणिकप्रतियोगिकविषयत्वरहिताभावो द्विधा स्यात्, अनेतच्चक्षुर्ग्राह्यः प्रामाणिकप्रतियोगिकोऽभावो वा, एतच्चक्षुर्ग्राह्योऽप्रामाणिकप्रतियोगिकोऽभावो वा। आद्यो यद्यपि प्रामाणिकप्रतियोगिकविषयत्वरहितो नास्ति तथाप्येतच्चक्षुर्जन्यं यत्प्रामाणिकप्रतियोगिकविषयत्वं तेन रहित एव। द्वितीयो यद्यप्येतच्चक्षुर्ग्राह्यत्वरहितो नास्ति तथाप्येतचक्षुर्जन्यं यत्प्रामाणिकप्रतियोगिकविषयत्वं तेन रहितो नास्ति एव। तत्राद्यः पक्षः पक्षे व्याहतः। न ह्येतच्चक्षुर्यः एतच्चक्षुषा न गृह्यतेऽभावस्तस्य प्रमाजनकम्। द्वैतीयकस्तु पक्षे सिध्यन्नप्रामाणिकप्रतियोगिकाभावस्य चाक्षुषत्वं साधयति। आद्यो विकल्पश्च सपक्षे प्रयोजकः।

---

प्रतियोगिकविषयत्वरहिताभावप्रमाजनकं चक्षुष्ट्वात् अन्यचक्षुर्वत्। एतच्चक्षुः देवदत्तादिचक्षु को पक्ष बनाया, जन्यप्रमाणिकप्रतियोगिकविषयत्वरहिताभावविषयकप्रमाजनकत्व को साध्य बनाया, चक्षुष्ट्व को हेतु बनाया तथा अन्यचक्षु को दृष्टान्त बनाया है।

समन्वय=विवादास्पद देवदत्तादिचक्षु में प्रामाणिक (प्रमाविषयीभूत) प्रतियोगी है, जिस अभाव का वह प्रामाणिकप्रतियोगिकाभाव हुआ। वह विषय जिस ज्ञान का वह ज्ञान प्रामाणिकप्रतियोगिक विषयकज्ञान हुआ। पुनश्च वह ज्ञान कैसा है, एतच्चक्षुर्जन्य है, उस ज्ञान में एतच्चक्षुर्जन्य प्रामाणिकप्रतियोगिक विषयत्व धर्म है। तद्रहित अभावविषयकप्रमा का जनक एतच्चक्षु है। एतच्चक्षुर्जन्यप्रामाणिकप्रतियोगिकविषयत्वरहित अभाव दो प्रकार का है। एतच्चक्षुर्ग्राह्यप्रामाणिकप्रतियोगिक, अभाव, अथवा एतच्चक्षुर्ग्राह्य अप्रामाणिकप्रतियोगिक अभाव। प्रथम अभाव यद्यपि प्रामाणिकप्रतियोगिकविषयत्वरहित नहीं है। तथापि एतच्चक्षुर्जन्य जो प्रामाणिक प्रतियोगिकविषयत्व उससे रहित

**केवलान्वयिनि धर्मे बाधकान्तरमाह—**

**ऽपि च।**

**स्वस्मिन्वृत्तिरवर्तनेन सहिता व्याघातसंत्रासिता।।' इति।**

**तथाहि–प्रमेयत्वादिकं स्वस्मिन् वर्तते न वा। आद्ये व्याघातः। न**

---

अथ व्यावृत्त्यचिन्ता। चक्षुरुक्तसाध्यवदित्युक्ते दृष्टान्तभागे सिद्धसाध्यता, तव्द्यावृत्त्यर्थमेतदिति। भावप्रमाजनकत्वेनार्थान्तरं वारयति—**अभावप्रमेति।** अन्योन्याभावादिप्रमाजनकत्वेनार्थान्तरं पराकरोति—**प्रामाणिकप्रतियोगिक-विषयत्वरहितेति।** अप्रसिद्धविशेषणतां दृष्टान्ते साध्यवैकल्यं च परिहर्तु-मेतच्चक्षुर्जन्येत्युक्तम्। आदिपदेनैतच्छ्रोत्रमेतच्छ्रोत्रजन्यप्रामाणिकप्रतियोगिक-विषयत्वरहिताभावप्रमाजनकं श्रोत्रत्वादन्यश्रोत्रवत् इत्यादिसंग्रहः।

'मानं हन्त न केवलान्वयवतो धर्मस्य सत्त्वेऽपि चे'त्यादिवृत्तस्याद्यपादं व्याख्याय द्वितीयमवतारयति—**केवलान्वयिनीति। स्वस्मिन्निति।** प्रमेय-त्वादिहेतोः स्वस्मिन्वृत्तिरवृत्तिश्च व्याहतेत्यर्थः। इह स्वस्मिन्वृत्तीत्यादिपदे सहितशब्दः समुच्चयाभिप्रायेण बोद्धव्यः। दृश्यते हि समुच्चयेऽपि सहित-पदप्रयोगः। तद्यथा—'रोहिणीसहितमुत्तरात्रयमि'ति **श्रीपतिवचने।**

**भुवन.**—पक्षद्वयेऽपि व्याघातं दर्शयति—**प्रमेयत्वादिकमिति। न हि**

---

है। प्रथम कल्प में व्याघातदोष है। जो एतच्चक्षुर्जन्य नहीं है, उस अभाव के प्रति एतच्चक्षु को प्रमाण कहना वदतो व्याघात है। द्वितीयकल्प में पक्षभूत एतच्चक्षु में सिद्ध अप्रामाणिक प्रतियोगिक अभाव चाक्षुषत्व की सिद्धी की जाती है। प्रथम कल्प सपक्षसिद्धिमात्र का प्रयोजक है। चक्षुमात्र को पक्ष बनाने में दृष्टान्त में सिद्धसाधन दोष होता, अतः एतच्चक्षु को पक्ष बनाया। अप्रसिद्धविशेषणता तथा दृष्टान्त में साध्यवैकल्प दोष परिहार के लिए एतच्चक्षुर्जन्यत्व साध्य का विशेषण बनाया। आदि पद श्रोत्रादि अन्य प्रमाणों के संग्रह के लिए है। यहाँ तक 'मानं हन्त न केवलान्वयवतो धर्मस्य सत्त्वेऽपि च' इस कारिकांश की व्याख्या में केवलान्वयीधर्म के सत्वाभाव में प्रमाण कहा।

इस के बाद 'स्वस्मिन्वृत्तिरवर्तनेन सहिता व्याघातसंत्रासिता' इस कारिका के अंश की व्याख्या करते हुए केवलान्वयिधर्म में केवलान्वयिधर्म के रहने या न रहने पर बाधदोष दिखा रहे हैं। अत्यन्ताभाव अप्रतियोगित्व

**हि तदेव तस्मिन् वर्तते इति संभवति, माता वन्ध्येतिवत्। यथा हि या माता सा वन्ध्या न भवत्येवेति नियमः। एवं यत्प्रमेयत्वाश्रितं अभिधेयत्वादिकं प्रमेयं, यश्च प्रमेवत्वाश्रयः, तत्प्रमेयत्वं न भवत्येवेत्येतावपि नियमौ।**

**अथ या माता सा वन्ध्या न भवति, या च वन्ध्या सा माता**

---

**तदेवेति।** न हि प्रमेयत्वे प्रमेयत्वं वर्तत इति सम्भवति, आत्माश्रय-वाधकतर्कात्। दार्ष्टान्तिकमाह—**एवं यत्प्रमेयेत्यादि।** अभिधेयत्वादिकं यत्प्रमेयत्वेनाश्रितं, यच्च घटादिकं प्रमेयं प्रमेयत्वधर्माश्रयः, तत्प्रमेयत्वं न भवत्येव। अयमाशयः अभिधेयत्वादिधर्मेषु घटादिरूपप्रमेयेषु च प्रमेयत्वं वर्तते। परमभिधेयत्वादिकं प्रमेयं च प्रमेयत्वरूपं न सम्भवति। तेनाभिधेयत्व-प्रमेयत्वादौ प्रमेयत्ववर्तनेऽपि प्रमेयत्वरूपत्वाभावात् प्रमेयत्वे प्रमेयत्वं न वर्तत एव। **इत्येतावपि नियमाविति।** आद्यो नियमोऽभिधेयत्वादिधर्ममाश्रित्योपपादितः। द्वितीयस्तु प्रमेयं घटादिकं धर्मिणमाश्रित्योक्त इति नियमद्वयस्यापि साफल्यम्।

**भुवन.—प्रकृते स्तिवि।** यत्प्रमेयत्वाश्रितं न तत्प्रमेयत्वमिति सत्त्वाभिधेयत्वादौ नियमसद्भावेऽपि, यत्प्रमेयत्वं तत्प्रमेयत्वस्याश्रयो नेति

---

केवलान्वयी कहलाता है। जो धर्म अत्यन्ताभाव का अप्रतियोगी हो अर्थात् सर्वत्र विद्यमान रहे वह केवलान्वयिधर्म कहलाता है। प्रमेयत्व अभिधेयत्वादि सकलवस्तुनिष्ठधर्म होने के कारण सर्वत्र विद्यमान है, उनका कही पर अभाव नहीं है, अत: अत्यन्ताभाव के अप्रतियोगी है। उक्त केवलान्वयिस्वरूप का खण्डन करते हुए कह रहे है, कि यदि सर्वत्र विद्यमान रहना ही केवलान्वयित्व है। तो प्रमेयत्वादि में सम्भव नहीं होगा। प्रमेयत्व स्वत: प्रमेयत्व में रहता है, कि नहीं? यदि नहीं रहता, केवलान्वयित्व का भङ्ग हो गया। यदि स्वत: अपने में रहता है, कहो तो व्याघातदोष होगा। जिस प्रकार जो वन्ध्या है। वह माता नहीं हो सकती। उसी प्रकार जो धर्म है, वह धर्मी नहीं हो सकता। प्रमेयत्व या अभिधेयत्व स्वत: प्रमेयत्व या अभिधेयत्व में रहे, तो अपने में धर्मधर्मिभाव की आपत्ति होगी।

जिस प्रकार जो माता है, वह वन्ध्या नहीं हो सकती उसी प्रकार जो प्रमेयत्वाश्रित अभिधेयत्वादि प्रमेय है, तथा जो प्रमेयत्वाश्रय प्रमेय है,

**नेत्युभयथानियमो व्याघातस्थले दृष्टः। प्रकृते तु यत्प्रमेयत्वाश्रितं न तत्प्रमेयत्वमिति नियमसत्त्वेऽपि यत्प्रमेयत्वं न तत्प्रमेयत्वाश्रयः इति प्रतिवादिनं प्रति नियमो न सिद्धः। असाधारणत्वात्। तेन न व्याघातः इत्युच्यते। तन्न। एकनियमेन व्याघातोपपत्तौ द्वितीयनियमस्य निरर्थकत्वात् असाधारणत्वेऽपि व्याप्तेर्वक्ष्यमाणत्वाच्चेति। द्वितीये पक्षे प्रमेयत्वादीनां केवलान्वयित्वव्याघातः। न हि स्वस्माव्द्यावृत्तः केवलान्वयी चेति संभवति।**

**एवं केवलान्वयिनं धर्मं निरस्येदानीं केवलान्वयिना धर्मेण सह कस्यचिदपि हेतोर्व्याप्तिर्न घटते इत्याह—**

---

नियमः प्रतिवादिनं वैशेषिकादिकं प्रति न सिद्धः। **असाधारणत्वादिति।** पक्षमात्रवृत्तित्वेन सपक्षवृत्तिरहितत्वादसाधारणत्वमित्यर्थः। आचार्यः प्रत्युत्तरयति—**तन्नेति।** प्रमेयत्वाश्रितस्य प्रमेयत्वाभावव्याप्त्या एकनियमेन व्याघातोपपत्तौ द्वितीयनियमो निरर्थक इत्यर्थः। **असाधारणे इति।** असाधारणेऽपि नियमे व्याप्तिरुत्तरत्र केवलव्यतिरेक्यनुमानादौ वक्ष्यते इत्यतश्च प्रमेयत्वादिकं स्वस्मिन् वर्तते न वेति विकल्प्य आद्यो निरस्तः। संप्रति द्वितीयं निरस्यति—**द्वितीये पक्षे इति। न हि स्वस्मादिति।** एकस्मात्स्वस्मादपि यो व्यावृत्तः स केवलान्वयीति न संभवति। केवलान्वयित्वस्य सर्ववस्तुनिष्ठत्वरूपत्वात्।

**भुवन.**—साध्याभाववदाश्रितत्वविरह इत्यादिपदद्वयं व्याकरोति—

---

वह स्वतः प्रमेयत्व नहीं हो सकता। अभिधेयत्वादि धर्मों में घटादिप्रमेयों में प्रमेयत्व है। परन्तु अभिधेयत्वादि प्रमेय तथा प्रमेयत्व उभयरूप नहीं हो सकते। प्रमेयत्व धर्म प्रमेय में रहता है। अभिधेयत्व प्रमा का विषय होने से प्रमेय है, तथा घटादिधर्मी भी प्रमा के विषय होने से प्रमेय है। उनमें प्रमेयत्वधर्म स्वरूप सम्बन्ध से रहता है। परन्तु स्वतः प्रमेयत्व में प्रमेयत्व किसी सम्बन्ध से नहीं रहता। अतः प्रमेयत्वनिष्ठ प्रमेयत्वाभाव का प्रतियोगी ही प्रमेयत्व हो गया। अप्रतियोगी नहीं हुआ।

केवलान्वयी धर्म को न मानने वाले सिद्धान्ती ने जो यह कहा कि प्रमेयत्व को प्रमेयत्व में रहना कहने पर या माता सा वन्ध्या के समान व्याघात होगा।

उस व्याघातदोष का निराकरण युक्तिपूर्वक प्रतिवादी कर रहा है। पूर्वपक्षी का कथन है कि व्याघातदोष के लिए प्रसिद्ध स्थल या माता सा

**साध्याभाववदाश्रितत्वविरहो धूमादिलब्धस्थिति-**
**र्व्याप्तिः सा न हि केवलान्वयवता धर्मेण संगच्छते ।।२।।**

**इति। साध्याभाववद्वृत्तित्वाभावो हि व्याप्तिः व्याप्यत्वं अविनाभावः इति चोच्यते। तस्यैवान्वयव्यतिरेकाभ्यां धूमादिनिष्ठस्यानुमित्यङ्गतावधारणात्। न च केवलान्वयिना धर्मेण कस्यचिदपि हेतोः साध्याभाववद्वृत्तित्वाभावरूपा व्याप्तिः शक्यावगन्तुम्। केवलान्वयिनि साध्याभाववदप्रतीतौ तद्वृत्तित्वाभावस्य दुरधिगमत्वात्।**

---

**साध्याभाववद्वृत्तित्वेत्यादि।** साध्यस्य योऽभावः विपक्षः, तत्र वृत्तित्वाभावो व्यतिरेकव्याप्तिः। व्याप्यत्वमविनाभावः इत्येतौ व्याप्तेः पर्यायौ। धूमादिलब्धस्थितिरित्येतद्व्याचष्टे—**तस्यैवेति।** तस्यैव अविनाभावस्यैवः। **अन्वयव्यतिरेकाभ्यामिति।** यत्र धूमस्तत्र वह्निः, यत्र वह्निर्न भवति तत्र धूमोऽपि न भवतीत्येवं धूमादिनिष्ठस्यानुमितिः अनुमानं, तदङ्गतावधारणात्। 'व्याप्तिः सा न ही' त्यादि व्याख्याति—**न च केवलान्वयिनेत्यादि।** न च केवलान्वयिना धर्मेण महाविद्यासाध्यादिरूपेण कस्यचिदपि प्रमेयत्वादिहेतोः, साध्याभाववन्तो महाविद्यासाध्यरहिताभावाः, तत्र वृत्तित्वाभावरूपा व्यतिरेकव्याप्तिः संभवति। इह हेतुमाह—**केवलान्वयिनीति।** केवलान्वयिनि हेतौ साध्यस्यापि केवलान्वयित्वात्तदभावस्यैवाभावात् साध्याभाववदप्रतीतौ साध्याभाववत्सु वृत्तित्वाभावस्य दुरधिगमत्वात्, महाविद्यायां विपक्षाभावात् साध्याभाववद्वृत्तित्वमेव दुरधिगममिति प्रतियोगिज्ञानाभावात् कुतस्तरां साध्याभाववद्वृत्तित्वाभावावगम इत्यर्थः।

---

वन्ध्या में उभयथा व्याघात देखा जाता है। जो माता है, वह वन्ध्या नहीं हो सकती। जो वन्ध्या है वह माता नहीं हो सकती। दृष्टान्त में जैसा व्याघात दोष है। वैसा प्रकृत दार्ष्टान्त में नहीं है। प्रमेयत्वाश्रित अभिधेयत्वादि के प्रमेयत्वरूप न रहने पर भी जो प्रमेयत्व है, वह प्रमेयत्वाश्रय नहीं है, ऐसा प्रतिवादी केवलान्वयी न मानने वाले के मत में नहीं सिद्ध हो सकता। यतः प्रमेय पदार्थ है, प्रमा का विषय प्रमेयत्व भी प्रमा का विषय होने के कारण प्रमेय होगा, उसमें भी प्रमेयत्व धर्म घटपटादि प्रमेयपदार्थों के समान रहेगा ही है। अतः प्रमेयत्व अत्यन्ताभाव का अप्रतियोगी होने से केवलान्वयी है, तथा व्याघातदोष भी नहीं है।

**अथ न साध्याभाववद्वृत्तित्वाभावो व्याप्तिः, किन्तु अनौपाधिकः संबन्धः, स चाभिधेयत्वादिना प्रमेयत्वादेः शक्यावगम इति मन्यसे। तन्न। किमभिधेयत्वव्यापकः प्रमेयत्वाव्यापकश्च धर्म उपाधित्वेनाभिमतः प्रमितो न वा। आद्ये तदभावप्रतीतिर्बाधिता। द्वितीये तदभावप्रतीतिरशक्या प्रतियोग्य-प्रमितेरिति। यावन्तोऽभिधेयत्वादिसाध्यव्यापकाः तावत्सु प्रमेयत्वादिसाधना-**

---

**भुवन**—उदयनमतामाशङ्कते—**अथ न साध्याभावेति**। यत्र साध्य-साधनयोः सम्बन्धे उपाधिर्न भवति, सोऽनौपाधिकः सम्बन्धो व्याप्तिः। **स चाभिधेयत्वादिनेत्यादि**। शब्दोऽभिधेयः प्रमेयत्वात् घटादिवदित्याद्यनुमाने विपक्षाभावादनौपाधिकः संबन्धः शक्यावगमः। अत्र चाभिधेयत्वादिधर्मो यदुपात्तस्तदुपलक्षणम्। एवमन्येऽपि महाविद्यासाध्यादयः केवलान्वयिधर्मा अत्र ज्ञेयाः। तथाहि—महाविद्यायां स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वादि-साध्यस्य सर्ववस्तुनिष्ठत्वात्केवलान्वयित्वेन विपक्षाभावाद्यस्य कस्याप्युपाधेरा-वश्यकपक्षेतरदोषग्रस्तत्वेन अनौपाधिकसंबन्धत्वं शक्यावगममित्यर्थः। अथ दूषयति—**तन्न। किमभिधेयत्वेत्यादि**। साधनाव्यापकः साध्यव्यापकः उपाधिरित्युपाधिलक्षणम्। तत्र अभिधेयत्वसाध्याव्यापकः प्रमेयत्वसाधना-व्यापको यः उपाधित्वेनाभिमतः, स प्रमितः प्रमाणेन गृहीतो न वा। विकल्पद्वयमपि निर्लोडयति—**आद्ये तदभावेति**। यदि स उपाधिः प्रमितस्तर्हि तदभावप्रतीतिर्बाधिता। प्रमाणगृहीतस्य असद्रूपत्वेन कर्तुमशक्यत्वात्। **द्वितीये इति**। यद्युपाधिरप्रमितः, कथं तर्हि तदभावप्रतीतिः कर्तुं शक्या। प्रतियोगिनः उपाधेरप्रतीतेः। 'प्रतियोगिज्ञानाधीनज्ञानोऽभावः' इति वचनात्। अथ पुनरप्याशङ्कते—**यावन्त इत्यादि अनौपाधिकत्वसिद्धिरित्यन्तेन**। अयमर्थः—

---

इसका उत्तर देते हुए केवलान्वयी पदार्थ का खण्डन करने वाला सिद्धान्ती कह रहा है। कि एक नियम से व्याघातदोष सिद्ध हो जाने से द्वितीय नियम निरर्थक है। जो प्रमेयत्वाश्रित अभिधेयत्व है, वह प्रमेयत्व नहीं है। इतने मात्र से व्याघात दोष सिद्ध हो गया। द्वितीय कल्प में असाधारण में भी अतिव्याप्ति होगी, यह आगे केवलव्यतिरेकि अनुमान में कहेगे। साथ ही द्वितीय कल्प में भी व्याघातदोष का कारण तथा केवलान्वयिधर्म का साधन नहीं कह सकते। अत्यन्ताभाव का अप्रतियोगी केवलान्वयिपदार्थ है। केवल अपने में ही रह जाने के कारण केवलान्वयी नहीं हो सकता, केवलान्वयिपदार्थ को सर्ववस्तुनिष्ठ होना चाहिए। जैसा कि

**व्यापकत्वं निषिध्यते। यावन्तश्च मेयत्वादिसाधनाव्यापकाः, तावत्सु अभिधेयत्वादिसाध्यव्यापकत्वं निषिध्यते। तस्मादनौपाधिकत्वसिद्धिरित्यपि न युक्तम्। प्रकृतसाध्यव्यापकप्रकृतसाधनाव्यापकधर्माप्रतीतौ तदभावस्य भङ्गिसहस्रेणाप्यधिगन्तुमशक्यत्वात्।**

**एवं सति धूमानुमानादिष्वपि अनौपाधिकत्वमशक्याधिगममिति चेत्। एवमस्तु। न नः काचित्क्षतिः।**

---

यः उपाधिरभिधेयत्वादिसाध्यव्यापको भवति स प्रमेयत्वादिसाधनाव्यापको न भवति। यश्च मेयत्वादिसाधनाव्यापकः सोऽभिधेयत्वादिसाध्यव्यापको न भवतीत्युपाधेः साधनाव्यापकसाध्यव्यापकत्वरूपसंपूर्णलक्षणाभावादत्रानुमानेषु अनौपाधिकसंबन्धत्वसिद्धिः। अथ आचार्य उत्तरयति—**इत्यपि न युक्तमिति।** हेतुमाह—**प्रकृतसाध्येत्यादि।** प्रकृतमभिधेयत्वादिसाध्यं तस्य व्यापकः, प्रकृतं मेयत्वादिसाधनं तस्याव्यापकश्च यो धर्मः उपाधिलक्षणः, तस्याप्रतीतौ प्रतियोगिज्ञानाभावात् तदभावस्य उपाधिलक्षणधर्माभावस्य भङ्गिसहस्रेण प्रकारसहस्रेणाप्यधिगन्तुं परिज्ञातुमशक्यत्वात्।

**भुवन.**—अथैवमभिहिते परोऽतिप्रसङ्गमुपपादयति—**एवं सति धूमानुमानेत्यादि।** अनौपाधिकः संबन्धो व्याप्तिरित्यस्माभिरस्वीकरणान्नायं प्रसङ्ग इत्याह—**एवमस्त्विति।**

---

हम बता चुके हैं, कि अभिधेयत्व प्रमेयत्व धर्म परस्पर भिन्न है, एक दूसरे में नहीं रह सकते। एवं प्रमेय में प्रमेयत्व रहेगा अभिधेय में अभिधेयत्व रहेगा। अभिधेय में न तो प्रमेयत्व रहेगा न तो प्रमेय में अभिधेयत्व रहेगा। अतः कोई भी केवलान्वयि धर्म नहीं हो सकते।

केवलान्वयिधर्म का निरास करने के बाद केवलान्वयिधर्म के साथ व्याप्ति का निरास कर रहे है। पूर्व में केवलान्वयिधर्म में प्रमाणाभाव प्रदर्शित किया तत्पश्चात् उसके स्वरूप का अभाव बताया। अब कह रहे है, कि यदि आप केवलान्वयिधर्म मान भी लें, तो केवलान्वयिधर्म के साथ किसी हेतु की व्याप्ति नहीं हो सकती। यतः व्याप्तिस्वरूप 'साध्याभाववदवृत्तित्व' है। जिस में साध्य का अभाव हो उसमें हेतु का न रहना ही व्याप्ति है। व्याप्यत्व (व्याप्तिमत्) अविनाभाव (सहचरितत्व) साथ में रहना (सामानाधिकरण्य) रूप है। उसी सहचाररूप अविनाभाव का अन्वयव्यतिरेक द्वारा अभिनय (प्रदर्शन) यत्र धूमस्तत्र तत्र वह्निः यत्र वह्निर्नास्ति तत्र धूमो

**अथ नियमो व्याप्यत्वम्। नियमश्चायोगव्यवच्छेदः। स चाभिधेयत्वादिसाध्यस्य मेयत्वादिसाधनवन्निष्ठात्यन्ताभावप्रतियोगित्वाभावः शक्योऽधिगन्तुमिति मन्यसे। तदपि न। अभिधेयत्वादिसाध्यनिष्ठस्य मेयत्वादिसाधनवन्निष्ठात्यन्ताभावप्रतियोगित्वविरहस्य व्यापकत्वेन मेयत्वाद्यनिष्ठतया मेयत्वादीनां व्याप्यत्वभङ्गस्य दुरपह्नवत्वात्।**

---

**भुवन.**—अथ प्रकारान्तरेण व्याप्तिविषयामाशङ्कां कुरुते—**अथ नियमः इति।** यत्र साधनं तत्र साध्येन भाव्यमेवेति यो नियमः, तदेव साधनस्य साध्येन व्याप्यत्वम्। **अयोगव्यवच्छेद इति।** साधनस्य साध्येन सह अयोगो न किन्तु योग एव। **स चाभिधेयेति।** स च अयोगव्यवच्छेदोऽभिधेयत्वादिसाध्यस्य मेयत्वादिसाधनवन्तो घटात्मादयः, तेषु निष्ठो योऽत्यन्ताभावः, तस्य यत्प्रतियोगित्वं, तदभावः शक्यो ज्ञातुम्। अयमाशयः—मेयत्वादिसाधनवत्सु अभिधेयत्वादिसाध्यस्य अभावो नास्तीत्येतावता यत्र हेतुः तत्र साध्येन भाव्यमेवेत्येवं व्याप्तिरस्तीत्यर्थः। दूषयति—

---

नास्ति जहाँ धूम है, वहाँ वह्नि है। जहाँ वह्नि नहीं है, वहाँ धूम नहीं है, रूप में किया जाता है। केवलान्वयिधर्म को लेकर किसी भी हेतु की साध्याभाववद्वृत्तित्वाभावरूप व्याप्ति नहीं बन सकती। केवलान्वयी धर्म की सभी में वृत्तिता ही है। तो साध्याभाववत् (साध्य के अभाववाले) में भी वृत्तिता ही होगी, अतः साध्याभाववत् में वृत्तित्व का अभाव न होने के कारण उक्त व्याप्ति नहीं बन पायेगी।

अब यदि अनौपाधिक सम्बन्ध को व्याप्ति कहते हैं। साध्य का व्यापक साधन का अव्यापक उपाधि है, तद्भिन्न सम्बन्ध अनौपाधिक सम्बन्ध होगा उसी की व्याप्ति मान लें। वह अनौपाधिकसम्बन्ध अभिधेयत्व प्रमेयत्व साधकानुमान में है। यतः घटोऽभिधेयः प्रमेयत्वात्, या घटःप्रमेयः अभिधेयत्वात्, उभयविध व्याप्ति में है। उक्त स्थल में कोई उपाधि न सम्भव होने से उपाधिरहित सम्बन्ध है। इस पक्ष का खण्डन करते हुए कह रहे हैं, कि क्या आप अभिधेयत्व साध्य का व्यापक प्रमेयत्व साधन का अव्यापक कोई धर्म उपाधित्वेन प्रमा का विषय मानते हैं? यदि मानते हैं, तो अनौपाधिक-सम्बन्ध नहीं हुआ। अनौपाधिकसम्बन्धाभाव की प्रतीति प्रतिबन्धक होगी। यदि उक्त स्थल में किसी उपाधि को प्रमित नहीं मानते, तो उपाधिरूप प्रतियोगी के अप्रसिद्ध होने से उपाधिप्रतियोगिक अभाव अप्रसिद्ध होगा, तो अनौपाधिकसम्बन्ध भी अप्रसिद्ध होगा जिसे आप व्याप्ति कह रहे हैं।

**अथ मेयत्वादिसाधनवन्निष्ठात्यन्ताभावप्रतियोगित्वविरहोऽभिधेयत्वादिसाध्यनिष्ठो व्याप्यत्वमनुमानाङ्गमिति ब्रूषे। तन्न। साध्यस्यैवंरूपव्याप्य-**

---

**तदपि नेत्यादि।** मेयत्वादिसाधनवत्सु निष्ठो योऽत्यन्ताभावः तस्य यत्प्रतियोगित्वं तद्विरहस्य अभिधेयत्वादिसाध्यनिष्ठस्य। **व्यापकत्वेनेति।** अभिधेयत्वादिकं साध्यं व्यापकं, तन्निष्ठो यो मेयत्वादिवन्निष्ठात्यन्ताभावप्रतियोगित्वाभावः सोऽपि व्यापकनिष्ठत्वेन व्यापक एवेत्यर्थः। **मेयत्वाद्यनिष्ठतयेति।** अयमर्थः—यो हि मेयत्वादिवन्निष्ठात्यन्ताभावप्रतियोगित्वाभावोऽभिधेयत्वादिसाध्यनिष्ठो व्यापकः स मेयत्वादिहेत्वनिष्ठ एव। मेयत्वादिव्याप्यनिष्ठस्य व्याप्यत्वेन व्यापकत्वाभावात्। यथा यैव घटे सत्तास्ति न सैव पटे इति। **व्याप्यत्वभङ्गस्येति।** पूर्वं ह्यभिधेयत्वादिसाध्यस्य मेयत्वादिसाधनवन्निष्ठात्यन्ताभावप्रतियोगित्वाभावो व्याप्तिरुक्ता। सा च साध्यसाधनोभयनिष्ठा स्यात्। मेयत्वादिवन्निष्ठात्यन्ताभावप्रतियोगित्वविरहश्च यः साध्यनिष्ठः स साधननिष्ठ इति मेयत्वादीनां यद्व्याप्यत्वं व्याप्तिः, तस्य भङ्गो दुरपह्नव एवेत्यर्थः।

**भुवन.**—अस्मन्मते साध्यगतं व्याप्यत्वं, न तु साधनगतमिति पराभिप्रायं प्रकटयति—**अथ मेयत्वादिति।** मेयत्वादिसाधनवन्निष्ठात्यन्ताभावप्रतियोगित्वविरहो यः एवाभिधेयत्वादिसाध्यनिष्ठः तदेव साधनस्य साध्येन व्याप्यत्वमिति भावार्थः। ग्रन्थकारः परिहरति—**तन्न। साध्यस्येत्यादि।**

---

यदि आप यह कहें कि जितने अभिधेयत्वादि साध्य के व्यापक है, उन सभी में प्रमेयत्वादिसाधन के अव्यापकत्व का निषेध करेंगे। जितने प्रमेयत्वादि साधन के अव्यापक है। उन सभी में अभिधेयत्वादिसाध्य की व्यापकता का निषेध करेंगे इसी से अनौपाधिकसम्बन्ध की सिद्धि हो जायेगी, इस पर अनौपाधिक सम्बन्ध का खण्डन करने वाला कह रहा है, कि यह कथन युक्ति सङ्गत नहीं है। यदि अभिधेयत्वादिसाध्य का व्यापक प्रमेयत्वादिसाधन का अव्यापक उपाधिलक्षणधर्म प्रतीति का विषय हुआ नहीं तब तो तद्विषयक ज्ञानाभाव होने से उपाधिरूपधर्माभाव किसी प्रकार से प्रमित नहीं कह सकते। अतः अनौपाधिकसम्बन्ध को व्याप्ति नहीं कहा जा सकता।

इस प्रकार अनौपाधिकसम्बन्धरूप व्याप्ति के खण्डित हो जाने पर पूर्वपक्षी कह रहा है, कि यदि अनौपाधिकसम्बन्ध को व्याप्ति नहीं मानेगें तो धूमादिहेतुक अनुमानों में भी अनौपाधिकसम्बन्ध को व्याप्ति नहीं कह

**त्वावगमेऽपि पक्षधर्मत्वानवगमात्। अवगमे वा अनुमानवैयर्थ्यात्। न च साध्यगतं व्याप्यत्वं साधनगतं च पक्षधर्मत्वमनुमानाङ्गमिति युक्तम्। व्यासिपक्षधर्मतयोः समानाधिकरणयोरनुमितिजनकत्वस्योभयवादिसिद्ध-त्वात्।**

---

साध्यस्य अभिधेयत्वादेर्यद्यप्येवंरूपं केवलसाध्यगतं व्याप्यत्वमवगतं, परं तथापि पक्षधर्मत्वमवगतं नास्ति। पक्षधर्मता च विलोक्यते। यतोऽनुमानस्य द्वे रूपे व्याप्यत्वं पक्षधर्मता च। तत्रान्यतररूपानवगमेऽनुमानमेव न स्यात्। **अवगमे वेति।** साध्यस्य यदि पक्षधर्मता अवगता तदा अनुमानवैयर्थ्यम्। साध्यस्य पक्षधर्मताव्यवस्थापनार्थमेवानुमानकरणात्। **न च साध्येत्यादि।** साध्यगतं हि व्याप्यत्वं, पक्षधर्मत्वं च साधनगतमिति भिन्नाधिकरणे व्याप्यत्वपक्षधर्मते अनुमानाङ्गमिति न च युक्तम्। हेतुमाह—**व्याप्तिपक्षेति।** व्याप्तिपक्षधर्मतयोः समानाधिकरणयोरेकाधिकरणयोरित्यर्थः।

---

सकेंगे, उत्तर में प्रतिवादी कह रहा है, कि अनौपाधिकसम्बन्ध को व्याप्ति न मानने पर कोई क्षति नहीं है। यतः वह्नि आदिसाध्यक धूमादिहेतुक अनुमानों में साध्याभाववदवृत्तित्वरूप व्याप्ति गृहीत है।

पुनश्च अन्यप्रकार से व्याप्तिविषयक चर्चा करते हुए, अत्यन्ताभावा-प्रतियोगित्वरूप केवलान्वयित्व की सिद्धि कर रहे है। पूर्वपक्षी कह रहा है, कि नियम को व्याप्ति कहेंगे जहाँ पर साधन रहता है, वहाँ पर साध्य आवश्य रहता है। यह नियम यानी अयोगव्यवच्छेद ही व्याप्ति है। साध्य साधन का नित्ययोग, योगाभाव का व्यवच्छेद यानी राहित्य व्याप्ति है। अभावद्वय से साध्यसाधन का नित्यसम्बन्ध बोधित होता है, वही व्याप्ति है। वह अभिधेयत्वादिसाध्य का मेयत्वादिसाधन वाले में रहने वाले अत्यन्ताभाव के प्रतियोगित्व का अभाव ही है। अर्थात् मेयत्वादिसाधनवाले में अभिधेत्वादिसाध्य का अभाव नहीं है। इसी लिए जहाँ पर हेतु है, वहाँ पर साध्य आवश्य ही रहता है। इस प्रकार साधनवन्निष्ठ अत्यन्ताभाव अप्रतियोगित्व साध्य में सिद्ध होता है।

सिद्धान्ती खण्डन करते हुए कह रहा है। ऐसी व्याप्ति मान कर आप अत्यन्ताभावाप्रतियोगित्वरूप केवलान्वयित्व नहीं मान सकते। यतः अभि-धेयत्व प्रमेयत्व में परस्पर व्याप्यव्यापक माना जाता है। अभिधेयत्व प्रमेयत्व व्यापक भी है व्याप्य भी है। वह उक्त व्याप्ति द्वारा नहीं सिद्ध कर सकते।

**अथ यद्वन्निष्ठात्यन्ताभावप्रतियोगित्वविरहः साध्यस्य तत्त्वं व्याप्यत्वम्। तच्च प्रमेयत्वादीनां घटते इति ब्रूषे। तन्न। यद्वन्निष्ठेत्यत्र यच्छब्देन, तत्त्वमित्यत्र च तच्छब्देन किं प्रमेयत्वादिस्वरूपं विवक्षितं, तद्धर्मो**

---

**भुवन.**—महाविद्यावादी शङ्कते—**अथ यद्वन्निष्ठेति।** यच्छब्देन प्रमेयत्वादिहेतवः, तद्वत्सु निष्ठो योऽत्यन्ताभावः तस्य यत्प्रतियोगित्वं तद्विरहो यः साध्यस्य। **तत्त्वमिति।** तस्य साधनस्य भावः तत्त्वं व्याप्यत्वम्। साधनस्य साध्यवन्निष्ठत्वं व्याप्यत्वमित्यर्थः। विकल्पैः परिहरति—**तन्न। यद्वदित्यादि।** यद्वन्निष्ठेत्यत्र यच्छब्देन, तत्त्वं व्याप्यत्वमित्यत्र च तच्छब्देन च किं प्रमेय त्वादिस्वरूपं विवक्षितं तद्धर्मो वा। प्रमेयत्वादिधर्मो वेत्यर्थः। आद्यं पक्षं दूषयति—**नाद्य इत्यादि।** यद्वन्निष्ठेत्यत्र यच्छब्देन, तत्त्वं व्याप्यत्वमित्यत्र च तच्छब्देन किं प्रमेयत्वादिस्वरूपं विवक्षितं तद्धर्मो वा। प्रमेयत्वादिधर्मो वेत्यर्थः।

---

मेयत्वादिसाधनवत् में रहने वाले अत्यन्ताभाव के प्रतियोगित्व का जो अभाव अभिधेयत्वादिसाध्य में है। वही प्रतियोगित्वाभाव मेयत्वादि साधन में नहीं है। अधिकरण भेद से अभाव भिन्न होते है। साध्य में रहने वाला प्रतियोगित्वाभाव यदि व्यापक हो गया तो साधन में रहने वाला प्रतियोगित्व का अभाव व्यापक नहीं होगा। अतः परस्पर में व्याप्यव्यापकभाव नहीं बन पायेगा।

आशय यह है—यद्यपि जिस प्रकार मेयत्वादिसाधनवत् में रहने वाले अभाव के प्रतियोगित्व का अभाव अभिधेयत्व साध्य में है, उसी प्रकार अभिधेयत्वादिसाध्यवत् में रहने वाले अभाव के प्रतियोगित्व का अभाव प्रमेयत्वादिसाधन में भी है। तथापि अभिधेयत्वादिसाध्य के व्यापक होने से उसमें रहने वाला प्रतियोगित्वाभाव भी व्यापक है। प्रमेयत्वादि के व्याप्य होने से प्रमेयत्वादि में रहने वाला प्रतियोगित्वाभाव भी व्याप्य होगा। पूर्व में जो मेयत्वादिसाध्य में रहने वाले प्रतियोगित्वाभाव को साध्यसाधनोभयनिष्ठ कहा वह व्याप्ति निरस्त हो गयी।

पूर्वपक्षी यदि कहे, कि जो मेयत्वादिसाधनवत् में रहने वाले अत्यन्ताभाव के प्रतियोगित्व का अभाव अभिधेयत्वादि साध्य गत है, उसी को हम व्याप्ति मान लेगे। उसी व्याप्ति को अनुमान का अङ्ग मान लेगे। इस पर सिद्धान्ती कह रहा है, कि व्याप्तिग्रह सदैव हेतु में होता है। हेतु ही व्याप्तिमत् (व्याप्य) कहलाता है। उस व्याप्तिविशिष्ट हेतु का पक्ष में वृत्तिता यानी

**वा कश्चित्। नाद्यः। हेतुस्वरूपातिरिक्तव्याप्यत्वानङ्गीकारे व्याप्यत्वासिद्धेर्दुर्वारत्वात्। न द्वितीयः। प्रमेयत्वादिव्यतिरिक्तस्य यत्तच्छब्दार्थस्य निर्वक्तुमशक्यत्वात्।**

**यत्तच्छब्दार्थो मेयत्वादिकमेव। तस्य भावः तत्त्वं व्याप्यत्वमित्यपि न तस्य भावः किं तस्य धर्ममात्रं धर्मविशेषो वा। आद्ये मेयत्वस्य सर्वव्याप्यतापत्तिः। द्वितीये तदनिरुक्तिरिति।**

---

आद्यं पक्षं दूषयति—**नाद्य इत्यादि**। हेतुस्वरूपादधिकं यद्व्याप्यत्वं तदनङ्गीकारे व्याप्यत्वं व्याप्तिः तस्या असिद्धिरेव। अयमभिप्रायः—साधनस्य हि व्याप्यत्वं साध्येन स्यात्। तत्र यदि साधनमात्रस्वरूपमेव व्याप्यत्वं स्वीक्रीयेत, तर्हि हेत्वाभासस्यापि व्याप्यत्वं भवेदिति व्याप्यत्वस्यासिद्धिरेव। द्वितीयं पक्षं दूषयति—**न द्वितीय इति**। प्रमेयत्वादिव्यतिरिक्तस्य यत्तच्छब्दार्थस्य विचारासहत्वेन निर्वक्तुमशक्यत्वात्।

**भुवन.—यतच्छब्दार्थः इति**। यत्तच्छब्दार्थो मेयत्वादिकमेव नापरं किमपीत्यर्थः परोक्तं विकल्पति—**तस्य भाव इति**। तस्य मेयत्वादेर्भावः। आद्यविकल्पमुत्थापयति—**आद्ये मेयत्वस्येति**। यदि मेयत्वस्य तद्भावो

---

रहनापन पक्षधर्मता कहलाती है। व्याप्तिग्रह साध्य में तथा पक्षधर्मता हेतु में मानोगें तो व्याप्ति एवं पक्षधर्मता का सामानाधिकरण्य नहीं बन पायेगा। जो अनुमिति का जनक है। व्याप्तिविशिष्टपक्षधर्मताज्ञान (व्याप्तिमत् का पक्ष में रहना) से जन्य अनुमिति प्रमा होती है। अपर दोष यह है, कि यदि आप साध्य में व्याप्तिग्रह तथा उसी व्याप्तिविशिष्ट की पक्षधर्मता यानी पक्ष में रहना मानते हो, तो अनुमान प्रयोग ही व्यर्थ होगा। यतः पक्ष में साध्यवत्ताग्रह (साध्य का निश्चय) करने के लिए अनुमान का प्रयोग किया जाता है। यदि साध्यनिश्चय पूर्व से सिद्ध है। तो अनुमानप्रयोग करना व्यर्थ है। अतः साध्य में व्याप्तिग्रह तथा साधन में पक्षधर्मतागृह अनुमान का अङ्ग नहीं बन सकता। यतः व्याप्तिपक्षधर्मता का सामानाधिकरण्य उभयवादिमतसिद्ध है।

यदि आप हेतु के अधिकरण में रहने वाले अत्यन्ताभाव के प्रतियोगित्वाभाव का साध्य के साथ सम्बन्ध को व्याप्ति कहे, तो नहीं कह सकते। व्याप्ति का स्वरूप (यद्वन्निष्ठात्यन्ताभावप्रतियोगित्वविरहः साध्यस्य तत्त्वं व्याप्यत्वम्) है। अब यहाँ पर प्रष्टव्य है, कि उक्त व्याप्ति में यत् एवं तत् शब्द से क्या विवक्षित है। (प्रथम कल्प) मेयत्वादिस्वरूप विवक्षित है,

**अथ अविद्यमानविपक्षत्वे सति सपक्षे सत्त्वं मेयत्वादीनामभिधेयत्वादिव्याप्यत्वमिति मन्यसे। तन्न। अविद्यमानविपक्षत्वं नाम विपक्षाभावः। तथा च किं केवलान्वयिनि विपक्षः प्रमितो न वा। आद्ये**

---

व्याप्यत्वरूपो धर्ममात्रमभिधीयते, तदा मेयत्वस्य सर्वधर्मैर्व्याप्यतापत्तिः स्यात्। अयं भावः—तस्य भावो व्याप्यत्वमित्युक्तम्। यत्र यदि व्याप्यत्वं मेयत्वस्य धर्मः, तर्हि मेयत्वं व्याप्यं जातमेव। यच्च व्याप्यं तद्धि व्यापकेन व्याप्यते एवेति मेयत्वस्य व्याप्यरूपत्वेन घटत्वपटत्वादिसर्वधर्मैर्व्याप्यता प्रसज्येत। नास्ति च मेयत्वस्य व्याप्यत्वम्। तस्य व्यापकरूपत्वात्। तस्मांन्न प्राच्यः पक्षः क्षोदक्षमः। द्वितीयं निरस्यति—**द्वितीय इति**। तस्य मेयत्वादिसम्बन्धिनो विशेषधर्मस्य निर्णीतस्य अप्रतिपादनादनिरुक्तिः।

**भुवन—भूषण**संमतं मतं शङ्कते—**अथाविद्यमानेति**। विपक्षाभावे सति सपक्षे सत्त्वं यत्तदेव मेयत्वादिहेतूनामभिधेयत्वादिसाध्येन व्याप्यत्वम्। असंभवेन निराकुरुते—**तन्नेत्यादि**। विकल्पद्वयेऽपि दोषं दर्शयति—**आद्ये विपक्षेति**। यदि विपक्षः प्रमितस्तर्हि विपक्षस्याभावप्रतीतिर्बाधिता। यतो यो

---

कि (द्वितीयकल्प) कोई धर्मविशेष? प्रथम कल्प नहीं लिया जा सकता। यतः तत्वं व्याप्यत्वं (व्यास्ति) कहा वह हेतु स्वरूपातिरिक्त नहीं हो सकती। व्याप्तिमत् (व्याप्तिवाला) हेतु होता है। मेयत्वेन सकल हेतुओं में व्याप्तिगृहीत नहीं होती। प्रमेयत्वादि हेतुओं में प्रमेयत्वादि से अतिरिक्त कोई धर्मविशेष है, जिसे व्याप्ति माने इस में कोई प्रमाण नहीं है। तथा ऐसा धर्म वाणी द्वारा कथनीय ही नहीं है।

यदि यत् तत् शब्द का अर्थ मेयत्वादि ही लें, उसके भाव यानी धर्म को व्याप्ति कहे, तो नहीं कह सकते। इसमें भी दो कल्प है। प्रथम में मेयत्वमात्र को यत् तत् शब्द का अर्थ उसका भाव यानी धर्म व्याप्ति। अथवा द्वितीयकल्प मेयत्वादि में कोई धर्मविशेष है। जिसे यत् तत् शब्दार्थ कहे, उसके धर्म को व्याप्ति कहे। प्रथमकल्प नहीं हो सकता। मेयत्व तत् शब्दार्थ हुआ, उसका भाव मेयत्वत्व व्याप्ति हुई। मेयत्व व्याप्तिमत् यानी व्याप्य सामान्य होगा। जो सिद्धान्तविरुद्ध है। मेयत्व घटत्वादिसकलधर्मों का व्यापक होता है। उक्त के अनुसार व्याप्य होने लगेगा। द्वितीय कल्प भी मान्य नहीं है। यतः मेयत्वादि में मेयत्वादि से अतिरिक्त धर्म निर्वचनीय नहीं है। यदि केवलान्वयी साधन को मानने वाला विपक्ष के अविद्यमान

**विपक्षाभावप्रतीतेर्बाधितत्वेन व्याप्यत्वासिद्धिः। द्वितीयेऽपि विपक्षाप्रमितौ तदभावप्रमितेर्व्याप्यत्वासिद्धिः।**

**किञ्च विपक्षाभावस्यानुमित्यङ्गत्वे केवलव्यतिरेक्यन्वयव्यतिरेकिणोर्विद्यमानविपक्षयोरनुमितिजनकत्वाभावप्रसङ्गः। सपक्षे सत्त्वस्य चानुमिति-**

---

हि मानेन गृहीतः कथं तस्याभावः कर्तुं शक्यः। तस्माद्विपक्षाभावप्रतीतेरभावाव्द्याप्यत्वं व्याप्तिः, तस्या असिद्धिः। **द्वितीयेऽपीति**। यदि विपक्षो न प्रमितः, तदा प्रतियोगिप्रतीतेरभावाद्विपक्षाभावस्य अप्रमितेर्व्याप्यत्वासिद्धिः।

**भुवन.**—केवलान्वयिनि विपक्षाभावः किमप्रयोजकः प्रयोजको वा। आद्ये पक्षे यत्पूर्वमविद्यमानविपक्षत्वे सतीत्यादिलक्षणमभ्यधायि, तस्य लक्षणत्वासम्भवः। द्वितीयेऽतिप्रसङ्गः, तमेव दर्शयति—**किञ्च विपक्षेति**। यदि विपक्षाभावोऽनुमानाङ्गं, तदानीं केवलव्यतिरेकिणोऽन्वयव्यतिरेकिणश्च हेतोर्विपक्षसत्त्वेनानुमितिजनकत्वं न स्यात्। अनन्तरोक्तव्याप्यत्वलक्षणेऽविद्यमानविपक्षत्वं दूषयित्वा सपक्षे सत्त्वमपि दूषयति—**सपक्षे इति**। ननु यथान्वयव्यतिरेकिणि सपक्षसत्त्वस्य प्रयोजकत्वं, तथा केवलान्वयिन्यपि सपक्षसत्त्वस्य प्रयोजकत्वं भविष्यतीति पराभिप्रायमाशङ्क्याह—**एतेनेत्यादि**।

---

रहने पर सपक्ष के विद्यमान रहने पर मेयत्वादिहेतुओं का अभिधेयत्वादिसाध्य की सिद्धि में व्याप्यत्व (व्याप्ति) कहे, तो नहीं कह सकता। यतः अविद्यमानविपक्षत्व का अर्थ है, विपक्षाभाव। अब प्रश्न होता है, कि केवलान्वयी हेतु में विपक्ष प्रमित है, कि नहीं यदि विपक्ष प्रमित है, तो विपक्षाभाव की प्रतीति प्रतिबन्धित हो जायेगी। यद्वत्ता बुद्धि तदभाववत्ता बुद्धि की प्रबन्धिका होती है। अतः व्याप्ति ही नहीं बन पायेगी। विपक्ष के प्रमित न होने से तत्प्रतियोगिक अभाव भी नहीं प्रमित होगा। अतः द्वितीयकल्प में भी व्याप्ति नहीं बन पायेगी।

पुनश्च केवलान्वयी अनुमान का विपक्षाभाव अप्रयोजक है? कि प्रयोजक है? यदि अप्रयोजक है, तो अविद्यमानविपक्षत्व यानी विपक्षाभाव व्याप्ति का अङ्ग नहीं बन पायेगा। अतः उक्त व्याप्तिस्वरूप ही नहीं होगा। यदि विपक्षाभाव को व्याप्ति का प्रयोजक माने तो अनुमिति का अङ्ग होगा। तब तो केवलव्यतिरेकि अनुमान तथा अन्वयव्यतिरेकि बन ही नहीं पायेगे। यतः उक्त दोनों अनुमानों में विपक्ष व्याप्ति का प्रयोजक है। विपक्षाभाव

**जनकत्वे सपक्षरहितस्य केवलव्यतिरेकिणोऽनुमितिजनकत्वाभावप्रसङ्गः। एतेन अन्वयव्यतिरेकिण्यपि सपक्षसत्त्वापरपर्यायस्यान्वयस्यानुमितिजनकत्वं निरस्तम्।**

**तस्मात्साध्याभाववद्वृत्तित्वविरहो व्यतिरेकापरपर्यायो व्याप्यत्वमनुमानबीजमिति स्थिते केवलान्वयिनो व्याप्यत्वासिद्धिर्दुर्वरिति। तदिदं यथेष्टचारिण्या महाविद्यया संसर्गमनुभवतः केवलान्वयिनः प्राणान्तिकं**

---

एतावतान्वयव्यतिरेकिण्यपि हेतौ सपक्षसत्त्वापरपर्यायस्यावयस्य यदनुमितिजनकत्वं तन्निरस्तम्। इदमत्र तत्त्वम्। अन्वयव्यतिरेकिणि सपक्षसत्त्वस्य प्रयोजकत्वाभावात्केवलान्वयिन्यपि तस्य न प्रयोजकत्वम्। एतेन व्याप्यत्वलक्षणे सपक्षे सत्त्वमपि व्युदस्तं मन्तव्यम्।

**भुवन.**—परमतनिरासेन सिद्धं स्वमतमुपसंहरति—**तस्मात्साध्याभावेति।** साध्याभाववद्वृत्तित्त्वविरहो विपक्षवर्तनाभावो व्याप्यत्वं व्यतिरेकव्याप्तिरित्यर्थः—**केवलान्वयीति।** केवलान्वयिनो हेतोर्व्याप्यत्वं व्याप्तिस्तस्या असिद्धिर्दुर्वरित्यर्थः—**तदितं यथेष्टेति।** अत्रानुक्तोऽपि रूपकालङ्कारो यथेष्टचारिण्येतिविशेषणेन महाविद्याया अकुलस्त्रीत्वमारोपयति। तस्याश्च संसर्गे

---

प्रयोजक नहीं है। एवं सपक्ष सत्त्व को यदि अनुमिति का जनक मानते हैं। तो सपक्षरहित केवलव्यतिरेकि अनुमिति का जनक नहीं होगा। अन्वयव्यतिरेकि अनुमान में भी सपक्षत्व अपरपर्याय अन्वय को व्याप्ति का अङ्ग नहीं माना जा सकता। इस प्रकार केवलान्वयी अनुमान की व्याप्ति का खण्डन करते हुए, अपने सिद्धान्त का प्रतिपादन कर रहे हैं। साध्याभाववद्वृत्तित्वविरह साध्याभाववत् में हेतु का न रहना यानी विपक्ष में हेतु का अभाव व्यतिरेकि व्याप्ति ही अनुमान का बीज है। अतः केवलान्वयी हेतु में व्याप्तिगृह नहीं हो सकता। केवलान्वयी में विपक्ष तो होता नहीं तो हेतु का विपक्ष में अभाव यानी न रहना रूप व्याप्ति भी नहीं हो सकती।

अतः जो महाविद्यानुमान का स्वरूप अन्वयव्यतिरेकि में केवलान्वयी रूपता महाविद्याऽनुमान वादी मानता है। वह सम्भव नहीं है। यदि केवलान्वयी स्वरूप ही नहीं है। तो तद्घटितमहाविद्यानुमान भी सम्भव नहीं है। इसी को रूपक बनाकर ग्रन्थकार कह रहे है, कि पथेष्टचारिणी (कुलटा) व्यभिचारिणी महाविद्या से संसर्ग करने के कारण प्राणत्यागरूप प्रायश्चित्त महाविद्यानुमान वादी को करना होगा। महाविद्या निर्मूल होने से स्वेच्छाचारिणी है, उसका अनुगमन व्यभिचारिणी के साथ संगमन करने के समान है।

**प्रायश्चित्तम्। न च वैशेषिकादीनां केवलान्वयिनं निराकुर्वतामपसिद्धान्तः। सूत्रकारभाष्यकाराभ्यां क्वचिदपि तदव्युत्पादनात्। टीकाकारादीनां चास्माभिरनादरणात्। आदरणे वा तदीयकेवलान्वयिव्युत्पादनस्य परमतत्वेन व्याख्यानात्।।**

इति श्रीहरकिङ्करन्यायाचार्यपरमपण्डितभट्टवादीन्द्रविरचिते महाविद्या-
विडम्बने केवलान्वयिभङ्गो नाम द्वितीयः परिच्छेदः ।।२।।

---

प्राणत्यागरूपं प्रायश्चित्तं समञ्जसमेव। सूत्रकारादिपूर्वाचार्यव्युत्पादितकेवलान्वयिनो भङ्गे कथं न सिद्धान्तविरोधोऽत्राह—**न च वैशेषिकेति**। ग्रन्थकर्ता हि वैशेषिकः, तत्र वैशेषिकादीनां केवलान्वयिनं निराकुर्वतामपसिद्धान्त इति न च वाच्यमित्यर्थः—**तदव्युत्पादनादिति**। तस्य केवलान्वयित्वस्याव्युत्पाद-नात्—**टीकाकारादीनामिति**। टीकाकाराः **कन्दलीकिरणावल्यादि**टीकाकर्तारः। ननु तैर्व्युत्पादिताः समवायादय आद्रियन्ते, कथं तर्ह्यनादरणमित्याह—आदरणे वेति। तदीयं यत्केवलान्वयिव्युत्पादनं तस्य परमतत्वेन व्याख्यानादित्याशयः।

इति श्रीजिनशासनश्रीसोमसुन्दरसूरिशिष्यश्रीभुवनसुन्दरसूरिविरचितायां महाविद्याविडम्बनवृत्तौ
व्याख्यानदीपिकायां केवलान्वयिभङ्गव्याख्यानो नाम द्वितीयः परिच्छेदः समाप्तः।।



---

इसमें यदि पूर्वपक्षी आशङ्का करे कि यदि केवलान्वयी के स्वरूप में प्रमाण है, ही नहीं तो वैशेषिक लोग केवलान्वयी का खण्डन क्यों करते है। असत् वस्तु का निराकरण करना सिद्धान्तविरूद्ध है। उसमें कह रहे है, कि सूत्रकार तथा भाष्यकार कही पर भी केवलान्वयीस्वरूप का व्युत्पादन नहीं किया। टीकाकार ने व्युत्पत्ति की है, जिसे हम नहीं स्वीकार करते। इसमें भी यदि पूर्वपक्षी कहे, कि यदि स्वीकार नहीं करते तो उसके खण्डन में आपकी तत्परता क्यो है? उसमें कह रहे है, कि जो केवलान्वयी को मानते है। उसके मत में केवलान्वयी का स्वरूप क्या होगा। इतने मात्र में आदर है। अत: परमताभिमत केवलान्वयी स्वरूप का प्रतिपादन किया गया। इसी लिए महाविद्यानुमान को न स्वीकार करने पर भी परमतसिद्ध महाविद्या के स्वरूप को हमने प्रथमपरिच्छेद में भलीभाँति निरूपण किया है।

**यहाँ से उत्तर प्रदेश बाँदा जनपदान्तर्गत रमपुरवा ग्राम वास्तव्य श्रीमती रामावतारी व श्री रामरुचि त्रिपाठी के पुत्र व्याकरण वेदान्त आदि शास्त्रों के निष्णान्त विद्वान् पं. श्री पारसनाथ के शिष्य प्रो. रामकिशोर त्रिपाठी उपनाम चन्द्रिका प्रसाद त्रिपाठी विरचित महाविद्याविडम्बनम् ग्रन्थ के द्वितीय परिच्छेद की 'चन्द्रिका' भाषाटीका समाप्त हुई।**

**।। द्वितीयपरिच्छेद समाप्त ।।**

## ।। अथ तृतीयः परिच्छेदः ।।

**नमस्यामो दूरीकृतभवनभङ्गं भगवतो**
**वपुर्विश्वारम्भस्थितिलयनिदानं पुररिपोः ।**
**यदस्पृष्टं भोगैरपि दलितकामं करुणया**
**भवानीभ्रूभङ्गप्रणयकलहेभ्यः स्पृहयति ।।१।।**

**उपाधिव्याधिनिर्धूतमन्वयव्यतिरेकिणम् ।**
**मत्वोद्भिन्नमहाविद्याः शिवादित्यादितार्किकाः ।।२।।**

---

**भुवन**—कृतादिमध्यमङ्गलद्वयश्चरममङ्गलमाचष्टे—**नमस्याम इत्यादि।** वयं नमस्यामो नमस्कुर्मः। किं, वपुः। कस्य, पुररिपोः श्रीमहादेवस्य। किंभूतं वपुः—**दूरीकृतेत्यादि।** भवनमुत्पत्तिः, भङ्गो विनाशः। तौ दूरीकृतौ येन तत्तथा। एतावता शाश्वतमित्यर्थः। पुनः कीदृशं वपुः—**विश्वारम्भेत्यादि।** विश्वारम्भो निर्माणम्। स्थितिरवस्थानम्। लयो विनाशः तेषां निदानं कारणम्। यद्वपुर्भोगैरस्पृष्टं दलितकाममपि भवानीभ्रूभङ्गप्रणयकलहेभ्यः स्पृहयति। ननु यद्येवंविधं वपुस्तदा भवानीकटाक्षरागो विरुद्ध इत्याह—**करुणयेति।** एतावता नीरागोऽपि सन्करुणयेव गौरीमाद्रियत इत्यर्थः।।१।।

**भुवन.**—महाविद्याप्रवर्तकानां निराकरणं श्लोकद्वयेन प्रस्तावयति—**उपाधिति।** अन्वयव्यतिरेकिणं प्रयोगमुपाधिरूपव्याधिना कम्प्रं मत्वा ज्ञात्वा

---

पं. राम किशोर त्रिपाठी (उपनाम चन्द्रिकाप्रसाद त्रिपाठि) कृत
'चन्द्रिका' भाषाटीका

**याऽविद्या निखिलप्रपञ्चजननी हेतुः स्थितिध्वंसयोः**
**नित्यं ब्रह्म समाश्रिता हि रमते वृत्तिद्वयालिङ्गिता।**
**मिथ्याभूतमपि प्रवाहनियतं सर्वं जगत् सेवते**
**तत्संश्लेषमुपेत्य शक्तिविभवः शक्तीशनामा हरिः।।**

**नमस्याम**—उत्पत्तिविनाशरहित सास्वत (नित्य) तथा जगत् की उत्पत्ति स्थितिविनाश का कारणभूत भोगासक्ति से रहित एवं कामदेव को जिसने दमन कर दिया। भोगासक्त न रहते हुए तथा काम का दमन कर देने पर भी करुणावशीभूत होकर जो भगवती पार्वती के नेत्रभङ्गिमाजन्य प्रेमप्रपञ्च की स्पृहा (इच्छा) करता है। ऐसे पुररिपु भगवान् शङ्कर के शरीर को नमस्कार है।

**तेषामेष विशेषेण निराकरणसंभ्रमः ।**
**श्रीसिंहधर्माध्यक्षेण वादीन्द्रेण विधीयते ।।३।।**

**असिद्धविरुद्धानैकान्तिकसत्प्रतिपक्षकालात्ययापदिष्टाः पञ्च हेत्वाभासाः सूत्रकारादिभिर्व्युत्पादिताः।**

---

उद्भिन्नाः अन्तर्भूतण्यर्थत्वात्प्रकटिता महाविद्या यैस्ते उद्भिन्नमहाविद्याः **शिवादित्यादितार्किकाः**। अजायन्तेति क्रियाध्याहारः। अन्वयव्यतिरेकिणमुपाधिकदर्शितं ज्ञात्वा **शिवादित्यातार्किकैः** केवलान्वयित्वेन महाविद्याः श्रिता इत्यर्थः।।२।।

**भुवन.—तेषामिति।** तेषां **शिवादित्यादितार्किकाणां** वादीन्द्रेण श्रीसिंहनरेश्वरस्य धर्माधिकारिणा निराकरणं कियते इति संटङ्कः।।३।।

**भुवन.—असिद्धोऽपि द्वेधेति।** पक्षस्य यो हेतुधर्मो न स्यात्स पक्षधर्मत्वासिद्धो, यथा अनित्यः शब्दश्चाक्षुषत्वात् घटवदिति। व्याप्यत्वासिद्धश्च साधनस्य साध्येन यद्व्याप्यत्वं तेनासिद्धो व्याप्तिशून्य इत्यर्थः।

---

इसके बाद दो श्लोकों में महाविद्याप्रवर्तकाचार्यो के मत का निराकरण कर रहे हैं। ग्रन्थकार कह रहे हैं कि शब्द में अनित्य सिद्ध करना नैयायिकों के सामर्थ्य से वाहर था। जिस भी अनुमान का प्रयोग करते उसमें हम हेत्वाभास का उद्भावन कर देते। अतः अन्वयव्यतिरेकि अनुमान का परित्याग कर के अन्वयव्यतिरेकिमत् अनुमान में केवलान्वयिरूपतया महाविद्या का प्रयोग किया। अन्वयव्यतिरेकि अनुमान में उपाधि प्रतिवादी प्रदर्शित कर सकता है। इस भय से केवलान्वयी अनुमानप्रयोगरूप महाविद्या का आश्रय लिया। अन्यथा शब्दोऽनित्यः कार्यत्वात् घटवत् यह अनुमान शब्द में अनित्यत्व का साधक तो था ही। तो शिवादित्य आदि तार्किकों ने क्यों अन्वयव्यतिरेकि का परित्याग किया। उसका उत्तर है कि प्रवल प्रतिवादी के उपाधिभय से।।२।।

उन्हीं शिवादित्य आदि तार्किकों के मत का विशेषरूप से खण्डन मैं श्री सिंह धर्माध्यक्ष (श्री सिंहनरेश का धर्माधिकारी। वादीन्द्र (वादिश्रेष्ठ) कर रहा हूँ। विशेषेण तात्पर्य है, कि उस महाविद्या का स्वरूप उद्भावन पुरःसर खण्डन कर रहा हूँ।।३।।

उक्त महाविद्याऽनुमान में हेत्वाभासदोष प्रदर्शन के पूर्व हेत्वाभासों का उल्लेख कर रहे है। असिद्ध, विरुद्ध अनैकान्तिक, सत्प्रतिपक्ष, कालात्ययापदिष्ट, हेत्वाभास पाँच है। पुनश्च असिद्ध दो प्रकार का पक्षधर्मत्वासिद्ध (हेतु

**असिद्धोऽपि द्वेधा, पक्षधर्मत्वासिद्धो व्याप्यत्वासिद्धश्च। तत्र न यद्यपि महाविद्याहेतुः पक्षधर्मत्वासिद्धः, तथापि व्याप्यत्वासिद्धो भवत्येवेति व्युत्पादितं द्वितीयपरिच्छेदे।**

**किञ्च,**

**अथ नूतनतर्कज्ञमनःकुमुदचन्द्रमाः ।**
**महाविद्यातमःस्तोममुपाधिरुपढौकते ।।४।।**

---

औपाधिकव्याप्तिकश्च व्याप्यत्वासिद्धः। **तत्र न यद्यपीति**। यद्यपि महाविद्याहेतुः मेयत्वादिः पक्षे शब्दादौ वर्तनान्न पक्षधर्मत्वासिद्धः—**तथापीति**। तथापि व्याप्यत्वासिद्धो व्याप्तिशून्यो भवत्येवेति द्वितीयपरिच्छेदे प्रत्यपादि। व्याप्तिशून्यो व्याप्यत्वासिद्ध इति पुरापि प्रादर्शि।

औपाधिकव्याप्तिकोऽपि व्याप्यत्वासिद्धो भवतीति तदुपपादनायाह—**किंच। अथेत्यादि।** उपाधिरुपढौकते। कं? महाविद्यारूपतमःस्तोमम्। किंविशिष्टः उपाधिः—**नूतनेति**। नूतना ये तर्कज्ञास्तेषां मनांस्येव कुमुदानि तत्र चन्द्रमाः। वादिप्रयुक्तमहाविद्यानुमानादिखण्डनाच्चित्ताह्लादक इत्यर्थः। उपाधेश्चन्द्रत्वारोपणान्महाविद्यातमःस्तोमनिराकरणं युक्तमेव।।४।।

---

का पक्ष में न रहना) तथा व्याप्यत्वासिद्ध, उक्त असिद्धों में से पक्षधर्मत्वासिद्ध दोष महाविद्याऽनुमान में भले न रहे, परन्तु व्याप्यत्वासिद्ध तो है ही। पक्षधर्मत्वासिद्ध इस लिए नहीं है, यतः महाविद्या में हेतु मेयत्व है। मेयत्व धर्म केवलान्वयी है। यतः मेयत्व का कही पर अभाव नहीं है। तो पक्ष में भी मेयत्व वृत्ति ही है। अतः पक्षधर्मत्वासिद्ध नहीं होगा। परन्तु व्याप्यत्वासिद्ध तो है ही। व्याप्यत्वासिद्ध का जब यौगिक अर्थ लेते है। तो व्याप्तिशून्य है, व्याप्य (व्याप्तिमत्) व्याप्यत्व (व्याप्ति) असिद्ध यानी रहित। परिमाषिक अर्थ है, सोपाधिकत्व हेतु व्याप्यत्वासिद्ध। दोनो प्रकार के व्याप्यत्वासिद्ध महाविद्याऽनुमान में है। यतः द्वितीयपरिच्छेद में केवलान्वयी धर्म में हेतुता का निरास किया है, अतः व्याप्तिशून्य तो है ही। उक्त महाविद्याऽनुमान में हम उपाधि भी प्रदर्शित करने जा रहे है। अतः परिभाषितव्याप्यत्वासिद्ध भी है। औपाधिकव्याप्यत्वासिद्ध भी महाविद्याऽनुमान है। यह चतुर्थश्लोक में दर्शाया जा रहा है।

अथ नूतन नवीनतार्किकों के मनोरूप कुमुद को प्रकाशित करने वाली चन्द्र के समान उपाधि महाविद्यातम समुदाय को दूर कर रही है।

**यो भङ्गिस्थनिवृत्तिमत्त्वरहितो यद्वर्जिते मेयता**
**मेयत्वे श्रुतिगोचरत्वविरहः स स्यादुपाधिर्ध्रुवम् ।**

**भङ्गो विनाशः। स विद्यते यस्य असौ भङ्गी। अनित्य इत्यर्थः। तत्र स्थिता निवृत्तिरत्यन्ताभावः। तद्वत्त्वं तत्प्रतियोगित्वं। तेन रहितः इत्यर्थः। तदनेन अनित्यत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वरहितत्वं अश्रावणत्वादीनामनित्यत्वरूपसाध्यव्यापकत्वं दर्शितम्। यद्वर्जिते मेयतेति। येन**

---

अथोपाधिदोषोद्भावनाय पद्यमाह—**यो भङ्गिस्थेत्यादि।**

पूर्वार्धं व्याचष्टे—**भङ्गो विनाश इति। तद्वत्त्वं तत्प्रतियोगित्वमिति।** नन्वत्र तद्वत्त्वं तत्प्रतियोगित्वं कथं, यतो भङ्गिस्थनिवृत्तिमन्तोऽनित्याः पदार्थाः। कथं तर्हि तेषां प्रतियोगित्वम्। उच्यते। सर्व वस्तु हि स्वनिष्ठात्यन्ताभावप्रतियोगि। न हि घटे घटोऽस्ति आत्माश्रयात्। तस्माद्घटो घटनिष्ठात्यन्ताभावप्रतियोगी स्यादेवेति तद्वत्त्वं तत्प्रतियोगित्वं समीचीनमेव। **तेन रहित इति।** अनित्यपदार्थेषु उपाधेरत्यन्ताभावो नास्तीति परमार्थः—**तदनेनेति।** अनित्यत्ववन्तोऽनित्यपदार्थाः तेषु निष्ठो योऽत्यन्ताभावस्तस्य यत्प्रतियोगित्वं, तेन यद्रहितत्वं, तदश्रावणत्वादीनामुपाधीनामनित्यत्वरूपसाध्यस्य व्यापकत्वं दर्शितम्। इदमत्र हृदयम्। यत्र यत्रानित्यत्वं तत्र तत्राश्रावणत्वं यथा घटादावित्येवमुपाधेः साध्यव्यापकत्वम्। **तदनेनेत्यादि।**

---

**भाव**—उक्त महाविद्या को सोपाधिक सिद्ध कर के व्याप्यत्वासिद्ध हेत्वाभास दे रहा हूँ। उक्त उपाधि की प्रसंशा में कहा है, कि मेरे द्वारा दी जानी वाली उपाधि स्वच्छ निर्मलचन्द्र के समान है। चन्द्र जिस प्रकार कुमुद पुष्प का प्रकाश एवं तम का निवर्तक है। उसी प्रकार मेरी उपाधि नवीन तार्किकों द्वारा समादृत होने से उनके मन को प्रसादित करने वाली है। तथा महाविद्या ही महान् तम उसकी निवृत्ति भी मेरी उपाधि कर रही है।।४।।

शब्द में अनित्यत्व साधक हेतु कैसे सोपाधिक है। उसमें कौन सी उपाधि है। उसी को स्पष्ट कर रहे हैं। यो उपाधि भङ्गिस्थ=अनित्ववन्निष्ठात्यन्ताभावप्रतियोगित्व रहित श्रुतिगोचरत्वाभाव (अश्रावणत्व) मेयत्व हेतु में उपाधि है। यतः अश्रावणत्व स्वस्वेतरवृत्तित्वानधिकरणानित्यनिष्ठाधिकरणत्व रूप साध्य का व्यापक है। उक्त साध्य केवलान्वयी होने से सर्वत्र विधमान है। अश्रावणत्व पक्षीभूतशब्द से इतर में है। सपक्ष में ही साध्यव्यापकत्व

**अश्रावणत्वेन वर्जिते अश्रावणत्वात्यन्ताभाववति शब्दत्वादौ मेयतेत्यर्थः। तदनेन मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वमश्रावणत्वादीनां मेयत्वादि-साधनाव्यापकत्वं दर्शितम्। सः श्रुतिगोचरत्वविरहः श्रवणेन्द्रियग्राह्य-त्वात्यन्ताभावः। मेयत्वे साधनाभिमते, उपाधिर्भवेदित्यर्थः।**

**अयमभिप्रायः। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वम्। साध्यं च तदेव यद्विप्रतिपन्नं प्रति पक्षे मेयत्वेन बोधयितुमभिप्रेतम्। अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं इत्यत्र अनित्यत्वं च परं**

---

तत्तस्मात्कारणात् अनेन अनन्तरोक्तेन मेयत्ववन्तो मेयभावाः तेषु निष्ठो योऽत्यन्ताभावः तस्य यत्प्रतियोगित्वं तदश्रावणत्वादीनां मेयत्वादिसाधन-स्याव्यापकत्वमित्यर्थः। एतावता मेयत्वसाधनवत्स्वपि अश्रावणत्वोपाधिर्नास्ति। तथा च यत्र यत्र मेयत्वं तत्र तत्र अश्रावणत्वं नास्ति, शब्दत्वादौ मेयत्वसत्त्वेऽप्यश्रावणत्वाभावादित्यश्रावणत्वस्य साधनाव्यापकत्वम्। **श्रव-णेन्द्रियेति।** अश्रावणत्वमित्यर्थः।

**भुवन.**—अश्रावणत्वं नोपाधिः, नित्ये गगनादौ अश्रावणत्वो-पाधिसद्भावेऽप्यनित्यत्वसाध्याभावेन समव्याप्तिकत्वाभावादित्याशङ्क्याह— **अयमभिप्रायः इति।** अत्र समव्याप्तिर्न विवक्षितेतिभावः। किं तत्साध्यं यस्य व्यापक उपाधिरत्राह—**साध्यं चेति।** पक्षे मूलानुमानपक्षे शब्दे इत्यर्थः। **अयं**

---

उपाधि में गृहीत होता है। पक्ष में तो साध्यसन्दिग्ध है। मेयत्व हेतु तो पक्षीभूत शब्द में भी है। परन्तु उसमें अश्रावणत्व नहीं है। शब्द श्रुतिविषय होने से श्रावणत्ववान् ही है। अतः अश्रावणत्व साध्य का व्यापक होता हुआ साधन का अव्यापक है। यही स्वस्वेतरवृत्तित्वानधिकरणानित्यनिष्ठाधिकरणत्वादिरूप साध्य के साधक मेयत्व हेतु में उपाधि है। इस प्रकार मेयत्व हेतु सोपाधिकत्वेन भी व्याप्यत्वासिद्ध है।

पूर्वपक्षी यदि कहे कि उपाधि समव्याप्तिक होती है। समव्याप्ति का लक्षण है, व्याप्यत्वे सति व्यापकत्वम् यत्र साध्यं तत्र उपाधिः यत्र उपाधिस्तत्र साध्यम्, जहाँ पर साध्य है वहाँ उपाधि है। जहाँ पर उपाधि है वहाँ साध्य है। समव्याप्तिक यदि उपाधि न माने तो पक्षेतरत्व भी उपाधि होने लगेगा। यतः जिन सपक्षों में साध्य है, उन्ही में पक्षेतरत्व भी है। हेतु पक्ष में भी है, वहाँ पर पक्षेतरत्व नहीं है। अतः सपक्षो में साध्य का व्यापक तथा

**प्रति पक्षे मेयत्वेन बोधयितुमभिप्रेतम्। तस्मादनित्यत्वरूपसाध्यव्यापको मेयत्वादिसाधनाव्यापकः श्रोत्रग्राह्यात्यन्ताभावः उपाधिर्भवत्येव।**

**अथ साध्यव्यापकः साधनाव्यापक इत्यत्र साध्यपदेन व्यापकत्वाभिमतं विवक्षितम्। प्रकृते च पक्षीकृतशब्दतदितरवृत्तित्व-रहितानित्यनिष्ठाधिकरणत्वं व्यापकम्। न च तस्य श्रावणत्वात्यन्ताभावो व्यापकः। पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्ववत् शब्द-**

---

**शब्दः स्वस्वेतरेत्यादि।** उपलक्षणं चेदम्। तेनात्र अन्यान्यपि पूर्वोक्त-महाविद्यानुमानानि मन्तव्यानि।

**भुवन.**—अत्र महाविद्यावादी शङ्कते—**अथ साध्येति।** व्यापकत्वे-नाभिमतं व्यापकत्वाभिमतमित्यर्थः। **प्रकृते चेति।** प्रकृते प्रस्तुते महाविद्यानुमाने पक्षीकृतेत्यादिकं व्यापकं साध्यं न्यस्तम्। **न च तस्येति।** न च तस्य महाविद्यासाध्यस्य स्वस्वेतरेत्यादिकस्य श्रावणत्वात्यन्ताभावोऽश्रावणत्वो-पाधिर्व्यापकः। हेतुमाह—**पक्षीकृतेति।** पक्षीकृतशब्देत्यादिमहाविद्यासाध्य-सहितं यच्छब्दत्वादि तत्र निष्ठो योऽत्यन्ताभावस्तस्य प्रतियोगित्वात् अश्रावणत्वोपाधेरित्यर्थः। एतावता महाविद्यासाध्यवति शब्दत्वेऽश्रावणत्व-स्याभावाद्यत्र महाविद्यासाध्यं तत्रोपाधिरित्युपाधेः साध्यव्यापकत्वं नास्ति। फलितमाह—**तेन साध्येति।** आचार्यो दूषयति—**तन्नेति। व्यापकत्वेति।** व्यापकत्वाभिमतं साध्यमित्यर्थः **किंवा प्रकृतसाध्यसाधनेति।** प्रकृतसाध्य-व्यापकः प्रकृतसाधनाव्यापक उपाधिरिति विशेषलक्षणं वा विवक्षितमिति भावः।

---

पक्ष में साधन का अव्यापक पक्षेतरत्व उपाधि हो जायेगी। यदि पक्षेतरत्व को उपाधि मान लें तो कोई भी अनुमिति नहीं होगी। यतः पक्षेतरत्व उपाधि सकल अनुमानों में सम्भव है। अतः समव्याप्तिक उपाधि होती है। जो अश्रावणत्व में सम्भव नहीं है। यतः अश्रावणत्व नित्यपदार्थों में भी है। परन्तु वहाँ पर अनित्यत्वरूप साध्य नहीं है। उक्त पूर्वपक्षी की आशङ्का का निराकरण करते हुए ग्रन्थकार कह रहे है।

उपाधि का लक्षणं 'साध्यव्यापके सति साधनाव्यापकत्वम्' जो साध्य का व्यापक होता हुआ साधन का अव्यापक हो उसे उपाधि कहते है। उपाधि को साध्य के समव्याप्तिक होना औत्सर्गिक नियम है। यदि कोई बाधक

**त्वादिनिष्ठात्यन्ताभावप्रतियोगित्वात्। तेन साध्यव्यापकताभावान्नोऽयमुपाधिरिति मन्यसे। तन्न। किं व्यापकत्वाभिमतव्यापकः साधनाव्यापक इत्युपाधिसामान्यलक्षणं, किंवा प्रकृतसाध्यसाधनसम्बन्धोपाधिलक्षणम्। नाद्यः। व्याघातात्। यत्किञ्चिद्व्यापकत्वाभिमतव्यापकस्य स्वात्मादिकिञ्चित्साधनव्यापकत्वेन साधनाव्यापकत्वानुपपत्तेः। नापि द्वितीयः। पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वव्यापकमेयत्वाव्यापकस्य भवद्भिरनङ्गीकाराल्लक्ष्यलक्षणयोरप्यसिद्धेः, सिद्धौ वा सोपाधित्वस्य दुर्वारत्वादिति।**

---

आद्यं दूषयति—**नाद्यः इति**। व्याघातं स्पष्टयति—**यत्किञ्चिद्व्यापकेति**। व्यापकं च तदभिमतं च व्यापकाभिमतं साध्यं यत्किञ्चिदनित्यत्वादि, तद्व्यापकस्य स्वात्मादि यत्किञ्चित्साधनमश्रावणत्वादिरूपमेव, तस्य व्यापकत्वादुपाधेः साधनाव्यापकत्वानुपपत्तिः। स्वात्मादीत्यत्र स्वात्मशब्दः पूर्वोक्ताश्रावणत्वोपाध्यपेक्षः। अयमाशयः—घटादयो नित्याः अश्रावणत्वादात्मादिवदित्याद्यनुमाने नित्यत्ववादिना कृते योऽश्रावणत्वादिर्हेतुः, स एतदुपाधिरूपः एवेत्यश्रावणत्वाद्युपाधिरेतस्य साधनस्य व्यापक एवेति साधनाव्यापकत्वं नोपद्येतेत्यर्थः। द्वितीयमुत्थापयति—**नापि द्वितीय इति**। **पक्षीकृतशब्देत्यादि**। साध्यव्यापकस्य मेयत्वसाधनाव्यापकस्योपाधेर्भवद्भिरस्वीकाराल्लक्ष्यलक्षणयोः, लक्ष्य उपाधिः, लक्षणं प्रकृतसाध्यव्यापक इत्यादिकं विशेषलक्षणं, तयोरप्यसिद्धेः। लक्षणत्वस्वीकारे तु तस्योपाधित्वमेव स्यादित्याह—**सिद्धौ वेति**।

---

न हुआ तो उपाधि तथा साध्य में परस्पर व्याप्यव्यापक भाव भी रहे। अब विचारणीय यह है, कि उक्त स्थल में साध्य स्वरूप क्या है? जिसकी व्यापक तथा मेयत्व रूप हेतु की अव्यापक अश्रावणत्व को उपाधि मान रहे है। तथा जिसके साथ उपाधि को समव्याप्तिक बता रहे है। उक्त स्थल में साक्षात् अनित्यत्व को साध्य नहीं बनाया जिससे साध्य और उपाधि में समव्याप्तिक का विरोध हो। अपितु स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व साध्य है। वह पक्षेतर सकल में उसी प्रकार रहता जिस प्रकार अश्रावणत्व पक्षेतर सकल में रहता अतः उपाधि तथा साध्य की समव्याप्ति भी बन जायेगी। पक्ष में उक्त साध्य की सिद्धि अनित्यत्व के बिना सम्भव नहीं है। अतः परम्परया पक्ष में अनित्यत्व की सिद्धि मानी जाती है।

**अथ महाविद्याविरोधिनामपि साध्यव्यापकः साधनाव्यापकः इत्युपाधिसामान्यलक्षणं वा विवक्षितम्। उभयथापि पूर्वदोषापत्तिरिति मन्यसे। तन्न। अस्माभिः साध्यपदेन पक्षनिष्ठतया विप्रतिपन्नं प्रति प्रतीत्यपर्यवसानेन ज्ञाप्यस्यानित्यत्वस्य प्रकृतस्य विवक्षितत्वात्। तेन अनित्यत्वव्यापको मेयत्वाव्यापकः इति प्रकृतोपाधिविशेषलक्षणम्।**

**कथं पुनरस्य दोषत्वमिति चेत्। अश्रावणत्वव्यापकनिवृत्तौ**

---

**भुवन.**—चोद्यपरिहारसाम्यरूपया प्रतिबन्द्या परः शङ्कते—**अथ महाविद्येति।** महाविद्याविरोधिनां भवतामपि साध्यव्यापकेत्यादिविकल्पयोः पूर्वदोषः स्यादित्यर्थः। ग्रन्थकारः प्रत्युत्तरयति—**तन्नेति।** अस्माभिः साध्यपदेन महाविद्यासाध्यं न विवक्षितं, किन्तु पक्षे शब्दादौ निष्ठतया विप्रतिपन्नं प्रतिवादिनं प्रति प्रतीत्यपर्यवसानेन अनित्यत्वं विना साध्यप्रतीतिर्न स्यादित्यपर्यवसानेन ज्ञाप्यमनित्यत्वं विवक्षितम्। एतावता किमुक्तं भवतीत्यत आह—**तेनेत्यादि।** प्रकृतोऽधिकृतो य उपाधिरश्रावणत्वादिरूप इति भावः।

**भुवन.**—आशङ्कते—**कथमिति।** अस्योपाधेरित्यर्थः। आचार्यः प्रत्याचष्टे—**अश्रावणत्वेति।** अश्रावणत्वं यः उपाधिर्व्यापकस्तस्य निवृत्तावनित्यत्वं

---

अब यदि महाविद्यानुमानवादी आशङ्का करे, कि उपाधि लक्षण 'साध्यव्यापकः साधनाव्यापकः घटक साध्यपद का अर्थ व्यापक माने तो प्रकृत अनुमान का साध्य स्व (पक्षीकृतशब्द) स्वेतर (शब्देतर) वृत्तित्वरहिता-नित्यनिष्ठाधिकरणत्वरूपव्यापक, उसका व्यापक उपाधिरूपत्वेन विवक्षित अश्रावणत्व (श्रावणत्वाभाव) नहीं होगा। व्यापक वही होता है, जो व्याप्य के अधिकरण में रहने वाले अभाव का अप्रतियोगी हो। उपाधि साध्य की व्यापक होती है, अतः उपाधिको साध्य के अधिकरण में रहने वाले अभाव का अप्रतियोगी होना चाहिए। अश्रावणत्व रूप उपाधि तो साध्याधिकरणवृत्ति अभाव का प्रतियोगी हो जा रही है। यतः उक्त साध्य का अधिकरण नित्यानित्य सकल पदार्थ होने के कारण शब्दवृत्तिधर्मशब्दत्वादि भी होगें। उनमें अश्रावणत्वाभाव विद्यमान है। उसका प्रतियोगी ही अश्रावणत्व होगा। यतः शब्द के समान शब्दवृत्तिधर्म भी श्रवणेन्द्रियविषय होने से श्रावणत्ववत् है। अतः श्रावणत्वाभाव न होने से अश्रावणत्व शब्दत्ववृति अभाव का प्रतियोगी ही होगा। अप्रतियोगी होता तो व्यापक कहलाता। इस प्रकार अश्रावणत्व साध्य का व्यापक न होने के कारण उपाधि नहीं हो सकता।

**अनित्यत्वव्याप्यनिवृत्तेरावश्यकत्वेन पक्षीकृतशब्दे एव मेयत्वपक्षीकृतशब्द-तदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वयोर्व्याप्तिभङ्गादित्यवेहि। इदमेव चान्यत्राप्युपाधिदूषणत्वबीजम्।**

**यद्वा स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं अनित्यत्वेन विशेष्य अश्रावणत्वमुपाधिर्वक्तव्यः। तथा हि–यत् एतच्छब्दैतच्छब्देतरनिष्ठत्व-**

---

साध्यरूपं व्याप्यं निवर्तत एव। तथा हि—यत्र यत्र अनित्यत्वं तत्र तत्र अश्रावणत्वं यथा घटादौ। यत्राश्रावणत्वं न स्यात्तत्रानित्यत्वमपि न, यथा शब्दत्वे नित्यत्वेन वादिप्रतिवादिनोः संमते। एतावता उपाधिर्निवर्तमानः साध्यं गृहीत्वा निवृत्तः। किं तर्हीत्याह—**पक्षीकृतशब्दे इति।** पक्षीकृतशब्दे एव यन्मेयत्वसाधनं पक्षीकृतेत्यादिमहाविद्यासाध्यं च तयोर्व्याप्तिभङ्गात्। अयमर्थः। उपाधिधर्मो व्याप्तिः साधने चकास्ति, जपापुष्पधर्मो लौहित्यं स्फटिकोपल इवेत्युपाधिना साध्यसाधनयोर्व्याप्तिभङ्गः। **इदमेव चेति।** अन्यत्राप्यनुमानेषूपाधेर्दूषणत्वमेवमेवेति भावः।

**भुवन.**—प्रकारान्तरेणोपाधिं व्युत्पादयति—**यद्वा स्वस्वेतरेति।** स्वस्वेतरेत्यादिमहाविद्यासाध्यमनित्यत्वेन विशिष्टं कृत्वा अश्रावणत्वमुपाधिर्वक्तव्यः। एतदेवोपाधेः साध्यव्यापकत्वदर्शनपूर्वकं दर्शयति—**तथा हीति।** यदेतच्छब्देत्यादिमहाविद्यासाध्यवत्त्वे सति अनित्यं तदश्रावणं, यथा

---

इस अशङ्का के समाधानाभिप्राय से महाविद्या का खण्डन करने वाला पूर्वपक्षवादी के उपाधिस्वरूप में दो कल्पों का उद्भावन कर दोनों कल्पों का खण्डन करते हुए उक्त उपाधिस्वरूप जिसका अश्रावणत्व में समन्वय नहीं होता का खण्डन कर रहे हैं।

(१) आप व्यापकत्वेन अभिमत साध्य का व्यापक, साधन का अव्यापक उपाधिसामान्यलक्षण मान रहे हैं। (२) अथवा प्रकृत साध्य साधन सम्बन्ध को उपाधि अर्थात् प्रकृत साध्यव्यापक प्रकृतसाधन का अव्यापक उपाधि कह रहे हैं। प्रथम कल्प व्याघातदोषयुक्त होने से नहीं मान्य है। यदि सामान्य साध्यव्यापक साधनाव्यापक उपाधि कहें तो यत्किञ्चित् साध्यरूपेण अनित्यत्व को लेंगे। उसका व्यापक भी अनित्यत्व हो जायेगा। यतः स्व का स्वव्यापक होता है। व्यापक का अर्थ है। स्वाधिकरणवृत्ति अत्यन्ताभाव का अप्रतियोगी। अनित्यत्वाधिकरण अनित्य में अनित्यत्व का अत्यन्ताभाव

**रहितानित्यनिष्ठाधिकरणत्वे सति अनित्यं, तत् अश्रावणमिति साध्यव्यापकत्वम्। अश्रावणत्वं च मेयत्ववत् शब्दत्वादिनिष्ठात्यन्ताभावप्रतियोगीति साधनाव्यापकम्। तेन भवत्युपाधिः। न चाभिप्रेतसाध्यव्यापकस्य विशेषितसाध्यव्यापकस्य चोपाधित्वेऽतिप्रसङ्गः। एवंविधोपाधिमतामनुमानत्वानङ्गीकारात्। तद्रहितेषु च स्वतः। एवातिप्रसङ्गनिवृत्तिरिति। अन्यथा व्यापकत्वाभिमतसाध्यव्यापकस्यापि उपाधित्वे प्रवर्तमानस्यातिप्रसङ्गस्य कः शास्ता इति।**

---

घटादि। उपाधेः साध्यव्यापकतां प्रदर्श्य साधनाव्यापकतामाह—**अश्रावणत्वं चेति।** मेयत्ववद्यच्छब्दत्वादि तत्र निष्ठो योऽत्यन्ताभावस्तस्य प्रतियोगि अश्रावणत्वम्। एतावता मेयत्वसाधनवति शब्दत्वादावश्रावणत्वरूपोपाधेरत्यन्ताभावः। शब्दे मेयत्व सद्भावेऽप्य श्रावणत्वस्य असद्भावात् आशङ्कापूर्वं परिहरति—**च चाभिप्रेतेति।** अभिप्रेतसाध्यमनित्यत्वम्, विशेषितसाध्यं महाविद्यासत्कम्। हेतुमाह—**एवंविधेति।** एवंविधोपाधिमतामनुमानानामित्यर्थः। **तद्रहितेष्विति।** एवंविधोपाधिरहितेषु स्वयमेवातिप्रसङ्गनिवृत्तेः। **अन्यथेति।** एवंविधोपाधिरहितानुमानेष्वपि अतिप्रसङ्गकरणे। **व्यापकत्वाभिमतेति।** व्यापकत्वेनाभिमतं मुख्यं यत्साध्यमग्निमत्त्वादि तव्द्यापकस्याध्युपाधित्वेऽतिप्रसङ्गस्य कः शास्ता शिक्षयिता। अयमभिप्रायः—कस्मिंश्चिदनुमाने सत्योपाधावपि केनाप्युद्भावितेऽतिप्रसङ्गः कथं निवार्यः।

---

नहीं होता। अनित्यत्व का अनित्यत्व व्यापक हो गया साधन सामान्य से अश्रावणत्व को लेंगे अनित्यत्व अश्रावणत्व का अव्यापक नहीं होगा। यतः अश्रावणत्ववत् रसादि में अनित्यत्व का अभाव नहीं रहता।

व्याघातदोष इस लिए है, कि जिस सामान्यसाध्यव्यापक सामान्यसाधनाव्यापक के अभाव होने से अश्रावणत्व को उपाधि नहीं मान रहे हैं। उसी अश्रावणत्व को घटादयो नित्या अश्रावणत्वात्[1] स्थल में उपाधि माना गया है। यतः अश्रावणत्व नित्यत्व का व्यापक है। तथा स्व (अश्रावणत्व) का अव्यापक है। स्व स्व का जिस प्रकार व्यापक होता है। उसी प्रकार स्व स्व का अव्यापक भी होता है। स्वाव्यापक यानी व्याप्य का अर्थ है, स्वात्यन्ताभाववत् अवृत्ति। अश्रावणत्व भी स्वात्यन्ताभाववत् अश्रावणत्वात्यन्ताभाववत् में नहीं रहता। अतः अश्रावणत्व नित्यत्वसाध्य का व्यापक तथा साधन (अश्रावणत्व) का अव्यापक होने से उपाधि माना जाता है।

**ननु अत्र अयं शब्दः पक्षः। एतद्व्यतिरिक्तं च सर्वं सपक्षः। तेन विपक्षरूपव्यावर्त्याभावात् अश्रावणत्वस्य पक्षेतरत्वमित्यत आह—**

**"शब्दत्वादि निवर्त्यमस्ति न ततः पक्षेतरत्वभ्रमः" इति। यत् विप्रतिपन्नं प्रति पक्षनिष्ठतया वादिना साध्यते तत्साध्यम्। तदभाववांश्च विवक्षः उपाधेर्व्यावर्त्यः। तथाविधश्च अश्रावणत्वस्य शब्दत्वादिरेव। तेन व्यावर्त्यसत्वान्न पक्षेतरत्वभ्रान्तिः कर्तव्या।**

---

**भुवन.**—श्लोकतृतीयपादावताराय आशङ्कां कुरुते—**नन्वत्रेति। पक्षेतरत्वमिति।** विमता हिंसा अधर्मसाधनं हिंसात्वात् म्लेच्छहिंसावदित्यत्र निषिद्धत्वमुपाधिः। अस्योपाधेः संध्यावन्दनादिर्विपक्षो व्यावर्त्यः। संध्यावन्दनादौ निषद्धत्वाभावात्। अत्र च महाविद्यायां विपक्षस्यैवाभावाद्विपक्षव्यावर्तनाभावेन पक्षः एव व्यावर्त्योऽस्ति। तथा चोपाधेः पक्षेतरत्वं दोषः। **शब्दत्वादीति।** अत्र शब्दत्वाद्युपाधेर्निवर्त्त्यमस्ति। यतोऽत्राश्रावणत्वमुपाधिः। स च शब्दत्वादेर्विपक्षाव्यावृत्त एव, शब्दत्वेऽश्रावणत्वाभावादित्युपाधेः शब्दत्वादिविपक्षो व्यावर्त्यः। तस्मात्पक्षेतरत्वभ्रमो न कार्य इत्याशयः। श्लोकतृतीयपादं व्याख्याति। **यत् विप्रतिपन्नमिति।** विप्रतिपन्नं प्रतिवादिनं प्रति

---

परन्तु अश्रावणत्व न तो साध्यसामान्य का व्यापक है। न तो साधन सामान्य का अव्यापक है। आप द्वारा अभिमत उपाधिलक्षण के न रहने पर भी उपाधि मानी जाती है। अतः व्याघातदोष साध्यसामान्यव्यापक साधनसामान्य अव्यापक रूप लक्षण में है।

द्वितीयकल्प में दोष देते हुए ग्रन्थकार कह रहें कि यदि प्रकृत साध्यव्यापक प्रकृतसाधनाव्यापक उपाधिलक्षण मान कर अश्रावणत्व में उपाधिलक्षण का अभाव कह रहें हैं। तो नहीं कह सकते, यतः आप उक्त अनुमान को केवलान्वयी माना है। उक्त साध्यव्यापक तथा उक्त साधनाव्यापक यदि उपाधिलक्षण है, तो जिस को भी उपाधित्वेन स्वीकार करेंगे उसमें लक्षण का समन्वय ही नहीं होगा। यदि लक्ष्य में उक्त उपाधिलक्षण का समन्वय करें तो वही उपाधि हो जायेंगी।

यदि आप कहो कि साध्यसामान्यव्यापक साधनसामान्य अव्यापक उपाधिसामान्यलक्षण तथा प्रकृत साध्यव्यापक प्रकृतसाधनाव्यापक उपाधिविशेषलक्षण, जब दोनो दूषित है, तो किस उपाधिलक्षणलक्षित को आप

**यत् वादिनो व्यापकत्वेनाभिमतं तदभाववान् विपक्षः उपाधिव्यावर्त्यो न त्वन्य इति चेत्। न। सर्वत्र विप्रतिपत्तिगोचरसाध्याभाववतो**

---

यदनित्यत्वादि पक्षे शब्दादौ निष्ठतया वादिना साध्यते तत्साध्यम्। तस्य साध्यस्याभावो नित्यत्वं, तद्वांश्च नित्यो विपक्षः। **उपाधेर्व्यावर्त्य इति।** यत्र कुत्राप्युपाधिः स्यात्, स विपक्षे पक्षे च वर्तमानो न विलोक्यते। तथा च सति तस्योपाधेर्विपक्षः पक्षश्च व्यावर्त्यो भवतीति सर्वत्रोपाधेः रीतिः यत्र च विपक्षो व्यावर्त्यो न भवेत्तत्र केवलपक्षस्यैव व्यावर्तनादुपाधेः पक्षेतरत्वं दोषः। अत्र च तथा नाशङ्कनीयम्। शब्दत्वादिविपक्षादश्रावणत्वोपाधेर्व्यावृत्तत्वादि-त्यर्थः। नामग्राहमुपाधिव्यावर्त्यमाह—**तथाविधश्चेति।**

**भुवन.**—महाविद्यावादी शङ्कते—**यद्वादिनो व्यापकेति।** व्यापकत्वेन साध्यत्वेनाभिमतं महाविद्यासाध्यं स्वस्वेतरेत्यादिरूपं तदभाववान्विपक्षः

---

उपाधि कहोगे। उसके प्रत्युन्तर में महाविद्यानुमान में उपाधि कहने वाला कह रहा है, कि हम साध्यपद से महाविद्या के साध्य को नहीं लेते। अपितु पक्षशब्द में विवादास्पद अनित्यत्व को लेते हैं। जो अन्यत्र सिद्ध है। यतः उक्त महाविद्या के साध्य की सिद्धि भी अनित्यत्व के विना अनुत्पन्न है। अतः महाविद्यानुमान से ज्ञाप्य प्रकृत अनुमान में साध्य पद से अनित्यत्व को लेते हैं। उसका व्यापक तथा ज्ञेयत्व आदि का अव्यापक अश्रावणत्व हो जायेगा। महाविद्याऽनुमान में उपाधिदोष देने वाला कह रहा है।

प्रकृत अनुमान में यदि अश्रावणत्व को उपाधि कहा जाय तो कोई दोष नहीं। अर्थात् उक्त महाविद्यानुमान में अश्रावणत्व उपाधिसकल दोषों से रहित है। उपाधिरूपव्यापक के निवृत्ति होने पर साध्यरूपव्याप्य की भी निवृत्ति होनी चाहिए। अर्थात् जहाँ जहाँ साध्य रहे वहाँ वहाँ उपाधि को रहना चाहिए। तथा जहाँ पर उपाधि न हो वहाँ पर साध्य को नहीं होना चाहिए। वह अनित्यत्व के अश्रावणत्व उपाधि में घट जाता है। जहाँ जहाँ अनित्यत्व घटादि में है, वहाँ अश्रावणत्व भी है। जहाँ पर अश्रावणत्व का अभाव शब्दत्व में है वहाँ पर अनित्यत्व भी नहीं है। इस प्रकार पक्षीकृतशब्द में ही मेयत्वसाधन एवं पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व साध्य की व्याप्ति भङ्ग हो गयी। यही उपाधि की दूषकता का बीज है। जो साध्य साधन के साहचर्यरूप व्याप्ति का भङ्ग कर दें। अन्यत्र भी उपाधि का यही फल माना जाता है।

**व्यावर्त्यत्वम्। तथा भूतव्यावर्त्यरहितस्योपाधेः पक्षेतरत्वमित्येतावतैव सकलव्यवस्थोपपत्तौ, व्यापकीभूतसाध्याभाववतो व्यावर्त्यत्वं, तथाभूत-व्यावर्त्यरहितस्य च पक्षेतरत्वमित्यादिव्यवस्थाया गरीयस्या निष्प्रमाण-कत्वादिति।**

**ननु अस्तु पक्षं पक्षीकृत्य प्रवर्तमानासु महाविद्यासु अयमुपाधिः। सपक्षविपक्षादीन् पक्षीकृत्य प्रवर्तमानमहाविद्यास्तु उपाधिविधुरा एवेत्यत आह—**

**''सर्वत्रैवमुपाधिरप्रतिहतः, ''इति**

**अयं घटः एतद्घटैतच्छब्दव्यतिरिक्तत्वरहितानित्यान्यः मेयत्वा-**

---

उपाधिना व्यावर्त्यो, न त्वन्यो भवदभिमतो मुख्यानुमानसाध्यविपक्षः इति भावः। आचार्यः उत्तरयति—**न सर्वत्रेति**। विप्रतिपत्तिगोचरं यत्साध्यमनित्य-त्वादि तदभावो नित्यत्वं, तद्वतो नित्यस्य व्यावर्त्यत्वम्। **व्यापकीभूतेति।** व्यापकीभूतसाध्यं महाविद्यासत्कं, तदभावतो व्यावर्त्यत्वमित्यादिव्यवस्था गरीयसी निष्प्रमाणका। कल्पनालाघवे सति कल्पनागौरवबाधकतर्कसद्भावात्।

**भुवन.**—तुरीयपादभागमवतारयितुं चोदयति। **नन्वस्त्विति।** इत आरभ्य **एतदेवोत्तरं सर्वत्रैवमुपाधिरप्रतिहत** इति यावत्सुगममिति न

---

अथवा स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वविशिष्ट अनित्यत्व को साध्य मान कर उसका व्यापक एवं मेयत्वसाधन का अव्यापक अश्रावणत्व को उपाधि कहेंगे। जो पक्षीकृतशब्द तदितरनिष्ठत्वरहितानित्यनिष्ठाधिकरण होकर अनित्य है, वह श्रवणेन्द्रिय का विषय नहीं है। साध्य का व्यापक अश्रावणत्व हो गया। तथा मेयत्व शब्दवृत्तिशब्दत्वाधिर्मो में है। किन्तु वहाँ अश्रावणत्व नहीं है। शब्द के समान शब्दत्व भी श्रवणेन्द्रिय का विषय ही है। अश्रावणत्व का अभाव है। अतः मेयत्व साधन का अश्रावणत्व अव्यापक भी हो गया। इस प्रकार अश्रावणत्व को उपाधि मानने में कोई दोष नहीं है। यतः अश्रावणत्व अनित्यत्वरूपसाध्यसामान्य का व्यापक है, तथा पक्षीकृत शब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वविशिष्ट अनित्यत्व साध्यविशेष का भी व्यापक है, तथा मेयत्व का अव्यापक है। एवं उक्त उपाधिलक्षण सोपाधिक अनुमानों से अतिरिक्त में अतिप्रसक्त नहीं है। उपाधि का लक्षण यदि सदनुमानों में जाय तो अतिव्याप्ति कही जा सकती थी। सोपाधिकानुमानों में लक्षणसमन्वय हो रहा है। तो उन्हें अनुमान माना ही नहीं जाता। तदतिरिक्त में लक्षण गया ही नहीं तो अतिव्याप्ति की सम्भावना ही नहीं है। अन्यथा

**दित्यत्र अश्रावणत्वमुपाधिः। एतच्छब्दनिष्ठतया परं प्रति साध्यस्य अनित्यत्वस्य व्यापकत्वात्। मेयत्वसाधनाव्यापकत्वाच्च। अनित्यत्व-रूपसाध्यरहितशब्दत्वादिव्यावर्त्यसत्त्वेन पक्षेतरत्वानाक्रान्तत्वाच्चेति। तथा गगनं शब्देतरानित्यनित्यवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वादित्यत्रापि अश्रावणत्वमुपाधिः। एतच्छब्दनिष्ठत्वेन साधयितुमभिप्रेतस्य अनित्यत्वस्य व्यापकत्वात्, मेयत्वाव्यापकत्वाच्च। सिषाधयिषितानित्यत्वाभाववतः शब्दत्वादेर्व्यावर्त्यस्य सत्त्वेन पक्षेतरत्वानाकान्तत्वाच्चेति। एवं साध्यादीनपि पक्षीकृत्य शब्दानित्यत्वे प्रवर्तमानासु महाविद्यास्वयमुपाधिर्द्रष्टव्यः।**

**ननु अस्तु नाम अनित्यत्वे प्रवर्तमानासु महाविद्यासु अश्रावणत्वमुपाधिः। अन्वयव्यतिरेकिसाध्यान्तरप्रवर्तमानासु न कश्चिदुपाधि-रित्यत्राप्येतदेवोत्तरम् सर्वत्रैवमुपाधिरप्रतिहत इति। यत्र यत्रान्वय-**

---

लेशतोऽपि व्याचके। ननु स श्यामो मैत्रपुत्रत्वात्संप्रतिपन्नपुत्रवदित्यन्व-यतिरेकिणि सोऽयं स्वस्वेतरवृत्तित्वरहितश्यामनिष्ठाधिकरणं मेयत्वाद्-घटात्मादिवदित्यस्यां महाविद्यायामश्रावणत्वस्य अनुपाधित्वादेतदेवोत्तर-मित्ययुक्तमुक्तमित्याशङ्क्याह—**यत्र यत्रान्वयीति।** यत्र यत्र अन्वयव्यतिरेकिणि मूलानुमानहेतौ यः उपाधिः। **तत्तदिति।** तत्तदन्वयव्यतिरेकिहेतुसाध्यप्रवर्तमान-

---

व्यापकत्वेनाभिमत यत्किञ्चित् का व्यापक तथा साधनत्वेनाभिमत यत्किञ्चित् का अव्यापक उपाधि कहे तो 'पर्वतो वह्निमान् धूमात्' इत्यादि मुख्यस्थल में भी कोई न कोई उपाधि होती रहेगी, उसका वारण असम्भव होगा।

अब महाविद्यानुमानवादी कह रहा है? कि उक्त महाविद्यानुमान में अयं शब्द पक्ष है, तदतिरिक्त सभी सपक्ष है, कोई विपक्ष है नहीं जिसे उपाधिरहित कहा जाय। अत: उक्त स्थल की उपाधि पक्षमात्र की व्यावर्तक पक्षेतरत्व के सम्मान है। पक्षेतरत्व को उपाधि नहीं माना जाता। यदि पक्षेततरत्व को उपाधि मान लिया जाय तो अनुमानमात्र का उच्छेद हो जायेगा। जैसे विमतहिंसा अधर्म वा साधन है। हिंसा होने से म्लेच्छविहितहिंसा के समान। यहाँ पर निषिद्धत्व उपाधि है। वह सन्ध्यावन्दनादि में नहीं है। अत: सन्ध्या वन्दनादि उपाधि का व्यावर्त्यस्थल हो गया। परन्तु उक्तस्थल में तो सभी सपक्ष ही है।

इस पर महाविद्यानुमान में उपाधिदोष देने वाला कह रहा है, कि उक्त अश्रावणत्व उपाधि का व्यावर्त्यस्थल शब्दत्व है। अत: उक्त उपाधि में पक्षेतरत्व का भ्रम भी नहीं करना चाहिए। यदि महाविद्यानुमानवादी अशङ्का करे कि जिसे वादी व्यापकत्वेन महाविद्यासाध्यत्वेन माना है उसका अभाव

**व्यतिरेकिणि हेतौ यो य उपाधिः, तत्तत्साध्यप्रवर्तमानमहाविद्यासु स स एवोपाधिः पूर्वन्यायेन द्रष्टव्यः। यः पुनरन्वयव्यतिरेकी निरूपाधिक एव तत्साध्यप्रवर्तमानमहाविद्याप्यनौपाधिकी एवास्तु। किं नः छिन्नम् तदप्रामाण्यस्य वक्ष्यमाणदोषैरपि सिद्धेः।**

**यः पुनर्व्युत्पादितमपि साध्यव्यापकं साधनाव्यापकं चोपाधिं प्रमेयत्वादौ न मन्यते, तस्य अयं शब्दोऽनित्यः, सामान्यवत्त्वे सति**

---

महाविद्यासु स एव मूलानुमानोपाधिरेव द्रष्टव्यः। श्यामत्वसाध्यप्रवर्तमानमहाविद्यायां च शाकाद्याहारजन्यत्वं मेयत्वसाधनाव्यापकं पक्षनिष्ठतया विप्रतिपन्नश्यामत्वसाध्यव्यापकं दुग्धाद्यश्यामव्यावर्त्यविशिष्टमुपाधिः। परमाणुर्नित्योऽनादिभावत्वात् आत्मवदित्यत्र अयमात्मैतदात्मैतत्परमाणुव्यतिरिक्तत्वरहितनित्यान्यः प्रमेयत्वाद्घटादिवदित्यत्र कः उपाधिरत्राह—**यः पुनरन्वयेति। तदप्रामाण्यस्येति।** निरुपाधिकमहाविद्याया अप्रामाण्यं वक्ष्यमाणदोषैर्विरुद्धतानैकान्तिकत्वादिभिरपि सेत्स्यतीत्यर्थः।

**भुवन.**—चतुर्थपादान्त्यभागतात्पर्यमाह—**यः पुनर्व्यत्पादितमिति।** य

---

जिसमें हो उसे विपक्ष कहना होगा तथा उसी को उपाधि का व्यावर्त्य मानना होगा। साध्याभावत्वेन अभिमत अन्य हो उपाधि का व्यावर्त्य अन्य हो ऐसी व्यवस्था ठीक नहीं है।

इस पर महाविद्यानुमान में उपाधिदोष देने वाला कह रहा है, कि सर्वत्र विवादविषयीभूत अनित्यत्व का अभाव नित्यत्व तद्वत् नित्य को उपाधि का व्यावर्त्य मानना चाहिए। इस नित्यत्ववत् नित्य का व्यावर्तक उपाधि को न होने पर उपाधि को पक्षेतरत्त्व तुल्य कहना चाहिए। यदि उक्त व्यवस्था से सकलदोषों का निरास तथा उपाधिलक्षण का लक्ष्य में समन्वय हो जाय, तो व्यापकीभूत महाविद्यासाध्याभाववत् को उपाधि का व्यावर्त्य उसका व्यावर्तक न होने पर उपाधि को पक्षेतरत्व के समान कहना गौरवग्रस्त तथा निष्प्रामाणिक है।

यदि महाविद्यानुमानवादी कहे कि मूलपक्षशब्द को पक्ष मान कर प्रवृत्त महाविद्यानुमानों में भले ही अश्रावणत्व को उपाधि कह दें सपक्ष एवं विपक्ष को पक्ष मान कर प्रवृत्त महा विद्यानुमानों में तो यह उपाधि नहीं हो सकती। उसके उत्तर में ग्रन्थकार कह रहे है, कि **'सर्वत्रैवमुपाधिरप्रतिहतः'** यह अश्रावणत्वरूप उपाधि सर्वत्र प्रवृत्त है। इसका बाध कही नहीं है। कुछ महाविद्यानुमानों का प्रयोग कर के उनमें उपाधि का समन्वय कर रहे है।

उक्त अश्रावणत्वरूप उपाधि को सकल महाविद्यानुमानों में समन्वय

**अस्मद्ब्राह्यप्रत्यक्षत्वादित्यादावपि अश्रावणत्वादिरुपाधिर्न स्यात्, अविशेषादित्याह—**

**'नो चेन्न हेत्वन्तरे,' इति**

**अथ प्रतीत्यपर्यवसानलभ्यसाध्यव्यापकः तथाविधसाध्याभाववद्रूपपक्षव्यावर्त्यवांश्चोपाधिः क्वचिदपि न दृष्टः इति चेत्। न। पक्षे व्यापकीभूतसाध्यसाधकं विपक्षादीन् पक्षीकृत्य पक्षे तथाभूतसाध्यसाधकमनुमानमपि क्वचिन्न दृष्टमेव। महाविद्यैव तथाभूता दृश्यते इति चेत्।**

---

एवं पूर्वोत्पादितमप्युपाधिं न स्वीकुरुते, तस्य अयं शब्दोऽनित्यः इत्यत्रापि अश्रावणत्वोपाधिर्न स्यात्। अस्ति चात्रोपाधिः तथाहि। यद्यदनित्यं तत्तदश्रावणं यथा घटादि। यत्राश्रावणत्वाभावः तत्रानित्यत्वाभावो तथा शब्दत्वे इति साध्यव्यापकत्वम्। तथा शब्दे सामान्यवत्त्वे सति यदस्मद्बाह्यप्रत्यक्षत्वं तस्मिन्सत्यपि अश्रावणत्वोपाधेरभावात्साधनाव्यापकत्वं चोपाधेः। शब्दत्वरूपविपक्षव्यावर्त्यसत्त्वेन च न पक्षेतरत्वमिति। **नो चेन्न हेत्वन्तर इति**। यदि

---

प्रदर्शित करते हुए सपक्ष घट को पक्ष मान कर प्रवृत्त 'अयं घटः एतत्घट एतत्शब्द (पक्षीकृतशब्द) व्यतिरिक्तत्वरहितानित्यान्यः मेयत्वात्' महाविद्यानुमान में अश्रावणत्व उपाधि समन्वय दिखा रहे है। एतत् घट में एतत्घट पक्षीकृतशब्दातिरिक्तानित्य का भेद साध्य है। एतत्घट तथा पक्षीकृतशब्द व्यतिरिक्त सकलपदार्थ होंगे। तद्भिन्न अनित्य या तो घट होगा, या तो शब्द, यहाँ पर यदि घट को लेगें तो उसका भेद साध्य है। स्व का स्व में भेद होता नहीं। यदि माने तो व्याघात होगा। अतः शब्द को लेगें। यतः अनित्य अन्य का भेद साध्य है। अतः शब्द में अनित्यत्वसिद्धिपुरःसर अनित्यशब्द का भेद घट में सिद्ध होता है। उक्त स्थल में भी अश्रावणत्व उपाधि होगी। यतः एतत् शब्दनिष्ठ अनित्यत्व का व्यापक अश्रावणत्व को उपाधि बताया जा चुका है। यहाँ पर शब्दवृत्ति अनित्यत्व का भेद साध्य है, अतः उक्त भेद का भी व्यापक अश्रावणत्व होगा। उक्त उपाधि शब्दवृत्ति अनित्यत्व भेदवत् शब्दत्व में साध्य की व्यापक तथा मेयत्व की अव्यापक भी है। तथा उभयवादिसम्मत अनित्यत्वरहितशब्दत्व की व्यावर्तक होने के कारण पक्षेतरत्व तुल्य भी नहीं है।

इसी प्रकार विपक्ष को पक्ष मान कर प्रवृत्त 'गगनं शब्देतरानित्यनित्यवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वात्, इस महाविद्यानुमान में भी अश्रावणत्व उपाधि है। शब्देतर अनित्य तथा नित्यपदार्थों में अवृत्ति (अनित्यानित्य-युगलावृत्ति) तथा अनित्यवृत्ति जो धर्म उसका अधिकरण गगन

**तर्हि तदुपाधिरपि तथाभूतो दृश्यते इति संतोष्टव्यम्। न चैवं सति सकलकेवलान्वयिप्रामाण्यभङ्ग इति वाच्यम्। तत्प्रामाण्यस्यास्माभिर-**

---

पूर्वोपपादितः उपाधिर्न भवति, तदा हेत्वन्तरे सामान्यवत्ते सति अस्मद्बाह्यप्रत्यक्षत्वादित्यादिकेऽप्युपाधिर्न स्यादित्यर्थः।

**भुवन.**—परः शङ्कते—**अथ प्रतीत्यपर्यवसानेति।** प्रतीतेरपर्यवसानेन अभवनेन लभ्यं यदनित्यवादिसाध्यं, तस्य व्यापकः, तथाविधं यदनित्यत्वादि साध्यं तस्य योऽभावः, तद्द्रूपो यो विपक्षो व्यावर्त्यस्तद्वांश्चोपाधिर्न क्वापि द्रष्टचरः। आचार्यः परिहरति—**न पक्षे व्यापकेति।** पक्षे विपक्षादौ व्यापकीभूतं साध्यं महाविद्यासाध्यं, तत्साधकं सत् विपक्षादीन्पक्षीकृत्य पक्षे शब्दे

---

है। ऐसा धर्म होगा गगन तथा शब्द का सम्बन्ध वह शब्देतर नित्य गगन में रहता हुआ शब्देतर अनित्य में नहीं रहता। अतः युगलावृत्ति है, तथा अनित्यशब्द में वृत्ति भी है। वह गगनवृत्ति तो है, परन्तु गगन की नित्यता उभयवादिसम्मत है। अतः शब्द को अनित्य मानना होगा। यहाँ पर भी परम्परया शब्दनिष्ठानित्यत्व ही साध्य है। उसका अश्रावणत्व व्यापक तथा मेयत्व का अव्यापक है। शब्दत्वादि का व्यावर्तक होने से पक्षेतरत्व के समान भी नही है। इस प्रकार विपक्षपक्षक महाविद्याऽनुमान में भी आश्रवणत्व उपाधि है। इसी प्रकार साध्यादि को पक्ष बनाकर प्रवृत्त शब्दानित्यत्व, साधक महाविद्याऽनुमानों में भी उक्त अश्रावणत्व उपाधि द्रष्टव्य है।

यदि महाविद्यानुमानवादी कहे कि अनित्यत्वसाध्यक महाविद्यानुमानों में अश्रावणत्व उपाधि रहे भी तो क्या? अन्वयव्यतिरेकि 'स श्यामो मैत्रपुत्रत्वात् सम्प्रतिपन्न पुत्रवत' इत्यादिस्थल में अनित्यत्वादि से भिन्न श्यामत्वादिसाध्यक 'सोऽयं स्वस्वेतरवृत्तित्वरहितश्यामनिष्ठाधिकारणं मेयत्वात्' घटात्मादिवत्, आदि महाविद्यानुमानों में अश्रावणत्व उपाधि नहीं है। तब आप कैसे कह दिये कि सर्वत्र अश्रावणत्व उपाधि अप्रतिहत है।

इसके उत्तर में महाविद्यानुमान का खण्डन करने वाले कह रहे हैं कि जिस अन्वयव्यतिरेकि में जो शाकाद्याहारजन्यत्वादि उपाधि कही गयी है। वही उपाधि सत्साधक महाविद्यानुमान में भी मानी जाती है। यदि कोई अन्वयव्यतिरेकि अनुमान निरूपाधिक है। तो तत्साध्यसिद्धि में प्रवृत्त महाविद्यानुमान भी निरूपाधिक रहे तो हम महाविद्यानिरासवादी की कोई हानि नहीं है। यतः उक्त महाविद्या की अप्रामाणिकता दोषान्तरों का उद्भावन करके

**नङ्गीकारात्। अङ्गीकारे वा सर्वत्रापर्यवसानलभ्यान्वयव्यतिरेकिसाध्यभावेन तद्व्यापकस्योपाधेरनुपपत्तिरिति।**

---

तथाभूतसाध्यमनित्यत्वादिकं तत्साधकमनुमानमपि क्वचिन्न दृष्टमित्यर्थः। ननु यदि केवलान्वयी न स्वीकियते, तर्ह्यदृष्टादि कस्यचित्प्रत्यक्षं मेयत्वाद्-घटवदित्यादेः केवलान्वयित्वेन अस्वीकारार्हत्वात्सर्वसिद्धिः कथमित्या-शङ्कापरिहारायाह—**अङ्गीकारे वेति।** केवलान्वयिहेतोरङ्गीकारे वा सर्वानु-मानेष्वपर्यवसानलभ्यं यदन्वयव्यतिरेकिणो मूलानुमानस्य साध्यं, तदभावेन व्यापकस्य अपर्यवसानलभ्यान्वव्यतिरेकिसाध्यव्यापकस्योपाधेरनुपपत्तिः। अयमभिप्रायः—महाविद्यायां हि अपर्यवसानलभ्यानित्यत्वादिसाध्यसद्भावेन तद्व्यापक उपाधिः सम्भवति, नान्यत्र केवलान्वयि। तत्रानन्तरोक्तसाध्या-सम्भवात्। तस्मात्केवलान्वयिषूपाधेरभावः इत्यर्थः।

---

भी करेंगे। यदि कोई महाविद्यानुमान उपाधिदोषशून्य है, तो उसमें अन्य हेत्वाभ्यासों का दिग्दर्शन करेंगे। सर्वथा निर्दुष्ट महाविद्यानुमान नहीं है। **नो चेन्न हेत्वन्तरे** इस श्लोक चतुर्थपाद के अन्त्यभाग के तात्पर्य का विवेचन करते हुए, महाविद्याविडम्बनकार कह रहे हैं, कि जो लोग त्युत्पत्तिसिद्ध साध्यव्यापक साधनाव्यापक अश्रावणत्व को प्रमेयत्वादि में उपाधि नहीं मानते, उनके मत में 'शब्दोऽनित्यः सामान्यवत्त्वे सति अस्मद्बाह्यप्रत्यक्षत्वात्' इस हेत्वन्तर में भी अश्रावणत्व उपाधि नहीं होगी।

उक्त स्थल में अश्रावणत्व उपाधि निर्विवाद है। जो अनित्य है, वह अश्रावण (श्रवणेन्द्रिय का विषय नहीं है) जैसे घट! जो अश्रावण नहीं है (अर्थात् श्रवणेन्द्रिण का विषय है) वह अनित्य नहीं है। जैसे शब्दत्व, 'इस प्रकार साध्यव्यापक अश्रावण हो गया। शब्द में सामान्यवत्त्वे सति अस्माद्बाह्यप्रत्यक्ष रूप हेतु के रहने पर भी अश्रावणत्व नहीं है। अतः साधनाव्यापक भी है। यदि उक्त हेत्वन्तर में अश्रावणत्व उपाधि अभिमत है, तो मेयत्वादि हेतुक महाविद्यानुमान में उपाधि मानने में विचिकित्सा क्यों?

यदि महाविद्यानुमानवादी आशङ्का करे कि प्रतीतिपर्यसानाभाव से लब्ध जो साध्य अर्थात् शब्दानित्यत्ववादिसम्मत जो शब्द में अनित्यत्व उसका व्यापक तो अश्रावणत्व नहीं होगा। यतः जिस शब्द में अनित्यत्व साध्य अभिप्रेत है, उसमें अश्रावणत्व का अभाव श्रावणत्व है। एवं अनित्यत्व-साध्याभाववत् नित्य विपक्ष का व्यावर्तक भी नहीं है। उपाधि का जहाँ अभाव

**इति संक्षेपतोऽस्माभिरुपाधिरुपवर्णितः ।**
**महाविद्यानिरासार्थं तन्मूलकर्षणक्षमः ।।५।।**

मूलश्लोकस्तु—

**यो भङ्गिस्थनिवृतिमत्त्वरहितो यद्वर्जिते मेयता**
**मेयत्वे श्रुतिगोचरत्वविरहः स स्यादुपाधिर्ध्रुवः ।**
**शब्दात्वादि निवर्त्यमस्ति न ततः पक्षेतरत्वभ्रमः**
**सर्वत्रैवमुपाधिरप्रतिहतो नो चेन्न हेत्वन्तरे ।।६।।**

---

**भुवन.**—श्लोकः स्पष्टः।।५।।

**भुवन.**—उत्तरश्लोकतात्पर्यमाह—अथ संनह्यते इति। अभीष्टविरोधः संनह्यते सन्नद्धो भवति। कया। तर्कमुद्रया तर्कयुक्त्या।।७।।

**भुवन.**—अभीष्टविरुद्धतां दर्शयति—**धत्तेऽभीष्टेत्यादि।** निगदितो हेतुर्मेयत्वादिरभीष्टस्य विरुद्धता अभीष्टविरुद्धता, तां विचारक्षमां धत्ते। किं कुर्वन्समुन्मीलयन्। कम्। इष्टाभावम्। इष्टमनित्यत्वम्, तदभावो नित्यत्वम्। कस्मात्। अभीष्टतुल्यनयतः अभीष्टमनित्यत्वं यथा साध्यते, तथा नित्यत्वमपीति तत्तुल्यन्यायात्। कस्मिन्। पक्षे शब्दे अनित्यत्ववन्नित्यत्वमपि साधयन्विरुद्धः स्यादित्यर्थः।

---

हो वहाँ पर साध्य का अभाव होना चाहिए। ऐसा स्थल शब्दत्व के अतिरिक्त नहीं मिलता। इसके उत्तर में पक्ष तथा विपक्ष में व्यापकीभूत महाविद्यासाध्य का साधक, तथा विपक्ष एवं सपक्ष को पक्ष बना कर पक्षीकृतशब्द में अनित्यत्व का साधक कोई अनुमान भी नहीं है। यदि कहते हैं, कि महाविद्यानुमान है। तो अश्रावणत्व उपाधि स्वीकार करना होगा। यदि पूर्वपक्षी महाविद्यावादी कहे कि केवलान्वयि अनुमान में भी यदि उपाधि दोष है, तो केवलान्वयिप्रमाण की प्रामाणिकता समाप्त हो जायेगी। इस पर महाविद्याविडम्बनकार कह रहे हैं, कि केवलान्वयि अनुमान की प्रामाणिकता हम मानते ही नही हैं। यदि स्वीकार करें तो उपाधि का अभाव मानना ही होगा। यतः महाविद्यानुमान रूप केवलान्वयि से अतिरिक्त वलान्वयियों में उपाधि सम्भव नहीं है। इस प्रकार उपाधि का संक्षेपेण उपपादन कर अब विरुद्धरूप हेत्वाभ्यास का उद्भावन कर रहे हैं। प्रतिवादि की महाविद्या के

**अथ संनह्यतेऽभीष्टविरोधस्तर्कमुद्रया।**
**प्रतिवादिमहाविद्याघर्षणाय विचक्षणः।।७।।**
**धत्तेऽभीष्टविरुद्धतां निगदितो हेतुः समुन्मीलयन्**
**इष्टाभावमभीष्टतुल्यनयतः पक्षे विचारक्षमाम्। इति**

**यथाकथितो हेतुःमेयत्वादिः पक्षीकृतशब्दे तत्तदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं साधयन् पक्षे साध्यप्रतीत्यपर्यवसानाद्वाद्यभिमतमनित्यत्वं साधयति। तथा पक्षीकृतशब्दे तत्तदितरवृत्तित्वरहिता-**

---

श्लोकार्धं व्याचष्टे—**यथाकथित इत्यादि**। मेयत्वादिहेतुः पक्षीकृतशब्दे तत्तदितरेत्यादि महाविद्यासाध्यं साधयन्पक्षे यत्साध्यप्रतीतेरपर्यवसानमनुपपत्तिः, तद्बलेन यथा वाद्यभिमतमनित्यत्वं साधयति, तथैव वाद्यभिमतं यदनित्यत्वं तदत्यन्ताभावो नित्यत्वं तदपि साधयति। तथापि किं दूषणमित्याह—**तेन वाद्यभिमतेति**। वाद्यभिमतं यदनित्यत्वरूपं साध्यं तदभावो नित्यत्वं, तत्साधकत्वादयमभीष्टविरुद्धः। 'हेतुभेदाभावेन तुल्यबलः साध्याभावसाधकोऽभीष्टविरुद्धः' इति संपूर्णतल्लक्षणस्य सद्भावात्। उत्तरार्धावताराय

---

खण्डन में समर्थ तर्कयुक्ति से अभीष्ट विरोध (साध्याभावसाधक) विरुद्धहेत्वाभ्यास भी सन्नद्ध है।

**धत्तेऽभीष्ट**=उक्त मेयत्वहेतु अभीष्ट अनित्यत्व के समान अभीष्टाभाव नित्यत्वसाधन में समर्थ अभीष्टविरोध विचारक्षम है। अर्थात् जिस मेयत्वहेतु से उक्त अनित्यत्व की सिद्धि होती है। उसी मेयत्व हेतु से अनित्यत्वाभाव नित्यत्व की सिद्धि हो सकती है। अतः साध्याभावसाधक होने से मेयत्व हेतु विरुद्धरूप हेत्वाभ्यासदोष से ग्रस्त है।

महाविद्यानुमानाभिमत मेयत्व हेतु पक्षीकृतशब्द में तत्तदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरूप साध्य का साधक है। उक्त साध्य पक्षीकृतशब्द में वादि अभिमत अनित्यत्व के विना अनुपपन्न है, अतः उक्त साध्य की सिद्धि पक्ष में अनित्यत्वसिद्धिपुरःसर होती है। मेयत्व हेतु जिस प्रकार परम्परया अनित्यत्व का साधक है। उसी प्रकार पक्षीकृत शब्द में तत्तदितरवृत्तित्वरहितानित्यत्वात्यन्ताभाववन्निष्ठाधिकरणत्व रूप साध्य का भी साधक है। इस साध्य की सिद्धि पक्षीकृत शब्द में अनित्यत्वात्यन्ताभाव (नित्यत्व) के विना अनुपपन्न है। अतः जो मेयत्व हेतु प्रतीति के

**नित्यत्वात्यन्ताभाववन्निष्ठाधिकरणत्वं साधयन्, पक्षे साध्यप्रतीत्यपर्यवसानरूपानित्यत्वसिद्धितुल्यन्यायेन वाद्यभिमतानित्यत्वात्यन्ताभावं साधयति। तेन वाद्यभिमतानित्यत्वरूपसाध्याभावसाधकत्वादयमभीष्टविरुद्धो विशेषविरुद्ध इष्टविघातकारी चेत्युच्यते। व्यापकत्वाभिमतसाध्याभावव्याप्यत्वं विरुद्धत्वम्। तच्च प्रकृते नास्तीति नायं विरुद्ध इत्यत आह—**

**किञ्चिव्द्यापकमीप्सितं तदपरं भेदस्तयोः कीदृशः**
**साध्यत्वे तदभावसाधकतया लोके विरुद्धस्थितिः ।।८।। इति।**

---

शङ्कते—**व्यापकत्वाभिमतेति।** व्यापकत्वाभिमतं साध्यमत्र स्वस्वेतरेत्यादिकं महाविद्यासत्कं। तदभावेन व्याप्यो हि हेतुर्विरुद्ध इत्युच्यते। अयं तु पारिशेष्यलभ्यानित्यत्वसाध्यस्य अभावेन व्याप्यो, न तु महाविद्यासाध्यस्याभावेन। ततो नायं विरुद्ध इत्यर्थः।

उत्तरार्धं दर्शयति—**किञ्चिद्व्यापकमिति।** किञ्चिव्द्यापकं महाविद्यासाध्यं किञ्चित्तस्मादपरं च व्यापकप्रतीत्यपर्यवसानलभ्यमनित्यत्वादि, तयोः साध्यत्वे भेदः कीदृशो, न कोऽपीत्यर्थः। तयोः साध्ययोर्योऽभावस्तत्साधको लोके तार्तिकलोके विरुद्धो हेतुरुच्यते इत्यभिप्रायः।।८।।

---

अपर्यवसानवशात् अनित्यत्व का साधक है, वही मेयत्व हेतु प्रतीति के अपर्यवसानवशात् अनित्यत्वात्यन्ताभाव (नित्यत्व) का भी साधक है। इस प्रकार वादि अभिमत अनित्वरूप साध्याभाव नित्यत्व का साधक होने से अभीष्टविरुद्ध इष्टविधातकारी विरुद्ध हेत्वाभ्यास है।

पूर्वपक्षी महाविद्यानुमानवादी यदि कहे कि मेयत्व हेतु विरुद्ध नहीं है। विरुद्ध का लक्षण है, **'व्यापकत्वाभिमतसाध्याभावव्याप्यत्वम्'** वादि के द्वारा व्यापकत्वेन अभिमत साध्य के अभाव का व्याप्य यानी साधन विरुद्ध कहलाता है। वह उक्त मेयत्व हेतु में नहीं है। यतः महाविद्यानुमानवादि अभिमत जो साध्य तत्तदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व है। उसके अभाव का साधक मेयत्व हेतु नहीं है। अपितु पारिशेष्यात् लभ्य अनित्यत्व के अभाव का साधक है। साक्षात् साध्याभाव का साधक न होने विरुद्ध नहीं है।

इस पर महाविद्यानुमानदोषवादी महाविद्याविडम्बनकार कह रहे हैं। कोई महाविद्यासाध्यत्वेन व्यापक है, कोई महाविद्यासाध्य के प्रतीति अपर्यव-

**प्रकृतव्यापकाभावव्याप्यः प्रकृतो हेतुर्विरुद्ध इत्ययुक्तम्। प्रकृतहेतोरेवंरूपत्वप्रमितौ विरुद्धत्वस्य दुर्वारत्वात्। अप्रमितौ अस्य लक्षणस्य स्वरूपासिद्धत्वात्। तस्मात्साध्याभावसाधकः प्रकृतो हेतुर्विरुद्ध इत्युच्यते।**

---

**भुवन.**—श्लोकोत्तरार्धं व्याख्यातुं परोक्तं दूषयति—**प्रकृतव्यापकेति।** प्रकृतं व्यापकं महाविद्यासाध्यं, तदभावेन व्याप्यः प्रकृतो हेतुर्मेयत्वादिर्विरुद्ध इति भावः। प्रकृतव्यापकाभावव्याप्यत्वं हेतोः प्रमितं न वा। आद्यं प्रत्याह—**प्रकृतहेतोरिति।** प्रकृतहेतोर्मेयत्वादेरेवंरूपत्वप्रमितौ प्रकृतव्यापकाभावव्याप्यत्वप्रमितौ विरुद्धत्वं दुर्वारम्। द्वितीयं प्रत्याह—**अप्रमिताविति।** यदि प्रकृतव्यापकाभावव्याप्यत्वं हेतोरप्रमितं, तदानीमेतल्लक्षणस्य स्वरूपमेवासिद्धम्। यतः एतल्लक्षणं हि विशेषलक्षणत्वेन अन्यत्राप्रसिद्धम्। तर्हि किं लक्षणमित्याह—**तस्मात्साध्याभावेति।**

---

सानवशात् व्यापक है। दोनों महाविद्यानुमान में साध्यत्वेन अभिप्रेत है। महाविद्या का उद्देश्य साक्षात् साध्यान्तर की सिद्धि पुरःसर परम्परया अनित्यत्व की सिद्धि करना है। जब दोनों महाविद्या के साध्य हैं, तो भेद कैसा? लोक यानी न्यायशास्त्र में साध्याभावसाधक हेतु विरुद्ध कहलाता है। यहाँ पर भी मेयत्व हेतु महाविद्या के उमयसाध्यों में से यदि किसी एक के अभाव का साधक है, तो विरुद्ध कहलायेगा।

प्रकृतसाध्याभावसाधक हेतु विरुद्ध है, यह भी कहना युक्तिसंगत नहीं है। इस रूप में प्रकृत हेतु प्रमित है कि नहीं। (प्रकृतमहाविद्यासाध्य के अभावसाधकत्वेन प्रकृतमेयत्व हेतु प्रामाणिक है कि नहीं) यदि प्रमित है, तो भवदभिप्रेत विरुद्धलक्षण से भी लक्षित हो गया तो विरुद्धत्व का वारण असम्भव होगा। यदि अप्रमित है, प्रकृतव्यापकाभावसाधक हेतु अन्यत्र प्रसिद्ध नहीं है। मेयत्व में प्रमित नहीं हुआ, तो उक्त विरुद्ध का विशेषलक्षण स्वरूपतः असिद्ध हो गया। अतः पूर्वोक्त लक्षण साध्याभावसाधकप्रकृत हेतुविरुद्ध मान्य होगा, वह मेयत्व में है ही।

पुनश्च महाविद्यानुमान में विरुद्धहेत्वाभास प्रदर्शित करने वाला महाविद्याविडम्बनकार कह रहा है, कि साध्य दो प्रकार के हैं। एक महाविद्यानुमान के व्यापकत्वेन अभिमत द्वितीय महाविद्यानुमान के साध्य के प्रतीति अपर्यवसानलभ्य। इन दोनों साध्यों को प्रतिवादी (महाविद्यानुमानखाण्डनिक) पक्षीकृतशब्द में वृत्ति नहीं मानता। महाविद्यानुमानवादी दोनों

**साध्यं च द्विविधम्। किञ्चिद्व्यापकाभिमतं, किञ्चिद्व्यापकप्रतीत्यपर्यवसानलभ्यम्। न चानयोः प्रतिवादिना पक्षनिष्ठतयानङ्गीकृतयोर्वादिना च तन्निष्ठतया बोध्यमानयोः साध्यत्वे कश्चिद्विशेषोऽस्ति। व्यापकत्वाभिमतसाध्याभावव्याप्यत्वं तु व्यापकविरुद्धापरपर्यायं विरुद्धविशेषलक्षणम्। यदि पुनर्विरुद्धविशेषलक्षणाभावात् नायं विरुद्धः, तर्हि अभिप्रेतसाध्यविशेषाभावसाधको विरुद्ध इति विरुद्धविशेषलक्षणाभावाव्यापकाभिमताभावव्याप्योऽपि विरुद्धो न स्यादिति। यद्वा मा भूदयं विरुद्धः, तथाप्यभीष्टविरुद्धापरपर्यायं हेत्वाभासान्तरं भविष्यति।**

---

**भुवन.**—श्लोकार्धं व्याचाख्याति—**साध्यं च द्विविधमित्यादि।** व्यापकत्वेनाभिमतं महाविद्यासाध्यम्। व्यापकं महाविद्यासाध्यं, तस्य या प्रतीतिस्तस्याः अपर्यवसानेन लभ्यमनित्यत्वादि। **न चानयोरिति।** अनयोः साध्ययोः प्रतिवादिना महाविद्यानिराकर्त्रा पक्षे शब्दादौ निष्ठतया अनङ्गीकृतयोर्वादिना महाविद्यावादिना तन्निष्ठतया पक्षनिष्ठतया बोध्यमानयोः न च साध्यत्वे कश्चिद्विशेषोऽस्ति। यतः उभयमपि साध्यतयोच्यते। प्रकारान्तरेणाशङ्कते—**व्यापकत्वाभिमतेति।** व्यापकत्वेनाभिमतं महाविद्यासाध्यं तस्य योऽभावस्तेन व्याप्यत्वं हेतोस्तद्व्यापकविरुद्धः इत्यपरपर्यायं विरुद्धहेतोर्विशेषलक्षणमित्याशयः आचार्यः प्रत्युत्तरयति—**तर्हीत्यादि।** अभिप्रेतः साध्यविशेषोऽनित्यत्वादिः, तदभावसाधको विरुद्ध इत्यभिप्रायः। **व्यापकाभिमतेति।** व्यापकं यदभिमतं महाविद्यासाध्यमित्यर्थः। तर्हि संशय एव स्यान्न निर्णयोऽत्राह—**यद्वा मा भूदिति।**

---

साध्यों को पक्षीकृत शब्द में वृत्ति मानता है। इतने मात्र में कोई विशेष्यता नहीं है। यतः साध्यतया वादी प्रतिवादी दोनों को अभिप्रेत है। व्यापकत्वेन अभिमत महाविद्यासाध्य के अभाव का व्याप्य यानी साधक हेतु व्यापकविरूद्ध अपरपर्याय विरुद्ध विशेषलक्षण से लक्षित है।

यदि विरुद्धविशेषलक्षण के अभाव से मेयत्वहेतु को विरुद्ध नहीं मानते है। तो अभिप्रेतसाध्यविशेष अनित्यत्वादि के अभाव का साधक हेतु भी विरुद्ध नहीं होगा। इस प्रकार महाविद्यानुमान में विरुद्ध हेत्वाभास का उद्भावन कर यद्वा=पद से अन्य हेत्वाभासों का उद्भावन कर रहे हैं। यदि विरुद्धहेत्वाभास नहीं भी माने तो अभीष्टमहाविद्यासाध्य के विरोधी अन्य हेत्वाभास भी है। जो महाविद्यानुमान के खण्डन में समर्थ है। इसके बाद सत्प्रतिपक्ष हेत्वाभास प्रदर्शित कर रहे हैं।

**सत्प्रतिपक्ष एवायं, न विरुद्धो, न हेत्वाभासान्तरमिति शिवादित्यमिश्राः। तन्न। साध्याभावसाधकतुल्यबलद्वितीयहेतावेव पूर्वाचार्याणां प्रतिपक्षव्यवहारात्, साध्याभावसाधकत्वमात्रेण प्रतिपक्षत्वे विरुद्धस्यापि प्रतिपक्षत्वप्रसङ्गात्। तुल्यबलत्वाभावान्न विरुद्धः प्रतिपक्षो बाधवदिति चेत्। अथ तुल्यबलत्वविशेषणं किमर्थम्। विरुद्धादिनिवृत्त्यर्थमिति चेत्। अथ विरुद्धादयः किमर्थं निवर्त्याः। पूर्वाचार्याणां तत्र प्रतिपक्षव्यवहाराभावादिति**

---

**भुवन.**—परमतं प्रकटयति—**सत्प्रतिपक्ष इति**। अयं हेतुः प्रकरणसम एवेति **शिवादित्यमिश्राः** प्राहुरिति। परमतं निरत्यति—**तन्न। साध्याभावेति**। साध्याभावसाधको यः पूर्वहेतोस्तुल्यबलो द्वितीयहेतुस्तत्रैव पूर्वाचार्याणां सत्प्रतिपक्षत्वव्यवहारात्।

इदं हृदयम्। पूर्वानुमानोक्तहेतुना मेयत्वादिना अनित्यत्वादिसाध्यसाधकेन तुल्यबलः, तस्मान्मेयत्वादेश्च यो द्वितीयहेतुरभिधेयत्वादिः पूर्वोक्तानित्यत्वादिसाध्याभावसाधकः स एव सत्प्रतिपक्षः। साध्याभावसाधकस्यैव प्रतिपक्षत्वेऽतिप्रसङ्गमाह—**साध्याभावेति**। साध्याभावसाधक एव यदि प्रतिपक्षः, तर्हि विरुद्धोऽपि साध्याभावसाधकत्वात्प्रतिपक्षः प्रसज्येत। परः शङ्कते—**तुल्यबलेति**। साध्याभावसाधकोऽपि तुल्यबल एव प्रतिपक्षो नातुल्यबलः, तस्मात्तुल्यबलत्वाभावाद्विरुद्धः प्रतिपक्षो नोच्यते, यथा बाधः कालात्ययापदिष्टस्तुल्यबलत्वाभावान्न प्रतिपक्षः। प्रश्नपूर्वकं परिहरति—**अथ तुल्येत्यादि**।

साध्याभावसाधकस्तुल्यबलः प्रतिपक्ष इति भवत्संमतलक्षणे तुल्यबलत्वविशेषणं किमर्थमित्यर्थः। प्रतिबन्दीमुपादत्ते—**एवं तर्हीति**। प्रकृतो हेतुर्मेयत्वादिर्वाद्युक्तः, तस्मादन्योऽभिधेयत्वादिःसत्त्वम्। एतत्तत्त्वम्—यथा प्रतिपक्षलक्षणे तुल्यबलत्वविशेषणमुपात्तम्, तथा प्रकृतहेत्वन्य इत्यपि विशेषणमुपादेयम्। तथा च साध्याभावसाधकस्तुल्यबलः प्रकृतहेत्वन्यः

---

उक्त महाविद्या के हेतु को शिवादित्य मिश्र सत्प्रतिपक्ष मानते हैं, विरुद्ध नहीं मानते। इस पर ग्रन्थकार, कह रहे हैं, कि मिश्र का कथन युक्तिसंगत नहीं है। यतः साध्याभाव का साधक द्वितीय हेतु जहाँ पर पूर्व हेतु के तुल्य बल होता है, वही पर पूर्वाचार्यों ने सत्प्रतिपक्ष का व्यवहार किया है। साध्याभावसाधकत्वमात्र से यदि कोई हेतु सत्प्रतिपक्ष होने लगे तो विरुद्ध भी सत्प्रतिपक्ष हो जायेगा। जिस प्रकार तुल्यबल न होने के कारण बाध को सत्प्रतिपक्ष नहीं माना जाता, उसी प्रकार तुल्यबल न होने पर विरुद्ध को सत्प्रतिपक्ष नहीं माना जाता। सत्प्रतिपक्ष के लक्षण में तुल्यबलत्व विशेषण

**चेत्। एवं तर्हि प्रकृतहेत्वन्यत्वमपि विशेषणमुपाधेयमेव। पूर्वाचार्यैस्तस्यैव तं प्रति प्रतिपक्षत्वेन अव्यवहारादित्यलमुपजीव्यैः सह कलहेन।**

**महाविद्यान्तरेष्वपि अनित्यपदस्थाने अनित्यत्वात्यन्ताभावपदं प्रक्षिप्य साध्यप्रतीत्यपर्यवसानादनित्यत्वात्यन्ताभावसाधकत्वमुपपाद्य अभीष्टविरुद्धता द्रष्टव्येति।**

---

प्रतिपक्ष इति प्रतिपक्षलक्षणमुक्तं भवति। प्रकृतहेत्वन्यः इति विशेषणाङ्गीकरणे हेतुमाह—**पूर्वाचार्यैरिति।** तस्यैव मेयत्वादेरेव, तं प्रति मेयत्वादिकमेव प्रति प्रतिपक्षत्वेन पूर्वाचार्यैरव्यवहारात्। पूर्वाचार्याणां हिं पूर्वोक्तहेत्वन्यस्मिन्नेव प्रतिपक्षत्वव्यवहारोऽस्ति नतु मेयत्वादेरेव मेयत्वादिकं प्रतीतिभावार्थः। **उपजीव्यैरिति।** अयमभिप्रायः। पूर्वाचार्यैः प्रकृतहेत्वन्य इति विशेषण-मुपादायि। **शिवादित्यमिश्राश्च** नोपाददते इति यः उपजीव्यैः पूर्वाचार्यैः सह भवतां कलहस्तेन कृतम्। एतावता पूर्वोक्तहेतोः सत्प्रतिपक्षत्वमुत्थापितं, अभीष्टविरुद्धत्वं तु स्थापितं भवति।

**भुवन.**—उक्तमन्यत्रातिदिशति। **महाविद्येति।** अयं शब्दः स्वस्वेतर-वृत्तित्वरहितानित्यवृत्तिधर्मवानित्यादौ अनित्यत्ववृत्तिपदस्थाने नित्यवृत्तिपदं प्रयुज्यत इत्यर्थः।

---

इसी लिए दिया है। जिससे विरुद्धादि की निवृत्ति हो सके। यदि विरुद्धादि को भी सत्प्रतिपक्ष के अन्तर्गत ही मानना है। तो विरुद्धादि की निवृत्तिप्रयोजन होगा ही नहीं, तो तुल्यबल विशेषण व्यर्थ होगा। एवं सत्प्रतिपक्ष के लक्षण में प्रकृतहेत्वन्तर भी विशेषण देना चाहिए। अतः प्रकृतसाध्य का साधक हेतु तुल्यबल जो अन्य हेतु वह सत्प्रतिपक्ष कहलाता है। उक्त स्थल में प्रकृत साध्यसाधक मेयत्व से भिन्न अभिधेयत्व ही तुल्यबल होकर साध्याभावसाधक होने पर सत्प्रतिपक्ष हो सकता है। मेयत्व नहीं। मेयत्वहेतु में पूर्वाचार्यों ने सत्प्रतिपक्ष का व्यवहार नहीं किया।

इसी प्रकार अन्यमहाविद्यानुमानों में भी अनित्यपद के स्थान में अनित्यत्वात्यन्ताभावपद देकर साध्यप्रतीति अपर्यवसानवशात् अनित्यत्वा-त्यन्ताभाव (नित्यत्व) का साधक मेयत्व को बनाकर विरुद्धहेत्वाभास का उद्भावन किया जा सकता है। जिस प्रकार सकलगुणसम्पन्न भी व्यक्ति अभीष्ट

**अपि सर्वगुणोऽभीष्टविरोधेन विनश्यति ।**
**किं पुनर्दोषसंघातैर्महाविद्या समाकुला ।।९।।**
**अथ सव्यभिचारत्वमुन्मीलत्कुलिशश्रियम् ।**
**महाविद्यामहाभूभृत्पक्षच्छेदाय सज्जते ।।१०।।**

**सर्वमेव वस्तु स्वनिष्ठात्यन्ताभावप्रतियोगीत्युक्तम्। तेन महा-**

---

**भुवन.**—अभीष्टविरुद्धतामुपसंहरति—**अपि सर्वगुण इति।** सर्वगुणोऽपि हेतुरभीष्टविरोधदोषेण विनश्यति। अन्योऽपि जनः सर्वगुणोऽप्यभीष्टस्य मित्रादेर्विरोधेन विनश्यत्येव। महाविद्याया दोषसंघातैः समाकुलायास्तु किमुच्यते।।९।।

**भुवन.**—अनैकान्तिकतोद्भावनाय प्रक्रमते—**अथ सव्यभिचारत्वमिति।** सव्यभिचारत्वमनैकान्तिकत्वं महाविद्यामहाद्रिपक्षच्छेदाय सज्जते। किं कुर्वत्। उन्मीलत्। अन्तर्भूतण्यर्थत्वादुन्मीलयत्। कां कुलिशश्रियम्। यद्वोन्मीलत्कुलिशद्युतीति पदमवगन्तव्यम्। तथा च सव्यभिचारत्वस्यैतद्विशेषणम्।।१०।।

**भुवन.**—अनैकान्तिकत्वं दर्शयति—**सर्वमेवेति।** सर्वं वस्तु घटात्मादि स्वनिष्ठो योऽत्यन्तभावस्तस्य प्रतियोगि। इदमत्राकूतम्। घटे यदि घटः

---

(मित्र) के विरोध (द्वैष) से विनष्ट हो जाता है। उसी प्रकार सर्वगुणोपेत व्यभिचारादिदोषशून्य भी हेतु अभीष्ट (साध्य) के विरोध (साध्याभावसाधकतया) विनष्ट हो जाता है। (हेतुस्वरूपता हीन हेत्वाभास हो जाता है।) सकल हेतुदोष (हेत्वाभासों) से युक्त महाविद्या क्यों न नष्ट होगी। अर्थात् आवश्य साध्याभावसाधकतया हेत्वाभासस्वरूप होगी।।९।।

इसके बाद महाविद्या में व्यभिचारदोष का भी उद्भावन कर रहे हैं। महाविद्या के कुलिशश्री (कुण्ठित या कठोर स्वरूप) का उन्मीलन करने वाला सव्यभिचार अनैकान्तिक हेत्वाभास भी महाविद्यानुमान के खण्डन में तत्पर है।।१०।।

**'साध्याभाववद्वृत्ति हेंतुः व्यभिचारी'** साध्य के अभावाधिकरण में हेतु का रहना व्यभिचारदोष है। अथवा **'पक्षसपक्षविपक्ष वृत्तिरनैकान्तिकः'** पक्ष सपक्ष, तथा विपक्ष में रहने वाला हेतु व्यभिचारी होता है। एतादृशलक्षण

**विद्यासाध्ये तदत्यन्ताभाववति मेयत्वस्य गतत्वादनैकान्तिकत्वमिति। किञ्च,**

**त्वत्साध्यं स्वभिदान्यमेयनिहिताऽभावान्वितत्वाश्रयो**
**मेयत्वादिति केवलान्वयिमतेऽस्माकं तु तद्भेदतः।**
**यद्वा मेयनिवृत्तताधिकरणं साध्यं त्वदीयं ततो**
**भिन्नत्वादिति साध्यवर्जिततनौ लब्धस्थितिर्मेयता ।।११।।**

---

स्यात्तर्ह्यात्माश्रयो बाधकतर्कः प्रसज्येत। 'अव्यवधानेन स्वापेक्षणमात्माश्रयः' इति तल्लक्षणात्। तस्माद्घटादौ स्वात्यन्ताभावो विद्यते एवेति सर्वं वस्तु स्वात्यन्ताभावप्रतियोगि भवतीति द्वैतीयीकपरिच्छेदे किञ्चिदुक्तम्। **तेन महाविद्येति।** महाविद्यासाध्ये स्वस्वेतरेत्यादौ तस्य महाविद्यासाध्यस्यैव योऽत्यन्ताभावस्तद्वति मेयत्वहेतोर्वृत्तत्वादिति। अयमर्थः—महाविद्यासाध्ये पूर्वोक्तयुत्त्या स्वात्यन्ताभावोऽस्ति। तथा च मेयत्वस्य हेतोः स्वात्यन्ताभाववति महाविद्यासाध्यरूपे विपक्षे वर्तनादनैकान्तिकत्वम्। 'पक्षसपक्षविपक्ष-वृत्तिरनैकान्तिकः' इति तल्लक्षणात्।

---

से लक्षित होने के कारण मेयत्व हेतु व्यभिचारी है। महाविद्यानुमान के साध्य का अभाव महाविद्यासाध्य में है। यतः स्व में स्व की वृत्तिता किसी सम्बन्ध से नहीं होती। महाविद्यासाध्य भी अपने में किसी सम्बन्ध से नहीं रहेगा। अतः साध्याभाव का अधिकरण स्वयं साध्य हो गया। उसमें मेयत्व सकल मेयवृत्तितया विद्यमान है। अतः साध्याभाववद्वृत्ति मेयत्वहेतु होने से व्यभिचरित है।

महाविद्यासाध्य में व्यभिचारदोष प्रदर्शित करते हुए कह रहे हैं। त्वत्साध्यम् महाविद्यानुमानवादी तुम्हारा साध्य स्वस्वेतरआदि स्वभेदातिरिक्त भेद का तथा स्ववृत्ति अत्यन्ताभाव का प्रतियोगी है। इस प्रकार केवलान्वयित्व (अत्यान्ताभावाप्रतियोगित्व) साध्यसाधकानुमान स्थल में केवलान्वयित्वा-त्यन्ताभाव (स्वभेदातिरिक्तभेद तथा अत्यन्ताभाव का प्रतियोगित्व) ही महाविद्यासाध्य में विद्यमान है। वहाँ पर मेयत्व हेतु है। अतः साध्याभाव-वद्वृत्ति हेतु होने से व्यभिचार दोष है। इस प्रकार केवलान्वयित्ववादी (महाविद्यानुमानवादी) के मत से मेयत्व हेतु द्वारा साध्यस्वरूप में साध्य का अभाव दिखाकर व्यभिचार दोष दिखाया। अपने मत में कह रहे हैं कि हम तो साध्य धर्मभेद हेतु द्वारा साध्यस्वरूप में साध्याभाव की सिद्धि कर उसमें

**त्वत्साध्यमिति। पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वादिकं विवक्षितम्। स्वभिदेति। स्वान्योन्याभावः। मेयनिहितो मेयाश्रितः। स चासौ अभावश्च। तेन अन्वितः। तस्य प्रतियोगी। तस्य भावः तत्त्वम्। तस्याश्रयः तदधिकरणमित्यर्थः। प्रयोगस्तु—पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं स्वान्योन्याभावव्यतिरिक्तमेयनिष्ठाभावप्रतियोगित्वाश्रयः, मेयत्वात् घटवदिति। पक्षीकृतसाध्यान्योन्याभावव्यतिरिक्तश्च सर्वेषामन्योन्याभावः प्रमेयेऽस्त्येवेति तेषां सपक्षता। प्रकृतसाध्यस्य चान्योन्याभावव्यतिरिक्तो मेयनिष्ठोऽभावः सिध्यन्नत्यन्ताभाव**

---

अथ प्रकारान्तरेण अनैकान्तिकत्वं दिदर्शयिषुः पद्यमाह—**त्वत्साध्यमिति।** वादिन्, त्वत्साध्यं स्वस्वेतरेत्यादिकं महाविद्यासाध्यं, **स्वभिदान्यमेयनिहिताभावान्विततत्वाश्रयः।** स्वभिदायाः स्वस्वान्योन्याभावादन्यः स्वभिदान्यः। स चासौ मेयनिहितो मेयाश्रितोऽभावश्च, तेनान्वितः तत्प्रतियोगी, तस्य भावस्तत्त्वं, तदाश्रय इत्यर्थः॥११॥

पद्यं व्याचरीकरीति—**त्वत्साध्यमिति। तेनान्वित इति।** ननु मेयाश्रिताभावान्वितो मेय एव, तत्कथं स एव तस्य प्रतियोगी। उच्यते—स्वस्मिन्स्वस्यावृत्तेर्मेयाश्रिताभावस्य मेयः प्रतियोग्येवेति तेनान्वितस्तस्य प्रतियोगी स्यादेवेति। प्रयोगं रचयति—**प्रयोगस्त्विति।** पक्षीकृतेत्यादि-

---

मेयत्व हेतु की वृत्तिता बताकर व्यभिचारदोष दिखा देगें। यदि तुम व्यभिचार के भय से साध्य में मेयरूपता न मानो तो भी हम उसमें मेयत्व सिद्ध कर व्यभिचार दे देगें॥११॥

पूर्वपक्षसमाधानपुरःसर ११वें पद्य की व्याख्या कर रहे हैं। यदि पूर्वपक्षी कहे कि मेयाश्रित अभाव का प्रतियोगी मेय के न होने से मेयत्व हेतु व्यभिचारी नहीं होगा। इसमें ग्रन्थकार कह रहे हैं कि यद्यपि स्व में स्व का भेद न होने अन्योन्याभाव का प्रतियोगी मेय नहीं होगा। तथापि मेयत्वेन सकल घटपटादि पदार्थ गृहीत है। उनमें परस्पर भेद होने से एक मेय का अपर मेय में भेद है। अतः मेयप्रतियोगिकभेद का प्रतियोगी मेय महाविद्यासाध्य होगा है। यतः वह ज्ञानविषय होने मेय है। उसमें मेयत्वधर्म वृत्ति है। इस प्रकार मेयभेदवद्वृत्तिमेयत्व हो गया। यदि कहे कि पक्षभेदवद्वृत्ति (पक्ष के भेदवाले में रहना) हेतु व्यभिचारी नहीं कहलाता अतः अत्यन्ता-

**एव सिध्यति। तस्य साध्यस्य सदातनत्वेन प्राक्प्रध्वंसाभावानुपपत्तेः। तेन साध्याभाववति गमनान्मेयत्वस्य सव्यभिचारत्वं अनैकान्तिकत्वापरपर्यायं दुर्वारम्। अयं हेतुः केवलान्वयिप्रामाण्यवादिनाम्। अस्माकं तु स्वान्योन्याभावव्यतिरिक्तमेयनिष्ठाभावप्रतियोगित्वान्यत्वादिति हेतुः। तदिद-मुक्तं तद्भेदत इति। तदन्यत्वादित्यर्थः तच्छब्देन च स्वान्योन्याभाव-व्यतिरिक्तमेयनिष्ठाभावप्रतियोगित्वं परामृश्यते।**

---

महाविद्यासाध्यं पक्षः मेयेषु निष्ठश्चासौ अभावश्च मेयनिष्ठाभावः। स्वान्योन्याभावव्यतिरिक्तश्चासौ मेयनिष्ठाभावश्चेति विग्रहः। महाविद्यासाध्यस्य स्वान्योन्याभावप्रतियोगित्वेन सिद्धसाध्यता स्यात्, तां निवारयति स्वान्योन्याभावव्यतिरिक्तेति पदेन। एवंविधोऽभावः क्वास्तीति सापेक्षत्वं वारयति मेयनिष्ठेतिपदेन। ननु कथमत्र व्याप्त्यवगमोऽत्राह—**पक्षीकृतसाध्येत्यादि।** घटान्योन्याभावः पटेऽस्ति, पटान्योन्याभावश्च घटे इत्येवंप्रकारेण सर्वेषां घटपटादीनामन्योन्याभावः प्रमेयेऽस्ति। ततस्तेषां घटपटादीनां सपक्षता। **तेन साध्याभाववतीति।** अयमाशयः। अनेनानुमानेन महाविद्यासाध्यस्य

---

भाववद्वृत्ति (साध्य के अत्यन्ताभाववाले में रहना) रूपेण मेयत्व हेतु को व्यभिचारी वता रहे हैं।

कोई भी वस्तु अपने में किसी सम्बन्ध से नहीं रहता है। महाविद्या साध्य भी महाविद्यासाध्य में नहीं रहता। अतः महाविद्यासाध्य महाविद्या-साध्याभाववान् होगा। उसमें मेयत्व हेतु स्वरूपसम्बन्धेन वृत्ति है। इस प्रकार साध्याभाववद्वृत्ति मेयत्वहेतु व्यभिचारी होगा।

अनुमान प्रयोग से भी महाविद्यासाध्य में स्वनिष्ठात्यन्ताभावप्रतियोगित्व प्रतिपक्षी अभिमत मेयत्व हेतु द्वारा सिद्ध कर रहे हैं। प्रयोग **'पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणम् स्वान्योन्याभावव्यतिरिक्त-मेयनिष्ठाभावप्रतियोगित्वाश्रयः मेयत्वात् घटवत्'** महाविद्यानुमानसाध्य को पक्ष बना कर उसमें मेयत्व हेतु द्वारा स्वान्योन्याभावव्यतिरिक्त मेयनिष्ठाभाव-प्रतियोगित्वाश्रयत्व (प्रतियोगित्व) साध्य की सिद्धि कर रहे हैं। स्वान्योन्याभाव स्वप्रतियोगिक भेद का प्रतियोगी स्व यानी महाविद्यासाध्य है। तत्साधन में सिद्धसाधन दोष होगा। अतः तद्व्यतिरिक्त कहा।

स्वान्योन्याभावव्यतिरिक्त अभाव तीन प्रकार का है, प्रागभाव प्रध्वंसाधान, तथा अत्यन्ताभाव, महाविद्यासाध्य के सनातन होने से प्रागभाव प्रध्वंसाभाव तो सम्भव नहीं है। प्रत्याशत्या मेयनिष्ठात्यन्ताभाव लिया जायेगा।

**व्यतिरेकव्याप्तिस्तु यन्मेयनिष्ठाभावप्रतियोगित्वाश्रयो न भवति, तन्मेयनिष्ठाभावप्रतियोगित्वान्यन्न भवति। यथा मेयनिष्ठाभावप्रतियोगित्व-मेव, स्वात्मन्यवृत्तेः। तेन तस्मिन्नेव अनैकान्तिकत्वमिति परिहृतम्।**

---

मेयेऽत्यन्ताभावोऽस्तीति साधितम्। मेयत्वहेतुस्तु तत्रापि मेये वर्तत इति साध्याभाववति गमनान्मेयत्वस्य अनैकान्तिकत्वम्। नन्वयमपि भवतो हेतुर्महाविद्याया इव केवलान्वयी, ततोऽस्यापि हेतोरनैकान्तिकत्वं कथं नेत्याह—**अयं हेतुरित्यादि।** अयं मेयत्वादिति हेतुः। तर्हि भवद्भिः किं हेतूक्रियतेऽत्राह—**अस्माकं त्विति।** अत्र साध्यधर्मान्यन्वादिति हेतुः। व्याप्तिश्च यत्स्वान्योन्याभावव्यतिरिक्तमेयनिष्ठाभावप्रतियोगित्वान्यत् तत्स्वान्योन्याभाव-व्यतिरिक्तमेयनिष्ठाभावप्रतियोगित्वाश्रयो, यथा घटादि। अयं भावः। सर्वेऽपि भावाः परस्परापेक्षया मेयनिष्ठात्यन्ताभावप्रतियोगित्ववन्तः, तथा मेयनिष्ठात्यन्ताभावप्रतियोगित्वरूपो यो धर्मस्तस्मादन्ये भिन्ना अपि भवन्ति। धर्मधर्मिणोर्भिन्नत्वात्।

**भुवन.**—अस्यापि हेतोः केवलान्वयित्वेन कथं न व्यभिचारा-शङ्केत्याह—**व्यतिरेकव्याप्तिरित्यादि।** व्यतिरेकव्याप्तौ मेयनिष्ठाभाव-

---

यहाँ पर मेय पद से जो गृहीत है। उसी को मेयनिष्ठात्यन्ताभाव का प्रतियोगी कहना है। जैसा बताया गया है, कि स्व (अपने) में स्व (अपने) की वृत्तिता नहीं होती। इस प्रकार मेय महाविद्यासाध्य में रहने वाले स्वभेदातिरिक्त महाविद्यासाध्यप्रतियोगिक अत्यन्ताभाव का प्रतियोगी महाविद्यासाध्य होगा। इस प्रकार महाविद्यासाध्याभाववत् महाविद्यासाध्य में मेयत्व हेतु वृत्ति होने से व्यभिचारी है। पक्षीकृतसाध्यान्योन्याभाव अतिरिक्त अन्योन्याभावप्रतियोगित्व सकल घटपटादिप्रमेयों में सिद्ध होने से सपक्ष है।

उक्त अनुमान प्रयोग, तथा हेतु, केवलान्वयित्ववादिओं के मत से है। हमारे मत में महाविद्यासाध्य में स्वान्योन्याभावव्यतिरिक्तमेयनिष्ठाभावप्रति योगित्वान्यत्व हेतु स्व में स्व के अत्यन्ताभाव का साधन है। उसमें मेयत्व हेतु वृत्ति है। अब प्रतिवादी यह नहीं कह सकता कि आपका साध्याभावसाधकमेयत्व हेतु भी हमारे महाविद्यानुमान के मेयत्व हेतु के समान है। यदि हमारा हेतु व्ययिचरित है, तो आप का भी व्यभिचरित होगा। यतः हम हेत्वन्तर द्वारा भी महाविद्यासाध्य में महाविद्यासाध्य का अत्यन्तभाव सिद्ध कर दिया। अनुमान प्रयोग महाविद्यासाध्य स्वान्योन्याभावव्यतिरिक्त-

**यद्वैवं प्रयोगः—पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वाधिकरणं, मेयत्वान्यत्वे सति**

---

प्रतियोगित्वं दृष्टान्तः। तच्च मेयनिष्ठाभावप्रतियोगित्वस्याश्रयो न भवति, स्वस्मिन्स्वस्य अवृत्तेः। नापि मेयनिष्ठाभावप्रतियोगित्वं स्वस्मादन्यद्भवति। स्वस्य स्वतोऽन्यत्वे स्वरूपस्यैव हानेः। **तेन तस्मिन्निति।** तेनान्वयव्यतिरेकिहेतूकरणादिकारणेन, तस्मिन्नेव महाविद्यानुमानोत्थापकानुमानसाध्य एव स्वात्यन्ताभाववति वर्तनान्मेयत्वहेतोरनैकान्तिकत्वं परेणोद्भाव्यमानमाशङ्क्य परिहृतमित्यर्थः।

**भुवन.**—उत्तरार्धं व्याचष्टे—**यद्वैवमिति।** अत्र पूर्वोक्तः एव पक्षः। पूर्वोक्तसाध्यमध्याच्च स्वान्योन्याभावव्यतिरिक्तेति पदं त्यक्तं, अत्यन्ताभावेति चोपात्तम्। शेषं तदेव। हेतुश्चात्र यत्साध्यं तदन्यत्वादित्येव, परं मेयत्वान्यत्वे

---

मेयनिष्ठात्यन्ताभावप्रतियोगित्वाश्रय है। स्वान्योन्याभावव्यतिरिक्तमेयनिष्ठाभावप्रतियोगित्वभिन्न होने से। जो जो स्वान्योन्याभावव्यतिरिक्त मेयनिष्ठाभावप्रतियोगित्वभिन्न होता है। वह स्वान्योन्याभावव्यतिरिक्तमेयनिष्ठात्पन्ताभावप्रतियोगित्वाश्रय होता है। जैसे घटादि इसी पद्य में तद्भेदतः कहा है। जिसका अर्थ स्वान्योन्याभावव्यतिरिक्तमेयनिष्ठाभावप्रतियोगित्वान्यत्व है। इसी हेतु से महाविद्यासाध्य में महाविद्यासाध्य का अभाव सिद्ध कर उसमें प्रकृत मेयत्व हेतु की वृत्तिता दिखा कर व्यभिचार दोष दिखा रहे है।

समन्वय=सकलभावपदार्थ मेय है। तथा परस्पर में रहनेवाले अभाव के प्रतियोगी भी है। मेयनिष्ठात्यन्ताभावप्रतियोगित्वरूपधर्म से भिन्न भी धर्म मेयनिष्ठ है। अतः प्रतियोगित्वान्यत्वरूप हेतु भी महाविद्यासाध्यस्वरूपमेय में है। तथा स्वान्योन्याभावव्यतिरिक्तमेयनिष्ठाभावप्रतियोगित्वाश्रयत्व (प्रतियोगित्व) साध्य भी है। यदि महाविद्यानुमानवादी कहे कि आप का हेतु भी सकलमेयों में स्वान्योन्याभावव्यतिरिक्तमेयनिष्ठाभावप्रतियोगित्वाश्रयत्व का साधक होने से केवलान्वयी ही होगा। यदि हमारे केवलान्वयी हेतु में व्यभिचारदोष है, तो आप के हेतु में भी व्यभिचारदोष होगा। इसके उत्तर में कह रहे हैं, कि हमारे अनुमानप्रयोग में अन्वयव्याप्ति तथा व्यतिरेकव्याप्ति दोनों है। जो आपके अनुमानप्रयोग में नहीं है। अन्वयव्याप्ति यथा—'यत्स्वान्योन्याभावव्यतिरिक्तमेयनिष्ठाभावप्रतियोगित्वान्यत् (जो स्वभेदातिरिक्त मेयवृत्ति अभावप्रतियोगित्व से भिन्न है। 'तत्स्वान्योन्याभावव्यतिरिक्तमेयनिष्ठाभावप्रतियोगित्वाश्रयः' (वह स्व भेदातिरिक्त मेयनिष्ठाभावप्रतियोगित्व का

**मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वान्यत्वात्, घटवदिति—यद्वा मेय-निवृत्तताधिकरणं साध्यं त्वदीयं ततो, भिन्नत्वादिति साध्यवर्जिततनौ लब्धस्थितिर्मेयता। मेयनिवृत्तता मेयनिष्ठात्यन्ताभावप्रतियोगित्वम्। ततो**

---

सतीत्यधिकं पदम्। तच्च चेन्न गृह्येत, तर्हि मेयत्वे मेयत्ववन्निष्ठात्यन्ता-भावप्रतियोगित्वान्यत्वरूपसाधनसत्त्वेऽपि मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वा-श्रयत्वरूपसाध्याभावेन यत्र यत्र साधनं तत्र तत्र साध्यमिति व्याप्त्य-भावान्मेयत्वेन व्यभिचारो भवेत्। तद्व्यावृत्त्यर्थं मेयत्वान्यत्वे इत्युपादायि। मेयत्वं चाशेषलक्षणम्। अन्येऽपि वाच्यत्वसत्त्वादयो ये केवलान्वयिधर्मास्तदन्यत्वे सतीति मन्तव्यम्। अन्यथा वाच्यत्वादिभिरपि व्यभिचारः केन निवार्येतेति भावार्थः। **यद्वा मेयनिवृत्ततेति।** मेयान्निवृत्तो मेयनिवृत्तः, तस्य भावो मेयनिवृत्तता। एतावता मेयनिष्ठात्यन्ताभावप्रतियोगित्वं प्रोक्तम्। यतो

---

आश्रय है) व्यतिरेकव्याप्ति में साध्याभावव्याप्य साधनाभावव्यापक होगा। यन्मेयनिष्ठाभावप्रतियोगित्वाश्रयो न भवति (जो मेय मे रहने वाले अभाव के प्रतियोगित्व का आश्रय नहीं है।) तन्मेयनिष्ठाभावप्रतियोगित्वान्यत् नास्ति' (वह मेयवृत्ति अभावप्रतियोगित्व से भिन्न नहीं है।) व्यतिरेक व्याप्ति का दृष्टान्त मेयनिष्ठाभावप्रतियोगित्व होगा। स्व में स्व की वृत्तिता न होने के कारण मेयनिष्ठाभावप्रतियोगित्व का आश्रय मेयनिष्ठाभावप्रतियोगित्व नहीं है। उस मेयनिष्ठाभावप्रतियोगित्व में मेयनिष्ठाभावप्रतियोगित्वभेद भी नहीं है। स्व में स्व का भेद नहीं रहता। वही स्वान्योन्याभावव्यतिरिक्तमेयनिष्ठाभाव-प्रतियोगित्व महाविद्या का साध्य है। उसमें उक्त साध्य का अभाव है, तथा मेयत्वहेतु वृत्ति है। अतः व्यभिचारदोष का परिहार असम्भव है।

श्लोक के उत्तरार्द्ध यद्वा से अनुमानान्तरप्रयोग द्वारा महाविद्यासाध्य में मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वाधिकरणत्व मेयत्वान्यत्वविशिष्टमेयत्व-वन्निष्ठात्यन्ताभावप्रतियोगित्वान्यत्व हेतु द्वारा सिद्ध कर रहे हैं, दृष्टान्त घट को बनाया है। पूर्वोक्तानुमान का साध्य स्वान्योन्याभावव्यतिरिक्तपदघटित था प्रकृत में साक्षात् अत्यन्ताभावपद दे दिया है। शेष पूर्ववत् है। हेतु महाविद्यासाध्यान्यत्व (महाविद्यासाध्यभेद) है। उक्त हेतु को मेयत्वान्यत्व से विशेषित इस लिए किया कि मेयत्व में मेयत्ववन्निष्ठात्यन्ताभावप्रति-योगित्वान्यत्व (तादृशप्रतियोगित्वभेद) है। यतः मेयत्ववन्निष्ठात्यन्ताभाव का प्रतियोगी वही धर्म होगा जिसका मेयत्ववत् मेय में अत्यन्ताभाव होगा। मेयत्व का मेय में, अत्यन्ताभाव तो होगा नहीं। जिस धर्म का अभाव होगा

**भिन्नत्वादिति। मेयनिष्ठात्यन्ताभावप्रतियोगित्वमेयत्वाभ्यामन्यत्वादित्यर्थः। एवं सर्वमहाविद्यासाध्यानि पक्षीकृत्य अनैकान्तिकत्वं साधनीयम्।**

---

मेयनिष्ठात्यन्ताभावप्रतियोगी मेयनिवृत्त एवेति। मेयनिवृत्ततताया अधिकरणं त्वदीयं साध्यं महाविद्यासत्कम्। एतावता पक्षीकृतेत्यादिपक्षे मेयत्ववन्निष्ठेत्यादि साध्यं सूचितम्। **ततो भिन्नत्वादिति।** ततो मेयत्ववन्निष्ठात्यन्ताभाव-प्रतियोगित्वधर्मान्मेयत्वधर्माच्च भिन्नत्वादन्यत्वादित्यर्थः। अनेन मेयत्वा-न्यत्वेत्यादिहेतुरसूचि। अयं सर्वसव्यभिचारत्वपक्षपरमार्थः—महाविद्यासाध्यं स्वस्मिन्वर्तते न वा। वर्तते चेत्तदा आत्माश्रयः। नो चेत्तर्हि स एव विपक्ष इति युक्त्या महाविद्यासाध्ये महाविद्यासाध्यवर्जिते तथा पूर्वानुमानाभ्यां मेयमध्ये महाविद्यासाध्याभावसाधनात्, महाविद्यासाध्यरहिते घटादिमेये च मेयत्वस्य वर्तनात् अनैकान्तिकत्वमित्यर्थः।

---

वह धर्म प्रतियोगी उसमें स्वरूपसम्बन्धेन प्रतियोगित्व रहेगा। उसका भेद मेयत्व में साध्य मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वाश्रयत्व वह मेयत्व में नहीं है। मेयत्ववत् (मेय) निष्ठात्यन्ताभाव का यदि मेयत्व प्रतियोगी होता, तो मेयत्व में मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वाश्रयत्व रहता। अतः मेयत्वान्यत्व से हेतु को विशेषित कर दिया। स्व में स्व का भेद न रहने से मेयत्व में उक्त हेतु भी नहीं है। दृष्टान्त घट में हेतु का समन्वय मेयत्ववत् मेय घट तन्निष्ठात्यन्ताभाव पटत्वाभाव उसका प्रतियोगी पटत्व प्रतियोगिता स्वरूपसम्बन्धेन पटत्व में तदन्यत्व घटत्व में, वह घटत्व मेयत्वान्यत्वविशिष्ट हो कर घट में वृत्ति है।

साध्य का समन्वय दृष्टान्त में मेयत्ववत् मेय घटान्यपटादि, उसमें रहने वाला घटत्वात्यन्ताभाव उसका प्रतियोगी घटत्व तदाश्रय घट। अथवा स्व में स्व की वृत्तिता न रहने से घट में घट किसी सम्बन्ध से नहीं रहता। मेयत्ववत् मेयघट में घट का अत्यन्ताभाव है। उसके प्रतियोगित्व का आश्रय घट हो जायेगा। एवमेव पक्षीकृतमहाविद्यासाध्य शब्दतदितरवृत्तित्वरहितानित्य निष्ठाधिकरणत्व में उक्त मेयत्वान्यत्वविशिष्टमेयत्ववन्निष्ठात्यन्ताभाव-प्रतियोगित्वान्यत्व रूप हेतु है। तथा मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वाधि-करणत्व भी है। इस प्रकार मेयत्ववत् मेय महाविद्यासाध्य तथा घटादि में मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वाश्रयत्व सिद्ध हो गया। उसमें मेयत्व वृत्ति ही है। इस प्रकार मेयत्वाधिकरण मेय में अत्यन्ताभावप्रतियोगित्वाश्रयत्व सिद्ध

**न चैवं सति सकलसाध्यानि पक्षीकृत्य सर्वहेतूनामनैकान्तिकत्वस्य साधयितुं शक्यत्वात्सर्वानुमानोच्छेद इति वाच्यम्। महाविद्यानुमानानैकान्तिकत्वस्य तत्साधनस्य च सकलानुमानानैकान्तिकत्वेन तत्साधनेन च व्याप्त्यभावेन ताभ्यां तयोरापादयितुमशक्यत्वात्। एवंविधानुमानानां**

---

**भुवन.**—न वाच्यमित्यत्र हेतुमाचष्टे—**महाविद्यानुमानानैकान्तिकत्वस्येति।** महाविद्यानुमानानैकान्तिकत्वस्य प्राक्प्रदर्शितस्य सर्वानुमानानैकान्तिकत्वेन सह, तथा महाविद्यानुमानानैकान्तिकत्वासाधनस्य सर्वानुमानानैकान्तिकत्वसाधनेन सह व्याप्त्यभावात्। व्याप्त्यभावश्चात्रेत्थम्। न हि यत्र यत्र महाविद्यानुमानानैकान्तिकत्वं तत्र तत्र सकलानुमानानैकान्तिकत्वमिति तथा यत्र महाविद्यानुमानानैकान्तिकत्वसाधनं तत्र सर्वानुमानानैकान्तिकत्वसाधनमिति च

---

हो जाने से। मेयत्वाधिकरण महाविद्यासाध्य रूप मेय में महाविद्यासाध्यमेय के किसी सम्बन्ध से न रहने के कारण तथा मेयत्व के रहने के कारण व्यभिचार सुनिश्चित है। इसी रीति से सकलमहाविद्या साध्यों को पक्ष बनाकर अनैकान्तिकत्व (व्यभिचारदोष) का साधन किया जा सकता है।

वादी यदि आशङ्का करे कि जिस प्रकार महाविद्यासाध्य को पक्ष बनाकर मेयत्व हेतु में व्यभिचारदोष दिया। उसी रीति से सकलसाध्यों को पक्ष बना कर सकलहेतुओं में व्याभिचारदोष सिद्ध हो जायेगा। इस प्रकार कोई भी अनुमान निर्दुष्ट न होने के कारण अनुमानप्रमाणमात्र का उच्छेद हो जायेगा। इसके समाधान में ग्रन्थकार कह रहे हैं, कि महाविद्यानुमानानैकान्तिकत्व की सकलानुमानानैकान्तिकत्व के साथ न तो व्याप्ति है। न तो महाविद्यानुमानानैकान्तिकत्वसाधन की सकल अनुमान अनैकान्तिकत्वसाधन के साथ व्याप्ति है। 'यत्र यत्र महाविद्यानुमानानैकान्तिकत्वं तत्र तत्र सकलानुमानानैकान्तिकत्वं जहाँ जहाँ महाविद्यानुमानव्यभिचारदोष है, वहाँ वहाँ सकल अनुमानव्यभिचार दोष है। ऐसी व्याप्ति नहीं है। यत्र यत्र महाविद्यानुमानव्यभिचारदोषसाधनं, तत्र तत्र सकलानुमानव्यभिचारदोषसाधनं। ऐसी व्याप्ति भी नहीं है।

महाविद्यानुमानव्यभिचार तथा महाविद्यानुमान में व्यभिचार दोष के साधन द्वारा सकल अनुमानों में व्यभिचार एवं सकल हेतुंओं में व्यभिचारित्व का आपादान भी नहीं किया जा सकता। यतः आपाद्यआपादकभाव यानी आपादक (कारण) ज्ञान से आपाद्य (कार्य) ज्ञान वही पर होता है। जहाँ

**चास्माभिः प्रामाण्यानङ्गीकारात्। महाविद्यावादिना चैवंविधानुमानप्रामाण्ये विप्रतिपत्तुमशक्यत्वादिति।**

---

व्याप्तिरस्ति। व्याप्त्यभावेन किं तदत्याह—**ताभ्यां तयोरापादयितुमिति।** ताभ्यां महाविद्यानुमानानैकान्तिकत्वतत्साधनाभ्यां तयोः सर्वानुमानानैकान्तिकत्वतत्साधनयोरापादयितुमशक्यत्वात्। यतः आपादकेनापाद्यं तदैव आपाद्यते यद्यापाद्यापादकयोर्व्याप्तिःस्यात्, व्याप्तिमूलत्वात्तर्कस्य। द्वितीयं हेतुं ब्रूते—**एवंविधेति।** यद्धेतूनामनैकान्तिकत्वं साधयितुं शक्यते, तान्येवंविधानुमानानि महाविद्यानुमानादीनि तेषामस्माभिः प्रामाण्यं नाङ्गीकियते इत्याशयः।

---

पर आपादक और आपाद्य की व्याप्ति हो, यहाँ पर तो व्याप्ति है नहीं। यदि पूर्वपक्षी कहे कि महाविद्यानुमान में व्याप्ति (साहचर्य) गृहीत है। तो नहीं कह सकता। यतः महाविद्यानुमानों का प्रामाण्य हमें स्वीकार्य नहीं है। महाविद्यानुमानवादी महाविद्यानुमानों में प्रामाण्य मानता है। उन महाविद्यानुमानों में हमने व्यभिचारदोष दे दिया। जिसका प्रतिवाद भी महाविद्यानुमानवादी नहीं कर सकता।

एवमेव महाविद्यानुमानसादृशानुमानप्रयोग द्वारा भी मेयत्ववत् मेय महाविद्यासाध्य में तथा घटादि में महाविद्यासाध्याभाव सिद्ध कर उसमें मेयत्व हेतु की वृत्तिता दिखा कर महाविद्यानुमान में व्यभिचारदोष दिखा रहे है। पक्ष पूर्ववत् शब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरूप महाविद्यासाध्य को बनाया है। साध्य 'मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वव्यतिरिक्तैतद्धर्मत्वरहिताधिकरणत्व को बनाया है'। हेतु—'मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वव्यतिरिक्तैतन्निष्ठत्वरहिताधिकरणान्यत्व (अधिकरणभेद) को बनाया दृष्टान्त घट है'।

दृष्टान्त घट में हेतु तथा साध्य का समन्वय सीधे हो जायेगा। पक्षीकृत महाविद्यासाध्य में उक्त साध्य की सिद्धि स्व में स्व के अभाव बिना अनुपन्न होगी। अतः महाविद्यासाध्य में महाविद्यासाध्य का अभाव सिद्ध होगा। एवं घटादिदृष्टान्त में महाविद्यासाध्य का अभाव सिद्ध होगा। वहाँ मेयत्वहेतु की वृत्तिता रहने पर महाविद्यानुमान में व्यभिचारदोष सिद्ध हो जायेगा। दृष्टान्त घट में हेतु का समन्वय मेयत्ववत् मेय घटनिष्ठात्यन्ताभावप्रतियोगित्व एतद्वृत्तित्व रहिताधिकरणत्व घटभिन्नपटादि में है। उसका भेद घट में है। साध्य समन्वय मेयत्ववत् मेयनिष्ठ अत्यन्ताभावप्रतियोगित्वभिन्न एतत् धर्म पक्षीकृतमहाविद्यासाध्यधर्म तद्रहितघटत्वधर्म का अधिकरणत्व भी घट में

**एवं पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वव्यतिरिक्तैतद्धर्मत्वरहिताधिकरणं मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वव्यतिरिक्तैतन्निष्ठत्वरहिताधिकरणत्वान्यत्वात् घटवदित्यादिभिरपि सर्वमहाविद्यासु अनैकान्तिकत्वं साधनीयमिति।**

---

**भुवन.**—महाविद्यानैकान्तिकत्वसाधनाय तार्तीयिकमनुमानं दर्शयति—**पक्षीकृतशब्देति।** पक्षीकृतेत्यादि महाविद्यासाध्यं पक्षः। मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वव्यतिरिक्तश्चासौ एतद्धर्मत्वरहितश्च, तदाश्रयः इत्याश्रयः इत्यन्वयः। मेयत्ववति मेये निष्ठो योऽत्यन्ताभावस्तस्य यत्प्रतियोगित्वं धर्मस्तस्मादन्यः एतद्धर्माः पक्षीकृतमहाविद्यासाध्यधर्माः, तत्त्वेन रहितश्च धर्मः पक्षीकृतमहाविद्यासाध्यान्यधर्मो वा, व्यतिरिक्तपदेनं कर्षितं मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वं वा। आद्यो व्याहतः। न हि पक्षान्यधर्मः पक्षे वर्तते इति सम्भवति। द्वितीयस्तु पक्षे सिध्यन् क्वापि मेये पक्षीकृतमहाविद्यासाध्यस्याभावं साधयति। तथा च साधनवति साध्याभावान्मेयत्वस्य व्यभिचारपिशाचसंचारदुःसंचरत्वम्। आद्यः पक्षः पक्षान्यधर्मरूपः सर्वत्र सपक्षे प्रयोजकः। मेयत्वादिव्यावृत्त्यर्थमेतद्धर्मत्वरहितग्रहणम्। एतद्धर्मत्वरहिताधिकरणमित्युक्ते व्याघातः, तव्द्यावृत्त्यर्थं मेयत्ववन्निष्ठेत्यादिग्रहणम्। अत्र यत्साध्यं तदन्यत्वादिति हेतुरिति हेतुव्यावृत्त्यानि स्पष्टानि।

---

सिद्ध है। इस प्रकार महाविद्यासाध्यधर्मवत् से भिन्न धर्मवत् का अधिकरण घट हो गया।

पक्षमहाविद्यासाध्य में हेतु का समन्वय मेयत्ववत् महा विद्यासाध्यनिष्ठान्यन्ताभावप्रतियोगित्वघटत्वादि से भिन्न एतद्वृत्तित्वरहित धर्माधिकरणत्व महाविद्यासाध्यभिन्न में है। उसका भेद महाविद्यासाध्य में है। साध्यसमन्वय पक्षीकृतमहाविद्यासाध्य में मेयत्ववत् मेयनिष्ठ जो अत्यन्ताभावप्रतियोगित्वभिन्न एतद्धर्म महाविद्यासाध्यधर्मत्वरहितधर्म महाविद्यासाध्यान्यधर्म उसका अधिकरण साक्षात् महाविद्यासाध्य को यदि कहेंगे तो व्याघातदोष होगा। महाविद्यासाध्यधर्मभिन्नधर्म का अधिकरण महाविद्यासाध्य नहीं हो सकता। अतः प्रतियोगित्वव्यतिरिक्त एतद्धर्मत्व महाविद्यासाध्य धर्मत्वरहित कहा। उसका अधिकरण महाविद्यासाध्य तभी होगा जब महाविद्यासाध्य धर्मत्वरहित कोई मेय होगा। जो भी मेय होगा उसमें मेयत्व वृत्ति होने से व्यभिचार होगा।

**इति सव्यभिचारत्वदोषेणाकुलिता सती।**
**कुलस्त्रीव महाविद्या प्राणानुज्झति लज्जिता।।१२।।**
**अथ सत्प्रतिपक्षत्वं पक्षिराजस्य पक्षतिः।**
**पराभवति दुर्वारमहाविद्याभुजङ्गमान्।।१३।।**
**धर्मी च त्वदभीष्टसाध्यरहितः साध्यस्तदेकाश्रितैः**
**साध्याभाववदाश्रितत्वरहितैः साध्यप्रसिद्धिः पुनः।**
**साध्यं ते स्वभिदान्यजन्मनिघनाऽनाकान्तभावस्फुर-**
**द्भेदस्य प्रतियोगितत्त्वविरहादित्यादिभिर्जायते।।१४।।**

---

**भुवन.**—सव्यभिचारत्वमुपसंहरति—**इति सव्यभिचारेति।।१२।।**

**भुवन.**—सत्प्रतिपक्षत्वदोषायोपक्रमते—**अथ सदति।** सत्प्रतिपक्षत्वं प्रकरणसमत्वं, प्रत्यनुमानबाधितत्वमिति यावत्। पक्षिराजस्य गरुडस्य पक्षतिः पक्षमूलम्।।१३।।

---

इस प्रकार सभी महाविद्यानुमानों में अनैकान्तिकत्व साधनीय है।

जिस प्रकार कुलीन स्त्री व्यभिचार (परपुरुष गमन) के कारण लज्जित होकर प्राणोत्सर्ग कर देती है। उसी प्रकार महाविद्यानुमानरूपीस्त्री व्यभिचारदोष (अनैकान्तिकत्व) से दूषित होकर लज्जा के कारण व्याकुल प्राणोत्सर्ग कर देगी। अर्थात् व्यभिचारदोष से दूषित महाविद्यानुमान की स्थिति नहीं रहेगी।१२

इसके बाद महाविद्यानुमान में सत्प्रतिपक्षरूपहेत्वाभास दिखा रहे हैं। जिस प्रकार पक्षिराज गरुड़ की पक्षति (उस स्थान में रहना) भयङ्करसर्पों के पराभव का कारण होता है। उसी प्रकार महाविद्यानुमानरूप सर्प के पराभूत करने के लिए सत्प्रतिपक्षत्व (प्रकरणसमत्व) पक्षीभूतशब्द में विद्यमान है। जो महाविद्यानुमान को पराभूत कर देगा।।१३।।

उक्त सत्प्रतिपक्षस्वरूप का निरूपण चतुर्दशश्लोक में कर रहे है। धर्मी पक्षीभूतशब्द में महाविद्यासाध्य का अभाव पक्ष (शब्द) अन्यत्वरहितत्व हेतु द्वारा साधनीय है। पक्षान्यत्व पक्षीकृतशब्दान्य में तद्राहित्य शब्द में है। महाविद्यासाध्य का अभाव प्रदर्शनीय नहीं है। अतः व्यतिरेकव्याप्ति का प्रयोग कर रहे है। जो महाविद्यासाध्याभाववान् नहीं है, अर्थात् महाविद्यासाध्यवान् है। वह पक्षीकृतशब्दान्यत्वरहित नहीं है। अर्थात् पक्षीकृत शब्दान्यत्वत् है।

**धर्मी पक्षीकृतः शब्दः। त्वदभीष्टं साध्यं, स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वादि। तद्रहितः तदत्यन्ताभाववान्। साध्यः अनुमेयः इत्यर्थः। प्रयोगस्तु—अयं शब्दः एतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वात्यन्ताभाववान्, एतदन्यत्वरहितत्वात्। यत्पुनरेतदि-**

---

**भुवन.**—सत्प्रतिपक्षतां दर्शयति—**धर्मी चेति**। धर्मी शब्दः, त्वदभीष्टं साध्यं महाविद्यासाध्यं, तेन रहितः साध्यः साधनीयः। कैः। तदेकाश्रितैः तस्मिञ्शब्दे एवैकस्मिन् ये आश्रिता धर्माः शब्दमात्रनिष्ठास्तैरित्यर्थः।।१४।।

श्लोकं व्याचाख्याति—**धर्मी पक्षीकृत इति**। प्रयोगेण सत्प्रतिपक्षतां स्पष्टयति—**अयं शब्द इत्यादि**। अयं शब्दः पक्षः, एतदितरेत्यादिमहाविद्यासाध्यस्य योऽत्यन्ताभावस्तद्वान् एतदन्यत्वरहितत्वात्। एतस्माच्छब्दाद्यदन्यत्वं तेन रहितत्वात् एतच्छब्दत्वादित्यर्थः। व्यतिरेकव्याप्तिमाह—**यत्पुनरित्यादि**। यन्महाविद्यासाध्यरहितं तदेतच्छब्दादन्यदेव, यथा घटादीति तात्पर्यार्थः। व्याप्तिभङ्गार्थं व्याप्यत्वस्वरूपं परः प्ररूपयति—**साध्याभावेति**। साध्याभाववान्विपक्षः तत्र वृत्तित्वरहतितत्वेऽवर्तमानत्वे सति साध्यवति सपक्षे वृत्तित्वं यत्तत्साध्येन हेतोर्व्याप्यत्वम्। न चैतत्साध्यव्याप्यत्वं प्रकृतपक्षोऽयं शब्दः, तन्निष्ठं साध्यं महाविद्यासाध्याभाववत्त्वं तस्याधिगमं

---

इस प्रकार पक्षीकृतशब्द में महाविद्यासाध्याभावसाधक हेत्वन्तर होने से सत्प्रतिपक्षरूप हेत्वाभास महाविद्यानुमान के हेतु में विद्यमान है। यदि महाविद्यानुमानवादी कहे, कि महाविद्यानुमान के केवलान्वयी होने से साध्याभावसाधक अनुमान में साध्याप्रतिद्धिदोष होगा। इसमें कह रहे कि साध्याभावरूपसाध्य की सिद्धि वक्ष्यमाण अनुमान द्वारा की जायेगी।१४

अनुमानप्रयोग अयं शब्दः पक्ष है। एतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वाभाव (महाविद्यासाध्याभाव) साध्य है। एतदन्यत्वरहितत्व (एतत् शब्दवृत्तिशब्दत्व) हेतु है। यतः एतत् शब्देतर सकल में एतदन्यत्व ही है। तद्रहितत्व नहीं है। अतः अन्वय व्याप्ति का परित्याग कर व्यतिरेकव्याप्ति का आश्रय ले रहे हैं। जो महाविद्या साध्याभाववान् नहीं है, अर्थात् महाविद्यासाध्यवान् है, वह एतदन्यत्वरहित नहीं है। अपितु एतन्यत्ववान् है, जैसे घट। शब्द शब्दान्यत्वरहित है। अतः महाविद्यासाध्याभाववान् है। यदि महाविद्यानुमानवादी **'साध्याभाववद्वृत्तित्वरहितत्वे सति साध्य-**

**तरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वात्यन्ताभाववत् न, न तदेतदन्यत्वरहितं यथा घटः। एतदन्यत्वरहितश्चायम्। तस्मादितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वात्यन्ताभाववानित्यादि। साध्याभाववद्वृत्तित्वरहितत्वे सति साध्यवद्वृत्तित्वं साध्यव्याप्यत्वम्। न चैतत्प्रकृतपक्षनिष्ठसाध्याधिगममन्तरेण शक्यमधिगन्तुमिति व्याप्यत्वासिद्धः प्रकृतो हेतुरिति चेत्। न। साध्याभाववद्वृत्तित्वरहितत्वमात्रेण व्याप्यत्वेनानुमानोपपत्तौ साध्यवद्वृत्तित्वस्य वैयर्थ्येन**

---

विना शक्याधिगमम्। व्यतिरेकित्वेन सपक्षस्य साध्यवतोऽत्रानुमानेऽभावात्। **व्याप्यत्वासिद्ध इति।** हेतोर्यत्साध्येन व्याप्यत्वं तेनासिद्धोऽन्वयव्याप्तिशून्यो भवदुक्तो हेतुरिति तत्त्वम्। सिद्धान्ती समाधत्ते—**न। साध्याभावेति।** साध्याभाववान्विपक्षः, तत्रावर्तमानत्वमात्ररूपेण हेतोर्व्याप्यत्वेन अनुमानोपपत्तौ, साध्यवान्सपक्षः, तत्र वृत्तित्वस्य व्यर्थत्वेन, व्याप्यो हेतुस्तस्य कोटावग्रभागे निवेशाभावात्। इदं तात्पर्यम्—साध्याभाववद्वृत्तित्वरहितत्वमात्रमेव हेतोर्लक्षणम्। सपक्षवृत्तित्वं तु हेतुलक्षणं व्यर्थमिति। अतिप्रसङ्गं शङ्कते—**साध्येति।** यर्हि साध्याभाववद्वृत्तित्वरहितत्वमेव व्याप्यत्वं तर्हि गगनादीनामपि प्रकृतसाध्येन व्याप्यत्वप्रसङ्गः। हेतुमाह—**तेषामपीति।** तेषामपि गगनादीनामपि। **अनाश्रितेति।** न आश्रिताः अनाश्रिताः, कस्यापि नाश्रिता इत्यर्थः। यतो गगनादयो नित्यभावाः निरवयवत्वेन स्वावयवानप्यनाश्रिताः एव। तेषां भावोऽनाश्रितत्वं तेन अनाश्रितत्वेन। प्रकृतसाध्यं महाविद्यासाध्याभाववत्त्वं तदभाववान्विपक्षः, तस्य यदाश्रितत्वं तस्य विरहात्।

---

**वद्वृत्तित्व'** (साध्याभाववत् में न रहते हुए साध्यवत् में रहना) रूप व्याप्यलक्षण की प्रकृत में अव्याप्ति दिखाकर व्याप्यत्वासिद्धिदोष देना चाहे तो नही दे सकता। यतः साध्याभाववृत्तित्वरहितत्वमात्र व्याप्यत्वलक्षण निर्दुष्ट होने साध्यवद्वृत्तित्व व्याप्यकोटि में प्रविष्ट नहीं है। यदि साध्यवद्वृत्तित्व का व्याप्यत्वलक्षण में प्रवेश कर देंगे तो उक्त हेतु तो पक्षमात्रवृत्ति है। पक्ष में साध्यवत्ता सिद्धि के पूर्व साध्यवद्वृत्तित्व नहीं रहेगा। अतः साध्यवद्वृत्तित्व रहित (साध्याभाववद्वृत्तित्वरहितत्व) व्याप्यत्व का लक्षण माना है।

इस व्याप्यत्वलक्षण की अतिव्याप्ति अवृत्तिपदार्थ (किसी सम्बन्ध से कही न रहना) गगन में दिखा कर यदि गगनादि अवृत्ति पदार्थ को प्रकृतसाध्य का साधन कहे, जो व्याप्यत्वसामान्यलक्षण से लक्षित होने से सकलसाध्यों का साधक होगा। इस प्रकार हेत्वन्तर पद से गृहीत भी होगा।

**व्याप्यकोटिनिवेशाभावात्। साध्याभावद्वृत्तित्वरहितत्वमात्रस्य व्याप्यत्वे गगनादीनामपि प्रकृतसाध्यव्याप्यत्वप्रसक्तिः। तेषामप्यनाश्रितत्वेन प्रकृत-साध्याभाववदाश्रितत्वविरहादिति चेत्। एवमस्तु, को दोषः। तथा सति गगनादीनां प्रकृतसाध्यानुमापकत्वप्रसङ्ग इति चेत्। न। व्याप्यत्वेऽपि तेषामनाश्रितत्वेन पक्षधर्मत्वानुपपत्तेः। तदिदमुक्तम्—साध्याभाववदाश्रि-तत्वरहितैरिति।**

---

अयमत्र तत्त्वार्थः—विपक्षवृत्तिराहित्यस्यैव व्याप्यत्वेऽत्र गगनत्वादिकोऽपि हेतुः प्रसज्येत। गूढाभिप्रायेणानुवदति—**एवमस्त्विति।** अगृहीतपराभिप्रायः परः शङ्कते—**तथा सतीति।** तथा सति साध्याभाववदाश्रितत्वविरहात्साध्यव्याप्यत्वे गगनादीनां प्रकृतसाध्यं• महाविद्यासाध्याभाववत्त्वं तस्यानुमापकत्वं ज्ञापकत्वं तत्प्रसञ्जनमिति हृदयम्। अभिप्रायं प्रकटयन्प्रत्याचष्टे—**न। व्याप्यत्वेऽपीति।** विपक्षवृत्तिराहित्यात्साध्येन व्याप्यत्वेऽपि, तेषां गगनादीनां कस्याप्यनाश्रितत्वेन पक्षस्य शब्दरूपस्य धर्मत्वानुपपत्तेः। पक्षधर्मता च विलोक्यते—'व्याप्तिपक्षधर्मतावल्लिङ्गमि'ति वचनात्। तस्मात्पक्षधर्मताभावाद्गगनादीनां न साध्यानुमापकत्वप्रसक्तिरित्यभिप्रायः। एवं च साध्याभाववद्वृत्तित्वरहितत्व-मात्रमेव व्याप्यत्वमिति सिद्धम्। तथैवानुवदति—**तदिदमिति।** साध्याभाववन्तं ये आश्रितास्तत्त्वरहितैर्विपक्षवृत्तिहीनैरित्यर्थः। एतावता व्यतिरेकव्याप्तिः सूचिता भवति।

---

इस पर कह रहे हैं, कि अवृत्तिपदार्थ गगन में व्याप्ति गृह होने पर भी कोई क्षति नहीं है।

यतः व्याप्तिविशिष्ट पक्षधर्मताज्ञानरूप परामर्श गगन में नहीं होगा। व्याप्तिविशिष्ट की पक्षधर्मता (पक्षवृत्तित्व) ज्ञान परामर्श कहलाता है। गगन में साध्याभाववद्वृत्तित्वरहितत्वरूप व्याप्यत्व के रहने पर भी पक्षवृत्तिता नही है। इस लिंए साध्याभाववदाश्रितत्वरहितैः पद व्याप्यत्वप्रयोजक कहा। उक्तानुमान, महाविद्यानुमान के साध्याभाव का साधक है। महाविद्यानुमान केवलान्वयी होने से साध्याभाव की अप्रसिद्धि होगी। इसलिए ग्रन्थकार अनुमानप्रयोग द्वारा महाविद्यानुमान के साध्याभाव की प्रसिद्धि दिखा रहे है। महाविद्यासाध्य पक्ष है, स्वान्योन्याभावव्यतिरिक्त (स्वप्रतियोगिक या स्ववृत्तिभेदातिरिक्त) प्रागभावप्रध्वंसाभावत्वरहित जो अभाव अत्यन्ताभाव उसका प्रतियोगित्व साध्य है। तादृशप्रतियोगित्वान्यत्व (प्रतियोगित्वभेद) हेतु है। घट दृष्टान्त है। घटदृष्टान्त में हेतु का समन्वय स्वान्योन्याभाव-(घटवृत्ति भेद)

**पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वात्यन्ताभावाप्रसिद्धेर-प्रसिद्धविशेषणतेति चेत्। पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधि-करणत्वं स्वान्योन्याभावव्यतिक्तप्राक्प्रध्वंसाभावत्वरहिताभावप्रतियोगित्वा-श्रयः स्वान्योन्याभावव्यतिरिक्तप्राक्प्रध्वंसाभावत्वरहिताभावप्रतियोगित्वान्य-त्वात् घटवत् इत्यादिना साध्यप्रसिद्धेः। प्राक्प्रध्वंसाभावाभ्यामर्थान्तरता-निरासार्थं प्रागभावप्रध्वंसाभावत्वरहितग्रहणम्। एवंविधार्थान्तरतानङ्गीकार-**

---

**भुवन.**—पक्षदोषं शङ्कते—**पक्षीकृतेति।** पक्षीकृतेत्यादिमहाविद्या-साध्यात्यन्ताभावस्य सपक्षेऽप्रसिद्धेरप्रसिद्धविशेषणता पक्षस्येति चेत्, समाधत्ते—**न पक्षीकृतेत्यादि।** पक्षीकृतेत्यादिमहाविद्यासाध्यं पक्षः, स्वान्योन्याभावव्यतिरिक्तः प्रागभावप्रध्वंसाभावत्वेन रहितश्चाभावोऽर्थादत्यन्ता-भावः एव, तस्य तत्प्रतियोगित्वं तदाश्रय इति साध्यो धर्मः। इह तत्साध्यं तदन्यत्वादिति हेतुः। घटात्मादयो हि स्वान्योन्याभावान्यः प्राक्प्रध्वं-सत्वरहितश्चाभावः पक्षनिष्टान्योन्याभावः, तत्प्रतियोगित्वधर्मादन्येऽपि भवन्ति तद्धर्मवन्तश्चेति तेषां सपक्षता। व्यावृत्यानि स्पष्टानि। अनेनानुमानेन महाविद्यासाध्यस्य अत्यन्ताभावप्रतियोगित्वं प्रादर्शीति साध्यप्रसिद्धिः। **एवंविधार्थान्तरतेति।** ये तु महाविद्यासाध्यस्य नित्यत्वात्प्राक्प्रध्वंसाभावौ न मन्यन्ते, तेषामेवंविधार्थान्तरता न स्यादिति तान्प्रति तत्प्राक्प्रध्वं-साभाववत्त्वरहितेति विशेषणं नोपादेयमेवेत्यर्थः। **एवमिति।** त्वत्साध्यं

---

अतिरिक्त प्रागभावप्रध्वंसाभाव से भिन्न घटवृत्ति अत्यन्ताभाव का प्रतियोगित्व घटेतर में तदन्यत्व घट में। साध्य समन्वय घटवृत्तिभेदातिरिक्तप्रागभाव-प्रध्वंसाभावभिन्न जो अभाव पक्षवृत्तिघटप्रतियोगिकभेद तत्प्रतियोगित्वाश्रयत्व घट में।

पक्षीकृतमहाविद्यासाध्य में हेतु का समन्वय उक्त प्रकार से ही करना है। स्वान्योन्याभाव (पक्षवृत्ति भेद) व्यतिरिक्त प्रागभावप्रध्वंसाभावरहित जो महाविद्यासाध्यवृत्ति अत्यन्ताभाव उसका प्रतियोगित्व तदन्य में उसका भेद महाविद्यासाध्य में। साध्य का समन्वय पक्षवृत्तिभेदातिरिक्त प्रागभावप्रध्वंसा-भावभिन्न जो अभाव घटवृत्ति पक्षप्रतियोगिकभेद तत्प्रतियोगित्वाश्रयत्व पक्ष में। यदि प्रागभावप्रध्वंसाभावरहित पद नहीं देगें तो पक्षवृत्तिभेदव्यतिरिक्त-पक्षीकृतमहाविद्यासाध्यप्रतियोगिक प्रागभाव या प्रध्वंसाभाव को लेगें उसका प्रतियोगित्व महाविद्यासाध्य में है। पक्षवृत्ति महाविद्यासाध्यप्रतियोगिकात्यन्ता-

**वादिनं प्रति तु तन्नोपादेयमेव। एवमनुमानान्तरैरपि साध्यप्रसिद्धिर्द्रष्टव्या। तदिदमुक्तं साध्यप्रसिद्धिः पुनरित्यादिना। ते तव। साध्यं स्वभिदान्य स्वान्योन्याभावान्यः। जन्मनिधनानाक्रान्तः उत्पत्तिविनाशरहितः। भावात् स्फुरन् भेदो यस्य स भावस्फुरद्भेदः अभावः, तस्य प्रतियोगि तत्प्रतियोगित्वाक्रान्तं। तत्त्वविरहः तदन्यत्वम्। शेषं सुगमम्।**

---

अत्यन्ताभावप्रतियोगित्वव्यतिरिक्तैतन्निष्ठत्वरहिताधिकरणं अत्यन्ताभावप्रतियोगित्वव्यतिरिक्तैतन्निष्ठत्वरहितान्यत्वात्, घटवत्। अत्यन्ताभावप्रतियोगित्वव्यतिरिक्ताः ये एतस्मिन्पक्षीकृते त्वत्साध्ये निष्ठाः धर्मास्त्वत्साध्यत्वादयः, तत्त्वेन रहितो धर्मोऽनेतन्निष्ठो वा अत्यन्ताभावप्रतियोगित्वं वा। आद्यः पक्षे व्याहतः, सपक्षे च प्रयोजकः। द्वितीयस्तु पक्षे सिध्यन्नत्यन्ताभावप्रतियोगी पक्ष इति साधयतीत्यादिभिरनुमानान्तरैरिति भावः। उक्ते मूलपदमवतार्य व्याचाख्यायते—**तदिदमुक्तमित्यादि**। उत्पत्तिविनाशरहितः प्राक्प्रध्वंसाभाववत्त्वरहितः। **तदन्यत्वमिति**। तदन्यत्वं तस्मात्साध्यादन्यत्वमिति हेतुः।

---

भावप्रतियोगित्व जब महाविद्यासाध्य में सिद्ध होगा। तभी महाविद्या में महाविद्यासाध्य का अभाव सिद्ध होगा। इसलिए अर्थान्तरता दोष है। उसके निवारण के लिए प्रागभावप्रध्वंसाभावव्यतिरिक्तपद दिया। जिनके मत में महाविद्यासाध्यनित्य है। उनके मत में प्रागभावप्रध्वंसाभावरहितपद देने की आवश्यकता नहीं है। उक्त साध्य (महाविद्यासाध्याभाव) के साधक अनुमान का स्वरूप।

**साध्यं ते स्वभिदान्यजन्यनिघनाक्रान्तभावस्फुर-**
**द्भेदस्य प्रतियोगितत्त्वविरहादित्यादिभिर्जायते।।**

पद्यांश में किया है। उसकी व्याख्या अनुमानप्रयोग द्वारा हो गयी। अथवा प्रकृत अनुमान (सत्प्रतिपक्ष) के साध्य स्वान्योन्याभावव्यतिरिक्त.... इत्यादि को पक्षीकृतशब्दनिष्ठत्वेन साध्य बनायेंगे तो साध्यप्रसिद्धि के लिए अनुमानान्तर का प्रयोग नहीं करना पड़ेगा। उक्त सत्प्रतिपक्ष का प्रयोग पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व (महाविद्यासाध्य) पूर्ववत् पक्ष है। साध्य स्वान्योन्याभावादि पूर्ववत् है। अत्यन्ताभावप्रतियोगित्वाश्रयत्व को पक्षीकृतशब्दवृत्तित्व से विशेषित कर दिया है। ऐसा करने पर सीधे शब्दवृत्तिमहाविद्यासाध्यप्रतियोगिकात्यन्ताभावप्रतियोगित्व महाविद्यासाध्य में सिद्ध होता है। हेतुघटक अत्यन्ताभावप्रतियोगित्वान्यत्व को पक्षीकृतशब्द-

**यद्वा प्रकृतसाध्यसाधकानुमानसाध्यं पक्षीकृतशब्दनिष्ठत्वेन विशेष्य तेनैव सत्प्रतिपक्षत्वं सर्वमहाविद्यानामुद्भावनीयम्। प्रयोगस्तु पक्षीकृत-शब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं स्वान्योन्याभावव्यतिरिक्त-प्राक्प्रध्वंसाभावत्वरहितपक्षीकृतशब्दनिष्ठाभावप्रतियोगित्वाश्रयः, स्वान्यो-न्याभावव्यतिरिक्तप्राक्प्रध्वंसाभावत्वरहितपक्षीकृतशब्दनिष्ठाभावप्रतियोगि-त्वान्यत्वात् घटवत् इत्यादि।**

**शिवादित्यमिश्रास्तु पूर्वोक्तन्यायेन साध्याभावप्रसिद्धिं कृत्वा, अयं**

---

**भुवन.**—धर्मी चेत्यत्र चकारसूचितमर्थमाचष्टे—**यद्वेति**। प्रकृतं साध्यं सत्प्रतिपक्षानुमानसाध्यं, तस्य साधकमनुमानं साध्यप्रसिद्धिकर्तृ, तस्य साध्यं स्वान्योन्याभावान्येत्यादिकं, पक्षीकृतशब्दनिष्ठत्वेन विशेष्य। अयमर्थः—पूर्व-मनुमानद्वयेन कृत्वा महाविद्यासाध्यस्यैतच्छब्देऽत्यन्ताभावः प्रत्यपादि। अत्र चैकेनैव अनुमानेन महाविद्यासाध्यस्य अत्यन्ताभावः एतच्छब्दे प्रतिपाद्यते। तथा च साध्यप्रसिद्धिकर्तृद्वितीयानुमानमपि न विलोक्यत इति तेनैव प्रकृतसाध्यसाधकानुमानेनैव सत्प्रतिपक्षणीयमिति। प्रयोगेणैतदेव विशदयति—**पक्षीकृतेति**। पक्षीकृतशब्दनिष्ठश्चासौ अभावश्च। शेषं पूर्ववत्।

**भुवन.**—मतान्तरमाह—**शिवादित्येति**। **पूर्वोक्तन्यायेनेति**। साध्य-प्रसिद्धिः पुनरित्याद्युक्तन्यायेन महाविद्यासाध्यस्य अभावप्रसिद्धिं विधाय

---

वृत्तित्व से विशेषित कर दिया है, शेष पूर्ववत् है। दृष्टान्त यहाँ पर भी घट ही है। दृष्टान्त घट में हेतु समन्वय पूर्वोक्त स्वान्योन्याभावादिघटित शब्दवृत्ति जो पटाभाव उसका प्रतियोगित्व पट में तद्भेद घट में। साध्य समन्वय पूर्वोक्त स्वान्योन्याभावादिघटित शब्दवृत्ति घटाभाव के प्रतियोगित्व का आश्रय भी घट है। पक्षीकृत महाविद्यासाध्य में भी पूर्वोक्तस्वान्योन्याभावादि घटितशब्दवृत्तिघटादिप्रतियोगिकात्यन्ताभावप्रतियोगित्व का भेद है। अतः पूर्वोक्तस्वान्योन्याभावादिघटितशब्दवृत्ति अत्यन्ताभाव का प्रतियोगित्वाश्रयत्व भी है। इस प्रकार शब्दवृत्ति अत्यन्ताभाव का प्रतियोगित्व यदि महाविद्यासाध्य में सिद्ध हो गया। तो महाविद्या का अभाव शब्द में सिद्ध हो गया। तत्साधकहेत्वन्तर से सत्प्रतिपक्ष होगा।

शिवादित्यमिश्र प्रभृति आचार्यगण महाविद्यासाध्याभाव की प्रसिद्धि पूर्वोक्तप्रकारेण करके सत्प्रतिपक्ष अनुमान का प्रयोग अयं शब्दः एतन्महाविद्या-

**शब्दः एतन्महाविद्यासाध्यात्यन्ताभावव्यतिरिक्तस्वनिष्ठत्वरहिताधिकरणं, मेयत्वात् घटवत् इति सत्प्रतिपक्षयन्ति। तन्न। हेतुभेदाभावेन अस्यापि विरोधे एवान्तर्भावात्। तस्मादयं शब्दः एतन्महाविद्यासाध्यात्यन्ताभावव्यतिरिक्तस्वनिष्ठत्वरहिताधिकरणं, तथा स्वस्वेतरवृत्तित्वरहिता-**

---

प्रतिपक्षानुमानं कुर्वते—**अयं शब्द इति**। स्वस्मिञ्शब्दे निष्ठाः स्वनिष्ठाः शब्दत्वादयः। एतन्महाविद्यासाध्यात्यन्ताभावव्यतिरिक्ताश्च ते स्वनिष्ठाश्च, तेषां भावस्तत्त्वं, तेन रहितो धर्मः शब्दान्यनिष्ठो वा, एतन्महाविद्यासाध्यात्यन्ताभावो वा। आद्यः पक्षे व्याहतः, सपक्षे च प्रयोजकः। द्वितीयस्तु महाविद्यासाध्यात्यन्ताभावः एव, तदधिकरणं शब्दः इत्यर्थः। परमतं निरस्यति—**तन्नेति।** महाविद्यायामपि मेयत्वादिहेतुः, प्रतिपक्षानुमानेऽप्ययमेव हेतुरिति हेत्वैक्येन अस्यापि दोषस्य अभीष्टविरोधे एवान्तर्भावः इत्यर्थः। कथं तर्हि प्रतिपक्षणीयमित्याह—**तस्मादिति।** अत्र प्रयोजनव्याख्यानमनन्तरोक्तमेव ज्ञेयम्। प्रयोगान्तरं रचयति—**तथा स्वस्वेतरेति**। अत्रानन्तरोक्तः एव पक्षः। अनित्यत्वस्यात्यन्ताभावो नित्यत्वं, तद्वान्नित्यः, तत्र निष्ठा यस्य। स्वस्मिन्पक्षीकृतशब्देतरस्मिंश्च वृत्तित्वरहिताश्च येऽनित्वत्वात्यन्ताभाववन्निष्ठास्तदाश्रयः शब्द इत्यर्थः। स्वस्वेतरवृत्तित्वरहितः स्वमात्रवृत्तिर्वा, स्वेतरमात्रवृत्तिर्वा। द्वितीयः पक्षे व्याहतः इति स्वमात्रवृत्तिः शब्दत्वादिः पक्षे सिध्यति। स च धर्मोऽनित्यत्वात्यन्ताभाववन्निष्ठस्तर्ह्येव, तर्हि शब्दो नित्यः स्यात्, तस्य धर्मस्य अन्यत्रावर्तनादिति शब्दनित्यत्वसिद्धिः। अत्र सपक्षे

---

साध्यात्यन्ताभावव्यतिरिक्तस्वनिष्ठत्वरहिताधिकरणं मेयत्वात् घटवत् कहते हैं। दृष्टान्त घट में मेयत्व हेतु है ही। साध्य एतत् महाविद्यासाध्यात्यन्ताभावव्यतिरिक्त तथा स्वनिष्ठत्वरहित (शब्दनिष्ठशब्दत्वभिन्न) घटवृत्तिघटत्वधर्म उसका अधिकरण घट है। पक्षीकृतशब्द में महाविद्यासाध्याभावव्यतिरिक्त होकर स्वनिष्ठत्वरहितधर्म या तो शब्दान्यवृत्तिधर्म होगा, या महाविद्यासाध्यात्यन्ताभाव, प्रथमकल्प मानने में व्याघातदोष है। शब्दान्यवृत्तिधर्म को शब्द में वृत्ति कहना वदतो व्याघात है। अतः महाविद्यासाध्यात्यन्ताभावरूपधर्म का अधिकरण शब्द सिद्ध होता है। उक्त अनुमान का हेतु मेयत्व ही है। जो महाविद्यानुमान हेतु से भिन्न नहीं है। यदि मेयत्वहेतु सत्प्रतिपक्षित होगा। तो उक्त मेयत्व हेतु भी सत्प्रतिपक्षित हो जायेगा। अतः एतादृश अनुमान प्रयोग में अभिधेयत्व हेतु कहना चाहिए।

**नित्यत्वात्यन्ताभाववन्निष्ठाधिकरणं, अभिधेयत्वादित्यादिना सत्प्रतिपक्षणीयम्।**

**यद्वैवं सत्प्रतिपक्षता। वर्तमानः कालः इदानींतनपक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरहितवान् कालत्वात् अतीतकालवत्**

---

शब्दान्यत्वं धर्मः सर्वत्र ज्ञेयः। स चानित्यत्वात्यन्ताभाववति गगनादौ निष्ठः एव। अत्राभिधेयत्वादिति हेतुः, पूर्वत्र च मेयत्वादितीत्यस्यानुमानस्य सत्प्रतिपक्षत्वम्। 'हेतुभेदेन साध्याभावसाधकः समानबलः सत्प्रतिपक्षः' इति तल्लक्षणात्।

**भुवन.**—सत्प्रतिपक्षतां प्रयोगान्तरेण स्पष्टयति—**यद्वैवमिति।** इदानीन्तनं यत्पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं महाविद्यासाध्यं तेन रहितो यस्तद्वान्वर्तमानः कालः इत्यन्वयः। अनुमानं व्याचष्टे—**इदानींतनेति। आद्यः पक्षे इति।** आद्यः इदानीन्तनत्वरहितरूपः पक्षे व्याहतः, सपक्षे च सार्थकः। व्याघातमाह—**नहीति।** वर्तमानकालधर्मस्य

---

एवम् अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यत्वात्यन्ताभाववन्निष्ठाधिकरणं अभिधेयत्वात्' घटवत्। द्वितीय प्रयोग का अभिधेयत्वहेतु दृष्टान्त घट में है ही। साध्य शब्द शब्देतरवृत्तित्वरहित पृथिवीत्वधर्म वह अनित्यत्वात्यन्ताभाववत् पृथिवीपरमाणु वृत्ति है। उसका अधिकरण घट है। पक्षीकृतशब्द में साध्य का समन्वय स्व पक्षीकृतशब्द स्वेतर शब्देतरवृत्तित्वरहित स्ववृत्तित्वविशिष्ट स्वेतरवृत्तित्वरहित धर्म स्ववृत्तिधर्म होगा, या तो स्वेतरवृत्तिधर्म होगा। स्वेतरवृत्तिधर्म का स्व में साधन करना व्याघात होगा। अतः स्ववृत्ति (शब्दवृत्ति) को लेंगे। वह धर्म अनित्यत्वात्यन्ताभाववत् नित्यनिष्ठ तभी होगा। जब शब्द नित्य होगा। इस प्रकार मेयत्वसाधनयुक्त यदि महाविद्यानुमान शब्द में अनित्यत्व का साधक है। तो अभिधेयत्वसाधनयुक्त महाविद्यानुमान शब्द में अनित्यत्वात्यन्ताभाव नित्यत्व कर साधक है। अतः महाविद्यानुमान उत्तरमहाविद्यानुमान द्वारा सत्प्रतिपक्षित हो गया।

अथवा सत्प्रतिपक्ष प्रयोग **'वर्तमानः कालः इदानींतनपक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरहितवान् कालत्वात् अतीत कालवत्'**। सपक्ष अतीतकाल में कालत्व हेतु है। साध्य एतत् काल (वर्तमानकाल) विशिष्ट पक्षीकृतशब्द (वर्तमानकालिक शब्द) तदितर वर्तमानकालिकशब्देतर अतीतकालिकशब्द तथा घटपटादि इन दोनों में रहने वाले धर्म में

**इत्यादि। इदानींतनपक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरहितः इदानींतनत्वरहितो वा स्यात्, पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरहितो वा स्यात्। आद्यः पक्षे व्याहतः। न हि इदानीमस्ति इदानींतनत्वरहितश्चेति घटते। पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरहितश्च पक्षीकृतशब्दव्यतिरिक्तो न संभवत्येव। पक्षीकृतशब्दान्यत्वस्य पक्षीकृतशब्दतदितरवृत्तित्वरहितस्य घटाद्यनित्यनिष्ठस्य पक्षीकृतशब्दव्यतिरिक्ते सर्वस्मिन्नुपपत्तेरिति। तेन पक्षीकृतः शब्दः**

---

इदानींसत्त्वादिदानीन्तनत्वरहितत्वं व्याहतमित्यर्थः। द्वितीयं पक्षं व्याख्याति—**पक्षीकृतेत्यादि।** महाविद्यासाध्यरहितः पक्षितशब्दः एवेत्यर्थः। हेतुमाह—**पक्षीकृतशब्दान्येति।** पक्षीकृतशब्दान्यत्वधर्मस्य पक्षशब्दादन्यस्मिन्नेव वर्तनात्पक्षीकृतशब्दतदितरवृत्तित्वरहितस्य तथा घटादयोऽनित्यास्तेषु निष्ठस्य पक्षीकृतशब्दव्यतिरिक्ते सर्वस्मिन् घटात्मादौ घटनात्। **तेन पक्षीकृत इति।** तेन हेतुनैवंविधमहाविद्यासाध्यरहितः पक्षितशब्दः एव। तद्वांश्च वर्तमानः काल इत्याशयः। सिद्धं दर्शयति—**पक्षीकृतशब्द इति।** अयमर्थः—महाविद्यासाध्यं शब्दानित्यत्वसाधनायोपन्यस्तम्। तच्चेच्छब्दे न वर्तते, तर्हि शब्देऽनित्यत्वस्य योऽभावो नित्यत्वं तस्य सिद्धिरभूदेव! अथ व्यावर्त्यचिन्ता। अतीतकालेन भागे सिद्धसाधननिवारणाय वर्तमानः काल इति प्रोक्तं। अप्रसिद्धविशेषणतां

---

शब्दतदितरवृत्तित्वरूप धर्म है। तद्भिन्न अनित्यनिष्ठाधिकरणत्वरूप धर्म महाविद्यासाध्य हुआ। तद्रहित होगा महाविद्यासाध्याभाव जो सपक्ष अतीतकाल में सिद्ध हुआ।

पक्षीकृत वर्तमान काल में कालत्व हेतु है, ही साध्य इदानींतनविशिष्ट पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरहित भी है। उक्त साध्य इदानींतनत्वरहित होगा? या पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरहित होगा? प्रथमकल्प में व्याघात होगा। इदानींतन वर्तमान काल में इदानींतन का अभाव कहना व्याघात है। अतः द्वितीय कल्प पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरहित लेगें। इस कल्प में तादृश अधिकरणत्वरहित पक्षीकृतशब्दव्यतिरिक्त घटपटादि नहीं हो सकेगें। यतः पक्षीकृतशब्दतदितर (उभय) वृत्तित्वरहित शब्दान्यत्व, घटादि अनित्यनिष्ठ है। तदधिकरणत्व (पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व) पक्षीकृतशब्देतर सकल में है। अधिकरणत्वरहित नहीं है। पक्षीकृतशब्द में उभय-

**एव पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरहितो वर्तमाने काले पर्यवसानात्सिध्यतीति पक्षीकृतशब्दे अनित्यत्वाभावसिद्धिरिति। एवमिदानींतनत्वविशेषितसकलमहाविद्यासाध्यवत्त्वरहितान्वितवर्तमान-कालसाधनेन सर्वासामापि महाविद्यानां सत्प्रतिपक्षता द्रष्टव्या।**

**न च अनिदानींतनकालत्वमुपाधिः। पक्षातिरिक्तव्यावर्त्याभावेन पक्षेतरत्वग्रस्तत्वात्। अयं कालः इदानींतनैतदुपाधिव्यतिरिक्तैतत्साध्या-**

---

निवारयति—**इदानीन्तनेत्यनेन।** व्याघातं परिहरति—**पक्षीकृतेत्यादिना।** अर्थान्तरता अप्रसिद्धविशेषणता च मा भूदिति रहितेतिपदग्रहणम्। **एवमिदानीमिति।** इदानीन्तनत्वेन विशेषितं यत्सकलमहाविद्यासाध्यवत्त्वं तेन रहितः पक्षीकृतशब्दादिः, तेनान्वितो यो वर्तमानकालः तत्साधनेनेत्यर्थः।

**भुवन.**—उपाधिशङ्कां निरस्यति—**न चानिदानीमिति।** न चातीतकाले अनिदानीन्तनकालत्वमुपाधिः। हेतुमाह—**पक्षातिरिक्तेति।** यत्र अनिदानीन्तन-कालत्वं नास्ति, तत्रेदानीन्तनेत्यादिसाध्यवत्त्वमपि नास्ति, यथा पक्षे वर्तमानकाले एवेति पक्षादतिरिक्तं यद्व्यावर्त्यं विपक्षः, तदभावेन पक्षेतरत्व-दोषः उपाधेरिति भावः। एतदुपाधेः साध्यव्यापकतामनुमानेन भनक्ति—**अयं काल इत्यादि।** एष चासौ उपाधिश्चैतदुपाधिः, तस्माद्व्यतिरिक्ताश्च ते एतत्साध्याव्यापकाश्च, एतदुपाधिव्यतिरिक्तैतत्साध्याव्यापकाः। इदानीन्तनाश्च ते

---

वृत्तित्वरहितानित्यनिष्ठाधिकरणत्व नहीं है। काल जगदाधार है। अतः पक्षीकृतशब्द भी कालिकसम्बन्धेन काल में है। पक्षीकृतशब्द में तादृश अनित्यनिष्ठाधिकरणत्वाभाव तभी सिद्ध होगा जब शब्द को नित्य माना जाय। इस प्रकार पक्षीकृतशब्द में कालत्वहेतुक महाविद्यानुमान द्वारा साध्य (अनित्यत्व) का अभाव सिद्ध हो गया। इसी रीति से अन्यमहाविद्यानुमानों में भी सत्प्रतिपक्षत्व सिद्ध हो जायेगा।

वर्तमानः कालः इदानींतनपक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधि-करणत्वरहितवान् कालत्वात्' इस महाविद्यासाध्याभावसाधक अनुमान में वादी यदि 'अनिदानींतनकालत्व' उपाधि देना चाहे तो नहीं दे सकता। अनिदानींतनकालत्व, पक्ष वर्तमानकालमात्र का व्यावर्तक होने से पक्षेतरत्व समान है। उक्त अनुमान में अनिदानींतनकालत्व उपाधि इसलिए हो रही थी, कि अतीतकालसपक्ष में साध्य है, साध्य का व्यापक अनिदानींतनकालत्व

**व्यापकव्यतिरिक्तैतत्साध्याव्यापकवान् कालत्वादित्यादिना प्रकृतोपाधेः प्रकृतसाध्यव्यापकत्वभङ्गाच्च। इदानींतनैतदुपाधिव्यतिरिक्तैतत्साध्याव्यापक-व्यतिरिक्तो हि इदानींतनत्वरहितो वा स्यात्, एतदुपाधिव्यतिरिक्तैतत्साध्या-व्यापकव्यतिरिक्तो वा। आद्यः पक्षे व्याहतः। एतदुपाधिव्यतिरिक्तै-तत्साध्याव्यापकव्यतिरिक्तोऽपि एतत्साध्याव्यापको वा अयमुपाधिर्वा।**

---

एतदुपाधिव्यतिरिक्तेतत्साध्याव्यापकाश्च। तेभ्यो व्यतिरिक्ताश्च ते एतत्साध्या-व्यापकाश्च, तद्वानयं वर्तमानः काल इत्यन्वयः। अथ व्यावर्त्यचिन्ता। अयं कालः एतत्साध्याव्यापकवानित्युक्ते एतत्साध्याव्यापकैर्घटादिभिः सिद्धसाध्यता स्यात्। तव्द्यावृत्त्यर्थमेतत्साध्याव्यापकव्यतिरिक्तेत्युक्तम्। एवमुच्यमाने च व्याघातः। न हि एतत्साध्याव्यापकव्यतिरिक्ताः एतत्साध्यव्यापकाश्च धर्माः सम्भवन्ति। तन्निवृत्त्यर्थमेतदुपाधिव्यतिरिक्तेत्युपात्तम्। तदुपाधिव्यतिरिक्तै-तत्साध्याव्यापकव्यतिरिक्तैतत्साध्याव्यापकवानित्युक्ते यद्यप्येतदुपाधेरेतत्साध्या-व्यापकत्वं सिध्यति, तथाप्यतीतकालादौ सपक्षे एवंविधधर्माभावात्साध्य-वैकल्यं स्यात्, तदर्थमिदानीन्तनेति पदोपादानम्। अनुमानं ग्रन्थ-कृव्द्याचाख्यायते—**इदानीमिति।** एतत्साध्यं पूर्वानुमानोक्तमिदानीन्तन-पक्षीकृतेत्यादिकं, तस्याव्यापकाः एतत्साध्याव्यापकाः इत्यर्थः। इदानीन्तनाः

---

है। वर्तमानकाल में कालत्व हेतु है, अनिदानींतनकालत्व नहीं है। अतः साध्य की व्यापक साधन की अव्यापक उपाधि हो गयी। अनिदानींतनकालत्व इदानींतनकाल (वर्तमानकाल) से इतर में ही रहेगा। अतः पक्षमात्रव्यावर्तक पक्षेतरत्व के समान ही उक्त उपाधि हुई। पक्षेतरत्व को उपाधि मानने में सकल अनुमान सोपाधिक हो जायेगे। तो अनुमानप्रमाणमात्र का उच्छेद हो जायेगा।

उक्त अनिदानींतनकालत्व उपाधि में पक्षेतरत्वदोष देने के बाद साध्यव्यापकत्वाभाव महाविद्यानुमान द्वारा सिद्ध कर रहे हैं। "अयं कालः इदानींतनैतदुपाधिव्यतिरिक्तैतत्साध्यापकव्यतिरिक्तैतत्साध्याव्यापकवान् काल-त्वात्" उक्त अनुमान क़ा साध्य व्यतिरिक्तद्वयघटित है। इदानींतनैतदुपाधि-व्यतिरिक्त एतत्साध्याव्यापकव्यतिरिक्त उभयव्यतिरिक्त विशिष्ट साध्याव्यापक साध्य है। वह इदानींतनैतदुपाधिव्यतिरिक्तैतत्साध्याव्यापकव्यतिरिक्त या तो इदानींतनत्वरहित होगा। या तो एतदुपाधिव्यतिरिक्तैतत्साध्याव्यापकव्यतिरिक्त होगा। यतः अयं कालः (वर्तमान काल) पक्ष है, अतः इदानींतनत्वरहित्व

**आद्यः एतत्साध्याव्यापकपदेन निरस्तः। द्वितीये पुनरस्योपाधेरेतत्साध्याव्यापकत्वसिद्धिरिति। प्रकृतहेतुव्यापकाभावाव्याप्यत्वान्नायं प्रकृतहेतुप्रतिपक्षः, धूमवत्त्वादिवदिति चेत्। न। प्रकृतहेतुप्रतिपक्षत्वाप्रमितौ, तदभावसाधनस्य अप्रसिद्धविशेषणत्वात्। अत्रैव तत्प्रमितौ, तदभावसाधनस्य बाधितत्वात्। एतद्व्यतिरिक्तस्थले च तत्प्रमितौ तेनैव सत्प्रतिपक्षत्वस्य दुर्वारत्वादिति।**

---

वर्तमानाः, एतदुपाधिः अनिदानीन्तनकालत्वरूपः, तद्व्यतिरिक्ता एतत्साध्यव्यापकाश्च धर्मा घटत्वपटत्वादयः, तद्व्यतिरिक्तो धर्मो द्विधा स्यादिति परमार्थः। **आद्यः पक्षे व्याहत इति।** आद्यः इदानीन्तनत्वरहितरूपः साध्याव्यापकः साध्यव्यापको वाऽस्मिन्वर्तमानकाले पक्षे व्याहत इत्यर्थः। द्वितीयं पक्षं व्याचष्टे—**एतदुपाधीति।** एतत्साध्यव्यापकोऽस्तित्वप्रमेयत्वादिरित्यर्थः। सिद्धमुपपादयति—**द्वितीय इति।** अयमुपाधिरेतत्साध्याव्यापकेत्यन्त्यविशेषणविशिष्टः पारिशेष्यात्पक्षे साधितः इत्येतस्योपाधेरेतत्साध्याव्यापकत्वं सिद्धम्। अत्रातीतकालादौ सपक्षे इदानीन्तनत्वरहितो धर्मो ज्ञेयः। परः शङ्कते—**प्रकृतहेत्विति।** प्रकृतो हेतुर्मेयत्वादिः, तस्य व्यापकं महाविद्यासाध्यं, तस्य योऽभावस्तेन न व्याप्यते इत्यतो हेतोर्नायं पूर्वोक्तप्रतिपक्षानुमानस्य कालत्वादिति हेतुः प्रकृतहेतोर्महाविद्यासत्कस्य मेयत्वादेः प्रतिपक्षः इति पदान्वयः। अयं भावः। येन हेतुना यत्साध्यं

---

साध्य कल्प में व्याघात है। वर्तमान काल में साध्यत्वेनाभिमत एतदुपाधिव्यतिरिक्तैतत्साध्याव्यापकव्यतिरिक्त या तो एतत्साध्याव्यापक होगा, या तो एतदुपाधि होगी। यतः एतत्साध्याव्यापकव्यतिरिक्तपद साध्य का विशेषण है। अतः एतत्साध्याव्यापक नहीं लिया जा सकता इस प्रकार उपाधि में एतत्साध्याव्यापकत्वसिद्ध हुआ।

अयं कालः एतत्साध्याव्यापकवान् कहने पर सिद्धसाधनदोष होगा। महाविद्यासाध्याभाव प्रकृत अनुमान का साध्य है। उसके अव्यापक घट पटादि है। तद्वान् काल के होने से सिद्धसाधनता अपरिहार्य है। यदि एतत्साध्याव्यापक व्यतिरिक्त साध्य कहते हैं तो व्याघात दोष है। यतः पक्ष वर्तमान् काल में एतत्साध्याव्यापकत्व साध्य है। एतत्साध्याव्यापकव्यतिरिक्त एतत्साध्याव्यापक धर्म नहीं हो सकता। अतः व्याघात है। इसीलिए एतदुपाधिव्यतिरिक्तत्व को साध्य का विशेषण बनाया। एतदुपाधिव्यतिरिक्त

साध्यते, तत्साध्यं तस्य हेतोर्व्यापकम्। कालत्वादिति प्रतिपक्षहेतुना च महाविद्याऽभावः साध्यः। न च महाविद्यासाध्याभावेन प्रतिपक्षहेतुर्व्याप्यः, कालत्वरूपप्रतिपक्षहेतुमत्यपि काले महाविद्यासाध्याभावाभावात्। निदर्शनं दर्शयति—**धूमवत्त्वादिवदिति।** यथा धूमवत्त्वादिहेतवो महाविद्यासाध्याभावा-व्याप्यत्वान्न प्रकृतहेतुप्रतिपक्षाः, तथायमपि हेतुरित्यभिप्रायः। एतावतैवं परेणानुमानं विहितं भवति। तथाहि—नायं हेतुः प्रकृतहेतुप्रतिपक्षः प्रकृत-हेतुव्यापकाभावाव्याप्यत्वात् धूमवत्त्वादिवदिति। अत्र परानुमाने प्रकृतहेतु-प्रतिपक्षोऽप्रमितो न वेति विकल्प्याद्यं प्रत्याह—**न प्रकृतेति।** प्रकृत-हेतोर्मेयत्वादेर्यत्प्रतिपक्षत्वं, तस्य अप्रमितौ तदभावसाधनस्य प्रकृतहेतु-प्रतिपक्षत्वाभावसाधनस्य अप्रसिद्धविशेषणत्वं दृष्टान्तेऽप्रसिद्धत्वमित्यर्थः।

भावार्थस्त्वयम्—यत्पक्षे साध्यं साध्यते, तद्धि सपक्षे प्रसिद्धं स्यादिति हि रीतिः। अत्र च यदि प्रतिपक्षत्वं न प्रमितं, तदा प्रतियोग्यनवगतेः तदभावोऽप्यप्रमितः एव। तथा च तदभावसाधनस्याप्रसिद्धत्वान्न सिद्धिः। द्वितीयपक्षे प्रमितत्वमस्मिन्नेवानुमाने, अनुमानान्तरे वा। आद्यं दूषयति—**अत्रैवेति।** अत्रैवानुमाने तत्प्रमितौ प्रतिपक्षत्वप्रमितौ तदभावसाधनस्य

---

एतत् साध्याव्यापकव्यतिरिक्त एतत् साध्याव्यापकवान् कहने पर यद्यपि एतत् उपाधि में एतत्साध्याव्यापकत्व सिद्ध हो सकता है। तथापि अतीतकालादि सपक्ष में साध्यवैकल्प होगा। इस लिए इदानींतनत्व विशेषण से विशेषित साध्य को किया। साध्य की व्यापक, साधन की अव्यापक, उपाधि होती है। अनिदानींतनकालत्वरूप उपाधि में यदि साध्याव्यापकत्व सिद्ध हो मया। तो वर्तमानः कालः इदानींतनपक्षीकृतशब्दतदितरवृत्तित्वरहितानित्य-निष्ठाधिकरणत्वरहितवान् कालत्वात् अनुमान में उपाधि नहीं हो सकती।

यदि महाविद्यानुमानवादी कहे कि प्रकृतमेयत्व हेतु के व्यापक महाविद्यासाध्याभाव की व्याप्ति कालत्व में नहीं है। जिस हेतु द्वारा जिस साध्य की सिद्धि की जाती है, वह साध्य उस हेतु का व्यापक होता है। कालत्व हेतु द्वारा महाविद्यासाध्याभावरूप साध्य की सिद्धि उक्त अनुमान से की गयी है। महाविद्यानुमान केवलान्वयी होने से उसके साध्य का अभाव कही मिलेगा नहीं। कालत्व हेतु काल में काल के जगदाधार होने से महाविद्यासाध्य भी काल में है। अतः कालत्व हेतु महाविद्यासाध्याभाव का साधन नहीं हो सकता। उक्त कालत्वहेतु मे प्रतिपक्षत्वाभाव अनुमानप्रयोग

**किञ्च, किमिदं प्रकृतहेतुप्रतिपक्षत्वं, किं प्रकृतहेतुव्यापकाभावव्याप्यत्वं, किंवा प्रकतहेतुपक्षनिष्ठतया प्रकृतविप्रतिपत्तिगोचरानित्यत्वाद्यभावसाधकत्वे सति प्रकृतहेतुतुल्यबलत्वम्, किंवा प्रकृतहेतुपक्षनिष्ठतया प्रकृतव्यापकाभावसाधकत्वे सति प्रकृतहेतुतुल्यबलत्वम्, किंवा अन्यदेव किञ्चित्। आद्याभावसाधने साध्याविशिष्टता। द्वितीये बाधः।**

---

प्रतिपक्षत्वाभावसाधनस्य बाधितत्वम्। यतः प्रमाणेन गृहीतस्य न ह्यभावः कर्तुं शक्यः। द्वितीयं दूषयति—**एतद्व्यतिरिक्तेति।** एतस्माद्व्यतिरिक्ते स्थले अनुमानान्तरे तत्प्रमितौ प्रकृतहेतुप्रतिपक्षत्वप्रमितौ तेनैवान्यस्थले प्रमितप्रकृतहेतुप्रतिपक्षत्वेनैव सत्प्रतिपक्षतेत्याशयः।

**भुवन.**—परोक्तानुमाने प्रकृतहेतुप्रतिपक्षः किंरूपोऽत्र विवक्षितः इत्यादि विकल्पयति—**किञ्चेत्यादि।** प्रकृतहेतुर्मेयत्वादिः, तस्य व्यापकं महाविद्यासाध्यं, तस्य योऽभावः, तेन व्याप्यत्वं, किंवा प्रकृतहेतोः प्रमेयत्वादेर्यः पक्षः शब्दादिः, तन्निष्ठतया यत्प्रकृतं विप्रतिपत्तिगोचरमनित्यत्वादिसाध्यं तदभावसाधकत्वे सति प्रकृतहेतोर्मेयत्वादेः तुल्यं बलं यस्य स तथा, तद्भावस्तत्त्वम्।

---

से सिद्ध कर रहे है। उक्त अनुमान में कालत्वहेतु पक्ष है। प्रकृतहेतु (मेयत्व) प्रतिपक्षत्वाभाव साध्य है। प्रकृतहेतु (मेयत्व) व्यापक (महाविद्यासाध्य) अभावाव्याप्यत्व हेतु है। धूमत्व दृष्टान्त है। धूमत्वदृष्टान्त में मेयत्वव्यापकाभावाव्याप्यत्व है, मेयत्वव्यापक (महाविद्यासाध्य) के अभाव का जो साधन होगा, उसमें महाविद्यासाध्याभाव की व्याप्ति होगी। वह मेयत्वव्यापकाभावव्याप्य है। महाविद्यासाध्य के पर्वत आदि में रहने के कारण धूमत्व महाविद्यासाध्य के अभाव का साधक नहीं है। अतः धूमत्व में प्रकृतहेतुव्यापकाभावाव्याप्यत्व है। घूमत्व हेतु मेयत्व का प्रतिपक्षी भी नहीं है। पक्षीकृत कालत्व हेतु में भी प्रकृतहेतु (मेयत्व) व्यापक (महाविद्यासाध्य) के अभाव की व्याप्ति होने से प्रकृतहेतुव्यापकाभावाव्याव्यत्व है। अतः मेयत्व हेतु का प्रतिपक्षी नहीं हो सकता।

इस पर ग्रन्थकार कह रहे हैं कि जिस प्रकृतसाध्य हेतुप्रतिपक्षत्वाभाव की सिद्धि पक्षीकृतकालत्व हेतु में कर रहे हो। वह प्रकृतमेयत्वहेतुप्रतिपक्षत्व प्रमित है, कि नहीं, यदि प्रतिपक्षत्व अप्रमित है। तो तत्प्रतियोगिक (प्रतिपक्षत्वप्रतियोगिक) अभाव के अप्रसिद्ध होने से साध्याप्रसिद्धिदोष होगा। यदि प्रमित मानते हैं, तो किस स्थान पर प्रमित है? यदि कालत्व में ही

**तृतीयेऽपि बाध एव। पक्षे प्रकृतव्यापकाभावप्रतीतिमन्तरेण अनित्यत्वाभावप्रतीतेरपर्यवसानादिति। न हि अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं अनित्यत्वाभाववांश्चेति शक्यं प्रतिपत्तुम्। चतुर्थस्तु अप्रसिद्धत्वादेव निषेद्धुमशक्य इति स उपेक्षणीयः। कालात्ययापदिष्टतां पुनरग्रे व्युत्पादयिष्यामः।**

---

किंवा प्रकृतहेतोर्यः पक्षः तन्निष्ठतया प्रकृतव्यापकं महाविद्यासाध्यं, तदभावसाधकत्वे सति प्रकृतहेतोस्तुल्यबलत्वम्। किंवा अन्यदेवैतद्विकल्पत्रयात्किञ्चिदित्यर्थः। विकल्पचतुष्टयमपि क्रमान्निर्लोठयति—**आद्याभावेति।** आद्याऽभावसाधने प्रकृतहेतुव्यापकाभावव्याप्यत्वरूपप्रतिपक्षत्वाभाव साधने। अयं हेतुः प्रकृतहेतुव्यापकाभावव्याप्यत्वरूपप्रतिपक्षो न भवति, प्रकृतहेतुव्यापकाभावाव्याप्यत्वात् धूमत्वादिवदित्यत्र हेतोः साध्याविशिष्टता स्यात्। साध्यादविशिष्टता साध्याविशिष्टता। साध्यरूपः एव हेतुरित्यर्थः। द्वितीयतृतीयौ निरस्यति—**द्वितीयेत्यादि।** हेतुमाह—**पक्षे प्रकृतेति।** पक्षे शब्दे, प्रकृतव्यापकं महाविद्यासाध्यं, तदभावप्रतीतिं विना अनित्यत्वाभावप्रतीतिर्न पर्यवस्यतीति परमार्थः। एतदेव विशदयति—**न ह्ययमिति।** इदमत्राकूतम्—शब्दस्याद्यापि

---

प्रकृतहेतु का प्रतिपक्षत्व प्रमित मानते है। तो उसके अभावसिद्धि में बाध होगा। इस के अतिरिक्त मेयत्वहेतु का प्रतिपक्ष यदि प्रमित है। उसी से मेयत्वहेतु में सत्प्रतिपक्षत्व दुर्वार होगा।

महाविद्यानुमान के पूर्वोक्त रीत्या सत्प्रतिपक्षित हो जाने पर महाविद्यानुमान में कहा था कि आप के द्वारा प्रदर्शित साध्याभावसाधकानुमानों में प्रकृतहेतुप्रतिपक्षत्व न होने से महाविद्यानुमान सत्प्रतिपक्षित नहीं होगा। इस पर ग्रन्थकार कह रहे हैं, कि प्रकृतहेतुप्रतिपक्षत्व पदार्थ क्या है। (१) प्रकृतहेतु (मेयत्व) व्यापक (महाविद्यासाध्य के अभावव्याप्यत्व महाविद्यासाध्याभाव के साथ हेतु की व्याप्ति) या (२) प्रकृतहेतुमेयत्व के पक्ष शब्द में रहते हुए प्रकृत विप्रतिपत्तिगोचर (वादी प्रतिवादी के विवाद का विषय) अनित्वादि के अभाव का साधक होकर प्रकृत मेयत्वहेतु के तुल्यबल या (३) प्रकृतमेयत्व हेतु के पक्ष शब्द में रहते हुए प्रकृतव्यापक (महाविद्यासाध्य) के अभाव का व्याप्य होते हुए प्रकृत मेयत्वहेतु के समबल। या (४) अन्य कोई। इन चारों कल्पों का खण्डन करते हुए प्रकृतहेतुप्रतिपक्षत्वाभावस्वरूप का निरास कर रहे हैं।

प्रथम कल्प उचित नहीं है। जिस हेतु में प्रकृत हेतुव्यापकाभावव्याप्यत्व सिद्ध हो जायेगा उसमें प्रकृत हेतुप्रतिपक्षत्वव्यवहार होगा। प्रकृतहेतुव्यापका-

**अप्येकप्रतिपक्षोऽपि न क्षमः स्वार्थसिद्धये।**
**महाविद्या तु किं नाम प्रतिपक्षशताकुला।।१५।।**

---

महाविद्यासाध्यमानत्वात्, यावच्च महाविद्यासाध्यरहितत्वं न सिद्धं, तावन्महाविद्यासाध्यसहितत्वमेव शब्दस्य। तस्मिँश्च सति अनित्यत्वाभाववान् शब्दः इति न हि प्रतिपत्तुं शक्यम्। एतावता महाविद्यासाध्याभावप्रतीत्यभावात्तृतीयविकल्पेऽपि बाधो दर्शितः एव। तुरीयं प्रत्याह—**चतुर्थ इति।** अन्यदेवेति सामान्योक्तावपि विशेषस्यानिर्दिष्टत्वेन अप्रसिद्धत्वादेव चतुर्थविकल्पप्रतिपादितप्रकृतहेतुप्रतिपक्षत्वं भवता निषेद्धुं न शक्यत इति स चतुर्थविकल्पः उपेक्षणीयोऽवगणनीय इत्यर्थः। नन्वसिद्धविरुद्धानैकान्तिकसत्प्रतिपक्षबाधा इति हेत्वाभासपञ्चके तच्चतुष्टयमेव महाविद्याहेतौ प्रादर्शि, बाधं किमिति न दर्शितवन्तः इत्याशङ्क्याह—**कालात्ययेति**। महाविद्याहेतोरिति शेषः।

**भुवन.**—सत्प्रतिपक्षतामुपसंहरति—**अप्येकेति**।।१५।।

---

भावव्याप्यत्वसिद्धि के लिए अनुमान प्रयोग करेगें। "अयं हेतुः प्रकृतहेतुव्यापकाभावव्याप्यः प्रकृतव्यापकाभावसाधकत्वे सति प्रकृतहेतुतुल्यबलत्वात्", कालत्वादि हेतु में प्रकृतमेयत्वव्यापकमहाविद्यासाध्याभाव की व्याप्ति है। तथा प्रकृतसाध्याभाव का साधक होकर मेयत्व के तुल्य बल भी है। अतः प्रकृतहेतुप्रतिक्षत्व तो सिद्ध हो गया। अब इसमें प्रकृतहेतुप्रतिपक्षत्वाभाव सिद्धि के लिए अनुमान प्रयोग करें। अयं कालत्वहेतुः प्रकृतहेतुव्यापकाभावव्याप्यत्वरूपप्रतिपक्षाभाववान् प्रकृतहेतुव्यापकाभावाव्याप्यत्वात्' (कालत्वहेतु प्रकृतहेतु मेयत्व व्यापकमहाविद्यासाध्य के व्याप्यत्वरूपप्रतिपक्षत्वरहित है। प्रकृत हेतु के व्यापक का व्याप्य न होने से) उक्त अनुमान साध्याविशिष्ट दोष से दूषित है। प्रकृतहेतुव्यापकाभावव्याप्यत्वरूपप्रतिपक्ष का अभाव साध्य है। प्रकृत हेतु व्यापकाभाव का अव्याप्यत्व हेतु है। हेतु साध्यसम होने से साध्याविशिष्टदोष होता है। उक्त दोष दूषित अनुमान द्वारा प्रकृत हेतुप्रतिपक्षत्वाभाव नहीं सिद्ध कर सकते।

द्वितीय तथा तृतीय कल्प में बाध है। पक्षीभूतशब्द में प्रकृतव्यापक महाविद्यासाध्य का अभाव जब तक सिद्ध नहीं हो जाता, तब तक अनित्यत्वाभावप्रतीति नहीं होगी। शब्द में महाविद्यासाध्य साधनीय हैं। जब तक महाविद्यासाध्य का अभाव शब्द में नहीं सिद्ध हो जाता। तब तक

**अथ प्रबन्धादादिष्टं यद्धेत्वाभासपञ्चकम्।**
**तत्प्रत्युक्तमहाविद्याबलात्तस्यां प्रपञ्च्यते।।१६।।**

**तथाहि,**

**किञ्च स्वव्यभिचारमुल्ललयति प्रोन्मीलयत्यात्मनः**
**सोपाधित्वमुदाहरत्यभिमतव्याप्यत्वभङ्गं निजम्।**

---

**भुवन.**—उत्तरश्लोकतात्पर्यमाह—**अथ प्रबन्धादिति।** प्रबन्धो नैरन्तर्यमनन्तरमिति यावत्। अनन्तरमेव यद्धेत्वाभासपञ्चकमसिद्धविरुद्धानैकान्तिकसत्प्रतिपक्षबाधरूपमुपदिष्टं तद्धेत्वाभासपञ्चकं तस्यां वादिप्रयुक्तमहाविद्यायां प्रपञ्च्यते विस्तार्यते। कस्मात् प्रत्युक्तमहाविद्याबलात्। प्रति सन्मुखमुक्ता प्रत्युक्ता या महाविद्या प्रत्यनुमानरूपा तद्बलात्। एतावता महाविद्ययैव महाविद्या दूष्यते इत्यर्थः।।१६।।

**भुवन.**—हेत्वाभासपञ्चकं श्लोकेनोपपादयति—**किञ्चेति।** मेयत्वादिकः पूर्वोक्तो महाविद्याहेतुः स्वव्यभिचारमात्मनोऽनैकान्त्यमुल्ललयति अङ्कुरयति,

---

महाविद्यासाध्यसहितत्व ही है। अनित्यत्ववत् में अनित्यत्वाभाव साधन करने पर व्याघात दोष होगा। इस प्रकार तृतीयकल्प में भी बाध है। इस प्रकार चतुर्थ कल्प में भी बाध आदि दोष है। चतुर्थकल्प का स्वरूपप्रसिद्ध नहीं है। तो निषेध करना भी असम्भव होगा। इसलिए उपेक्षणीय है। प्रकृत हेतु में प्रतिपक्षत्व ही नहीं सिद्ध हुआ तो तत्प्रतियोगिक अभाव नहीं सिद्ध होगा।

इसके बाद कालात्ययापदिष्टता (बाधदोष) महाविद्यानुमान में प्रदर्शित करेगें। जिस अनुमान में साध्याभाव साधक तुल्यबल हेतु (प्रतिपक्ष) एक भी है। वह अनुमान स्वार्थ (स्वसाध्य) की सिद्धि में समर्थ नहीं होता। सैकड़ों प्रतिपक्षों से युक्त महाविद्या की क्या दशा होगी। अर्थात् कथमपि स्वार्थसिद्धि में समर्थ नहीं होगी।।१५।।

इसके बाद शब्द में अनित्यत्वसाधक वादिप्रयुक्तमहाविद्यानुमान में पाञ्चों (असिद्ध, विरूद्ध, अनैकान्तिक, सत्प्रतिपक्ष, बाध) हेत्वाभासों का दिग्दर्शन प्रतिवादिप्रयुक्त महाविद्यानुमान द्वारा किया जा रहा है। अर्थात् महाविद्या में दोष महाविद्या द्वारा दिया जा रहा है।।१६।।

मेयत्वादि पूर्वोक्त महाविद्याहेतु स्वव्यभिचार (साध्याभाववद्वृत्तित्व) का अङ्कुरण स्वयं कर रहा है। अभिमतव्याप्तिमत्ता का भङ्ग करने वाली उपाधि

**आचष्टे प्रतिपक्षमात्मविषयं बाधां समुन्मुद्रय-**

**त्याधत्ते स्थितिविप्लुवं च भजते प्रत्यर्थितामात्मनः ।।१७।।**

इति।

**तथाहि—अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वादित्यनैकान्तिकम्। एतच्छब्दैतच्छब्देतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं वा स्वस्वेतरवृत्तित्व-**

---

प्रोन्मीलयति प्रकाशयति, स्थितिविप्लवमव्यवस्थामाधत्ते, स्वस्य प्रत्यर्थितां विरोधितां भजते।।१७।।

श्लोकं व्याचष्टे—**तथाहीत्यादि**। अनुमिमीते—**एतच्छब्देति**। एतच्छब्देत्यादि स्वस्वेतरेत्यादि वा महाविद्यासाध्यं पक्षः। स्वस्वेतरवृत्तित्व-रहितश्चासौ मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगिनिष्ठश्चेति विग्रहः। स्वस्मिन्पक्षी-कृतमहाविद्यासाध्ये स्वस्मात्पक्षीकृतमहाविद्यासाध्यादितरस्मिंश्च युगलावृत्तित्वेन वृत्तित्वरहितो धर्मः स्वमात्रवृत्तिर्वा, स्वेतरमात्रवृत्तिर्वा। तत्र द्वितीयः पक्षे व्याहतः। तस्मात्स्वमात्रवृत्तिरेतत्पक्षत्वादिर्धर्मः पक्षे सिध्यति। स च धर्मो

---

स्वरूप को प्रकाशित कर रहा है। प्रतिपक्ष तथा बाध आदि दोष स्थितिविप्लव कर दे रहे है। यदर्थ महाविद्यानुमान प्रयुक्त है, उस स्वार्थ की सिद्धि नहीं पाती है।।१७।।

क्रमेण महाविद्या हेतु मेयत्व में व्यभिचार आदि दोष महाविद्या द्वारा दिखा रहे है। साध्याभाववद्वृत्तिरूप व्यभिचार बता रहे है। एतत् शब्द पक्ष के महाविद्यासाध्य एतत्शब्दैतत्शब्देतरवृत्तित्वरहितानित्यानिष्ठाधिकरणत्व को अथवा स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व को पक्ष बनाकर मेयत्व हेतु द्वारा स्वस्वेतरवृत्तित्वरहितमेयत्ववन्निष्ठात्यन्ताभावप्रतियोगिनिष्ठाधिकरणत्व की सिद्धि कर रहे है। उक्त साध्य की सिद्धि मेयत्ववत् मेय घटपटादि में महाविद्यासाध्य के अत्यन्ताभाव सिद्ध होन पर होती है। उसमें मेयत्व हेतु के रहने पर व्यभिचार दोष है।

**समन्वय** स्वस्वेतरवृत्तित्वरहित (उभयावृत्ति) मेयत्ववन्निष्ठात्यन्ताभाव-प्रतियोगिनिष्ठ (मेयघटपटादि में रहने वाले अत्यन्ताभावप्रतियोगिवृत्ति) स्व महाविद्यासाध्य स्वेतर महाविद्यासाध्यभिन्न में जो वृत्ति नहीं है। (दोनो में एक साथ नहीं रहता) ऐसा स्वमात्रवृत्ति (महाविद्यासाध्यमात्र में रहने वाला)

**रहितमेयत्ववन्निष्ठात्यन्ताभावप्रतियोगिनिष्ठाधिकरणं मेयत्वात् घटवदिति व्यभिचारानुमानात्। तदिदमुक्तं किञ्च स्वव्यभिचारमुल्ललयतीति। स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वे च पक्षीकृतशब्दान्यत्वमुपाधिः। न च साध्यव्यापकत्वानिश्चयात्पक्षेतरत्वस्यानुपाधित्वमिति युक्तम्। पक्षीकृतशब्देतरत्वं स्वस्वेतरवृत्तित्वरहितप्रकृतसाध्यव्यापकनिष्ठाधिकरणं**

---

मेयत्ववन्तो घटादिपदार्थाः, तन्निष्ठो योऽत्यन्ताभावः, तस्य यः प्रतियोगी, तस्मिन्निष्ठस्तदैव यदि पक्षीकृतमहाविद्यासाध्यं मेयत्ववन्निष्ठात्यन्ताभाव-प्रतियोगि स्यात्। तस्य धर्मस्य एतत्पक्षमात्रवृत्तित्वेनान्यत्रावर्तनात्। यदि च महाविद्यासाध्यं मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगि जातं, तदानीं मेयत्ववति महाविद्यासाध्यस्य अत्यन्ताभावः सम्पन्नः एव। तथा च मेयत्वसाधनवति घटादिभावे महाविद्यासाध्याभावान्मेयत्वस्य अनैकान्त्यसिद्धिः। स्वेतरमात्र-वृत्तिधर्मोऽत्र पक्षान्यत्वादिः सर्वत्र सपक्षे बोद्धव्यः। स च स्वेतरस्मिन्नेव वर्तनात्स्वस्वेतरवृत्तित्वरहितः, तथा मेयत्ववत्पक्षीकृतं महाविद्यासाध्यं तत्र निष्ठो योऽत्यन्ताभावस्तत्प्रतियोगिनि घटादौ निष्ठश्च सम्भवेदिति तेन व्याप्त्यनुगमः। अधिकरणमित्युक्ते स्वनिष्ठेन महाविद्यासाध्यत्वधर्मेण स्वस्य मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगित्वाभावेऽप्युपपद्यमानेनार्थान्तरं स्यात्। तन्नि-वृत्त्यर्थं मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगिनिष्ठेत्युपात्तम्। तथोक्ते घटपक्षीकृत-

---

होगा। या महाविद्यासाध्यरूपपक्षेतरवृत्तिधर्म होगा। ये दोनो धर्म एक मात्र में न रहने के कारण युगलावृत्ति है। अब पक्षेतरवृत्तिधर्म की सिद्धि यदि पक्ष में करें तो व्याघातदोष होगा। अतः स्वमात्रवृत्तिधर्म एतत्पक्षत्वादि पक्ष में सिद्ध हुआ। वह धर्म मेयत्ववत् मेय घट पटादिनिष्ठात्यन्ताभावप्रतियोगी तभी होगा। जब पक्षीकृतमहाविद्यासाध्य मेयत्ववन्निष्ठात्यन्ताभावप्रतियोगी हो। यह धर्म एतत्पक्षमात्रवृत्ति होने से अन्यत्र है नहीं। यदि महाविद्यासाध्यधर्म में मेयत्व-वन्निष्ठात्यन्ताभावप्रतियोगित्व सिद्ध हो गया। तब मेयत्ववत् मेय में महाविद्यासाध्य का अत्यन्ताभाव सिद्ध है। उसमें मेयत्व हेतु की वृत्तिता होने से व्यभिचारदोष सिद्ध है। सकल सपक्षों में स्वेतरमात्रवृत्तिधर्म पक्षान्यत्व है। वह भी युगलावृत्ति (दोनो में नहीं रहता) मेयत्ववत् मेय पक्षीकृत-महाविद्यासाध्यनिष्ठात्यन्ताभाव का प्रतियोगी भी है। इस प्रकार व्याप्ति का समन्वय भी हो गया। महाविद्यानुमान द्वारा मेयत्व हेतु में व्यभिचार सिद्ध करने के बाद अब उपाधि सिद्ध कर रहे हैं।

**मेयत्वादिति प्रकृतसाध्यव्यापकत्वानुमानात्। न च साध्यव्यापकत्वसाधनाव्यापकत्वनिश्चयेऽपि पक्षेतरत्वादेवायमनुपाधिरिति युक्तम्। व्यापकव्यावृत्तौ व्याप्यव्यावृत्तेरावश्यकत्वेन साधनवति पक्षे एव व्याप्तिभङ्गस्यावश्य [illegible]त्। अन्यथा स्थलान्तरेऽपि उपाधेर्दूषणत्वानुपपत्तेः।**

---

महाविद्यासाध्यान्यतरत्वेन मेयत्ववत्पटादिनिष्ठात्यन्ताभावप्रतियोगिघटनिष्ठेनार्थान्तरम्। अत उक्तं स्वेतरवृत्तिविरहितेति। तथापि सपक्षे साध्याप्रसिद्धः, तदुक्तं स्वेति। उक्ते मूलपदमवतारयति—**तदिदमिति**। उपाधिदोषं पोषयति—**स्वस्वेतरेत्यादि**। अयं शब्दः स्वस्वेतरेत्यादिमहाविद्यानुमाने पक्षीकृतो यः शब्दस्तदन्यत्वमुपाधिः। यत्र महाविद्यासाध्यं तत्रैतच्छब्दान्यत्वं, यथा घटात्मादाविति साध्यव्यापकत्वात्, मेयत्वसाधनवति शब्दे एतच्छब्दान्यत्वस्याभावेन साधनाव्यापकत्वाच्च। पराशङ्कां पराकरोति—**न च साध्येति**। साध्यव्यापकत्वस्य अनिश्चयात्पक्षेतरत्वस्य एतच्छब्दान्यत्वस्यानुपाधित्वमिति भावः। हेतुमाह—**पक्षीकृतेत्यादि**। पक्षीकृतशब्देतरत्वरूपः उपाधिरेव पक्षः। स्वस्वेतरवृत्तित्वरहितश्चासौ प्रकृतसाध्यव्यापकनिष्ठश्चेति समासः। स्वस्मिन् पक्षीकृतशब्देतरत्वोपाधौ स्वस्मादेतदुपाधेरितरस्मिँश्च वृत्तित्वरहितः स्वमात्रवृत्तिर्वा, स्वेतरमात्रवृत्तिर्वा। तत्र स्वेतरमात्रवृत्तिः पक्षान्यत्वादिर्यद्यपि प्रकृतसाध्यव्यापके मेयत्वादौ निष्ठोऽस्ति, तथापि पक्षादन्यत्रैव वर्तनात्पक्षे व्याहतः, सपक्षे च सर्वत्र प्रयोजकः। तेन स्वमात्रवृत्तिरेतदुपाधित्वादिर्धर्मः पक्षे

---

इसके वाद महाविद्यानुमान में पक्षीकृतशब्दान्यत्व उपाधि दे रहे हैं। इस पर यदि वादी कहे कि उक्त पक्षेतरत्वरूप उपाधि में महाविद्यासाध्य की व्यापकता का निश्चय जब तक नहीं हो जाता। तब तक पक्षेतरत्व में साध्यव्यापकत्वे सति साधनाव्यापकत्वलक्षणलक्षित उपाधि नहीं कही जा सकती। इसलिए पक्षीकृतशब्देतरत्वरूप उपाधि में महाविद्यानुमान द्वारा साध्यव्यापकत्व सिद्ध कर रहे हैं। अनुमान प्रयोग ''पक्षीकृतशब्देतरत्वं स्वस्वेतरवृत्तित्वरहितप्रकृतसाध्यव्यापकनिष्ठाधिकरणं मेयत्वात्'' पक्षीकृतशब्देतरत्वरूप पक्ष में मेयत्व हेतु द्वारा स्व स्वेतरवृत्तित्वरहिप्रकृतमहाविद्यासाध्यव्यापकनिष्ठाधिकरणत्व साध्य है। स्व (पक्षीकृतशब्देतरत्व) स्वेतर (पक्षीकृतशब्देतरभिन्न) में न रहने वाला उभयवृत्तिरहित धर्म या स्वेतरमात्रवृत्ति होगा या स्व (पक्षीकृतशब्देतरत्व) मात्रवृत्ति होगा। स्वेतरमात्रवृत्तिधर्म पक्षान्यत्व यद्यपि प्रकृतसाध्यव्यापक मेयत्वादि में है। तथापि पक्षेतरवृत्ति होने कारण पक्ष

सिध्यति। स च धर्मः प्रकृतं साध्यं महाविद्यासत्कं स्वस्वेतरेत्यादिकं तस्य यो व्यापकस्तत्र निष्ठस्तदेव, यद्ययमुपाधिः प्रकृतसाध्यव्यापकः स्यादिति। परिशेषप्रमाणेनैतच्छब्दान्यत्वोपाधेः साध्यव्यापकत्वं सिद्धम्। व्यावृत्त्यकृत्यं स्पष्टम्। **न च साध्येति।** साध्यब्यापकत्वसाधनाव्यापकत्वरूपोपाधि-लक्षणसद्भावेऽपि पक्षेतरत्वमेव दोषः। तथाहि—यत्रोपाधिना पक्षः एव व्यावर्त्यते नेतरो विपक्षः, तत्र पक्षेतरत्वं, यथा धूमानुमाने प्रतिवादिना पर्वतेतरत्वोपाधौ उद्भाविते पक्षस्यैव व्यावर्तनात्पक्षेतरत्वम्। पक्षेतरस्योपाधित्वे च सर्वानुमानोच्छेदप्रसङ्ग इत्यर्थः। कुतो न युक्तमत्राह—**व्यापकेति।** व्यापक उपाधिः, तद्व्यावृत्तौ व्याप्यस्य साध्यस्य व्यावृत्तेरवश्यंभावित्वेन मेयत्वादिसाधनवति पक्षे शब्दे एव व्याप्तिभङ्गात्। तथाहि—यत्र साध्यं तत्रोपाधिर्यथा घटादौ, यत्र चोपाधेरभावस्तत्र साध्यस्याप्यभावो यथा शब्दे एव इति। उपाधिर्व्यावर्तमानः साध्यमपि व्यावर्तयतीत्युपाधिना साध्यस्य गृहीतत्वात्साध्यसाधनयोर्व्याप्तिभङ्गः इत्युपाधेः साफल्यमित्याशयः। विपर्यये बाधकमभिधत्ते—**अन्यथेति।** यदीदृशोऽपि नोपाधिः, तर्हि स्थलान्तरे अनुमानान्तरेऽप्युपाधेर्दूषणत्वं नोपपद्यते इत्यर्थः।

---

का साध्य बनाने पर व्याघात दोष होगा। अतः स्वस्वेतरवृत्तित्व रहितधर्म पक्षीकृतशब्देतरत्ववृत्ति होगा। वह पक्षीकृतशब्देतरत्ववृत्तिधर्म, प्रकृतमहाविद्या-साध्य का व्यापक तभी होगा, जब पक्षीकृतशब्देरत्व प्रकृतसाध्य का व्यापक हो। पारिशेष्यात् पक्षीकृतशब्देतरत्व में महाविद्या साध्य की व्यापकता गृहीत हुई। मेयत्व पक्षीकृत शब्द में भी है। वहाँ पर पक्षीकृतशब्देतरत्व नहीं है। अतः साधन की अव्यापक भी उपाधि हो गयी।

इस पर यदि वादी कहे कि यह उपाधि पक्षमात्र की व्यावर्तक होने के कारण पक्षेतरत्व समान है। पक्षेतरत्व को यदि उपाधि माना जाय तो अनुमानप्रमाण का उच्छेद हो जायेगा। इस पर कह रहे हैं, व्यापक उपाधि के व्यावृत्ति से व्याप्य साध्य निवृत्ति होना ही उपाधि का स्वरूप है। जहाँ जहाँ महाविद्यासाध्य है, वहाँ वहाँ पक्षीकृतशब्देतरत्व उपाधि घट आदि में है। जहाँ पक्षीकृतशब्द में पक्षीकृतशब्देतरत्व उपाधि नहीं है, वहाँ महाविद्यासाध्य भी नहीं है। शब्द में अभी तक साध्य का निश्चय न होने साध्याभाववान् है। यही उपाधि के व्यावृत्त होने पर साध्य की व्यावृत्ति ही उपाधिका स्वरूप है। अन्यथा अन्यस्थलों में भी उपाधि नहीं हो सकेगी।

**किञ्च पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वव्यापकत्वं स्वस्वेतरवृत्तित्वरहितमेयत्वाव्यापकनिष्ठाश्रिताधिकरणं मेयत्वात् घटवदिति चोपाध्यनुमानम्। मेयत्वाव्यापकत्वं स्वस्वेतरवृत्तित्वरहितपक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वव्यापकनिष्ठाधिकरणं मेयत्वात् घटवदिति चोपाध्यनुमानः पक्षीकृतशब्दतदितरवृत्तित्व-**

---

**भुवन.**—अथ पुनरपि पक्षेतरत्वोपाधेः साधनाव्यापकत्वं चानुमानाभ्यां दर्शयति—**किं च पक्षीकृतेत्यादि।** महाविद्यासाध्यव्यापकत्वं पक्षः, मेयत्वस्य अव्यापके निष्ठो मेयत्वाव्यापकनिष्ठः, तस्याश्रितो मेयत्वाव्यापकनिष्ठाश्रितः। स्वस्वेतरवृत्तित्वरहितश्चासौ मेयत्वाव्यापकनिष्ठाश्रितश्च तदधिकरणमिति पदान्वयः। स्वस्मिन् महाविद्यासाध्यव्यापकत्वे पक्षीकृते स्वस्मात्पक्षादितरस्मिंश्च वृत्तित्वरहितः स्वमात्रवृत्तिर्वा स्वेतरमात्रवृत्तिर्वा। तत्र द्वितीयः पक्षान्योन्याभावादिः पक्षे व्याघातान्निषिद्धः। स्वमात्रवृत्तिस्तु एतत्पक्षत्वं धर्मः पक्षे सिध्यति। स च धर्मो मेयत्वस्य अव्यापके निष्ठो यो धर्मस्तदाश्रितस्तदैव, यदि महाविद्यासाध्यव्यापकत्वरूपः पक्षो मेयत्वाव्यापकनिष्ठः स्यात्। तथा च यर्हि महाविद्यासाध्यव्यापकत्वमुपाधिधर्मो मेयत्वाव्यापकनिष्ठो जातः, तर्हि मेयत्वरूपसाधनाव्यापकः उपाधिर्जातः एवेति पक्षीकृतशब्देतरत्वोपाधेः साधनाव्यापकत्वम्। अत्र सपक्षे स्वेतरमात्रवृत्तिरेतत्पक्षान्यत्वादिर्धर्मोऽवगन्तव्यः स च धर्मो मेयत्वाव्यापको घटादिः, तन्निष्ठो घटत्वादिर्धर्मस्तदाश्रित एवेति साध्यप्रसिद्धिः। आश्रिताधिकरणमित्युक्ते एतत्पक्षमात्रवृत्ति-

---

यतः साध्य की व्यापक साधन की अव्यापक उपाधि होती है। महाविद्यानुमान में उपाधिभूतपक्षीकृतशब्दान्यत्व में महाविद्यासाध्य का व्यापकत्वनिश्चय हो जाने पर, मेयत्वसाधन का अव्यापकत्व उक्त उपाधि में सुनिश्चित कर रहे है। महाविद्यानुमान द्वारा महाविद्यासाध्यव्यापकीभूतपक्षीकृतशब्दान्यत्वरूप उपाधि में मेयत्वसाधन का अव्यापकत्व सिद्ध कर रहे हैं। अनुमान प्रयोग "पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरुणत्वव्यापकं (महाविद्यासाध्य व्यापक पक्षीकृतशब्दान्यत्व) पक्ष है। स्वस्वेतरवृत्तित्त्वरहित मेयत्वाव्यापकनिष्ठाश्रिताधिकरणत्व साध्य है। मेयत्वहेतु है। स्व = महाविद्यासाध्यव्यापक स्वेतर महाविद्यासाध्यव्यापकेतर में वृत्ति नहीं जो (युगलावृत्ति) वह स्वेतरमात्रवृत्तिधर्म पक्षान्योन्याभाव आदि होगा या पक्षमात्र वृत्ति पक्षत्वादि होगा। प्रथमकल्प में पक्षेतरवृत्तिधर्म की पक्ष में सिद्धि कहना व्याघातदोष होगा।

**रहितानित्यनिष्ठाधिकरणत्वव्यापकत्वं च मेयत्वादावेव सिद्धम्। मेयत्वाव्यापकत्वं चानुष्णत्वादौ सिद्धमिति नानयोराश्रयासिद्धत्वादि शङ्कनीयम्। तदिदमुक्तं प्रोन्मीलयत्यात्मनःसोपाधित्वमिति। व्याप्यत्वासिद्धं च मेयत्वम्। मेयत्वं स्वस्वेतरवृत्तित्वरहितपक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वाव्याप्यनिष्ठाधिकरणं मेयत्वादिति व्याप्यत्वाभावानुमानात्।**

---

धर्मेणोपाधेः साधनव्यापकत्वेऽप्युपपद्यमानेन अर्थान्तरम्। तन्निवृत्तये मेयत्वाव्यापकनिष्ठेति। एतावत्युच्यमाने च मेयत्वादिना अर्थान्तरत्वम्, अत उक्तं स्वेतरवृत्तित्वरहितेति। तथापि सपक्षे साध्यप्रसिद्धिर्नेत्याह—**स्वेति। उपाधेः** साधनाव्यापकत्वमनुमाय साध्यव्यापकत्वायानुमिमीते—**मेयत्वाव्यापकत्वमिति।** मेयत्वसाधनस्य अव्यापकत्वं पक्षः। स्वं पक्षः। स्वेतरत पक्षादन्यत्। तद्युगले यो न वर्तते स धर्मो द्विधा स्यात्, स्वमात्रवृत्तिः स्वेतरमात्रवृत्तिश्च। उत्तरः पक्षे व्याहतः। तेनाद्यः एतत्पक्षत्वादिः पक्षे सिध्यति। स च पक्षीकृतेत्यादिमहाविद्यासाध्यस्य व्यापके निष्ठो यो धर्मः तदाश्रितः तदैव, यदि पक्षीकृतं मेयत्वाव्यापकत्वं महाविद्यासाध्यव्यापकनिष्ठं भवेत्। तथा च यदि मेयत्वाव्यापकत्वमुपाधिधर्मो महाविद्यासाध्यव्यापकनिष्ठोऽजनि, तर्ह्युपाधिर्महाविद्यासाध्यव्यापकः संपन्न एवेति साध्यव्यापकत्वं पक्षीकृतशब्देतरत्वोपाधेः सिद्धिसौधमध्यास्त। अत्रापि सर्वत्र धर्मधर्म्यादौ सपक्षे पक्षान्यत्वधर्मेण महाविद्यासाध्यव्यापकं मेयत्वादि, तन्निष्ठमस्तित्वादि, तदाश्रितेन साध्यानुगमः। व्यावर्त्यानि उत्तानार्थानि। **उपाध्यनुमान इति।**

---

अतः उभयवृत्ति रहित धर्म पक्षमात्रवृत्ति होगा। वह पक्षमात्रवृत्तिधर्म मेयत्व के अव्यापकवृत्तिधर्माश्रित तभी होगा यदि महाविद्यासाध्यव्यापकस्वरूप पक्ष मेयत्वाव्यापकवृत्ति होगा। यदि महाविद्यासाध्यव्यापकत्व उपाधिधर्म मेयत्व के अव्यापकवृत्ति हो गया। तब तो मेयत्वरूपसाधनाव्यापक उपाधि हो गयी। यहाँ सपक्ष स्वेतरमात्रवृत्ति पक्षान्यत्वादिधर्म मानना चाहिए। वह मेयत्व घटादिवृत्तिघटत्वादिधर्माश्रित ही है

पुनश्च उक्त पक्षीकृत शब्दान्यत्व उपाधि में महाविद्यासाध्यव्यापकत्व अनुमानप्रमाण द्वारा निश्चित कर रहे हैं। **मेयत्वाव्यापकत्वं स्वस्वेतरवृत्तित्वरहितपक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वव्यापकनिष्ठाधिककरणं मेयत्वात् घटवत्।** यहाँ पर भी पूर्ववत् युगलावृत्तिधर्म लेना है। जो स्व = पक्ष स्वेतर पक्षान्य में एक साथ न रहता हो। वह धर्म पक्षमात्रवृत्ति होगा

अनुमानशब्दो हि पुंनपुंसकलिङ्गो लिङ्गानुशासने प्रत्यपादीत्यत: उपाध्यनुमान: इत्युक्तम्। महाविद्यासाध्यव्यापकत्वं मेयत्वाव्यापकत्वं च न क्वचित्प्रमितमित्याश्रयासिद्धिरित्याह—**पक्षीकृतेति।** यत्र यत्र महाविद्यासाध्यं तत्र तत्र मेयत्वमिति महाविद्यासाध्यव्यापकत्वस्य मेयत्वादौ सिद्धे:। उष्णत्वादौ मेयत्वसद्भावेऽप्यनुष्णत्वाभावेन यत्र यत्र मेयत्वं, तत्र तत्रानुष्णत्वमिति व्याप्तेरभावात् मेयत्वाव्यापकत्वस्यानुष्णत्वादौ सिद्धेश्च अनयो: पूर्वोक्तहेत्वोराश्रयासिद्धत्वादि नाशङ्क्यमिति भाव:। एवमौपाधिकव्याप्तिकत्वेन व्याप्यत्वासिद्धत्वं महाविद्याहेतो: प्रतिपादितम्। साध्यव्याप्यत्वाभावत्वेन व्याप्यत्वासिद्धत्वमाह—**व्याप्यत्वासिद्धं चेति।** हेतोर्यत्साध्येन व्याप्यत्वं तेन असिद्धं मेयत्वं महाविद्यासाध्यं मेयत्वहेतुं न व्याप्नोतीत्यर्थ:। एतदेव महाविद्यानुमानेनाह—**मेयत्वमिति।** स्वं मेयत्वं, स्वस्मान्मेयत्वादितरत्सर्वं जगत्। तयोर्युगले यो न वर्तते धर्म: स द्वेधा स्यात्, स्वमात्रवृत्ति: स्वेतरमात्रवृत्तिर्वा। द्वितीय: पक्षान्यत्वादि: पक्षे व्याहतत्वात्सपक्षोपयोगी इति प्राचीन: एतत्पक्षत्वादिर्धर्म: पक्षे सिध्यति। स च पक्षीकृतेत्यादिमहाविद्यासाध्येन अव्याप्यो य: यत्र

---

या पक्षेतरमात्रवृत्ति होगा। पक्षेतरमात्रवृत्तिधर्म की पक्ष में सिद्धि करने पर व्याघात होगा। अत: युगलावृत्तिधर्म एतत्पक्षत्वादि लेना है। यह धर्म महाविद्यासाध्य के व्यापक में रहने वाले धर्म में वृत्ति तभी होगा। जब पक्षीकृत मेयत्वाव्यापक (पक्षीकृतशब्दान्यत्व उपाधि) महाविद्यासाध्यव्यापकवृत्ति हो। इस प्रकार मेयत्वाव्यापक उपाधिधर्म महाविद्यासाध्य का व्यापक भी हो गया। मेयत्वाव्यापकत्व अनुष्णस्वादि में सिद्ध है। अत: आश्रयासिद्धिदोष भी नहीं है। अनुष्णत्व में मेयत्व का अव्यापकत्व इस प्रकार जहाँ जहाँ महाविद्यासाध्य है। वहाँ वहाँ मेयत्व है। महाविद्यासाध्यव्यापकत्व मेयत्व में है। उष्णत्व में मेयत्व के रहने पर भी अनुष्णत्वाभाव होने से जहाँ जहाँ मेयत्व है, वहाँ वहाँ अनुष्णत्व है, यह व्याप्ति नहीं बन सकती। अत: मेयत्वाव्यापकत्व अनुष्णत्व में सिद्ध है। इस प्रकार मेयत्व हेतु में उपाधि सिद्ध कर सोपाधिकहेतुत्वेन व्याप्यत्वासिद्धिदोष सिद्ध कर। अब महाविद्यानुमान द्वारा साक्षात् महाविद्यासाध्य का अव्यापकत्व (हेत्वाभाव) मेयत्व में सिद्ध कर रहे है।

अनुमान प्रयोग **'मेयत्वं स्वस्वेतरवृत्तित्वरहितपक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाकरणत्वाव्याप्यनिष्ठाधिकरणं मेयत्वात'** मेयत्वहेतु को पक्ष बना कर स्व-मेयत्व स्वेतर मेयत्वभिन्न में न रहने वाला (युगलावृत्तिधर्म)

**न च पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वाव्याप्या-प्रसिद्धेरप्रसिद्धविशेषणतेति वाच्यम्। पक्षीकृतशब्दतदितरवृत्तित्वरहिता-**

निष्ठस्तदैव, यदि मेयत्वं महाविद्यासाध्याव्याप्यं भवेदिति मेयत्वस्य महाविद्यासाध्येन अव्याप्यत्वं सिद्धम्। व्यावर्त्यानि यथा—मेयत्वमधि-करणमित्युक्ते येन केनापि वाच्यत्वादिधर्मेण मेयत्वस्य प्रकृतसाध्य-व्याप्यत्वेऽप्युपपद्यमानेन अर्थान्तरम्, अत उक्तमव्याप्यनिष्ठेति। तथापि घटत्वेनाव्याप्यमस्तित्वं तन्निष्ठेन अभिधेयत्वादिना अर्थान्तरत्वं, तदर्थं पक्षीकृतेत्यादि। स्वस्वेतरेत्यादिविशेषणकृत्यं पूर्ववदेवेति पुनर्नोच्यते।

---

महाविद्यासाध्य के अव्याप्यवृत्तिधर्म का अधिकरण है। स्व स्वेतरवृत्तित्वरहित धर्म पूर्ववत् यहाँ पर भी स्ववृत्ति (मेयत्वनिष्ठ धर्म) लिया जायेगा। वह मेयत्वपक्षवृत्तिधर्म महाविद्यासाध्य के अव्याप्यवृत्तिधर्म का अधिकरण तभी होगा। जब मेयत्व महाविद्यासाध्य का अव्याप्य हो। इसप्रकार महाविद्यासाध्य का अव्याप्यत्व महाविद्यासाध्य के साधन में सिद्ध हो गया। अतएव कहा है कि 'आत्मनः सोपाधित्वं प्रोन्मीलयति'।

महाविद्यासाध्याव्याप्यत्व के अप्रमित होने महाविद्यासाध्याव्याप्यत्व-साधक अनुमान में साध्याप्रसिद्धिदोष न हो जाय अतः महाविद्यानुमानद्वय द्वारा महाविद्यासाध्याव्याप्य की सिद्धि कर रहे हैं। पक्षीकृतशब्दतदितरवृत्तित्व-रहितानित्यनिष्ठाधिकरणत्वव्याप्यत्व (महाविद्यासाध्यव्याप्यत्व) को पक्ष बना कर स्वस्वेतरवृत्तित्वरहितकुतश्चिद्व्यावृत्तनिष्ठाधिकरणत्व साध्य की सिद्धि मेयत्व हेतु द्वारा किया है। स्व स्वेतर वृत्तित्वरहित दो में एक साथ न रहने वाले धर्म का अधिकरणत्व महाविद्यासाध्यव्याप्यत्वपक्ष में साधनीय है। स्व महाविद्यासाध्यव्याप्यत्व स्वेतर उक्त व्याप्यत्वभिन्न में न रहने वाला युगलावृत्तिधर्म पूर्ववत् यहाँ पर भी व्याप्यत्वमात्रवृत्तिधर्म को लेगें। वह धर्म महाविद्यासाध्यव्यावृत (साध्यव्याप्याभाववत्) में वृत्ति तभी होगा जब महा-विद्यासाध्यव्याप्य का कहीं पर अभाव होगा। इस प्रकार महाविद्यासाध्याव्याप्य (व्याप्यत्वाभाव) सिद्ध हुआ।

उक्त महाविद्यानुमान द्वारा महाविद्यासाध्यव्याप्यत्वसामान्याभाव सिद्ध करने के बाद साक्षात् मेयत्वहेतु में महाविद्यासाध्यव्याप्यत्वाभावसिद्ध कर रहे हैं। द्वितीय महाविद्यानुमान का भी पक्ष पूर्ववत् महाविद्यासाध्यव्याप्यत्व है। हेतु भी मेयत्व है। साध्य स्वस्वेतरवृत्तित्वरहितमेयत्वावृत्तिनिष्ठाधिकरणत्व है।

**नित्यनिष्ठाधिकरणत्वव्याप्यत्वं स्वस्वेतरवृत्तित्वरहितकुतश्चिद्व्यावृत्तनिष्ठाधिकरणं मेयत्वादिति तत्सिद्धेः। पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वव्याप्यत्वं स्वस्वेतरवृत्तित्वरहितमेयत्वावृत्तिनिष्ठाधिकरणं मेयत्वादिति व्याप्यत्वाभावानुमानम्। पक्षीकृतशब्दतदितर-**

---

**भुवन**—अत्र पक्षीकृतेत्यादिमहाविद्यासाध्याव्याप्यस्य कस्याप्यप्रसिद्धेः, तन्निष्ठधर्मस्यापि सपक्षेऽप्रसिद्धत्वात् अप्रसिद्धविशेषणत्वं पक्षस्य आशङ्कमानः परिहरति—**न च पक्षीकृतेत्यादि।** महाविद्यासाध्यस्य सर्वव्यापकत्वान्महाविद्यासाध्येन अव्याप्यस्य अप्रसिद्धेः, तन्निष्ठधर्मस्याप्यप्रसिद्धत्वात्पक्षोऽप्रसिद्धविशेषणः इति परमार्थः। हेतुमाह—**पक्षीकृतेत्यादि।** पक्षीकृतेत्यादिमहाविद्यासाध्यव्याप्यत्वं पक्षः। स्वस्वेतरवृत्तित्वरहितश्चासौ कुतश्चिद्व्यावृत्तनिष्ठश्चेति विग्रहः। स्वशब्देनैतत्पक्षग्रहः। अत्र स्वमात्रवृत्तिरेतत्पक्षत्वादिर्धर्मः। पक्षेऽवसेयः। स च कुतश्चिद्व्यावृत्ते निष्ठः, तदैव, यदि पक्षितं महाविद्यासाध्याव्याप्यत्वं कुतश्चिद्व्यावृत्तं स्यात्। तथा च यतो महाविद्यासाध्यव्याप्यत्वं

---

उभयवृत्तिरहित पक्षीकृतमहाविद्यासाध्यव्याप्यत्ववृत्तिधर्म में मेयत्वावृत्तिनिष्ठाधिकरणत्व (मेयत्व में न रहने वाले धर्म का अधिकरण) तभी होगा जब मेयत्व महाविद्यासाध्य का व्याप्य न हो। इस प्रकार मेयत्वहेतु में महाविद्यासाध्य का व्याप्यत्वाभाव सिद्ध हुआ। इस प्रकार परम्परया साक्षात् मेयत्वहेतु में महाविद्यासाध्य के व्याप्यत्वाभाव सिद्ध करने के बाद महाविद्यासाध्य में मेयत्वहेतु के व्यापकत्वाभाव की सिद्धि कर रहे है।

अनुमानप्रयोग में पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वव्याप्यत्व (महाविद्यासाध्यव्याप्यत्व) को पक्ष बनाया है। मेयत्व हेतु द्वारा स्वस्वेतरवृत्तित्वरहितमेयत्वाव्यापकनिष्ठाधिकरणत्व साध्य है। स्व महाविद्यासाध्यव्याप्यत्व स्वेतर महाविद्यासाध्यव्याप्यत्वभिन्न में वृत्ति न हो जो ऐसा धर्म पूर्ववत् पक्षवृत्तिधर्म महाविद्यासाध्यव्याप्यत्वधर्म होगा। वह धर्म मेयत्व के अध्यापक में रहने वाले धर्म का अधिकरण तभी होगा, जब मेयत्व का महाविद्यासाध्यव्याप्यत्व अव्यापक हो। इस प्रकार मेयत्वहेतु की अव्यापकता महाविद्यासाध्यव्याप्यत्व में सिद्ध हो गयी। इस पर वादी यदि यह कहे कि तृतीय महाविद्यानुमान से मेयत्व का व्यापकत्वाभाव महाविद्यासाध्यव्याप्यत्व में सिद्ध हो रहा है। मेयत्व में महाविद्यासाध्य का व्याप्यत्वाभाव सिद्ध नहीं हुआ। इसका उत्तर जब मेयत्व का व्यापकत्वाभाव महाविद्यासाध्यव्याप्यत्व में सिद्ध हो गया। तो महाविद्यानुमान के

**वृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं स्वस्वेतरवृत्तित्वरहितमेयत्वाव्यापकनिष्ठाधिकरणं मेयत्वादिति वा। न च अनेन पक्षे मेयत्वव्यापकत्वाभावसिद्धिः, न तु मेयत्वे तव्द्याप्यत्वाभावसिद्धिरिति वाच्यम्। महाविद्यावदपर्यवसानात्तत्सिद्धेः। न हि प्रकृतं साध्यं मेयत्वाव्यापकं मेयत्वं च**

---

व्यावृत्तं स महाविद्यासाध्याव्याप्यः सिद्ध एव। पक्षान्यत्वादिधर्मेण कुतश्चिद्व्यावृत्तं घटत्वादि तन्निष्ठेन साध्यप्रसिद्धिः। व्याप्यत्वं यथोक्तसाध्यवदित्युक्तेऽग्निमत्त्वव्याप्यत्वं कुतश्चिद्घटादेर्व्यावृत्तं स्वमेव तन्मात्रनिष्ठधर्मवदित्यर्थान्तरम्। तदर्थं पक्षीकृतेत्यादि गृहीतम्। पक्षीकृतेत्यादिव्याप्यत्वमधिकरणमित्युक्ते स्वमात्रनिष्ठधर्मेण अर्थान्तरं, तत उक्तं कुतश्चिद्व्यावृत्तनिष्ठेति। इतरद्विशेषणं व्याख्यातार्थम्। **तत्सिद्धेरिति।** पक्षीकृतेत्यादिमहाविद्यासाध्याव्याप्यत्वसिद्धेरित्यर्थः। मेयत्वहेतोर्महाविद्यासाध्यव्याप्यत्वं प्रयोगान्तरेण निरस्यति—**पक्षीकृतेति।** मेयत्वेऽवृत्तिर्यस्य स मेयत्वावृत्तिः, तत्र निष्ठा यस्य स तथा। स्वस्वेतरवृत्तित्वरहितश्चासौ मेयत्वावृत्तिनिष्ठश्च तस्याश्रय इत्यर्थः। इह स्वमात्रवृत्तिरेतत्पक्षत्वं धर्मो मेयत्वावृत्तिनिष्ठः पक्षे सिध्यन्महाविद्यासाध्यव्याप्यत्वस्य पक्षितस्य मेयत्वे अवृत्तिं साधयति। तथा च मेयत्वस्य महाविद्यासाध्येन अव्याप्यत्वं सिद्धमेव। इह सपक्षे पक्षान्यत्वं धर्मोऽवसेयः।

---

अपर्यवसानवशात् मेयत्व में महाविद्यासाध्य का व्याप्यत्वाभाव सिद्ध हो जायेगा। उक्त महाविद्यासाध्यव्याप्यत्व यदि मेयत्व का अव्यायक है। तो मेयत्व भी महाविद्यासाध्य का व्याप्य नहीं होगा। अत एव कहा **'उदाहरत्यभिमतव्याप्यत्वभङ्गं निजम्'** अभिमत महाविद्यासाध्य उसके व्याप्यत्व भङ्ग (निरास) अथवा अभिमत मेयत्वहेतु के व्याप्यत्व का निरास।

यद्यपि पूर्व में महाविद्यानुमान में सत्प्रतिपक्षदोष का उद्भावन कर चुके हैं। तथापि महाविद्यानुमान द्वारा साध्याभाव की प्रसिद्धि दिखाने के लिए पुनः प्रतिपक्षी अनुमान का प्रयोग कर रहे हैं। **अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वात्** अनुमान प्रयोग पक्षीकृतशब्द में पूर्वोक्तमहाविद्यासाध्य का साधक है। **अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरहितः एतदन्यत्वरहितत्वात्** प्रतिपक्षी अनुमान पक्षीकृतशब्द में महाविद्यासाध्याभाव का साधक है। उक्त साध्याभाव की प्रसिद्धि महाविद्यानुमान द्वारा कर रहे है। पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणं (महाविद्यासाध्य) पक्ष में मेयत्व हेतु द्वारा स्वस्वेतरवृत्तित्वरहितकुतश्चिद्-

**तव्द्याप्यमिति प्रतिपत्तुं शक्यम्। तदिदमुक्तं उदाहरत्यभिमतव्याप्यत्वभङ्गं निजमिति। अभिमतं साध्यं, तव्द्याप्यत्वं अभिमतव्याप्यत्वमिति। तस्य भङ्गः तदभाव इति।**

---

मेयत्वहेतोरेव व्याप्यत्वाभावानुमानं तृतीयमाचष्टे—**पक्षीकृतेत्यादि।** महाविद्यासाध्यं पक्षः। अत्रैवंविधो धर्मः स्वेतरमात्रवृत्तिः स्वमात्रवृत्तिश्च। तत्राद्यः पक्षे व्याहत इति द्वितीयः एतत्पक्षत्वं धर्मः पक्षे सन् सिध्यति। स च मेयत्वस्य अव्यापके निष्ठस्तर्ह्येव, यदि महाविद्यासाध्यं मेयत्वाव्यापकं स्यात्। यदि च महाविद्यासाध्यं मेयत्वाव्यापकं समजनि, तदा मेयत्वं महाविद्यासाध्येन अव्याप्यं संपन्नमेवेति व्याप्यत्वाभावः। महाविद्यासाध्यान्यत्वधर्मेण मेयत्वाव्यापकं घटत्वं तन्निष्ठेन साध्यानुगमः। व्यावर्त्यानि पूर्ववद्बोद्धव्यानि। आशङ्कां कुर्वन्निराकरोति—**न च अनेनेति।** अनेन अनन्तरोक्तेनैवानुमानेन पक्षे महाविद्यासाध्यरूपे मेयत्वस्य यव्द्यापकत्वं तस्याभावसिद्धिः स्यात्, न तु मेयत्वे तव्द्याप्यत्वस्य महाविद्यासाध्यरूपव्यापकव्याप्यत्वस्य अभावसिद्धिरिति न वाच्यम्। हेतुमाह—**महाविद्येति।** यथा महाविद्यायायां अपर्यवसानेन साध्यसिद्धिः, तथेहापि। यदि महाविद्यासाध्ये मेयत्वाव्यापकत्वं सिद्धं, तदानीं मेयत्वतदव्याप्यं सिद्धमेवेत्यपर्यवसानाव्द्याप्यत्वाभावसिद्धिः। एतदेव विशदयति—**न हीति।** प्रकृतं साध्यं महाविद्यासत्कं मेयत्वस्याव्यापकं मेयत्वं च तेन महाविद्यासाध्येन व्याप्यमित्युक्तं, व्याघातादित्यर्थः। उक्ते मूलपदं दर्शयति—**तदिदमिति।** तदेव व्याचष्टे—**अभिमतमिति।** अभिमतं साध्यं महाविद्यासाध्यं, तेन व्याप्यत्वं तद्व्याप्यत्वमिति।

---

व्यावृत्तनिष्ठाधिकरणत्व साध्य है। स्वस्वेतरवृत्तित्वरहितत्वेस्व पक्षमात्रवृत्ति महाविद्यासाध्यत्वादिधर्म साधनीय है। वह धर्म कुतश्चिद्व्यावृत्तनिष्ठ (कही न कही न रहने वाला का धर्म) तभी होगा जब महाविद्यासाध्य का कही न कही अभाव माना जाय। इस प्रकार महाविद्यासाध्याभाव की प्रसिद्धि हो गयी।

अथवा सीधे शब्द में नित्यत्व की सिद्धि कर अनित्यत्वसाधक अनुमान को सत्प्रतिपक्षित कर देगें। **अयं शब्दो नित्यः शब्दत्वात्** यदि वादी कहे कि उक्त अनुमान का शब्दत्व हेतु सपक्षविपक्षव्यावृतपक्षमात्रवृत्ति होने से असाधारण अनैकान्तिक दोष से दूषित होने के कारण शब्द में नित्यत्व का साधक नहीं होगा। इस पर ग्रन्थकार कह रहे हैं, कि यदि व्याप्ति और

**किञ्च अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणमित्यत्र अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरहितः एतदन्यत्व-रहित्वादित्यादयः प्रतिपक्षाः। न च पक्षीकृतशब्दतदितरवृत्तित्वरहिता-नित्यनिष्ठाधिकरणत्वरहितत्वमप्रसिद्धमितिवाच्यम्। पक्षीकृतशब्दतदितर-वृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं स्वस्वेतरवृत्तित्वरहितकुतश्चिव्द्यावृत्त-निष्ठाधिकरणं मेयत्वात् घटवदिति तत्सिद्धेः।**

---

**भुवन.**—प्रतिपक्षं लक्षयति—**किञ्चेत्यादि।** अयं शब्दः स्वस्वेतरे-त्यादिमहाविद्यासाध्येन रहितः एतदन्यत्वरहितत्वात्। एतच्छब्दाद्यदन्यत्वं तेन रहितत्वात् एतच्छब्दत्वात्। व्यतिरेके घटादि कुतो न वाच्यमत्राह—**पक्षीकृतेति।** एतन्महाविद्यासाध्यं पक्षः। स्वस्वेतरवृत्तित्वरहितश्चासौ कुतश्चिव्द्यावृत्तनिष्ठश्चेति विग्रहः। इह स्वमात्रवृत्तिरेतन्महाविद्यासाध्यत्वादिको धर्मः पक्षे साध्यः। स च कुतश्चिव्द्यावृत्तनिष्ठस्तदैव, यदि पक्षितं महाविद्यासाध्यं कुतश्चिव्द्यावृत्तं भवेत्। यतश्च तव्द्यावृत्तं स महाविद्यासाध्यरहितः संपन्न एवेति पक्षितमहाविद्यासाध्यरहितत्वप्रसिद्धिः। पक्षान्योन्याभावमुपादाय साध्याधिगमः।

---

पक्षधर्मता का खण्डन न हो रहा हो। तो असाधारण अनैकान्तिक का दोष नहीं माना जाता। व्याप्तिपक्षधर्मतावत् लिङ्गम् यह लिङ्ग का लक्षण है। अतः जिसमें व्याप्यत्वग्रह हो जाता, वह व्याप्ति एवं पक्षधर्मता का दूषक नहीं होता।

यदि कोई कहे कि शब्दपक्ष में नित्यत्वसाधक अनुमानघटकीभूत शब्दत्व में व्याप्यत्व का निश्चय ही नहीं है। इस पर ग्रन्थकार शब्दत्व में महाविद्यानुमान द्वारा व्याप्यत्वसिद्ध कर रहे है। **शब्दत्वं स्वस्वेतरवृत्तित्व-रहितनित्यत्वव्याप्यनिष्ठाधिकरणं मेयत्वात्।** यहाँ पर भी स्व स्वेतरवृत्तित्वरहित पूर्ववत् पक्षमात्रवृत्ति पक्षत्व आदि होगा। वह पक्ष शब्दत्ववृत्तिधर्म नित्यत्वसाध्य के व्याप्यवृत्तिधर्म का अधिकरण तभी होगा जब शब्दत्व नित्यत्वसाध्य का व्याप्य हो। इस प्रकार शब्दत्व में नित्यत्वसाध्य का व्याप्यत्वग्रह हो गया। अत एव कहा है **'आचष्टे प्रतिपक्षमात्मविषयम्'** महाविद्यानुमान स्वयम् अपने प्रतिपक्ष का साधक है।

इसके बाद शब्द में अनित्यत्वसाधक महाविद्यानुमान में बाधदोष का विचार कर रहे है। **'यस्य साध्याभावः प्रमाणान्तरेण पक्षे निश्चितः स बाधितः'**

**अयं शब्दो नित्यः शब्दत्वादिति वा प्रतिपक्षः। न चायं पक्षधर्मोऽपि सपक्षविपक्षव्यावृत्तत्वादसाधारण इति वाच्यम्। व्याप्तिपक्षधर्मतयोरखण्डने असाधारणस्य दूषणत्वानङ्गीकारात्। व्याप्यत्वानिश्चयादयमगमक इति चेत्। न। शब्दत्वं स्वस्वेतरवृत्तित्वरहितनित्यत्वव्याप्यनिष्ठाधिकरणं मेयत्वात् घटवदिति व्याप्यत्वसिद्धेः। तदिदमुक्तं आचष्टे प्रतिपक्षमात्मविषयमिति। आत्मविषयं प्रतिपक्षं निर्धारयतीत्यर्थः।**

---

**भुवन.—चायमिति।** अयं शब्दत्वादिहेतुः पक्षधर्मोऽपि सपक्ष-विपक्षाभ्यां व्यावृत्तत्वादसाधारणानैकान्तिकः। सति सपक्षे सपक्षाप्रवेशी असाधारणानैकान्तिकोऽनैकान्तिकभेदो वा अनद्ध्यवसितो वा। अत्र च नित्यत्वे साध्ये गगनादीनां सपक्षत्वेऽपि हेतोः सपक्षाप्रवेशादसाधारणत्वमिति रहस्यं। हेतुमाह—**व्याप्तिपक्षेति।** व्याप्तिश्च पक्षधर्मता च व्याप्तिपक्षधर्मते, तयोरखण्डने सति असाधारणानैकान्तिकत्वस्य दूषणत्वं नोरीक्रियते इत्यन्वर्थः। परमार्थस्त्वयम्। 'व्याप्तिपक्षधर्मतावल्लिङ्गमि'ति लक्षणाव्याप्ति-पक्षधर्मते एवाखण्डिते विलोक्यते इति। आशङ्कते—**व्याप्यत्वेति।** अयं शब्दत्वादिति हेतुर्नित्यत्वसाध्येन यद्व्याप्यत्वं हेतोः, तदनिर्णयादगमकः साध्यस्याज्ञापक इत्यर्थः। समाधत्ते—**न। शब्दत्वमिति।** स्वस्वेतरवृत्तित्वरहितो धर्मः एतत्पक्षत्वादिः पक्षे ज्ञेयः। स च नित्यत्वव्याप्यनिष्ठस्तदैव, यदि शब्दत्वं नित्यत्वव्याप्यं भवेदिति शब्दत्वस्य नित्यत्वव्याप्यत्वसिद्धिः। पक्षान्यत्वधर्मेण नित्यत्वव्याप्ये आत्मत्वादौ निष्ठेन साध्यानुगतिः। शब्दत्वान्यान्यत्वादिना धर्मेण अर्थान्तरपरिहाराय नित्यत्वव्याप्यनिष्ठेत्युपात्तम्। शेषं सुगमम्।

---

जिस हेतु के साध्य का अभाव अन्य प्रमाण से निश्चित हो जाय वह हेतु बाधित कहलाता है। **अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वात्'** इस महाविद्यानुमानघटक मेयत्व हेतु के साध्य का अभाव पक्षीभूतशब्द में अस्मदादिशब्द (प्रतिवादिकथनरूप) प्रमाण से सिद्ध होने से मेयत्व हेतु बाधित है। बाधितहेतु हेत्वाभास होता है। हेत्वाभास स्वसाध्य का साधक नहीं होता। उसी को अनुमान द्वारा सिद्ध कर रहे है। **अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरहितः** (महाविद्यासाध्यरहितः) **अस्मदादिवचनजनितप्रमितिबाधात्।** यह शब्द उक्त महाविद्यासाध्यरहित है। हमारी शाब्दिकप्रमा से बाधित होने से। जो जो हमारी शाब्दप्रमा से बाधित होगा, वह स्वसाध्यरहित होगा।

**किञ्च अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वादित्ययं कालात्ययापदिष्टः। अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरहित इत्यस्मदादिवचनजनितप्रमितिबाधात्। न च अस्याः प्रमितित्वमसिद्धमिति वाच्यम्। इदं ज्ञानं स्वस्वेतरवृत्तित्वरहितप्रमितिनिष्ठाधिकरणं मेयत्वाद्घटवदिति तत्सिद्धेः। पूर्वज्ञानविपरीत-**

---

**भुवन.**—कालात्ययापदिष्टतां स्पष्टयति—**किञ्च अयमित्यादि।** प्रमाणाबाधितसाधकत्वेन नात्र हेतौ बाधासम्बन्धवैधुर्यमित्यत आह—**अयं शब्द इति।** अयं शब्दः स्वस्वेतरेत्यादिसाध्यरहितः इत्येवंरूपा या अस्मदादिवचनजनिता प्रमितिः आगमप्रमाणं, तया बाधः इति भावः। **न च अस्या इति।** अस्या अस्मदादिवचनजनितप्रमितेः प्रमितित्वमागमप्रमाणत्वमसिद्धमिति न च वाच्यम्। कुतो न वाच्यमित्यत आह—**इदं ज्ञानमिति।** अस्मदादिवाक्यजन्यज्ञानमित्यर्थः। एतज्ज्ञानत्वं धर्मः पक्षेऽवसेयः। स च प्रमितिनिष्ठः तदानीमेव, यदि पक्षितमेतज्ज्ञानं प्रमितिरूपं स्यादित्येतज्ज्ञानस्य प्रमितित्वसिद्धिः। सपक्षे एतज्ज्ञानान्यत्वं धर्मो बोद्धव्यः। स च प्रमितिः प्रत्यक्षादिप्रमाणं तन्निष्ठः एवेति तेन साध्यानुगतिः। घटादिज्ञानेन सिद्धसाधनता मा भूदितीदं ज्ञानमित्युक्तं **तत्सिद्धेरिति।** अस्मदादिवचनप्रमितित्वसिद्धेरित्यर्थः। पूर्वमहाविद्याया बाध्यत्वं दर्शयितुं बाधकलक्षणं लक्षयति—**पूर्वेति।** पूर्वज्ञानं महाविद्यासाध्यवत्त्वज्ञानं शब्दस्य, तस्माद्वि-

---

यदि वादी कहे कि अस्मदादिवचनजन्यज्ञान का प्रमात्व अप्रसिद्ध है। तो नहीं कह सकता। यतः महाविद्यानुमानद्वारा उक्त ज्ञान में प्रमात्व सिद्ध है। **इदं ज्ञानं (अस्मदादिवचनजनितज्ञानम्) स्वस्वेतरवृत्तित्वरहितप्रमितिनिष्ठाधिकरणं मेयत्वात्।** स्व-अस्मदादिवचनजनितज्ञानं स्वेतर उक्त ज्ञानभिन्न में वृत्ति नहीं है, जो धर्म, अस्मदादिवचनजनितज्ञानवृत्तिधर्म का अधिकरण अस्मदादिवचनजनितज्ञान है। परन्तु उक्त धर्म प्रमितिनिष्ठ कहा गया है। अतः एतादृशधर्म का अधिकरण उक्त ज्ञान तभी होगा। जब अस्मदादिवचनजन्यज्ञान में प्रमा मानी जाय। अतः उक्त ज्ञान में प्रमात्वसिद्ध हुआ। पूर्वज्ञान से विपरीत ज्ञान में प्रमात्व ही बाधकत्व है। (प्रमाणबाधित साध्यसाधकत्वं कालात्ययापदिष्टत्व) प्रमाणान्तर से बाधितसाध्य का साधक कालात्ययापदिष्ट कहलाता है। जो उक्त महाविद्यानुमान में सिद्ध है। अत एव कहा **बाधां समुन्मुद्रयति।**

**प्रमितित्वमेव बाधकत्वं, नान्यत् किञ्चित्। तदिदमुक्तं बाधां समुन्मुद्रयतीति। समुद्घाटयतीत्यर्थः।**

**किञ्च सकलमहाविद्यानां सिद्धान्तविप्लावकत्वं नाम दूषणम्। तथाहि—गगनादयः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वादिति, पार्थिवपरमाणुः स्वस्वेतरवृत्तित्वरहितनित्यरूपादिमन्निष्ठाधिकरणं मेयत्वा-**

---

परीतप्रमितित्वं शब्दस्य महाविद्यासाध्यरहितत्वज्ञानं, तदेव बाधकत्वं, तच्चास्मदादिवाक्यजनितप्रमितेरस्त्येवेतिभावार्थः। एवं मेयत्वादिहेतोः कालात्ययापदिष्टता समादिष्टा। 'प्रमाणबाधितसाध्यसाधकत्वं कालात्ययापदिष्टत्वमि'ति तल्लक्षणात्।

**भुवन.**—इदानीं सिद्धान्तविप्लावकत्वदूषणं प्रादुष्करोति—**किञ्च सकलेति।** विप्लावकत्वं व्यवस्थारहितत्वम्। ननु नित्या गगनादयः, तथा चतुर्विधाः अपि परमाणवो नित्याः, पार्थिवपरमाणोः रूपरसगन्धस्पर्शाश्चानित्याः वायवीयपरमाणुषु स्पर्शो नित्योऽपाकजश्च, रूपरसगन्धास्तु तत्र सन्त्येव न। आप्यपरमाणोः रूपरसस्पर्शाः नित्याः, गन्धस्तु तत्र नास्त्येव। तैजसपरमाणोः रूपस्पर्शौ नित्यौ, रसगन्धौ तु न स्तः। तथा तैजसाप्यपरमाणुषु रूपाद्यपाकजम्। पार्थिवपरमाणुषु रूपादिपाकजम्। ईश्वरज्ञानेच्छाप्रयत्ना नित्याः। धर्माधर्मादयस्तु तत्र न सन्तीति सिद्धान्तमर्यादाभङ्गाभावात्कथं विप्लावकत्वमित्यत आह—**तथा हीत्यादि।** गगनादयः पक्षः। आदिपदेन आत्मपरमाण्वादिसंग्रहः। अनुमानव्याख्या पूर्ववत्। गगनादीनां सिद्धान्ते नित्यत्वं प्रत्यपादि, महाविद्यया चाऽनित्यत्वमपि साध्यते इति

---

सकलमहाविद्यानुमानों में सिद्धांन्तविप्लावकत्व (व्यावस्थाराहित्य) नामक महान् दोष है। सिद्धान्ततः वादिप्रतिवादिसम्मत गगन परमाणु आदि में नित्यत्व है। **'गगनादयः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वात्'** इस महाविद्यानुमान द्वारा अनित्यत्वसिद्ध कर देते हैं। एवं वैशेषिकमत में पार्थिवपरमाणु के रूपरसगन्धस्पर्श पाकज होने से अनित्य है। **'पार्थिवपरमाणुः स्वस्वेतरवृत्तित्वरहितनित्यरूपादिमन्निष्ठाधिकरणं मेयत्वात्'** इस महाविद्यानुमान द्वारा पार्थिवपरमाणु के रूपादिगुणों में नित्यत्वसिद्ध हो जाता है। जलीयपरमाणु तथा तैजसपरमाणु के रूपादि अपाकज एवं नित्य होते है। **'आप्यादिपरमाणुः स्वस्वेतवृत्तित्वरहितपाकजरूपादिमन्निष्ठाधिकरणं मेयत्वात्'** इस महाविद्यानुमान-द्वारा जलीय तथा तैजसपरमाणु के रूपादि में पाकजत्व सिद्ध हो रहा है।

**दिति, आप्यादिपरमाणुः स्वस्वेतरवृत्तित्वरहितपाकजरूपादिमन्निष्ठाधिकरणं मेयत्वादिति, ईश्वरः स्वस्वेतरवृत्तित्वरहितानित्यज्ञानेच्छाप्रयत्नधर्माधर्मसुखदुःखद्वेषभावनावन्निष्ठाधिकरणं मेयत्वादित्यादेः सर्वत्र सुवचत्वात्। न चैवमादीनामागमबाधः। विवादपदमागमः स्वस्वेतरवृत्तित्वरहिताप्रमाण-निष्ठाधिकरणं मेयत्वादित्यादेः तत्प्रामाण्यप्रतिक्षेपेऽपि सुवचत्वात्।**

---

सिद्धान्तविप्लवः। **पार्थिवेत्यादि।** नित्यं च तद्रूपादि च नित्यरूपादि। आदिशब्देन रसगन्धस्पर्शपरामर्शः। नित्यरूपादयो विद्यन्ते येषु ते नित्यरूपादिमन्तः, तन्निष्ठो धर्मः पार्थिवपरमाणुत्वादिः पक्षे सिध्यन्पक्षित-पार्थिवपरमाणूनां नित्यरूपादिमत्त्वं साधयेदिति भावः। सपक्षे अनित्यरूपादि-मानाप्यादिपरमाणुस्तन्निष्ठेन पक्षान्योन्याभावेन पक्षान्यसर्वनिष्ठेन साध्याधि-गमः। वैशेषिकादिमते पार्थिवाणूनामनित्यरूपादिमत्त्वं प्रतिपाद्यते, अत्र तु विपरीतसाधनाद्विप्लावकत्वम्। **आप्यादीति।** आदिपदात्तेजोऽणूनां ग्रहणम्, न तु वायवीयाणूनाम्। तेषां केवलस्पर्शवत्त्वेन रूपादिमत्त्वाभावात्। पाकजं च तद्रूपादि च तद्वत्सु निष्ठो यो धर्मः, तदाश्रय इत्यर्थः। आदिशब्दाद्र-सस्पर्शपरामृष्टिः। अत्र आप्यादिपरमाणुत्वं साध्यधर्मः पाकजरूपादिमन्निष्ठः पक्षे सिध्यन्पाकजरूपादिमत्त्वमाप्याद्यणूनां साधयति। पक्षान्यत्वं धर्मः सपक्षे ज्ञातव्यः। स च पाकजरूपादिमान्पार्थिवाणुस्तन्निष्ठिोऽस्त्येवेति साध्यप्रसिद्धिः। पार्थिवाणवो हि सूर्यादितेजसा ज्वलितत्वात्पाकजरूपादिमन्तः। उच्यन्ते। आप्याद्यणवस्तु अज्वलितत्वादपाकजरूपादिमन्तः इति सिद्धान्तस्थितिः। अत्र च तद्वैपरीत्यकरणात्स्थितिभङ्गः। **ईश्वर इति।** ईश्वरो हि नित्यज्ञानादि-

---

ईश्वर के ज्ञान ईच्छा तथा प्रयत्न नित्य होते हैं। धर्माधर्मों का ईश्वर में अभाव है। कर्मफलरूप धर्माधर्म यदि ईश्वर में माने जायेगें तो ईश्वरकर्मफल भोक्ता होगा। जो सिद्धान्तविरुद्ध है। कर्मफल का भोक्ता जीव है। ईश्वर साक्षीभूत द्रष्टा है। परन्तु **'ईश्वरः स्वस्वेतरवृत्तित्वरहितानित्यज्ञानेच्छाप्रयत्नधर्माधर्म सुखदुःखद्वेषभावनावन्निष्ठाधिकरणं मेयत्वात्'** इस महाविद्यानुमान द्वारा ईश्वर अनित्यज्ञान, अनित्य इच्छा, अनित्य प्रयत्न, धर्माधर्म, सुख-दुःख, द्वेष, भावनाख्यसंस्कार वाला सिद्ध हो रहा है। जो सिद्धान्त विरुद्ध है। यदि आगमादिप्रमाणान्तर से गगनादि में अनित्यत्वादि के साधक अनुमानप्रमाणों में बाधदोष देना चाहे तो नहीं दे सकते। विवादविषयीभूत आगम में भी **'विवादास्पदमागमः स्वस्वेतरवृत्तित्वरहिताप्रमाणनिष्ठाधिकरणं मेयत्वात्'** इस महाविद्यानुमान द्वारा अप्रामाण्य सिद्ध कर देगें।

**अथ सिद्धान्तविप्लावकत्वं कुत्रान्तर्भवतीति पृच्छसि, तर्हि न क्वचिदित्यवेहि। यथा असिद्धत्वादयः पृथगेव दूषणं, एवमिदमपि। यद्वा**

---

मान्धर्मादिरहितश्च संप्रतिपन्नः, अत्र चान्यथापि साधनाद्विप्लवः। ज्ञानं चेच्छा च प्रयत्नश्च धर्मश्च अधर्मश्च सुखं च दुःखं च द्वेषश्च भावना च, अनित्याश्च ते ज्ञानादयश्चेति विग्रहः। इहेश्वरत्वं धर्मः उभयविशेषणविशिष्टः पक्षे सिद्धयन्पक्षस्येश्वरस्य अनित्यज्ञानादिमत्त्वं साधयेत्। पक्षान्योन्याभावमनित्यज्ञानादिवति क्षेत्रज्ञात्मनि निष्ठमादाय साध्यानुगमः। **इत्यादेरिति।** अत्रादिपदेन 'श्रुतिः स्वस्वेतरवृत्तित्वरहिताप्रमाणनिष्ठाश्रयो ज्ञेयत्वाद्धटात्मादिवत्' तथा 'ईश्वरः स्वस्वेतरवृत्तित्वरहितजगत्कर्तृत्वरहितनिष्ठाश्रयो मेयत्वाद्घटादिवदि'-त्यादीनां ग्रहणम्। **न चैवमिति।** एवमादीनां गगनाद्यनित्यत्वादिसाधकानुमानानामित्यर्थः। कुतो नेत्याह—**विवादेत्यादि।** अत्र विप्रतिपन्नागमत्वं पक्षे साध्यधर्मः। सपक्षे च पक्षान्यत्वं धर्मः। स चाप्रमाणे प्रत्यक्षादिप्रमाणादन्यस्मिन्निष्ठः एवेत्यर्थः। शेषमनुमानमुत्तानार्थम्। **तत्प्रामाण्येति।** तस्य विवादपदागमस्य तत्प्रामाण्यं तत्प्रतिक्षेपेऽपीति भावः।

**भुवन.**—परः पृच्छति। **अथेति।** सिद्धान्त्याह—**तर्हीति।** यथा असिद्धत्वविरुद्धत्वादिदोषाः मुख्याः एव, तथा सिद्धान्तविप्लावकत्वमपि

---

इस प्रकार महाविद्यानुमान द्वारा सकलसिद्धान्त विप्लव हो जायेगा। सिद्धान्तविप्लावकत्वदोष कहने के बाद प्रश्न होता है, कि सिद्धान्तविप्लावकत्वदोष का किस दोष में अन्तर्भाव है। प्रथमकल्प असिद्ध आदि दोषों के समान सिद्धान्तविप्लावकत्व भी पृथक् दोष है, उसका अन्तर्भाव किसी दोष में नहीं हो सकता। अथवा प्रतिबन्दी उत्तर में अन्तर्भाव करें। जिस प्रकार से महाविद्यानुमानों द्वारा शब्द में अनित्यत्वसिद्धि कर रहे हैं। उसी प्रकार महाविद्या अनुमानों से गगन परमाणु आदि नित्यपदार्थों में अनित्यत्वसिद्ध किया जा सकता है। इस प्रतिबन्दी उत्तर के समान सिद्धान्तविप्लावकत्वदोष है।

असिद्ध आदि दोषों के समान सिद्धान्तविप्लावकत्व दोष को भी स्वतन्त्ररूपेण दोष मानना होगा। यदि इसे स्वतन्त्ररूपेण दोष नहीं मानेंगे तो वादिप्रयुक्त जिस किसी अनुमान में प्रतिवादी पक्षेतरत्व उपाधि दिया। अथवा संदिग्धसाध्यपक्षवृत्तित्व होने से संदिग्धानैकान्तिकत्वदोष दिया। **'संदिग्धविपक्षवृत्तित्वं संदिग्धानैकान्तिकत्वम्'** जिस हेतु का सन्देहवशात् विपक्ष में

**प्रतिबन्द्यामस्यान्तर्भावः। यद्येवंविधैरनुमानैः शब्दानित्यत्वं साध्यते, तर्हि गगनानित्यत्वमपि कस्मान्न साध्यते इति।**

**यदि पुनः सिद्धान्तविप्लावकत्वं सर्वसाधनदूषणसाधारणं दूषणं नाङ्गीकियते, तर्हि यस्मिन्कस्मिंश्चिदप्यनुमाने परेण पक्षेतरत्वेन सोपाधिकत्वेऽभिहिते संदिग्धसाध्यपक्षवृत्तित्वेन संदिग्धानैकान्तिके वा अभिहिते किं वक्तव्यम्। एवं सति सर्वानुमानविप्लव इति वक्तव्यमिति**

---

मुख्यमेव दूषणमित्याकूतम्। स्वतन्त्रदूषणत्वकल्पने गौरवं बाधकस्तर्क इत्याशङ्क्याह—**यद्वेति।** प्रतिबन्द्यामन्तर्भावप्रकारमेवाविर्भावयति—**यद्येवंविधैरिति।** एवंविधैर्महाविद्यानुमानैर्यदिशब्दस्यानित्यत्वं साध्यते, तर्हि तथैव गगनाऽनित्यत्वमपि कथं न साध्यते इति। एतत्तत्वम्। 'चोद्यपरिहारसाम्यं प्रतिबन्दीतर्कः' इति हि तल्लक्षणम्। ततोऽत्रापि यद्येवमित्यादिना चोद्यपरिहारसाम्यमदर्शि।

**भुवन.**—पूर्वपक्षिणं शङ्कते—**यदि पुनरिति।** सर्वसाधनानां यानि दूषणानि असिद्धत्वादीनि तेषां साधारणं समानमित्यन्वयः। परमार्थस्त्वयं—यादृशमसिद्धत्वादिदूषणं तादृशं सिद्धान्तविप्लावकत्वदूषणमपि यदि नाभ्युपेयते। **तर्हि यस्मिन्निति।** पक्षेतरत्वस्योपाधिदूषणत्वेऽपि शब्दो नित्यः

---

रहना ज्ञात हो जाय वहाँ पर संदिग्धानैकान्तिकत्वदोष होता है। परन्तु इस लक्षण का विपरीत अर्थ कर के संदिग्धसाध्यवत् में हेतु की वृत्तिता को संदिग्धानैकान्तिक कहें तो सभी अनुमानों में एतादृश संदिग्धानैकान्तिकत्वदोष रहेगा। यत: पक्ष में साध्य संदिग्ध रहता है। उसमें हेतु की वृत्तिता होती है। पक्षेतरत्व रूप उपाधि तथा उक्त संदिग्धानैकान्तिकत्व सर्वत्र रहेगें। यहाँ पर यही कहना होगा कि इस प्रकार की उपाधि वा संदिग्धानैकान्तिकत्व मानने पर सकल अनुमान का विप्लव हो जायेगा। अत: आपने सिद्धान्त विप्लावकत्वदोष स्वीकार कर लिया।

एवं वादिप्रतिपादित हेतु में आपने व्यभिचार आदिदोष दिया, यदि वादी अपने हेतु में व्यभिचारदोष नहीं मानता तो आप यही कहेंगे कि अपसिद्धान्त है। वादी **वर्णा नित्याः श्रावंणत्वात् शब्दत्ववत्** अनुमान प्रयोग किया, आपने ध्वनिभाग में श्रावणत्व हेतु होने से उसमें नित्यत्व के न रहने से व्यभिचार आदिदोष दिया, वादी कह रहा है, कि इसमें

**चेत्। तर्हि स्वीकृतमायुष्मता सिद्धान्तविप्लावकत्वस्य दूषणत्वम्। एवं वाद्युदीरितसाधने भवता अनैकान्तिकत्वादिसम्यग्दूषणेऽभिहते, यदि वादी नैतस्यानैकान्तिकत्वादिकं दूषणमिति वदति, तर्हि भवता किं वक्तव्यम्। अपसिद्धान्तः स्यादिति वक्तव्यमिति चेत्। न। एतस्य हेतोर्यदनैकान्तिकत्वं तस्य तेन दूषणत्वानङ्गीकारात्। एवं तर्हि सर्वत्रानैकान्तिकत्वस्य दूषणत्वं न स्यादिति चेत्। अङ्गीकृतं तर्हि सिद्धान्तविप्लावकत्वस्य दूषणत्वमित्यलं कलहेन।**

---

कृतकत्वाद्घटवदित्यादौ यत्र क्वाप्यनुमाने प्रतिवादिना पक्षेतरत्वेन सोपाधिके प्रोक्ते। यद्वा 'संदिग्धविपक्षवृत्तिः संदिग्धानैकान्तिकः' इति तल्लक्षणे सत्यपि, प्रतिवादिना संदिग्धसाध्यं यत्र स संदिग्धसाध्यः, स चासौ पक्षश्च, तद्वृत्तित्वेन हेतोः संदिग्धानैकान्तिकत्वे प्रसञ्जिते, किं वाच्यं भवतीत्याशयः। परः उत्तरयति—**एवं सतीति**। घट्टकुट्यां प्रभातमिति न्यायेन परिहरति—**तर्हि स्वीकृतमिति**। प्रकारान्तरेण सिद्धान्तविप्लावकत्वं स्वीकारयति—**एवं वाद्युदीरितेति**। नित्याः वर्णाः श्रावणत्वाच्छब्दत्ववदित्यादौ नैत्यशब्दिक-वाद्युदीरिते साधने भवता प्रतिवादिना ध्वनिरूपे भागेऽनैकान्तिकत्वादि-सम्यग्दूषणेऽभिहिते, यदि वादी नैतस्य हेतोरनैकान्तिकत्वादिदूषणमिति वदति, तदा त्वया किं वाच्यमित्यर्थः। परः प्रत्याचष्टे—**अपसिद्धान्त इति**। परिहरति—**नेति**। एतस्य हेतोर्वाद्युक्तस्य यदनैकान्तिकत्वं तस्यानैकान्ति-कत्वस्य भवदुत्पादितस्य तेन वादिना दूषणत्वं नाङ्गीकियते इत्यर्थः। परः परिहारमाह—**एवं तर्हीति**। सिद्धं नः समीहितमित्याह—**अङ्गीकृतमिति**।

---

व्यभिचारादिदोष नहीं है। यहाँ पर आप को यही कहना होगा। कि यदि यहाँ पर अनैकान्तिकत्वदोष नहीं है। तो कही पर अनैकान्तिकत्वदोष नहीं होगा। अतः आपने सिद्धान्तविप्लावकत्वदोष को स्वीकार कर लिया। अथवा सिद्धान्तविप्लावकत्व को प्रतिबन्दी तर्क के अन्तर्गत मानेगे। आपाद्य आपादक की व्याप्ति को तर्क कहते है। **'यदि अयमनग्निः स्यात् तर्हि निर्धूमः प्रसज्येत'** यदि पक्ष आगवाला नहीं होगा, तो धूमवाला नहीं होगा। अग्नि का अभाव आवदक और धूम का अभाव आपाद्य है। इस पर कुछ आचार्यो का कथन है, कि मेयत्व हेतु का जो महाविद्यासाध्यसाधकत्व है। उसकी ईश्वरपक्षक अनित्यज्ञानादिसाध्यसाधक आपाद्य के साथ व्याप्ति नहीं है। अर्थात् जहाँ जहाँ मेयत्व का पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वसाधकत्व

**अथ प्रतिबन्दी तर्कः एव। तर्कश्च आपाद्यापादकयोर्व्याप्तिमूलः। न च प्रमेयत्वस्य पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वसाधकत्वस्य प्रमेयत्वस्येश्वरतदितरवृत्तित्वरहितानित्यज्ञानादिमन्निष्ठाधिकरणत्वसाधकत्वेन व्याप्तिरस्ति। अतो मूलशैथिल्यात्तर्काभासोऽयमिति मन्यसे। तन्न। प्रसङ्गव्यतिरिक्तप्रतिबन्द्यादितर्काणां व्याप्तिमूलत्वानङ्गीकारात्।**

---

**भुवन.**—सिद्धान्तविप्लावकत्वस्य प्रतिबन्द्यामन्तर्भावं पूर्वोक्तमालम्ब्य शङ्कते—**अथ प्रतिबन्दीत्यादि।** यद्ययमनग्नि, स्यात्तर्हि निर्धूमः प्रसज्येत। अत्रानग्नित्वमापादकं, निर्धूमत्वमापाद्यं, यत्रापादकं तत्रापाद्यमिति व्याप्तिमूलस्तर्कः। **न च प्रमेयेति।** प्रमेयत्वहेतोर्यत्पक्षीकृतेत्यादिमहाविद्यासाध्यसाधकत्वं तस्य न च व्याप्तिरस्ति। केन सह। मेयत्वहेतोरेव यदीश्वरेत्यादिमहाविद्यासाध्यसाधकत्वं तेन इत्यन्वर्थः। भावार्थस्तु अयम्—यत्र यत्र मेयत्वस्य पक्षीकृतेत्यादिसाध्यसाधकत्वरूपमापादकं, तत्र तत्र मेयत्वस्य ईश्वरेत्यादिसाध्यसाधकत्वरूपमापाद्यमित्यापाद्यापदकयोर्व्याप्तेरभावः इति। किं तर्हीत्याह—**अत इति।** व्याप्तिरूपं यन्मूलं तस्य शैथिल्यादयं प्रतिबन्दी तर्कस्तर्काभास इति आचार्यः समाधत्ते—**तन्नेत्यादि।** प्रतिबन्दीव्याघातात्माश्रयपरस्पराश्रयादितर्काणामित्यर्थः। विपक्षे बाधकमभिधत्ते—**अन्यथेति।** अन्यथा प्रतिबन्द्यादितर्काणां व्याप्तिमूलत्वस्वीकारे धूमत्वादिसम्यक्साधनेऽपि परेण प्रतिवादिना पक्षेतरत्वोपाधिना पक्षनिष्ठतया संदिग्धानैकान्तिकत्वादिना च दूषिते, तथा 'नित्यः शब्दः श्रावणत्वाच्छब्दत्ववदि'त्यत्र ध्वनिनानैकान्त्यम्।

---

है। वहाँ वहाँ ईश्वरतदितरवृत्तित्वरहितानित्यज्ञानादिमन्निष्ठाधिकरणत्वसाधकत्व है। ऐसी व्याप्ति नहीं है। यतः आपादक मेयत्व का महाविद्यासाध्यसाधकत्व पक्षीकृतशब्द में है। वहाँ पर ईश्वरपक्षक अनित्यज्ञानादिसाध्यसाधकत्व नहीं है। आपादकज्ञान का आपाद्यज्ञान व्यापक होता है। वह उक्त स्थल में नहीं है। अतः व्याप्तिमूल के शैथिल्य से यह तर्क नहीं है। अपितु तर्काभास है।

इस पर उत्तर दे रहे हैं, कि प्रसङ्गातिरिक्त में प्रतिबन्दी तर्क को व्याघात-आत्माश्रयदोष का व्याप्तिमूलकत्व नहीं माना जाता। यदि प्रत्येक स्थल पर व्याप्ति मानी जायेगी, तो सद्हेतु स्थल में प्रतिवादी ने पक्षेतरत्व उपाधि दिया, अथवा पक्षनिष्ठसन्धिग्धानैकान्तिकत्व दोष दिया। अब यदि उस दोष के निराकरण में कहते हैं, कि यह उपाधि पक्षेतरत्व है। इसे नहीं माना जाता। तथा यह शन्दिग्धानैकान्तिकदोष नहीं है। तो वही वादी उत्तर देगा

**अन्यथा सम्यक्साधनेऽपि परेण पक्षेतरत्वोपाधिपक्षनिष्ठसंदिग्धानैकान्तिकत्वादिना दूषिते सम्यगनैकान्तिकत्वादौ च परेण नात्रानैकान्तिकत्वदूषणमित्युद्धते भवतोऽपि न किञ्चिदुत्तरं स्यादिति। तदिदमुक्तं आधत्ते स्थितिविप्लवं चेति।**

---

यतो वैशेषिकादिमते ध्वनिरनित्यः श्रावणश्च भवति। 'मारुतगुणः श्रावणोऽवर्णात्मा अनित्यः शकटादिभवो ध्वनिरि'त्यादि तत्स्वरूपादिति ध्वनिना सम्यगनैकान्तिकत्वादावुद्भाविते‌ऽपि नात्रैतद्दूषणमिति परेणोद्धते च, तवापि न किञ्चिदुत्तरमित्यर्थः। भावस्त्वयम्—परेणैवमुक्ते सति भवतात्र पक्षेतरत्वत्योपाधित्वे सर्वानुमानानां पक्षेतरत्वोपाधिग्रस्तत्वं स्यादित्यादि प्रतिबन्द्येव वाच्या। न च यत्रैकस्मिन्ननुमाने पक्षेतरत्वस्योपाधित्वं तत्र सर्वानुमानेषु पक्षेतरत्वस्योपाधित्वमिति व्याप्तिरस्ति। भवदाशयेन तु व्याप्तिर्विलोक्यते एवेति तव न किञ्चिदुत्तरं स्यादिति। पूर्वोक्ते मूलपदमवतारयति—**तदिदमिति।** स्थितिः सिद्धान्तस्वरूपा।

---

कि पक्षेतरत्व उपाधि की व्याप्ति सकल अनुमानों से नहीं है। तो आप के पास कोई उत्तर नहीं रहेगा। प्रत्यासत्या यही कहना होगा कि सिद्धान्तविप्लावकत्व दोष है। इसलिए कहा **आधत्ते स्थितिविप्लवम्।**

अब महाविद्यानुमानहेतुमेयत्व में विरुद्धत्व हेत्वाभास दिखा रहे है। जो मेयत्वहेतु पक्षीभूतशब्द में पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरूपमहाविद्यासाध्य का साधक है। वही मेयत्व हेतु उक्त साध्य की पक्ष में वृत्तित्वाभाव का यदि साधक हो जाय तो प्रकृतसाध्याभावव्याप्य होने से विरुद्ध होगा। **'साध्याभावव्याप्तो हेतुर्विरुद्धः'** यही विरुद्ध का लक्षण है। वह कैसे होगा, तो महाविद्यानुमान का आश्रय लेते है। उक्त महाविद्यासाध्य को पक्ष बनाते है। मेयत्वसाधन द्वारा 'स्वस्वेतरवृत्तित्वरहितपक्षाविद्यमाननिष्ठाधिकरणत्व की सिद्धि करते है। स्वस्वेतरवृत्तित्वरहित पूर्ववत् स्ववृत्ति (पक्षीकृतमहाविद्यासाध्यवृत्तिधर्म) पक्षाविद्यमाननिष्ठ तभी होगा जब पक्षीभूत शब्द में उक्त साध्य का अभाव हो। अतः जो मेयत्वहेतु शब्दपक्ष में 'पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व का साधक है। वह मेयत्व हेतु 'पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरूप' प्रकृत साध्य के अभाव का साधक हो गया। **'पक्षनिष्ठतया प्रकृतव्यापकाभावसाधकत्व'** ही साक्षात् विरुद्धत्व का लक्षण है। अतः जो यह समझ

**किञ्च पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं स्वस्वेतरवृत्तित्वरहितपक्षाविद्यमाननिष्ठाधिकरणं मेयत्वादिति विरुद्धत्वम्। पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरूपप्रकृतव्यापकाभावस्य पक्षनिष्ठतया प्रकृतहेतुनैव साधनादिति। पक्षनिष्ठतया प्रकृतव्यापकाभावसाधकत्वमेव च साक्षाद्विरुद्धलक्षणं, न तु प्रकृतव्यापकाभावव्याप्यत्वं।**

---

**भुवन.**—विरुद्धत्वं महाविद्याहेतोराह—**किञ्चेत्यादि।** स्वस्वेतरवृत्तित्वरहितो धर्मः एतन्महाविद्यासाध्यत्वमेतत्पक्षान्यान्यत्वादिर्वा पक्षे द्रष्टव्यः। स च पक्षे शब्देऽविद्यमानो यस्तन्निष्ठस्तर्ह्येव, यर्हि पक्षितं महाविद्यासाध्यं पक्षेऽविद्यमानं भवेदिति विरुद्धत्वम्। पक्षान्यत्वेन व्याप्तिसिद्धिः स्वमात्रनिष्ठधर्मेणार्थान्तरता मा भूदित्युक्तं—**पक्षाविद्यमाननिष्ठेति।** पक्षाविद्यमाने घटादौ निष्ठेन मेयत्वादिना अर्थान्तरं वारयति—**स्वेतरवृत्तित्वरहितेति।** अप्रसिद्धविशेषणत्वं परिहर्तुं—**स्वेति।** विरुद्धत्वे हेतुमाह—**पक्षीकृतेत्यादि।** पक्षीकृतशब्देत्यादिरूपं यत्प्रकृतव्यापकं महाविद्यासाध्यं तस्य योऽभावः, तस्य पक्षे शब्दे निष्ठतया प्रकृतहेतुना मेयत्वेनैव साधनात्। ननु प्रकृतव्यापकाभावव्याप्यो हि विरुद्धो हेतुर्नतु प्रकृतव्यापकाभावसाधकः इत्यपराशङ्कां पराकरोति—**पक्षनिष्ठतयेत्यादि।** पक्षे शब्दे निष्ठतया प्रकृतव्यापकमत्र महाविद्यासाध्यं, तदभावसाधकत्वमेव साक्षाद्विरुद्धहेतुलक्षणं, न तु महाविद्यासाध्याभावेन व्याप्यत्वं विरुद्धहेतुलक्षणमित्याकूतम्। हेतुं ब्रूते—**तस्येति।** तस्य प्रकृतव्यापकाभावव्याप्यत्वस्य साक्षाद्विरुद्धस्य योऽवान्तरभेदः

---

रहे थे कि प्रकृतव्यापकाभाव से मेयत्व की व्याप्ति न होने से यत्र यत्र मेयत्वं तत्र यत्र प्रकृतमहाविद्यासाध्याभावः, जहाँ जहाँ मेयत्व है, वहाँ वहाँ प्रकृतमहाविद्यासाध्य का अभाव है, यह व्याप्ति नहीं है। यतः मेयत्व महाविद्यासाध्यवत् सपक्ष में है। वहाँ पर प्रकृतव्यापकाभाव भी है। इस पर कह रहे हैं कि **'प्रकृतव्यापकाभावव्याप्यत्वम्'** यह विरुद्धत्व का लक्षण है नहीं। अथवा उक्त विरुद्धत्वलक्षण का आवान्तरभेद है। इसलिए कहा **'भजते प्रत्यर्थितामात्मनः'** इसी प्रकार सकलमहाविद्यानुमानों में अनैकान्तिकत्वादिदोषों का भी उद्भावन किया जा सकता है।

अब पराभिमतजातिस्वरूपनिरासक अगले श्लोक के अवतरण में वादी के पूर्वपक्ष का प्रक्षेप कर रहे है। वादी का प्रश्न कि आपके (महाविद्याविडम्वनम्, कार) मत में महाविद्यारीति अप्रमाण है, कि प्रमाण है।

**तस्य साक्षाद्विरुद्धावान्तरभेदलक्षणत्वादिति संक्षेपः। तदिदमुक्तं भजते प्रत्यर्थितामात्मन इति। एवं सर्वमहाविद्यास्वपि अनैकान्तिकत्वादिसाधकत्वं योज्यम्।**

**ननु महाविद्यारीतिरप्रमाणं प्रमाणं वा। आद्ये न तद्बलादनैकान्तिकत्वादिदोषसिद्धिरिति निर्दुष्टत्वं महाविद्यायाः। द्वितीये तु अङ्गीकृतप्रमाणभावायां महाविद्यायामनैकान्तिकत्वादिव्युत्पादनं व्याहतमित्यत आह—**

---

तल्लक्षणत्वं न तु साक्षाद्विरुद्धलक्षणत्वमित्यर्थः। पूर्वोक्तमन्यत्रातिदिशति—**एवं सर्वेति।** अयं शब्दोऽनित्यत्वव्यतिरिक्तैतद्धर्मत्वरहिताधिकरणं मेयत्वाद्घटवदित्यत्र अनित्यत्वव्यतिरिक्तैतद्धर्मत्वरहिताधिकरणं मेयत्वविन्निष्ठात्यन्ताभावप्रतियोगित्वव्यतिरिक्तैतद्धर्मत्वरहिताधिकरणं मेयत्वाद्घटवदित्यनैकान्त्यादिसाधकत्वप्रकारेण' किञ्च स्वव्यभिचारम्' इत्यारभ्य ये पूर्वमूचिरे दोषाः अनैकान्तिकत्वसोपाधिकत्वादयः ते सर्वमहाविद्यास्वप्यूहनीयाः इति रहस्यम्।

**भुवन.**—उत्तरश्लोकावताराय चोदयति—**नन्विति।** आद्यं प्रत्याह—**आद्ये नेति।** महाविद्यायाः अप्रमाणत्वे महाविद्याबलेन नानैकान्त्यादिदोषसिद्धिरिति दोषाभावान्महाविद्यासमञ्जसैवेति भावः। द्वैतीयकं निर्लोठयति—**द्वितीये इति।** महाविद्यायाः प्रमाणत्वेऽनैकान्त्यादिदोषव्युत्पादनं व्याहतमित्याशयः।

---

प्रथमकल्प यदि महाविद्यारीति अप्रमाण है, तो महाविद्यारीति में अनैकान्तिकत्वादिदोष देने की क्या आवश्यकता। यतः प्रमाण में दोषोद्भावन किया जाता है। यदि महाविद्यारीति प्रमाण है ही नहीं तो वह सदा निर्दुष्ट है। दुष्टत्व व्यवहार प्रमाण में होता। अप्रमाण निर्दुष्ट ही होता है।

द्वितीय कल्प यदि महाविद्यारीति को प्रमाण माने तो, आपने जिस महाविद्या का प्रमात्व स्वीकार कर लिया है। उसमें अनैकान्तिकत्वादि दोषोद्भावन वदतो व्याघात होगा। आप महाविद्यारीति को प्रमाण भी मान रहे हैं, और अनैकान्तिकत्वादिदोषो का उद्भावन कर प्रमाणाभाव कह रहे हैं। अपने कथन का खण्डन करने वाले उत्तर को जाति कहते है। जाति को असदुत्तर माना जाता है। इस पूर्वपक्षी के जाति स्वरूप पर कह रहे है—

**स्वव्याघातकमुत्तरं तव मते जातिस्तदत्रापि किं**
**स्वव्याघातकतयैव दुष्टिजननी किं वोन्तरत्वान्विता।**

**स्वव्याघातकमुत्तरं तव मते जातिस्तदत्रापि किं**
**स्वव्याघाततैव दुष्टिजननी किंवोत्तरत्वान्विता।**
**आद्ये स्यात्तव जातिसाधनमिदं पक्षे द्वितीये पुन-**
**र्वैयर्थ्यं प्रथमं च दूषणमिह न्यायस्य तुल्यत्वतः ।।१८।।**

**अयमर्थः–स्वव्याघातकमुत्तरं जातिरिति हि परस्य संमतम्। तत्र किं स्वव्याघातकत्वमेव दुष्टत्वं गमयति, किंवा उत्तरत्वसहितम्। आद्ये महाविद्यापि स्वानैकान्तिकत्वादिव्युत्पादनेन स्वव्याघातिकैवेति कथं न दुष्टा।**

---

एतावता द्वितीयविकल्पोक्तां प्रमाणीकृतमहाविद्यादोषव्युत्पादनं भवतां स्वव्याघातकमिदं जात्युत्तरमिति पराशङ्कां निरस्यति—**स्वव्याघातकमुत्तरमित्यादि।।१८।।**

काव्यं व्याकुरुते—**अयमर्थः इत्यादि।** जाते परसंमतलक्षणं प्रदर्श्य विकल्पयति—**तत्र किं स्वेति।** जातिर्हि दुष्टत्वगमिका, जातौ सत्यां दुष्टत्वस्य सद्भावात्। सा च स्वव्याघातकोत्तररूपा। तेन तत्र 'स्वव्याघातकमुत्तरं जातिरि'ति लक्षणे स्वव्याघातकत्वमेव दुष्टत्वगमकं, किं वा स्वव्याघातकमुत्तरमिति भावः। विकल्पयुगलमपि क्रमेण दूषयति—**आद्ये इति।**

---

**आद्ये स्यात्तव जातिसाधनमिदं पक्षे द्वितीये पुन।**
**र्वैयर्थ्यं प्रथमं च दूषणमिह न्यायस्य तुल्यत्वतः।।१८।।**

स्वव्याघातक उत्तर आपके मत में जाति है। जाति दुष्टत्वव्यवहार की जनक है। अब प्रश्न है, कि दुष्टत्व का गमक (बोधक) स्वव्याघातकत्वमात्र है? कि स्वव्याघातक उत्तर। अर्थात् दुष्टत्वबोधिका जाति स्वव्याघातमात्र के रहने पर प्रमाण में दोष का ज्ञान करा देती है। या स्वव्याघात तथा उत्तर दोनो के रहने पर दोष की बोधिका है। प्रथम कल्प यदि स्वव्याघातकत्वमात्र में जाति का व्यवहार माने तो महाविद्यानुमानप्रमाण भी जाति होगा। महाविद्यारीति से ही महाविद्या में अनैकान्तिकत्वादिदोषोद्भावन हुआ है। महाविद्याप्रमाण में महाविद्या द्वारा ही दोष दिया जाय तो स्वव्याघातकत्व महाविद्या में होने के कारण दुष्टत्वव्यवहार क्यो न होगा। अर्थात् आवश्य होगा। जहाँ पर व्याघातकत्वमात्र है। उत्तर नहीं है, वहाँ पर भी जाति का साधन है। जाति का फल है, दोष, उत्तर न भी रहे यदि स्वव्याघातकत्वदोष है, तो जातिसाधन है। महाविद्या में उत्तर न रहने पर भी स्वव्याघातत्व है।

**केवलमुत्तरत्वाभावाज्जातिसाधनमियम्। अन्यत्तु जात्युत्तरमिति। द्वितीये तु उत्तरत्वविशेषणं व्यर्थम्। स्वव्याघातकत्वस्यैव दुष्टत्वबोधापरपर्यायदुष्टिजनकत्वात्। दुष्टत्वबोधानुपयोगिविषणोपादाने च स्वव्याघातकं साधनं जातिरिति साधनत्वविशेषणोपादानेन उत्तरस्यापि जातित्वं निवर्तयतः किमुत्तरं स्यादिति।**

**किञ्च उत्तरत्वविशेषणेन साधनस्य जातित्वं निवर्ततां,**

---

स्वव्याघातकत्वस्यैव दुष्टत्वे महाविद्यापि स्वस्यानैकान्तिकत्वादिदोषसाधनेन दुष्टैवेत्यर्थः। **केवलमिति।** अत्र स्वव्याघातकत्वमस्ति, न तूत्तरत्वम्। तेन तथा मृषोद्यमुत्तरं जात्युत्तरं, तथा मिथ्यासाधनं जातिसाधनमियं महाविद्येत्यभिप्रायः। अपरं पक्षं दूषयति—**द्वितीये इति।** स्वव्याघातकमुत्तरं दुष्टत्वं गमयतीतिरूपे स्वव्याघातकत्वस्यैव दुष्टत्वगमकत्वादुत्तरत्वविशेषणं व्यर्थमित्यर्थः। 'स्वव्याघातकमुत्तरं जातिरि'ति लक्षणस्य वृद्धप्रणीतत्वान्नोत्तरत्वविशेषणं हातुं शक्यमित्याशङ्क्याह—**दुष्टत्वबोधानुपयोगीति।** दुष्टत्वबोधस्य अनुपयोगिविशेषणमुत्तरत्वं, तस्योपादाने उत्तरत्वविशेषणस्थाने साधनत्वविशेषणग्रहणात्। स्वव्याघातकं साधनं जातिरिति लक्षणेन स्वव्याघातकमुत्तरं जातिरिति लक्षणोपात्तस्य उत्तरत्वविशेषणस्यापि जातित्वं निवर्तयतः परस्य पुरस्तात्तव किमुत्तरं स्यादिदि परमार्थः।

**भुवन.**—'प्रथमं च दूषणमि'त्येतव्द्याख्याति—**किञ्चेत्यादि।** उत्तरत्व-

---

अतः महाविद्याजातिसाधन है। यदि जात्युत्तर (मिथ्या उत्तर) जाति है। तो जाति साधन को जाति क्यों न माना जाय।

द्वितीयकल्प उत्तर के साथ व्याघातकत्वदोष का जनक जाति है। इस कल्प में उत्तर विशेषण व्यर्थ है। स्वव्याघातकत्व ही दुष्टत्वबोध अपरपर्याय दोष का जनक है। यतः जाति दोष है। उत्तर दोष कोटि में आता नहीं, अतः स्वव्याघातकमुत्तरं जाति, लक्षण में दुष्टत्वबोध के अनुपयुक्त उत्तर को विशेषण बनाना उचित नहीं है। उत्तर के स्थान पर साधन कहना चाहिए **'स्वव्याघातकं साधनं जातिः'** जब साधनत्व विशेषणविशिष्ट जाति हो गयी, तो उत्तरत्वविशिष्ट में जातित्व का व्यवहार ही नहीं है। अब हमारे उत्तर में जाति दोष नहीं दे सकते। यतः जातिलक्षण उत्तरत्वविशिष्ट नहीं है।

एवं उत्तरत्वविशेषणविशिष्ट में जातित्व का व्यवहार कर रहे हो। अतः

**स्वव्याघातकत्वेन दुष्टत्वं तु न निवर्तते एव। न हि उत्तरगतं स्वव्याघातकत्वं दुष्टत्वं गमयति, नतु साधनगतमित्यत्र नियामकमस्ति।**

**अथ अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वादित्यत्र अनित्यत्वसाधने शब्दविशेषो धर्मी, पक्षीकृतशब्दतदितर-वृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं च साध्यम्। पक्षीकृतशब्दतदितर-**

---

विशेषणग्रहणे सत्युत्तरस्यैव जातित्वं स्यात्, नतु साधनस्य। तथाप्युत्तरत्वविशेषणे साधनत्वविशेषणे वा सत्यपि स्वव्याघातकत्वेन दुष्टत्वं स्यादेवेत्यर्थः। एतावता द्वितीये पक्षे जातिसाधनं नाम प्रथममपि दूषणं कथितं भवति। 'न्यायस्य तुल्यत्वतः' इत्येतव्याचष्टे—**न हि उत्तरेति।** उत्तरगतमुत्तरत्वविशेषणसहितं स्वव्याघातकत्वं दुष्टत्वं गमयति, न तु साधनगतं साधनत्वविशेषणसहितमित्यत्र नियामकं नियमकारि न हि किञ्चिदस्ति। एतावता जातिसाधने जात्युत्तरे च न्यायस्य तुल्यत्वं दर्शितं भवति।

**भुवन.**—अथ स्वव्याघातकत्वमेव महाविद्याया नास्तीति प्रतिपादयितुं शाशङ्कि—**अथायमित्यादि।** एतन्महाविद्याद्वयं पुरापि व्याख्यातार्थमेव **धर्मिसाध्यभेदादिति।** धर्मी च साध्यं च तयोर्भेदादिति। महाभेदमेव भावयति—**तथा चेति। न जातिसाधनमिति** यावत्सुगमम्। सिद्धान्ती प्रतिसमाधत्ते—**न। यद्यनित्येति।** अनित्यः शब्दः कृतकत्वाद्घटवदित्युक्ते

---

साधनत्वविशेषणविशिष्ट में जातित्वव्यवहार नहीं हो सकता। अब यदि यह कहा जाय कि जाति उत्तरत्वविशेषणविशिष्ट हो या साधनत्वविशेषणविशिष्ट जाति दुष्टत्वबोधक स्वव्याघातकत्व ही है। उसमें कहा जा रहा है, कि उत्तरगत उत्तरत्वविशिष्ट जाति 'स्वव्याघातकमुत्तरं जातिगतदुष्टत्व का गमक (बोधक) स्वव्याघातकत्व नहीं होगा। न तो साधनगत साधनत्वविशिष्टजातिगत दुष्टत्वबोधक स्वव्याघातकत्व है। स्वव्याघातकत्व स्वगतदोष का बोधक होगा न कि उत्तरगत या साधनगत का। यतः न तो उत्तर में दोष है। न तो साधन में स्वव्याघातकत्व दोष है। उसे पृथक् दोष ही कहा जाता है। जाति मानने की क्या आवश्यकता। अब वादी कहेगा स्वव्याघातकत्व तो है। स्वव्याघातकत्व में दुष्टत्व व्यवहार माना जाता है। वह स्वव्याघातक उत्तर हो या स्वव्याघातकत्वसाधन। इस पर कह रहे हैं, कि स्वव्याघातकत्व भी नहीं है।

**वृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं स्वस्वेतरवृत्तित्वरहितमेयत्ववन्निष्ठात्यन्ताभावप्रतियोगिनिष्ठाधिकरणमित्यत्र अनैकान्तिकत्वसाधने च पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं धर्मी, एतदितरवृत्तित्वरहितमेयत्ववन्निष्ठात्यन्ताभावप्रतियोगिनिष्ठाधिकरणत्वं च साध्यम्। तेन अनयोर्महाविद्ययोर्धर्मिसाध्यभेदान्महान्भेदः। तथा च या तावदनित्यत्वं गमयति, नासौ स्वात्मनोऽनैकान्तिकत्वं गमयति। या पुनरनैकान्तिकत्वं गमयति, नासौ शब्दानित्यत्वं गमयति। तेन स्वव्याघातकत्वाभावान्महाविद्या न जातिसाधनमिति चेत्। न। यदि अनित्यघटसाधर्म्यादनित्यः शब्दः स्यात्, तर्हि नित्याकाशसाधर्म्यादमूर्तत्वान्नित्योऽपि स्यादिति साधर्म्यसमायां प्रयुक्तायां स्वव्याघातकत्वं कीदृशं वक्तव्यम्। यदि नित्यसाधर्म्यान्नित्यत्वमुच्यते, तर्हि**

---

जातिवादिना च यद्यनित्यघटसाधर्म्यात्कृतकत्वादनित्यः शब्दः स्यात्, तर्हि नित्याकाशसाधर्म्यादमूर्त्तत्वेन नित्योऽपि स्यादिति साधर्म्यसमायां जातौ प्रयुक्तायां भवता स्वव्याघातकत्वं कीदृशं वक्तव्यम्। स्वव्याघातकत्वं च सर्वजातिसाधारणलक्षणत्वेन गवेष्यते एव। प्रश्नं मत्वा परः उत्तरमाह—**यदि नित्येति। परिहरति—न। नित्येति।** यन्नित्यसाधर्म्यान्नित्यत्वापादनमुत्तराभाससाधर्म्यादुत्तराभासत्वापादनं च, तयोर्द्वयोरपि सुव्यक्तभेदत्वेन अतिस्फुटभेदत्वेन स्वव्याघातकत्वं नोपपद्यते। अयमर्थः। नित्यत्वापादनस्य उत्तराभासत्वापादनस्य च भिन्नविषयत्वेन विरुद्धसमुच्चयाभावान्न स्वव्याघातोऽत्रेति। विषयभेदेऽपि

---

व्याघात बाधकतर्क को कहते है। परस्परविरोधी को व्याघात कहा जाता है। जो प्रतिवादी प्रयुक्त महाविद्यानुमान में नहीं है। जो महाविद्या, शब्द में अनित्यत्वप्रतिपादिका है, वही महाविद्या यदि शब्दपक्षक मेयत्वहेतुक स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व साध्यक अनुमान में अनैकान्तिकत्व प्रतिपादिका होती तो विरुद्धसमुच्चयरूप व्याघात होता। यहाँ पर शब्द पक्ष में अनित्यत्व की साधिका महाविद्या भिन्न है। मेयत्व हेतु में अनैकान्तिकत्व प्रतिपादिका महाविद्या भिन्न है। शब्दपक्ष में स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व साध्य की साधिका तथा स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणपक्ष में स्वस्वेतरवृत्तित्वरहितमेयत्ववन्निष्ठात्यन्ताभावप्रतियोगिनिष्ठाधिकरणत्वसाध्य की साधिका दोनों महाविद्याओं के पक्ष एवं साध्य में भेद होने से महान् भेद है। अतः स्वव्याघातकत्वाभावात् महाविद्या जाति साधन नहीं है।

**उत्तराभाससाधर्म्यात्त्वदुक्तिरुत्तराभासा स्यादिति स्वव्याघातकत्वं साधर्म्यसमायां वक्तव्यमिति चेत्। न। नित्यसाधर्म्यान्नित्यत्वापादनस्य उत्तराभाससाधर्म्यादुत्तराभासत्वापादनस्य च सुव्यक्तभेदत्वेन स्वव्याघातकत्वस्यानुपपत्तेः। समानरीतिकत्वेन तु स्वव्याघातकत्वं महाविद्यायामपि समानम्। यदि च व्याघातोऽत्र न संभवति, तर्हि पूर्वोक्तन्यायेन अनैकान्तिकत्वमेव अनुमानबलादुद्भावनीयम्।**

**अथ अनैकान्तिकत्वानुमानेऽपि अनेनैव न्यायेन अनैकान्तिकत्वानुमानान्मूलानुमानानैकान्तिकत्वपरिहार इति चेत्। न। अनैकान्ति-**

---

यदि समानन्यायतयात्र स्वव्याघातः, तदानीं तयैव युक्त्या महाविद्यास्वपि स भवत्येवेत्याह—**समानेत्यादि**। दुर्बलं वादिनं दृष्ट्वा स्वव्याघातत्वाभावमप्यभ्युपेत्य भङ्गान्तरं भणति—**यति चेति**। अत्र महाविद्यायां यदि 'विरुद्धसमुच्चयो व्याघातः' इत्येवंरूपो व्याघातो बाधकतर्को न सम्भवति, तर्हि पूर्वोक्तव्याघातदोषाभावेन यथैव पूर्वमुक्तं तथैवानैकान्त्यं महाविद्यायामुद्भाव्यमिति तात्पर्यम्।

**भुवन.**—अन्यः शङ्कते—**अथ अनैकान्तिकत्वेति**। महाविद्यानुमानोच्छेदाय यत्प्रतिवादिनानैकान्त्यानुमानं विदधे तस्मिन्नप्यनेनैव महा-

---

इस पर कह रहे है कि जहाँ जहाँ जाति है वहाँ वहाँ व्याघातकत्व है, ऐसी व्याप्ति यदि मानोगे, तो व्यापाकव्याघातकत्व के अभाव में व्याप्य जाति भी नहीं होगी। जाति के चौबीस भेद है। प्रत्येक जाति में व्याघातकत्व होना चाहिए। **सामर्ध्यसमा जाति** है। सामर्ध्यप्रयुक्त असदुत्तर होने से सामर्ध्यसमा है। वादी शब्दोऽनित्य कृतकत्वात् घटवत् अनुमानप्रयोगकर शब्द में अनित्यत्व का साधन करता है। यहाँ प्रतिवादी कह रहा है, कि घट का सधर्मी होने से शब्द यदि अनित्य हो सकता है। तो अमूर्त होने से आकाश का भी सधर्मी है। आकाश के नित्य होने से आकाश सधर्मी शब्द भी नित्य होगा। प्रतिवादी का कथन असदुत्तर है। यतः अमूर्तत्व नित्यत्व का साधक नहीं है। शब्द आकाशसधर्मी नहीं है। असत् उत्तर होने से जाति तो है, व्याघातकत्व किसे कहेगें?

उत्तरमें कह रहे है, कि यहाँ प्रतिवादी उत्तर में दो अंश है। नित्यसामर्ध्य, आभाससाधर्म्य, दोनो के फल भी भिन्न है। नित्यसामर्ध्य शब्द नित्यत्वापादन कर रहा है। यदि उक्त उत्तर को उत्तराभास माने तो

**कत्वानुमानानैकान्तिकत्वानुमानेऽपि अनेनैव न्यायेन अनैकान्तिकत्वानुमानान्मूलानुमानानैकान्तिकत्वस्य तादवस्थ्यात्। एवमुत्तरत्राप्यनैकान्तिकत्वानुमाने वक्तव्यम्।**

---

विद्यानुमानानैकान्तिकत्वन्यायेनानैकान्तिकत्वे कृते, मूलानुमानस्य यदनैकान्तिकत्वं तस्य परिहारः। मूलानुमानतदनैकान्त्यानुमानं तदनैकान्त्यानुमानाश्चैवं विधेयाः। तथाहि—अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वाद्घटात्मादिवदिति मूलानुमानम्। तदनैकान्त्याय प्रतिवादी अनुमिमीते यथा—स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं स्वस्वेतरवृत्तित्वरहितमेयत्ववन्निष्ठात्यन्ताभावप्रतियोगिनिष्ठाश्रयो मेयत्वाद्घटात्मादिवदिति मूलानुमानानैकान्त्यानुमानम्। अथास्याप्यनैकान्त्यं यथा—स्वस्वेतरवृत्तित्वरहितमेयत्ववन्निष्ठात्यन्ताभावप्रतियोगिनिष्ठाश्रयत्वं स्वस्वेतरवृत्तित्वरहितं मेयत्ववदवृत्तिनिष्ठाश्रयो ज्ञेयत्वाद्घटादिवदिति मूलानुमानैकान्त्यानुमानानैकान्त्यामूलमहाविद्याया निर्दुष्टत्वं परिहरति—**नेत्यादि**। स्वस्वेतरवृत्तित्वरहितमेयत्ववदवृत्तिनिष्ठाश्रयत्वं स्वान्योन्याभावव्यतिरिक्तमेयत्ववन्निष्ठाभावप्रति-

---

उत्तराभाससाधर्म्य से उत्तराभासत्वापादन होगा। यहाँ पर स्वरूपतः फलतः भेद सुस्पष्ट है। अतः व्याघातकत्व के बिना भी जाति मान ली जाती है। तो प्रतिवादी महाविद्याविडम्बनकार कह रहे हैं, कि दोनों महाविद्याओं के स्वरूपतः फलतः भेद होने से महाविद्या में भी व्याघातकत्व नहीं है। अतः महाविद्यानुमान में महाविद्यानुमान द्वारा अनैकान्तिकत्वदोष उद्भावनकिया जा सकता है। ऐसा करने पर भी व्याघातकत्वदोष नहीं होगा।

महाविद्यानुमानवादी का कथन है, कि **'अयं शब्दः स्वस्वेतर वृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वात्'** इस शब्दपक्ष में अनित्यत्वसाधक मूलानुमान में जो प्रतिवादी महाविद्यानुमान का खण्डन करने वाला **'उक्तसाध्यं स्वस्वेतरवृत्तित्वरहितमेयत्ववन्निष्ठात्यन्ताभावप्रतियोगिनिष्ठाश्रयः मेयत्वात्'** महाविद्यानुमान द्वारा अनैकान्तिकत्वदोष दे रहा है। उस अनैकान्तिकत्वदोष प्रतिपादकमहाविद्यानुमान में हम पुनः महाविद्यानुमान **'स्वस्वेतरवृत्तित्वरहितमेयत्ववन्निष्ठात्यन्ताभावप्रतियोगिनिष्ठाश्रयत्वं स्वस्वेतरवृत्तित्वरहितं मेयत्ववदवृत्तिनिष्ठाश्रयो मेयत्वात्'** द्वारा अनैकान्तिकत्वदोष दे देगें। मूलानुमान के अनैकान्तिकत्वदोष में अनैकान्तिकत्वदोष दे देने से मूलानुमान निर्दुष्ट हो जायेगा। अनैकान्तिकत्वदोषप्रतिपादक अनुमान में दोष देने पर दोष,

**एवं सति अनैकान्तिकत्वसमर्थनोपयुक्तानुमानपरंपरानुपरमप्रसङ्ग इति चेत्। न। मूलानुमानानैकान्तिकत्वपरिहारोपयुक्तानुमानपरंपरानुपरमप्रसङ्गस्य त्वन्मतेऽपि समानत्वात्। श्रमात्तदुपरम इति चेत्। तुल्यम्। एवं सति उभयोः समानत्वादेकस्यापि विजयो न व्यवतिष्ठते इति चेत्। एवमस्तु। महाविद्यावादी सर्वत्र विजयते इत्यभिमानस्तावद्गलितः।**

---

योगित्वाश्रयः प्रमेयत्वाद्घटात्मादिवदित्याद्यनुमानेन मूलानुमानानैकान्त्यानुमानस्य अनैकान्तिकीकरणाय यदनुमानं प्रयुक्तं, तस्याप्यनैकान्त्ये कृते मूलमहाविद्याया अनैकान्त्यं तदवस्थमेवेति तत्त्वम्। ननु तस्मिन्नप्यनैकान्त्यं महाविद्या अनुमातुं शक्यमत्राह—**एवमिति**। एवं चतुर्थानुमानानैकान्त्याय पञ्चमानुमाने वादिना प्रयुक्ते उत्तरत्रापि षष्ठानुमानादावपि वक्तव्यमित्यर्थः।

**भुवन**—अनवस्थाप्रसङ्गं प्रकटयन्महाविद्यावादी वदति—**एवं सतीति**। मूलमहाविद्याया अनैकान्तिकत्वसमर्थनायोपयुक्ता या अनुमानपरंपरा सा नोपरमतीति हृदयम्। साम्येन दूषयति—**न मूलेति**। मूलानुमानं शब्दानित्यत्वसाधकं महाविद्यानुमानं, तदनैकान्तिकत्वस्य परिहारायोपयुक्तानुमानपरंपरापि नोपरमते इति तात्पर्यार्थः। परः आह—**श्रमादिति**। तस्याः पूर्वानुमानपरंपराया उपरमः इत्यर्थः। प्रत्याचष्टे—**तुल्यमिति**।

---

मूलविद्यानुमान का प्रतिबन्धक नहीं होगा। यतः अप्रमितदोष अनुमिति वा अनुमिति कारण का प्रतिबन्धक नहीं होता।

इस पर कह रहे हैं, कि दोष के दूषित होने पर मूलानुमानव्यवस्थित होगा। उस पर हम पुनः दोष देगें आप पुनः निवारण करेंगे। सर्वत्र प्रयोग महाविद्या का ही है। तो महाविद्यानुमान में अनवस्था होगी। महाविद्याविडम्बनकार ने जब महाविद्यानुमान परम्परा में अविश्रान्तिरूप दोष दिया तो महाविद्यानुमानवादी कहता है, कि अनैकान्तिकत्वदोष के लिए प्रयुक्तमहाविद्यानुमानपरम्परा में अविश्रान्तिरूप अनवस्थादोष होने के कारण आप भी अनैकान्तिकत्वदोष के लिए महाविद्यानुमान का प्रयोग नहीं कर सकेंगे। इस पर महाविद्याविडम्बनकार कह रहे हैं, कि हम एक वार महाविद्यानुमान का प्रयोग कर मूलानुमान में अनैकान्तिकत्वदोष. दे देंगे। आप जब हमारे अनुमान में दोष देते हैः तब परम्परा चलती है। आप को भी मूलानुमान के अनैकान्तिकत्वदोष परिहार के लिए महाविद्यानुमानपरम्परा का आश्रय लेना पड़ता है। यदि आप कहो कि हमारे यहाँ श्रमात् विश्रान्ति

**किञ्च साध्याभाववद्वृत्तित्वाभावनिश्चयोऽनुमानाङ्गमित्युक्तम्। न चासौ साध्याभाववद्वृत्तित्वानुमाने प्रत्यनीके सति संभवति। तेन साधनवादिन एव पराजय इति गुरवः।**

**अथार्थान्तरता नाम कृत्या नृत्यति सङ्गरे।**
**सप्रपञ्चमहाविद्याग्रासकौतूहलाकुला ।१९।।**

---

अस्माकमपि श्रमात्तदुपरम इति रहस्यम्। साधकबाधकयोरभावे संशयः परिशिनष्ठीत्याह—**एवं सत्युभयोरिति।** आपाततः स्वीकुरुते—**एवमस्त्विति।**

**भुवन.**—महाविद्याविडम्बनाभिमानस्तवापि गलितोऽत्राह—**किञ्चेति।** साध्याभाववान्विपक्षः, तद्वृत्तित्वाभावनिश्चयोऽनुमानाङ्गमिति पूर्वमुक्तम्। न चासौ विपक्षवृत्तित्वाभावनिश्चयः साध्याभाववान्विपक्षस्तद्वृत्तित्वसाधके अनुमाने प्रत्यनीके विपरीते सति सम्भवति। किं तर्हीत्याह—**तेन साधनेति।** साधनवादिनो महाविद्यावादिनः एव पराजयः पराभव इति **गुरवः प्रभाकराचार्याः** प्राहुरिति संटङ्कः।

**भुवन.**—अर्थान्तरतामाविष्कर्तुं प्रकमते—**अथार्थान्तरेति।** कृत्या

---

है, तो वही हमारे यहाँ भी है। अब यदि कहो कि दोनों बराबर हो गये विजय किसी को नहीं मिलेगी, तब भी हमारे पक्ष में विजय होगी। यतः महाविद्यानुमानवादी को यह अभिमान था कि महाविद्यानुमानवादी सर्वत्र विजय प्राप्त करता है। वह दम्भ नष्ट हो गया।

महाविद्यानुमान में अपर दोष यह है, कि पूर्व में कहा कि साध्याभाववद्वृत्तित्वाभाव निश्चय अनुमान का अङ्ग है। (साध्याभाववत् विपक्ष में हेतु के न रहने का निश्चय) वह महाविद्यानुमान में नहीं है। महाविद्यानुमान का हेतु मेयत्व है। वह सपक्ष विपक्ष सर्वत्र है। अतः साध्याभाववद् विपक्ष-वृतित्वाभाव महाविद्यानुमान में न होने के कारण महाविद्या में अनुमानाङ्गता नहीं है। अनुमानाङ्गताहीन अनुमान का प्रयोग करने वाला महाविद्यानुमान वादी सर्वत्र पराजित होगा। यह प्रभाकर का कथन है।

**अब महाविद्यानुमान में अर्थान्तरतादोष दे रहे है।**

विस्तारपूर्वक कहे गये महाविद्यानुमानों को ग्रास कवल बनाने के कौतूहल से आकुल (व्याकुल) कृत्या (राक्षसी) वादिप्रतिवादि के संग्राम में नृत्य करती हुई

**शब्दे शब्दतदन्यवृत्तिरहितानित्यस्थवत्त्वे मिते**
**नित्यत्वप्रमितिः कथं न हि तयोरैक्यं न च व्याप्तता।**
**नो साम्यान्यविशेषता न च ततो बोधे प्रकारान्तरं**
**सैषार्थान्तरताखिलामपि महाविद्यां समास्कन्दति ।।२०।।**

---

अनर्थकरी देवता राक्षसीत्यर्थः। सप्रपञ्चाः सविस्तराः याः महाविद्यास्तद्भासे यत्कौतूहलं तेनाकुला। अत्र महाविद्यावादिप्रतिवादिनोर्विवादसङ्ग्रामे नानाप्रकार-सारयुक्तिपङ्क्तिहेतिसंहतिहन्यमाना असमानमहाविद्यानुमानप्रयोगप्रतिभटघटा-कोटिप्रसृतसदर्थसार्थरक्तासवपानमदोन्मत्तायाः अर्थान्तरताकृत्यायाः नृत्यं चतुरस्रमेव।।१९।।

**भुवन.**—अर्थान्तरतां पद्येन प्रतिपादयति—**शब्दे शब्दतदन्येति।** शब्दे पक्षीकृते शब्दतदन्यवृत्तिरहितानित्यस्थवत्त्वे मिते स्वस्वेतरवृत्तित्वरहितानित्य-निष्ठाश्रयत्वे सिद्धेऽप्यनित्यत्वप्रमितिः कथं, किं स्वस्वेतरेत्यादिसाध्यस्या-नित्यत्वेन ऐक्यात्, उत अनित्यत्वेन व्याप्तत्वात्, आहोस्विदनित्यत्वस्य तद्विशेषणत्वात्। न प्राच्यःइत्याह—**न हि तयोरैक्यमिति।** तयोः स्वस्वेतरे-त्यादिमहाविद्यासाध्याऽनित्यत्वयोरैक्यमेकात्मता न ह्यस्ति। उक्त-साध्यवतो गगनादेरनित्यत्वस्य व्यावृत्तत्वात्। अत एव नोत्तरः पक्षः इत्याह—**न च व्याप्ततेति।** न च स्वस्वेतरेत्यादिसाध्यस्यानित्यत्वेन व्याप्यत्वम्। स्वस्वेतरे-त्यादिसाध्यवति गगनादावनित्यत्वस्याभावेन यत्रोक्तसाध्यं तत्रानित्यत्वमिति

---

अर्थान्तरता उपस्थित है। अर्थान्तरता अन्योऽर्थ अर्थान्तरं तस्य भाव अर्थान्तरता। अभिप्रेतसाध्य से भिन्न साध्य की सिद्धि अर्थान्तरता है।।१९।।

पक्षीकृतशब्द में महाविद्यानुमान द्वारा स्वस्वेतरवृत्तित्वरहितानित्य निष्ठाश्रयत्व सिद्ध होता है। शब्दानित्यत्ववादी इसी महाविद्यानुमान द्वारा शब्द में अनित्यत्वसिद्धि मानता है। वह कैसे यहाँ पर तीन कल्प है। (१) तयोरैक्यम् 'स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाश्रयत्वरूपमहाविद्यासाध्य और अनित्यत्व में एक रूपता होने से उक्त साध्य की सिद्धि होने पर अनित्यत्व-सिद्ध मानलिया जाता है? (२) अथवा स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधि-करणत्वरूप महाविद्यासाध्य की अनित्यत्व के साथ व्याप्ति है। यत्र यत्र स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाश्रयत्वं तत्र तत्र अनित्यत्वं यह व्याप्ति होने से उक्तसाध्यवत् में अनित्यत्व माना जाता है? (३) या सामान्यविशेष-

**सिध्यतु वा मेयत्वादेः पक्षीकृतशब्दे पक्षीकृतशब्दतदितरवृत्तित्व-**

---

व्याप्तेरभावादित्यर्थः। अनित्यत्वरहिते गगनात्मादौ कथितसाध्यसद्भावेन विशेषस्य विशेषणाव्याप्तत्वान्नापि तृतीयः इत्याह—**नो सामान्यविशेषतेति।** सामान्यविशेषतायां हि सामान्यस्य विशेष्यत्वं, विशेषस्य च विशेषणत्वं स्यादिति। अत्र च महाविद्यासाध्याऽनित्यत्वयोर्न विशेष्यविशेषणभावोऽस्ति। गगनादौ महाविद्यासाध्यरूपविशेष्यसद्भावेऽपि अनित्यत्वरूपविशेषणाभावेन यत्र विशेष्यं तत्र विशेषणमिति व्याप्तेरभावात्। तस्मात् नो सामान्य-विशेषतापीत्यर्थः। महाविद्यासाध्यापर्यवसानस्य दुर्निरूपत्वेन ततः उक्त-प्रकारादनित्यत्वस्य बोधे प्रकारान्तरं च नास्ति। **समास्कन्दतीति।** स्कन्द्धातोरुभयार्थत्वात्समागच्छति शोषयति वेति।।२०।।

**भुवन.**—पद्यं व्याख्यानयति—**सिध्यतु वेत्यादि।** मेयत्वादिहेतुतः

---

भावेन=सामान्यविशेषभावस्थल में सामान्यपद से विशेष्य अभिप्रेत है। विशेषपद से विशेषण अभिप्रेत है। अर्थात् जहाँ जहाँ विशेष्य यानी स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व है, वहाँ अनित्यत्व है, इस सामान्यविशेष भाव से शब्द में अनित्यत्व सिद्ध हो जाता है?

इन तीनों कल्पों को क्रमेण निरस्त कर रहे हैं। प्रथमकल्प नहीं मान सकते। यतः उक्त साध्य एवं अनित्यत्व में एकरूपता नहीं है। द्वितीय कल्प भी मान्य नहीं है। यतः उक्त साध्य के साथ अनित्यत्व की व्याप्ति नहीं है। व्याप्ति तो तब मानी जाति यदि उक्त साध्य के रहने पर अनित्यत्व आवश्य रहता। परन्तु ऐसा नहीं है। उक्तसाध्य गगनादिनित्यपदार्थों में भी है। वहाँ पर अनित्यत्व नहीं है। (३) सामान्यविशेषभावेन कहे तो नहीं कह सकते। सामान्य उक्तसाध्य के रहने पर विशेष अनित्यत्व आवश्य रहे ऐसा नित्यगगनादि में व्यभिचरित है। वहाँ पर महाविद्यासाध्य है, अनित्यत्व नहीं है। यदि महाविद्यासाध्य स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व अपर्यवसान (अन्यथानुपत्त्या) शब्द को यदि अनित्य न माना जाय तो उक्त साध्य की सिद्धि पक्षीकृतशब्द में नहीं हो सकती ऐसा माने, तो इस में कोई सबल प्रमाण नहीं है। अतः अनित्यत्व साध्य सिद्धि के लिए प्रवृत्त महाविद्यानुमान द्वारा शब्द में अनित्यत्व न सिद्ध होकर स्वस्वेतरवृत्तित्वरहितानित्य-निष्ठाधिकरणत्वसिद्ध होगा। अतः अर्थान्तरता है।।२०।।

उक्त पद्य की व्याख्या में कह रहे है कि मेयत्वहेतु पक्षीकृतशब्द में

**रहितानित्यनिष्ठाधिकरणत्वम्। अनित्यत्वसिद्धिस्तु कुतः। न हि प्रकृत-साध्यमेवानित्यत्वम्। तद्वतोऽपि गगनादेर्व्यावृत्तत्वात्। नापि तस्य व्यापकम्। तत एव। न च पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व-व्यापकव्याप्यत्वेनाभिमतस्य मेयत्वादेः तत्त्वव्यापकाभ्यामन्येन व्याप्तिर्भवता शक्याऽभ्युपगन्तुम्। न च अव्यापकमपि अनित्यत्वं पक्षधर्मताबलाद्व्यापक-धर्मिसंसर्गवत्सेत्स्यतीति युक्तम्। हेतोः पक्षधर्मतया व्यापकपक्षसंबन्ध-मात्रचरितार्थत्वात्।**

---

पक्षितशब्दे महाविद्यासाध्यं सिध्यतु, अनित्यत्वं तु कुतः सिध्यतीति तत्त्वम्। एतदेव द्रढयति—**नहीति**। प्रकृतसाध्यं महाविद्यासाध्यमेवानित्यत्वमिति तत्त्वार्थः। हेतुमाह—**तद्वतोऽपीति**। प्रकृतसाध्यवतो गगनादेः सकाशाद-नित्यत्वस्य व्यावृत्तत्वात्। **नापि तस्येति**। तस्य प्रकृतसाध्यस्य व्याप्यरूपस्य नाप्यनित्यत्वं व्यापकम्। तत एव, प्रकृतसाध्यवतोऽपि गगनादेरनित्यत्वस्य व्यावृत्तत्वादेवेति। इदं तत्त्वम्। यत्र व्याप्यं तत्र व्यापकेन भाव्यमिति हि नियमः। अत्र च प्रकृतसाध्यरूपव्याप्यं गगनादौ अस्ति, न तु अनित्यत्व-रूपव्यापकम्। तस्मादनित्यत्वस्य महाविद्यासाध्यव्यापकत्वं न घटामटाट्यते इति। ननु मेयत्वहेतुरेव व्याप्तिबलात्स्वव्यापकमनित्यत्वं किं न गमयेदित्या-शङ्कामपाकुरुते—**न चेति**। पक्षीकृतेत्यादिकं यद्व्यापकं महाविद्यासाध्यं तद्व्याप्यत्वेनाभिमतस्य मेयत्वादिहेतोः, तत्त्वं मेयत्वं, व्यापकं महाविद्यासाध्यं, ताभ्यामन्येनानित्यत्वादिना न व्याप्तिः शक्या स्वीकर्तुम्। एतत्तात्पर्यम्—मेयत्वमहाविद्यसाध्ययोर्व्याप्यव्यापकभावोऽस्तु। तयोरन्येनानित्यत्वादिना मेय-त्वादेर्व्याप्तिर्न स्यादिति। **न च अव्यापकमिति**। हेतोः पक्षधर्मताबलात्

---

पक्षीकृततदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरूप साध्य का भले साधक हो, अनित्यत्व का साधक कैसे होगा। प्रकृत महाविद्यासाध्य को अनित्यत्व कहे तो सम्भव नहीं है। यतः गगनादिनित्य में उक्त साध्य है, और अनित्यत्व नहीं है। उक्तसाध्य को अनित्यत्व का व्यापक भी नहीं कह सकते। गगनादिनित्यों में उक्त साध्य के रहने पर भी अनित्यत्व नहीं है। यत्र यत्र महाविद्यासाध्यं तत्र तत्र अनित्यत्वं यह व्याप्ति व्यभिचरित है। महाविद्यासाध्य के व्याप्यत्वेन अभिमतमेयत्व हेतु की भी अनित्यत्व के साथ व्याप्ति व्यभिचरित होने के कारण अनित्यत्व को मेयत्व का साक्षात् व्यापक भी नहीं कह सकते। प्रतीति अपर्यवसान बलात् पक्षीकृतशब्द में अनित्यत्व की

**अथ पक्षनिष्ठव्यापकप्रतीत्यपर्यवसानात्पक्षे अनित्यत्वसिद्धिरिति मन्यसे। तन्न। किमिदमयं शब्दः स्वस्वेत्तरवृत्तित्वरहितानित्यनिष्ठाधिकरणमिति पक्षनिष्ठाव्यापकप्रतीतेरनित्यत्वमन्तरेण अपर्यवसानं अनित्यत्वमनालम्ब्यानुपपत्तिर्वा, अनित्यत्वालम्बनत्वनियमो वा। नाद्यः। अनित्यत्व-**

---

अव्यापकस्य महाविद्यासाध्यस्य धर्मिणा शब्दादिना सह यथा संसर्गः सिध्यति, तथा हेतोः पक्षधर्मताबलादेव अनित्यत्वं मेयत्वस्य अव्यापकमपि सेत्स्यतीति न च युक्तमित्यर्थः कुतो न युक्तमत्राह—**हेतोरिति।** हेतोर्मेयत्वादेः पक्षधर्मतया व्यापकं प्रकृतसाध्यं, पक्षः शब्दादिस्तयोः सम्बन्धमात्रत्वेन चरितार्थत्वात्। अयं भावः। मेयत्वादिः पक्षधर्मताबलाच्छब्दमहाविद्यासाध्यसम्बन्धकरणेनैव चरितार्थः इत्यव्यापकमनित्यत्वं न साधयतीति।

**भुवन.**—परः स्वाभिप्रायं प्रादुश्चरीकरीति—**अथ पक्षेति।** पक्षे शब्दादौ निष्ठं यव्द्यापकं महाविद्यासाध्यं ,तत्प्रतीतेर्यदपर्यवसानमनुपपत्तिः, तस्मादिपि परमार्थः। दूषयति—**तन्नेति।** स्वस्वेतरेत्यादिरूपं यत्पक्षनिष्ठं व्यापकं महाविद्यासाध्यं तत्प्रतीतेरनित्यत्वं विनाऽपर्यवसानं किमिदमित्यन्वयः। विकल्पयति—**अनित्यत्वमिति।** अनित्यत्वालम्बनात् बिना महाविद्यासाध्यस्य शब्देऽनुपपत्तिरित्येको विकल्पः। **अनित्यत्वेति।** शब्दे प्रकृतसाध्यसाधनेऽनित्यत्वमालम्बनीयमेव नियमेनेति द्वितीयः। आद्यं विकल्पं द्विधा

---

वृत्तिता में भी कोई प्रमाण नहीं है। यदि कहे कि मेयत्व का अव्यापक भी अनित्यत्व पक्षीकृतशब्दसम्बन्धी होने के कारण अनित्यत्व की पक्ष धर्मता (पक्षवृत्तिता) सिद्ध हो जायेगी अतः उक्त अनुमान अनित्यत्व का भी साधक हो जायेगा। इस पर कह रहे हैं। हेतु की पक्षधर्मतया (पक्षवृत्तितया) हेतु के व्यापक का ही सम्बन्ध होता है। मेयत्व की व्यापकता अनित्यत्व में व्यभिचरित है। पक्षधर्मता हेतु के व्यापक से सम्बन्ध मात्र में चरितार्थ है।

अब अपर्यवसानवशात् अनित्यत्वप्रतीति का खण्डन करते हुए ग्रन्थकार कह रहे हैं। महाविद्यानुमानवादी का जो मत है, कि शब्दपक्ष में स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरूप महाविद्यासाध्य की प्रतीति अनित्यत्वसिद्धि के बिना नहीं होगी। अतः अपर्यवसानवशात् पक्षीकृतशब्द में अनित्यत्व सिद्ध होता है। उस अपर्यवसान में प्रश्न है, कि उक्त अपर्यवसान क्या है? (१) अनित्यत्वमनालम्ब्यानुपपत्तिः अनित्यत्व का आलम्बन किये बिना महाविद्यासाध्य की पक्षीकृतशब्द में अनुपपत्ति या

**मनालम्ब्य प्रतीतेरनुपपत्तिर्नाम किमनित्यत्वानालम्बनायाः प्रतीतेः प्रागभावः, किंवा अनित्यत्वानालम्बनः प्रतीतेः प्रागभावः। नाद्यः अनित्यत्वानालम्बनत्वे तस्या विवक्षितानित्यत्वगोचरत्वव्याघातात्। नापि द्वितीयः। अनित्यत्वानालम्बनस्य एतत्प्रतीतिप्रागभावस्य एतत्प्रतीत्यनित्यत्वगोचरत्वाक्षेपकत्वे मानाभावात्। नापि द्वितीयः पक्षनिष्ठव्यापकप्रतीतेरनित्यत्वालम्बनत्वनियमस्य असिद्धेः।**

---

विकल्प्य खण्डयति—**नाद्यः इति।** अनित्यत्वमनालम्ब्य प्रतीतेरनुपपत्तिः किं रूपा, अनित्यत्वानालम्बना या प्रतीतिः तस्याः प्रागभावः। अनित्यत्वानालम्बना प्रतीतिर्नोत्पद्यत इत्यभिप्रायः। **किं वेति।** अनित्यत्वालम्बनं विना प्रतीतिर्नोपपद्यत इति रहस्यम्। आद्यं प्रति प्राह—**नाद्यः इति।** तस्याः प्रतीतेर्यदि अनित्यत्वस्यानालम्बनत्वं, तदा विवक्षितपक्षीकृतशब्दनिष्ठं यदनित्यत्वं तद्गोचरत्वव्याघातः इति हृदयम्। अपरं पक्षं निराकुरुते—**नापीति।** अनित्यत्वानालम्बनं पक्षीकृतशब्दे महाविद्यासाध्यप्रतीतेः प्रागभावः पक्षे प्रकृतसाध्यप्रतीतेरनित्यत्वगोचरत्वं आक्षिपतीत्यत्र मानं नास्तीत्याकूतम्। पूर्वकल्पयोरौदीच्यं कल्पं निरसितुमाह—**नापि द्वितीय इति।** द्वितीयोऽनित्यत्वालम्बनत्वनियमरूपः। इह हेतुं वदति—**पक्षनिष्ठेति।** पक्षः शब्दघटादिः, तन्निष्ठं व्यापकं महाविद्यासाध्यं, तत्प्रतीतिः शब्दस्यानित्यत्वमालम्बते एवेति नियमस्यासिद्धेरिति।

---

(२) अनित्यत्वालम्बननियम (महाविद्यासाध्य) में अनित्यत्व का आलम्बन करना ही है? अर्थात् यत्र यत्र महाविद्यासाध्यं तत्र तत्र अनित्यत्वालम्बनम्? प्रथम पक्ष के खण्डन में कह रहे हैं, कि अनित्यत्वमनालम्ब्य प्रतीतेरनुपपत्ति पदार्थ क्या है। (१) अनित्यत्व का आलम्बन न करने वाली प्रतीति उत्पन्न नहीं होती या? (२) अनित्यत्व के आलम्बन बिना प्रतीति उत्पन्न नहीं होती? प्रथमकल्प में व्याघात है। जो प्रतीति अनित्यत्व आलम्बन करने वाली है ही नहीं, तो शब्दनिष्ठ अनित्यत्व आलम्बन कहने पर व्याघात दोष है। द्वितीय कल्प में दोष दे रहे है। पक्षीकृतशब्द में महाविद्यासाध्यप्रतीति का प्रागभाव अनित्यत्वानालम्बन है। प्रकृतसाध्य प्रतीति की जब उत्पत्ति होगी तो प्रागभाव (अनित्यत्वानालम्बन) नष्ट होगा तो आक्षेपतः अनित्यत्वालम्बन विषय उक्त प्रतीति में हो जायेगा।

**अथ मतम्, अस्ति तावद् धूमवत्त्वादग्निमान् पर्वत इत्यनुमानान्तरं पर्वतनिष्ठवह्निविशेषे पाकार्थिनां प्रवृत्तिः तत्प्राप्तिश्च। तेन अवश्यं पर्वतो वह्निमानित्यत्र वह्निविशेषस्फूर्त्तिरङ्गीकर्तव्या। न च वह्निमत्त्वमेवासौ, नापि तस्य व्यापकः। वह्निमत्त्ववतोऽपि महानसादेर्व्यावृत्तत्वात्। न च अव्यापकमपि पक्षधर्मताबलात्साध्यपक्षसंसर्गातिरिक्तं सिध्यतीति त्वयैवोक्तम्। तत्कथं पर्वतनिष्ठवह्निविशेषसिद्धिः।**

---

**भुवन.**—अथ धूमानुमानेऽप्यर्थान्तरताप्रथनेन प्रतिबन्दीमुपादत्ते परः—**अथ मतमिति**। इत आरभ्य 'तदयुक्तमि'ति यावत्पराशङ्का। **अस्ति तावदिति**। वह्निविशेषः तार्णपार्णादिकः पाकादियोग्योऽग्निरित्यर्थः। **तत्प्राप्तिरिति**। तत्प्राप्तिः पर्वतनिष्ठवह्निविशेषप्राप्तिः। **न च वह्निमत्त्वमिति**। वह्निमत्त्वे वा असौ वह्निविशेषो न स्यात्। वह्निविशेषस्य वह्निमत्त्वजातेर्भिन्नत्वात्। **नापीति**। नापि तस्य वह्निमत्त्वस्य असौ वह्निविशेषो व्यापकः। वह्निविशेषस्य वह्निमत्त्ववत्यपि महानसादौ अवर्तनात्। **न चाव्यापकमिति**। वह्निविशेषादिकं धूमवत्त्वादिहेत्वव्यापकमपि साधनस्य पक्षधर्मताबलात् साध्यं वह्निमत्त्वं, पक्षः पर्वतः, तत्संयोगादधिकं सिध्यतीति पूर्व त्वयैव महाविद्याविडम्बनाभिमानिनैवोक्तम्। **तत्कथमिति**। तस्मात्पर्वते सामान्येन वह्निमत्त्वे सिद्धेऽपि वह्निविशेषसिद्धिः कथमिति भावः।

---

इस पर कह रहे हैं कि उक्त में कोई प्रमाण नहीं है। अनित्यत्वाम्बनत्वनियम भी नहीं है। पक्षशब्दनिष्ठ व्यापक महाविद्या साध्य की प्रतीति शब्दनिष्ठ अनित्यत्व का आलम्बन करती ही है। यह नियम नहीं है। उक्त साध्य की प्रतीति गगनादिनित्यपदार्थों में भी है। वहाँ पर शब्दवृत्ति अनित्यत्व का आलम्बन नहीं है।

इस पर महाविद्यानुमानवादी कह रहा है, कि यदि यही अर्थान्तरता दोष है। तो 'पर्वतो वह्निमान् धूमात्' इस मूलानुमान में भी है। धूम हेतु द्वारा पर्वत में वह्नि का अनुमान हो जाने पर पर्वतवृत्तिवह्निविशेष में भोजन बनाने वाले की प्रवृत्ति होती है। तथा भोजन पकाने योग्य विशेषवह्नि की प्राप्ति भी होती है। अतः पर्वतो वाह्निमान् इस प्रत्यय में वह्निविशेष का स्फुरण (प्रकाश) आवश्य मानना होगा। वह वह्निविशेष वह्नित्व जाति से भिन्न है। अतः वह्नित्वप्रतीति से वह्निविशेष की प्रतीति नहीं हो सकती। न तो वह्नित्व का वह्निविशेष व्यापक ही है। यतः महानस (पाकशाला)

**अथ धूमवत्त्वस्य वह्निमत्त्वं व्यापकम्, वह्निमत्त्वं च वह्निविशेषघटितमूर्त्ति, तेन पर्वते वह्निमत्त्वमधिगम्यमानं वह्निविशेषावच्छिन्न-मेवाधिगम्यते इति। एवं तर्हि पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्य-निष्ठाधिकरणत्वमपि व्यापकं पक्षीकृतशब्दतदितरवृत्तित्वरहितनिष्ठ-विशेषघटितमूर्त्तीति सोऽपि पक्षे सिध्यत्येव।**

**अथ पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठविशेषसिद्धावपि**

---

**भुवन.**—शङ्कते—**अथ धूमेति।** धूमवत्त्वव्याप्यस्य वह्निमत्त्वं व्यापकम्। **वह्निमत्त्वं चेति।** 'निर्विशेषं हि सामान्यं भवेत् शशविषाणवत्। सामान्यरहितत्वेन विशेषास्तद्वदवेही'ति वचनाद्वह्निमत्त्वं सामान्यं वह्निविशेषण घटितमूर्तीत्यभिप्रायः। फलितमाह—**तेनेत्यादि।** यदैव वह्निमत्त्वं ज्ञायते, तदैव वह्निविशेषोऽप्यवगम्यते इत्याशयः। मार्गमागतोऽसीत्याह—**एवं तर्हीति।** सोऽपि पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठविशेषः। पक्षीकृतशब्दा-नित्यत्वे सति शब्दत्वादिरित्यर्थः।

**भुवन.**—आशङ्कते—**अथ पक्षीकृतेति।** पक्षीकृतेत्यादिविशेषस्य-

---

में वह्नित्वरूप व्याप्य के रहने पर भी वह्निविशेष व्यापक नहीं है। हम महाविद्यानुमानवादी पक्षधर्मताबलात् अव्यापक की भी पक्षवृत्तितया प्रतीति मान लेते हैं। आप कहते हैं कि पक्षधर्मताबलात् साध्यपक्षसंसर्गातिरिक्त साधन के अव्यापक की प्रतीति नहीं है। अब आप ही उत्तर दीजिए यदि प्रतीति अपर्यवसानवशात् वह्निविशेष की प्रतीति नहीं है। तो पर्वत में वह्नि विशेष की प्रतीति कैसे होगी।

यदि महाविद्याविडम्बनवादी कहे कि धूमवत्त्व का व्यापक वह्निमत्त्व है। वह वह्निमत्त्व वह्निविशेष से घटित है। अतः पर्वत में धूमवत्त्वज्ञान से वह्निमत्त्व का ज्ञान होगा। अवगत वह्निमत्त्व वह्निविशेषावच्छिन्न ही उपगत होगा, ऐसा मानते हैं। तो इसी रीति से हमारे (महाविद्यानुमानवादी) के यहाँ मेयत्व का व्यापक पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व महाविद्यासाध्य है। उक्त साध्य पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठविशेषघटित मूर्त्ति है। मेयत्व हेतु द्वारा जिस शब्द पक्ष में उक्त महाविद्यासाध्यसिद्ध होता है। वहाँ पर ही अनित्यनिष्ठ विशेष भी सिद्ध होता है। अनित्यनिष्ठविशेषपदार्थ पक्षीकृतशब्दानित्यत्वविशिष्टशब्दत्वादिरूप है।

**पक्षमात्रनिष्ठत्वे सति अनित्यनिष्ठः कथं पक्षे सिध्यतीत्युच्येत, तर्हि धूमानुमाने वह्निविशेषसिद्धावपि कथं पर्वतनिष्ठवह्निविशेषसिद्धिरिति वक्तव्यम्।**

**अथ वह्निविशेषो द्विविधः—अपर्वतनिष्ठः, पर्वतनिष्ठश्च। आद्यः पक्षे व्याघातादिना निरुद्धः। तेन द्वितीयस्य सिद्धिरिति। एवं तर्हि पक्षीकृत-शब्दतदितरवृत्तित्वरहितानित्यनिष्ठोऽपि द्वेधा, पक्षीकृतशब्दानिष्ठः तन्निष्ठश्च। आद्यः पक्षे व्याहत इति द्वितीयस्य सिद्धिरिति।**

---

घटादौ सपक्षे सिद्धावपि, पक्षः शब्दः, तन्मात्रनिष्ठत्वे सति योऽनित्यनिष्ठः शब्दानित्यत्वे सति शब्दत्वादिः, स कथं पक्षे शब्दे सिध्यतीत्यर्थः। तुल्यचर्चतया परिहरति—**तर्हीति।**

**भुवन.**—दहनानुमाने पर्वतनिष्ठवह्निविशेषसिद्धिं शङ्कते—**अथ वह्नीति।** पक्षे पर्वते इत्यर्थः। **व्याघातादिनेति।** विरुद्धसमुच्चयो व्याघातः। आदिपदेन प्रमाणविरोधसंग्रहः। इहापि समः समाधिरित्याह—**एवं तर्हीत्यादि।** तन्निष्ठः पक्षीकृतशब्दनिष्ठः। पक्षे विवक्षितशब्दे इत्यर्थः।

---

अब महाविद्याविडम्बनकार कह रहा है, कि पक्षीकृतशब्दतदितर-वृत्तित्वरहितानित्यनिष्ठविशेष की घटादि सपक्ष में सिद्ध होने पर भी पक्षमात्रवृत्तित्वविशिष्ट अनित्यनिष्ठत्व पक्ष में कैसे सिद्ध होगा। (पक्षमात्रवृत्तित्वविशिष्ट अनित्यनिष्ठत्व है। शब्दानित्यवृत्तिशब्दत्व, या शब्दानित्यत्वविशिष्ट शब्दत्व, वह पक्ष में कैसे सिद्ध होगा) प्रतिबन्दी उत्तर में महाविद्यानुमानवादी कह रहा है, कि आप के यहाँ भी वह्निविशेष के सिद्ध होने पर भी पर्वतवृत्तितया वह्निविशेष की सिद्धि कैसे होती है। जो रीति आप के यहाँ वही हमारे यहाँ है।

महाविद्यानुमानवादी आशङ्का कर रहा है, कि यदि महाविद्याबिडम्बन-कार यह कहे कि वह्निविशेष दो प्रकार का है। अपर्वतनिष्ठ (पर्वत में न रहने वाला) पर्वतनिष्ठ (पर्वत में रहने वाला) प्रथम को पर्वतनिष्ठत्वेन साध्य बनायेगें तो व्याघात होगा। अतः द्वितीय पर्वतनिष्ठ वह्निविशेष को हम साध्य बनाते है। महाविद्यावादी कह रहा है, कि हमारे यहाँ पर पक्षीकृत शब्दतदितरवृत्तित्वरहितानित्यनिष्ठ दो प्रकार का है, पक्षीकृतशब्दानिष्ठ (पक्षी कृतशब्द में न रहने वाला) तन्निष्ठ (पक्षीकृतशब्द में रहने वाला) प्रथम में

**अथ पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं किं पक्षानिष्ठानित्यनिष्ठघटितमूर्त्ति किंवा पक्षमात्रनिष्ठानित्यनिष्ठघटितमूर्ति, किंवा उभयविशेषघटितमूर्त्ति। आद्ये पक्षानिष्ठस्यापि पक्षे प्रसङ्गः, द्वितीये पक्षमात्रवृत्तेरपि सपक्षे प्रसङ्गः, तृतीये तु उभयोरपि उभयत्र प्रसङ्ग इत्युच्येत, तर्हि वह्निमत्त्वमपि किमपर्वतनिष्ठवह्निविशेषघटितमूर्त्ति, किंवा पर्वतनिष्ठवह्निविशेषघटितमूर्त्ति, किंवा उभयविशेषघटितमूर्त्तीति विकल्प्य पूर्ववद्दोषो वक्तव्य इति।**

---

**भुवन.**—महाविद्यासाध्यं स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठविशेषघटित-मूर्तीति पूर्वोक्तं विकल्पैः। शाशङ्कि—**अथ पक्षीकृतेति।** पक्षे शब्दादौ अनिष्ठः, अनित्ये घटादौ च निष्ठो घटत्वादिर्यो धर्मः तेन घटिता विहिता मूर्तिः यस्य तत्तथा। **किं वा पक्षमात्रेति।** शब्दमात्रे निष्ठोऽनित्यनिष्ठश्च शब्दानित्यत्वे शब्दत्वादिधर्मः, तेन घटितमूर्ति। **किंवोभयेति।** अनन्तरोक्त-विकल्पद्वयस्य पक्षेतरवृत्तिपक्षमात्रवृत्तिरूपौ उभयविशेषाविति हृदयाभिप्रायः। तृतीयं भेदं बेभिदीति—**तृतीये इति।** पक्षानिष्ठपक्षमात्रनिष्ठयोरुभयोरप्युभयत्र पक्षे सपक्षे च प्रसङ्गः। एकस्मिन् ये प्रसज्यन्ते द्वयोर्भावे कथं न ते' इति न्यायात्। अथात्रापि महाविद्यावादी परप्रयुक्तयुक्तिसाम्यमादिशति—**तर्हीति।** एतत्स्पष्टम्।

---

व्याघात है। द्वितीय पक्षीकृतशब्दनिष्ठत्वेन सिद्ध होता हुआ शब्द में अनित्यत्व सिद्ध होने पर सिद्ध होगा।

पुनः महाविद्याविडम्बनकार महाविद्यानुमानवादी से प्रश्न कर रहा है। जो आप उक्तमहाविद्यासाध्य को स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठविशेष घटितमूर्ति कह रहे हैं। वह अनित्यनिष्ठविशेषघटिमूर्ति 'पक्षनिष्ठानित्यनिष्ठ-घटितमूर्ति' पक्ष में न रहने वाले अनित्यवृत्ति से घटितमूर्ति है? या 'पक्षमात्रनिष्ठानित्यनिष्ठघटितमूर्ति' पक्षमात्र में रहने वाले अनित्यत्ववृत्ति से घठितमूर्ति है? या उभयविशेष से घटित है? प्रथम कल्प में पक्ष में न रहने वाले धर्म का पक्ष में प्रसक्ति (व्याघात) होगा। द्वितीयकल्प में पक्षमात्र में रहने वाले धर्म का सपक्ष में प्रसङ्ग (व्याघात) उभयविशेष घटित कल्प में उभयवृत्तिधर्म की पक्ष या सपक्ष में पृथक् पृथक् सिंद्धि प्रसङ्ग होगा। उभयवृत्तिधर्म उभय में रहता है। पक्षमात्र में या सपक्षमात्र में कैसे सिद्ध होगा। यहाँ पर भी महाविद्यावादी प्रतिबन्दी उत्तर देता है।

**अथ वह्निमत्त्वव्याप्यपर्वतनिष्ठधूमवत्त्वानुभवः एव तदनन्तरभाविनीं वह्निमत्त्ववह्निविशेषावच्छिन्नपर्वतानुमितिं जनयिष्यति, किमपर्यवसानादिना इत्युच्यते, एवं तर्हि पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वव्याप्यपक्षीकृतशब्दनिष्ठमेयत्वानुभवः एव पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वपक्षमात्रनिष्ठत्वे सति अनित्यनिष्ठविशेषावच्छिन्नपक्षीकृतशब्दानुमितिं जनयिष्यतीति संतोष्टव्यम्।**

**एवं सकलमहाविद्यासु धूमानुमानसमानन्यायेन विशेषसिद्धिरुपपादनीयेति। तदयुक्तम्। पर्वतो वह्निमान् धूमवत्त्वादित्यत्रापि धूमसत्व-**

---

**भुवन.—अथ वह्नीति।** वह्निमत्त्वसाध्येन व्याप्यं यत्पर्वतनिष्ठं धूमवत्त्वसाधनं तस्यानुभवः एव, तस्मात्पर्वतनिष्ठधूमवत्त्वानुभवादनन्तरभाविनीं वह्निमत्त्ववह्निविशेषाभ्यामवच्छिन्नो विशिष्ठो यः पर्वतः तदनुमितिं जनयिष्यति, किमर्यवसानादिना अनुपपत्त्यादिनेत्यर्थः। प्रतिबन्द्यैव प्रत्युत्तरयति—**एवमित्यादि।** पक्षीकृतेत्यादिमहाविद्यासाध्येन व्याप्यं यत्पक्षीकृतनिष्ठे मेयत्वं साधनं तदनुभवः एव। पक्षीकृतेत्यादिसाध्यं च पक्षमात्रनिष्ठत्वे सति, अनित्यनिष्ठविशेषश्च शब्दानित्यत्वे सति शब्दत्वादिरूपः। ताभ्यामवच्छिन्नस्य विशिष्टस्य पक्षीकृतशब्दस्य अनुमितिमिति पदान्वयः।

**भुवन.**—उपसंहरति—**एवमिति।** विशेषसिद्धिरनित्यत्वादिसिद्धि-

---

आप भी वह्नित्व को वह्निविशेषघटित मानते हैं। क्या वह पर्वतभिन्नवृत्तिवह्निविशेषघटित है? पर्वतमात्रवृत्तिवह्निविशेषघटित है? या पक्षसपक्षोभयवृत्ति विशेषघटित है? जो दोष हमारे यहाँ वही आप के यहाँ भी है। यदि आप के यहाँ दोष नहीं है। तो हमारे यहाँ भी नहीं है। यदि आप यह कहते हैं कि वह्निमत्वव्याप्यपर्वतवृत्ति जो धूमत्वज्ञान है। वही अपने ज्ञान के उत्तर जायमान वह्निमत्त्व और वह्निविशेष से विशिष्ट पर्वतविषयक अनुमिति को पैदा कर देता है। तदर्थ हम अपर्यवसान को कारण नहीं मानते। इस पर महाविद्यानुमानवादी कह रहा है, कि हमारे यहाँ भी उक्त महाविद्यासाध्यव्याप्य जो पक्षीकृतशब्दवृत्तिमेयत्व है। उसका ज्ञान स्वाव्यहितोत्तरजायमान महाविद्यासाध्य की पक्षवृत्तिता एवं अनित्यनिष्ठविशेष से विशिष्टपक्षीकृतशब्दविषयक अनुमिति को पैदा कर देता है।

अब पुनः महाविद्याविडम्बनकार कह रहा है, कि महाविद्यानुमानवादी जो सकलमहाविद्यानुमानों में धूमानुमानसामान्यन्याय ('पर्वतो वह्निमान् धूमवत्त्वात्'

**व्यापकवह्निमत्त्वावच्छिन्नपर्वतातिरिक्तवह्निविशेषाप्रतीतेः। कथं तर्हि अविसंवादिविशेषविषयप्रवृत्तिसाक्षिका वह्निविशेषप्रतीतिरिति चेत्। अयं पर्वतः एतद्वह्निमान् एतद्धूमवत्त्वात्, न यदेवं न तदेवं, यथा ह्रद इत्यनुमानादित्यवेहि। न च अनयोर्वह्निधूमविशेषयोः पूर्वमप्रतीतेर्व्याप्तिग्रहणासंभवः इति वाच्यम्। महानसादौ धूमवत्त्ववह्निमत्त्वव्याप्तिग्रहणसमये सकल-**

---

रित्यर्थः। एवं महाविद्यावादिनोऽभिप्रायमाशङ्क्य पराचष्टे—**तदयुक्तमिति**। कुतोऽयुक्तमत्राह—**पर्वत इति**। धूमवत्त्वहेतोर्व्यापकं वह्निमत्त्वं, तेन अवच्छिन्नपर्वतादतिरिक्तस्य वह्निविशेषस्य अप्रतीतेरिति संबन्धः। पाकार्थिनां विशेषप्रतीतिरनुभूयते, तत्र का गतिरिति आशङ्कते—**कथमिति**। अविसंवादी यो विशेषः पाकादियोग्याग्निस्वरूपः, तद्विषया या प्रवृत्तिः, तत्साक्षिका वह्निविशेषप्रतीतिः कथमिति योजना। अयमर्थः। यया अविसंवादिविशेषविषया प्रवृत्तिर्जन्यते सा वह्निविशेषप्रतीतिरिति। गतिमाह—**अयं पर्वतः इति**। एतद्वह्निर्विवक्षितः पाकादियोग्योऽग्निरित्यर्थः। आशङ्कामुच्छिनत्ति—**नच अनयोरिति**। अनयोर्विवक्षितयोर्धूमवन्हिविशेषयोः पूर्वं महानसादौ अपरिज्ञानाव्द्याप्तिर्न संभवतीति न च भाषणीयमिति भावः। कस्मान्न वाच्यमित्यत्राह—**महानसादाविति**। महानसादौ सामान्येन धूमवत्त्ववह्निमत्त्वयोर्व्याप्तिग्रहणसमये सकलधूमवह्निविशेषयोः तन्निष्ठा सकलधूमवह्नि-

---

इस अनुमान की रीति) से विशेषसिद्धि (अनित्यत्वादिसिद्धि) का उपपादन कर रहा है, वह युक्तिसंगत नहीं है। यतः पर्वतो वह्निमान् धूमवत्त्वात् यहाँ पर धूमवत्त्वव्यापकवह्निमत्त्वावच्छिन्नपर्वत से अतिरिक्त वह्निविशेष की प्रतीति नहीं होती। अब प्रश्न है, यदि विशेषप्रतीति हुई नहीं तो पाकार्थी की पाक योग्य अग्निविषयक प्रवृत्तिसाक्षिकवह्निविशेष की प्रतीति कैसे होती है।

अब वह्निविशेषप्रतीति का प्रयोजक बता रहे हैं। अयं पर्वत एतद्वह्निमान् एतद्धूमवत्त्वात्, न यदेवं न तदेवं यथा ह्रदः, यह पर्वत इस आग वाला है, इस धूमवाला होने से जो इस अग्नि वाला नहीं है। वह इस धूमवाला भी नहीं है। जैसे सरोवर इस अनुमान से होती है। यदि आप कहे कि वह्निविशेष तथा धूमविशेष की पूर्व में प्रतीति न होने के कारण व्याप्ति ग्रह ही नहीं होगा, तो नहीं कह सकते। यतः महानस आदि में जब धूमवत्त्व की वह्निमत्त्व के साथ व्याप्तिग्रह हुआ, उसी समय सकलधूम तथा वह्निविशेष के साथ व्याप्तिग्रह माना जाता है। अब यदि आप यह

**धूमवह्निविशेषतन्निष्ठव्याप्तिप्रतीत्यङ्गीकारात्। न च एतस्य वह्निविशेषस्य पूर्वमेव प्रतीतत्वे अनुमानवैयर्थ्यम्। अस्य वह्निविशेषस्य पूर्वं प्रतीतत्वेऽपि एतत्पर्वतनिष्ठतया पूर्वमप्रतीतेः।**

**अस्तु वा वह्निमत्त्वावच्छेदकतया पर्वते वह्निविशेषवत्पक्षीकृतशब्द-तदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वावच्छेदकतया पक्षीकृतशब्दे पक्षी-कृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठविशेषसिद्धिः। पक्षीकृतशब्दमात्र-निष्ठानित्यनिष्ठसिद्धिस्तु कथम्। पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्य-निष्ठोऽपि द्वेधा, पक्षीकृतशब्दावृत्तिः पक्षीकृतशब्दमात्रवृत्तिर्वा। आद्यः पक्षे**

---

विशेषनिष्ठा या व्याप्तिः, तस्याश्च प्रतीतेरङ्गीकारादिति पदघटना। वह्निविशेषश्चेत्पूर्वं प्रतीतः, तदा सिद्धसाधनत्वेन अनुमानकथाप्युच्छिद्येत इत्याह—**न च एतस्येति**। पूर्वं महानसादावित्यर्थः हेतुमाचष्टे—**अस्येति**।

**भुवन.**—अथ धूमानुमानसमाननयेन पूर्वोपपादितामपि स्वस्वेतर-वृत्तित्वरहितानित्यनिष्ठविशेषसिद्धिं प्रत्युक्तयुक्तिपङ्क्तिभिरपास्य स्वप्रौढता-प्रकटनाय उररीकृत्यापि प्रकारान्तरेण अर्थान्तरतां प्रथयति—**अस्तु वा वन्हीत्यादि**। इदं हृदयम्—यथा अग्निमत्त्वविशेषकतया पर्वते वह्नि-

---

कहें कि इस वह्निविशेष की प्रतीति यदि पूर्व में ही हो गयी है। तो अनुमानप्रयोगव्यर्थ है।

इस पर कह रहे हैं, कि वह्निविशेष की पूर्व में प्रतीति होने पर भी पर्वतवृत्तितया पूर्व में प्रतीति नहीं हुई। इसके लिए अनुमान प्रयोग आपेक्षित है। पूर्व में धूमानुमानन्यायेन होने वाली स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठ विशेषसिद्धि का निरास किया। अब अनित्यनिष्ठविशेषसिद्धि को स्वीकार करते हुए पक्षीकृतशब्दमात्रनिष्ठानित्यनिष्ठसिद्धि का निरास कर रहे हैं। वह्निमत्व के अवच्छेदक होने के कारण पर्वत में जिस प्रकार वह्निविशेष की सिद्धि होती है। उसी प्रकार पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व के अवच्छेदक होने के कारण पक्षीकृतशब्द में पक्षीकृतशब्दतदितरवृत्तित्वरहिता-नित्यनिष्ठविशेष की सिद्धि भले हो जाय, पक्षीकृतशब्दमात्रनिष्ठानित्य-निष्ठसिद्धि कैसे होगी?

अब पूवोक्त पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठ को (पक्षीकृत-शब्दावृत्ति को) पक्षीकृतशब्दमात्रवृत्ति मानने पर प्रथमकल्प में व्याघात होने के कारण द्वितीयकल्प की सिद्धि द्वारा पक्षीकृतशब्दमात्रवृत्ति मानते है? उसमें

**व्याहत इति द्वितीयस्य सिद्धिरिति चेत्। न। मा भूत्तावत्पक्षीकृतशब्दे व्याहतत्वेन पक्षीकृतशब्दानिष्ठनित्यनिष्ठाविशेषसिद्धिरनुमानात्। पक्षमात्रनिष्ठानित्यनिष्ठत्वसिद्धिस्तु दुर्घटैव। पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठविशेषमात्रेणानुमितिपर्यवसानात्।**

**न च पर्वतेऽपि यत्किञ्चिद्वह्निविशेषसिद्धिरस्तु, पर्वतनिष्ठवह्निविशेषसिद्धिस्तु कुत इति वाच्यम्। पर्वते वह्निविशेषसिद्धिरस्तु, पर्वतनिष्ठश्च वह्निर्न सिध्यतीत्यस्य व्याहतत्वेन उन्मत्तप्रलापत्वात्।**

---

विशेषसिद्धिः, तथा स्वस्वतरेत्यादिसाध्यविशेषकतया पक्षे स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठविशेषसिद्धिरस्तु इति। **पक्षीति।** पक्षीकृतशब्दमात्रनिष्ठोऽनित्यनिष्ठश्च शब्दानित्यत्वे सति शब्दत्वादिः, तत्सिद्धिस्तु कथम्। स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठविशेषस्य घटत्वादेरपि संभवादित्यर्थः। पूर्वपक्षी भाषते—**पक्षीकृतेति।** अथाचार्यः परोक्तं निराचष्टे—**न। मा भूदिति।** पक्षीकृतशब्देऽनिष्ठोऽनित्यनिष्ठश्च घटत्वादिरिति भावः। दुर्घटत्वे हेतुमाह—**पक्षीति।** स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठविशेषमात्रेणैवानुमितिः पर्यवसिता, न तु पक्षमात्रनिष्ठानित्यनिष्ठविशेषेणेति तत्त्वम्।

**भुवन.**—आशङ्कां प्रादुष्कुर्वन् विघटयति—**न चेत्यादि।** धूमानुमानेऽपि पक्षितपर्वते यस्य कस्यचिद्वह्निविशेषस्य सिद्ध्या अनुमितिपर्यवसानात्पर्वतनिष्ठाग्निविशेषसिद्धिर्न स्यादित्याशयः।

---

कह रहे हैं कि व्याघात होने के कारण पक्षीकृतशब्द में पक्षीकृतशब्दानिष्ठानित्यनिष्ठविशेष (पक्षीकृत शब्द में न रहने वालें अनित्यनिष्ठविशेष) की सिद्धि भले न हो, परन्तु पक्षमात्रनिष्ठानित्यनिष्ठ कैसे होगा। अर्थात् नहीं होगी। यतः अनुमिति का पर्यवसान पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठविशेषमात्र में है। वह सपक्ष घटादि में सिद्ध है। आप यह भी नहीं कह सकते कि पर्वत में जिस किसी वह्निविशेष की सिद्धि होगी। पर्वतनिष्ठवह्निविशेष की सिद्धि कैसे होगी। पर्वत में वह्निविशेष की सिद्धि हो और पर्वतनिष्ठ वह्नि न हो वदतो व्याघात तथा उन्मत्तप्रलाप है।

महाविद्यानुमानवादी यदि उक्त रीति को अपना लेता है। तो पक्षीकृतशब्द में पक्षीकृतशब्दमात्रवृत्ति अनित्यनिष्ठधर्म ही सिद्ध होगा। अनित्यत्व की सिद्धि तो हुई नहीं। अर्थान्तरता भी है पक्षीकृतशब्द में अनित्यत्व सिद्धि के लिए अनुमानप्रयोग किया। और पक्षीकृतशब्दमात्रवृत्ति अनित्यनिष्ठधर्म सिद्ध हुआ।

**सिध्यतु वा पक्षीकृतशब्दे पक्षीकृतशब्दमात्रवृत्तिरनित्यनिष्ठो धर्मः। अनित्यत्वसिद्धिस्तु कथम्। न हि स एवानित्यत्वमित्यादिपूर्वोक्तन्यायात्।**

**अथ पक्षीकृतशब्दमात्रवृत्तिरित्यनेन पक्षीकृतस्य आश्रयत्वं, तदन्यस्य चानाश्रयत्वं लब्धम्। अनित्यनिष्ठ इत्यनेन च विवक्षितधर्माश्रय-स्यानित्यत्वम्। विवक्षितधर्माश्रयश्च पक्षीकृतः शब्द एव। तदन्यस्य**

---

**भुवन.**—पूर्वोक्तं पुनरप्यभ्युपगम्य अर्थान्तरतामेव भङ्ग्यतरेणाह—**सिध्यतु वेति।** युक्तिं प्रयुङ्क्ते—**नहीति।** न हि स एव शब्दमात्रवृत्तिरनित्यनिष्ठो धर्मः एव अनित्यत्वम्। तस्य अनित्यत्वरूपत्वाभावात्। आदिपदेन 'नाप्यनित्यत्वं तस्य व्यापकमि'त्यादिपूर्वोक्तयुक्तिग्रहः।

**भुवन.**—अनित्यत्वं परिशेषात्सेत्स्यतीत्याशङ्कते—**अथ पक्षीकृतेति।** पक्षीकृतशब्दमात्रवृत्तिरित्येतावता पदेन पक्षीकृतस्य शब्दस्य साध्यधर्माश्रयत्वं लब्धम्। पक्षमात्रवृत्तेश्च पक्षादन्यत्रासत्त्वेन तदन्यस्य पक्षान्यस्य साध्यधर्माना-श्रयत्वमिति तत्त्वार्थः। तथापि कथमाश्रयस्यानित्यत्वमित्याह—**अनित्यनिष्ठ इति।** पक्षमात्रवृत्तिः कथंभूतः। अनित्यनिठः। अनित्यनिष्ठत्वं च तस्य तदैव,

---

यदि कहो कि शब्दमात्रवृत्ति अनित्यनिष्ठधर्म ही अनित्यत्व है, तो नहीं कह सकते। यतः शब्दमात्रवृत्ति अनित्यनिष्ठधर्म अनित्यत्वरूप नहीं है।

पुनः प्रतीति के अपर्यवसानवशात् पक्षीकृतशब्द में अनित्यत्वसिद्धि का प्रतिपादन महाविद्यानुमानवादी कर रहा है। जो पक्षीकृतशब्दमात्रवृत्ति अनित्यनिष्ठधर्म की सिद्धि पक्ष में उभयवादि सम्मत हुई है। वही पक्षीकृतशब्द में अनित्यत्व की साधक है। पक्षीकृतशब्दमात्रवृत्तिपद से पक्षीकृतशब्द में साध्यधर्माश्रयत्व लब्ध होता है। उक्त पद घटक पक्षमात्रवृत्ति पद से पक्षीकृतशब्द भिन्न में अनाश्रयत्व भी लब्ध हो गया। पुनश्च पक्षीकृतशब्दमात्र वृत्ति कैसा तो कहा अनित्यनिष्ठ अनित्य में रहने वाला इस प्रकार विवक्षित साधनीय धर्म के आश्रय में अनित्यत्वसिद्ध होता है। विवक्षितधर्म का आश्रय पक्षीकृतशब्द ही है। तदन्य की मात्रपद द्वारा व्यावृत्ति कही चा चुकी है। इस प्रतीति अपर्यवसानवशात् पक्षीकृतशब्द में अनित्यत्व की सिद्धि होती है। महाविद्याविड़म्वनकार कह रहे हैं, कि ऐसा मानना उचित नहीं है।

विडम्बनकार कह रहे हैं, कि पक्षीकृतशब्द पक्षीकृतशब्दमात्रवृत्ति अनित्यनिष्ठधर्म वाला है। ऐसी प्रतीति पक्षीकृतशब्द के अनित्यत्व का आलम्बन करती ही है। इस नियम में कोई प्रमाण नहीं है। प्रमाण के बिना

**मात्रग्रहणेन व्यवच्छिन्नत्वात्। तेन पक्षीकृतशब्दानित्यत्वसिद्धिः प्रतीत्यपर्यवासानादिति मन्यसे। तन्न। पक्षीकृतः शब्दः पक्षीकृतशब्दमात्रवृत्त्यनिष्ठधर्मवानितिप्रतीतेः। पक्षीकृतशब्दानित्यत्वालम्बनत्वनियमे मानाभावात्। अन्यथा सकलवस्त्वालम्बनत्वनियमस्य दुर्वारत्वात्। पक्षीकृतशब्दस्य पक्षीकृतशब्दमात्रवृत्त्यनित्यनिष्ठधर्मवत्त्वमनित्यत्वाभावे व्याहतमिति प्रकृतप्रतीतेः पक्षीकृतशब्दानित्यत्वालम्बनत्वनियमसिद्धिरिति चेत्। न। अवास्तवपक्षीकृतशब्दानित्यत्वेनापि व्याघातनिवृत्तौ प्रकृतप्रतीतेः पक्षीकृतशब्दानित्यत्वालम्बनत्वनियमस्य निर्बीजत्वात्।**

---

यद्यनित्यः शब्दःस्यादिति विवक्षितधर्माश्रयस्य शब्दस्यानित्यत्वमनित्यनिष्ठ इति पदेन लब्धमित्याभिसन्धिः। विवक्षितधर्माश्रयः कः इत्याह—**विवक्षितेति।** विवक्षितो धर्मः शब्दमात्रवृत्तिरनित्यनिष्ठः शब्दत्वादिरित्यर्थः। तत्कुतः इत्याह—**तदन्यस्येति।** पक्षीकृतशब्दमात्रवृत्तिरित्यत्र मात्रशब्दग्रहणात्पक्षीकृतशब्दान्यस्य निषिद्धत्वादित्यर्थः। सिद्धं दर्शयति—**तेनेति।** शब्दस्य अनित्यत्वं विना पक्षीकृतशब्दमात्रवृत्त्यनित्यनिष्ठधर्मस्य प्रतीतिर्न विश्राम्यतीत्याकूतं मानाभावेन निराकरोति—**तन्नेत्यादि।**

पक्षे पक्षमात्रवृत्त्यनित्यनिष्ठधर्मप्रतीतिः पक्षीकृतशब्दस्यानित्यत्वमालम्वते एवेतिनियमे मानं नास्तीति तात्पर्यार्थः। प्रमाणं विनापि तदालम्बनत्वनियमाभ्युपगमेऽतिप्रसङ्गं प्रेरयति—**अन्यथेति।** अन्यथा तत्प्रतीतिः समस्तवस्तून्यप्यालम्बते एव नियमेनेत्यर्थः। महाविद्यावादी वावदीति—**पक्षीकृतेति।** शब्दो यद्यनित्यो न भवेत्, तर्हि शब्दस्य पक्षीकृतशब्दमात्रवृत्त्यनित्यनिष्ठधर्मवत्त्वं व्याहतमिति प्रकृतशब्दस्य यदनित्यत्वं तदालम्बनत्वनियमसिद्धिरित्यर्थयोजना। आचार्यः प्रत्याचष्टे—**न। अवास्तवेति।** अवास्तवं वादिभ्रमसिद्धं यत्पक्षीकृतशब्दस्य अनित्यत्वं तेनापि व्याघातनिवृत्तौ जातायां प्रकृतप्रतीतेः पक्षमात्रवृत्त्यनित्यनिष्ठधर्मवत्त्वप्रतीतेः

---

यदि आलम्बनत्व को स्वीकार करेंगे तो उक्त प्रतीति का सकलवस्तु आलम्बनत्व दुर्वार हो जायेगा। अब यदि कहें कि पक्षीकृतशब्द को अनित्य माने बिना पक्षीकृतशब्द में पक्षीकृतशब्दमात्रवृत्ति अनित्यधर्मवत्त्व (पक्षीकृतशब्दमात्र में रहने वाले अनित्यवृत्तिधर्म का आश्रयत्व) नहीं सिद्ध होता है। शब्द को अनित्य माने बिना अनित्यवृत्तिधर्म का आश्रय कहना व्याघात है। अतः उक्त प्रतीति में पक्षीकृतशब्द के अनित्यत्व का आलम्बन नियमतः सिद्ध होता है।

**किञ्च व्याघातबलादियमनुमितिः पक्षीकृतशब्दानित्यत्वे पर्यवस्यतीति-वक्तव्यम्। व्याघातश्च विरोधप्रतीतिः। सा च विरुद्धद्वयप्रमितिजन्या। प्रकृते चानित्यत्वाभावपक्षीकृतशब्दमात्रावृत्त्यनित्यनिष्ठधर्मौ विरोधिनौ। न च पक्षीकृतशब्दमात्रवृत्त्यनित्यनिष्ठधर्मः प्रकृतानुमितेः पूर्वं प्रमितः। प्रकृता-नुमानवैयर्थ्यात्। अनुमित्युत्तरकालीनस्तु व्याघातो निरर्थकः। व्याघाताभावेन विनाप्यनित्यत्वं पूर्वमेवानुमितेः पर्यवसितत्वात्।**

---

पक्षीकृतशब्दस्य यदनित्यत्वं तदालम्बनत्वनियमस्य निर्हेतुकत्वमित्यक्षरार्थः।

**भुवन.**—भङ्गान्तरं भणितुं प्रस्तावयति—**किञ्च व्याघातेति।** यदि शब्दानित्यत्वं नाभ्युपेयते, तर्हि पक्षे पक्षेतरत्वधर्मसिद्ध्या व्याघातः स्यादिति व्याघातबलादियं महाविद्यानुमितिः पक्षीकृतशब्दस्यानित्यत्वे विश्राम्यतीति भावः। ननु व्याघातः कः, अत्राह—**व्याघात इति।** द्वयोर्विरोधप्रतीतिर्व्याघातः इत्यर्थः। **सा चेति।** सा च विरोधप्रतीतिर्विरुद्धयोर्द्वयस्य या प्रमितिः तज्जन्येत्यक्षरयोजना। **प्रकृते चेति।** प्रकृते महाविद्यानुमानेऽनित्यत्वस्याभावो नित्यत्वं, पक्षीकृतशब्दमात्रवृत्तिरनित्यनिष्ठः पक्षीकृतशब्दानित्यत्वे शब्दत्वादिः, तौ द्वावपि विरोधिनौ। पूर्वकालीनो व्याघातः शब्दानित्यत्वसिद्ध्युपयोगी किंवा उत्तरकालीनः इति गूढाभिप्रायेण द्वैधं विकल्प्य प्राचीनं प्रति आह—**न चेत्यादि।** पक्षीकृतशब्दमात्रवृत्त्यनित्यनिष्ठो धर्मः शब्दानित्यत्वे सति शब्दत्वादिः प्रकृतानुमितेर्महाविद्यानुमानात्पूर्वं न च प्रमाणेन गृहीतः। तद्धर्मस्य

---

इस पर महाविद्याविडम्बनकार कह रहे हैं, कि यह कथन युक्तिसङ्गत नहीं है। यदि अवास्तविक पक्षीकृतशब्द के अनित्यत्व को मांन कर व्याघातदोष की निवृत्तिसम्भव है। तो प्रकृत प्रतीति में पक्षीकृतशब्द के अनित्यत्व का नियमेन आलम्बन होता ही है। इसमें कोई बीज नहीं है।

महाविद्यानुमानवादी यदि कहता है, कि पक्षीकृतशब्द में अनित्यत्व न मानने पर पक्षेतरधर्म की पक्ष में सिद्धि होगी, अतः व्याघात है। उक्त व्याघातदोषशङ्कया महाविद्यानुमान पक्षीकृतशब्द में अनित्यत्वसाधनपुरःसर विश्रान्त होता है। इस पर महाविद्याविडम्बनकार कह रहे हैं, कि व्याघातपदार्थ क्या है, जिसके बल पर महाविद्यानुमान पक्षीकृतशब्द में अनित्यत्व का साधक होता है। यदि विरोधप्रतीति व्याघात है, तो वह प्रतीति विरुद्धधर्मद्वय की प्रमा से जन्य होनी चाहिए। प्रकृतमहाविद्यानुमान में विरुद्ध धर्मद्वय अनित्यत्वाभाव (नित्यत्व) तथा पक्षी कृतशब्द मात्र में रहने वाला अनित्यनिष्ठधर्म शब्दत्व है।

**किञ्च, किं व्याघाते एकपरिहारेण द्वितीयस्योपलम्भो बीजं, किंवा उभयोः परस्परपरिहारेणोपलम्भः, किंवा उभयोर्नियमेन परस्परपरिहारेणोपलम्भः। आद्ये घटत्वमेयत्वादेर्व्याघातापत्तिः। द्वितीये घटत्वशुक्लत्वा-**

---

पूर्वं प्रतीतौ महाविद्यानुमानवैयर्थ्यात्। एतावतानुमितेः पुरा विरुद्धप्रमितेरभावात्पूर्वकालीनव्याघातासम्भवेन पौरस्त्यः पक्षोऽपास्तो भवति। उदीचीनं कल्पमपास्यते—**अनुमितीति।** अनुमानकरणादुत्तरकाले विरुद्धप्रतीतिश्चेव्द्याघातः, तदा स निरर्थकः एवेत्यर्थः। हेतुना पूर्वोक्तं द्रढयति—**व्याघातेति।** अनित्यत्वं विनापि व्याघाताभावेन हेतुना अनुमितेः पूर्वमेव पर्यवसितत्वादिति पदान्वयः। तात्पयार्थस्त्वयम्—व्याघातबलात् हि अनित्यत्वमिति भवानवादीत्। अत्र चानुमानावसरे व्याघाताभावेन शब्दस्यानित्यत्वं विनाप्यनुमितिः पर्याप्तेत्युत्तरकालजातो व्याघातो व्यर्थः एवेति।

**भुवन.**—अथ व्याघातमेव त्रिः पक्षयित्वा प्रतिक्षिपति—**किञ्च किमित्यादि।** एकमन्तरेणापि द्वितीयस्योपलम्भो व्याघाते बीजं कारणमिति परमार्थः। प्राचिकं पक्षं परास्यते—**आद्ये इति।** यद्यपि घटत्वे मेयत्वमस्ति, तथापि मेयत्वे घटत्वाभावाद्घटत्वपरिहारेण मेयत्वस्य पटादावुपलम्भोऽस्ति। ततः एकपरिहारेण द्वितीयोपलब्धौ चेव्द्याघातः, तदात्रापि व्याघातः प्रसज्येत।

---

पुनश्च इन विरुद्धधर्मद्वय की प्रतीतिरूप व्याघात पूर्वकालिकत्वेन शब्द में अनित्यत्व साधक है? या उत्तरकालिकत्वेन? पूर्वकालिकत्वेन नहीं कह सकते। यतः इन दोनों में से पक्षीकृतशब्दमात्र में रहने वाला अनित्यनिष्ठधर्म प्रकृतमहाविद्यानुमान से पूर्व प्रमित ही नहीं है। यदि महाविद्यानुमान प्रयोग के बाद व्याघात कहो, तो व्याघातनिरर्थक है। यदि व्याघात निरास के बिना महाविद्यानुमान द्वारा पक्षीकृतशब्द में अनित्यत्व सिद्ध हो जाता है। तो व्याघातबलात् अनित्यत्वसिद्धि कहना युक्तिसङ्गत नहीं है।

अब व्याघात के बीज में तीन कल्प करके उक्तस्थल में व्याघात की निष्प्रयोजनता बता रहे हैं। आप जो महाविद्यानुमान में व्याघातवलात् पक्षीकृतशब्द में अनित्यत्व की सिद्धि मान रहे है। उसमें क्या बीज है। (१) एक के बिना द्वितीय की उपलब्धि व्याघात बीज हैं? (२) या दोनों में परस्पर एक के न रहने पर अपर की उपलब्धि व्याघात बीज है? या (३) दोनों के नियमेन परस्पर के विना उपलब्धिव्याघात बीज है? प्रथम कल्प मानने पर घटत्व और मेयत्व में व्याघात होने लगेगा। यतः घटत्व

**देर्व्याघातापत्तिः। वक्ष्यमाणदोषश्च। तृतीयस्तु प्रकृते न संभवत्येव। अनित्यत्वाभावस्य पक्षीकृतशब्दमात्रवृत्त्यनित्यनिष्ठधर्ममन्तरेणोपलम्भेऽपि अनित्यत्वाभावमन्तरेण पक्षीकृतशब्दमात्रनिष्ठानित्यनिष्ठानिष्ठधर्मस्यानुपलम्भात्। उभयोः परस्परपरिहारेणोपलम्भेऽपि परस्परपरिहारनियमस्य निष्प्रमाणत्वाच्चेति।**

---

नास्ति व्याघातो, घटत्वे मेयत्वसद्भावादित्यादिमः पक्षो न क्षोदक्षमः। पुरःसरपक्षं क्षिपति—**द्वितीये इति**। रक्ते घटे घटत्वं शुक्लत्वं विनाप्युपलब्धम्, पटादौ च शुक्लत्वं घटत्वमन्तरेणाप्युपलब्धमिति परस्पपरिहारोपलम्भादेकस्मिन् शुक्ले घटे घटत्वशुक्लत्वसंसर्गस्य व्याघाताभावेऽपि व्याघातः आपद्येतेत्यर्थः। **वक्ष्यमाणेति**। परस्परपरिहारोपलम्भस्य व्याघातबीजत्वे निष्प्रमाणकत्वं नाम तृतीयपक्षस्य वक्ष्यमाणदोषश्च स्यादित्यत्र घटना। तार्त्तीयीकमसम्भवेन निराकरोति—**तृतीयः इति**। असम्भवमुपपादयति—**अनित्यत्वाभावेति**। अनित्वत्वाभावो नित्यत्वं, तस्य गगनादौ पक्षमात्रवृत्त्यनित्यनिष्ठधर्ममन्तरेणोपलम्भेऽपि, अनित्यत्वाभावो नित्यत्वं, तं विना पक्षमात्रवृत्त्यनित्यनिष्ठधर्मस्यानुपलम्भात्। अयं मथितार्थः—यद्यपि पक्षमात्रवृत्त्यनित्यनिष्ठधर्मं विनापि नित्यत्वं गगनादावुपलभ्यते, तथापि नित्यत्वं विना पक्षमात्रवृत्त्यनित्यनिष्ठो धर्मः पक्षीकृतशब्दानित्यत्वे शब्दत्वादिर्नोपलभ्यते एव। ननु नित्यत्वं विनाप्येवंविधधर्मोपलब्धिः पक्षीकृतशब्देऽस्त्येव। न। पक्षीकृतशब्दे

---

मेयत्व है। परन्तु मेयत्व में घटत्व नहीं है। घट में मेयत्व घटत्व दोनों है। पटादि में घटत्व नहीं है मेयत्व है। अतः घटत्व मेयत्व में व्याघात होने लगेगा होता नहीं है। द्वितीयकल्प मानने पर घटत्वशुक्लत्व में व्याघात होने लगेगा। यतः रक्त घट में शुक्लता के बिना घटत्व है। शुक्लपट में घटत्व के बिना शुक्लत्व है। शुक्लघट में घटत्व शुक्लत्व दोनो है। तृतीय कल्प परस्पर के बिना नियमेन उपलब्धि व्याघात बीज में प्रमाण नहीं है। दण्डित्व कुण्डलित्व परस्पद के बिना उपलब्ध होने पर भी देवदत्तादि में दोनों की उपलब्धि मानी जाती है। प्रकृत स्थल में अनित्यत्वाभाव नित्यत्व पक्षमात्रवृत्ति अनित्यनिष्ठधर्म के बिना भी गगनादि नित्य पदार्थों में उपलब्ध है। परन्तु अनित्यत्वाभाव नित्यत्व के बिना पक्षीकृतशब्दमात्र में रहने वाले अनित्यवृत्तिधर्म शब्दत्व की उपलब्धि नहीं होती है। यदि कहे कि नित्यत्व के बिना भी एतादृशधर्म पक्षीकृतशब्द में है। तो नहीं कह सकते। यतः पक्षीकृतशब्द में उक्त धर्म अभी व्याघातबलात् साधनीय है।

**अथ व्याघातो मा भूत्, प्रतीतापर्यवसानं तु भविष्यतीति। प्रतीतं हि पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वमस्मादेवानुमानात्। तच्च पक्षीकृतशब्दानित्यत्वमन्तरेणापर्यवस्यत् तद्गमयतीति। तन्न। किमिदमनित्यत्वमन्तरेणापर्यवसानं प्रकृतसाध्यस्य, किमनित्यत्वव्याप्यत्वं,**

---

ह्ययं धर्मोऽद्यापि व्याघातबलात्साध्यमानोऽस्ति। व्याघातश्चात्र विकल्प्य खण्ड्यमानोऽस्ति व्याघातसिद्धौ च तत्सिद्धिर्भवित्रीति तद्धर्मस्य पक्षे विवादास्पदीभूतत्वात्कुत्रापि नोपलब्धिः संभवति। तस्मादत्र परस्परपरिहारोपलम्भनियमाभावेन तृतीयभेदो न संभवत्येवेति। उभयोः परस्परपरिहारोपलम्भेऽपि तन्नियमस्याप्रामाणिकत्वं सङ्गिरते—**उभयोरिति।** दण्डित्वकुण्डलित्वयोः परस्परपरिहारोपलम्भेऽपि देवदत्तादौ द्वयोरपि सहोपलम्भादेतन्नियमस्य निष्प्रमाणकत्वमितिभावना।

**भुवन.**—महाविद्यिकः आरेकते—**अथ व्याघातः इति।** प्रतीतस्यापर्यवसानमितिविग्रहः। प्रतीतापर्यवसानमेव व्यक्तीकुरुते—**प्रतीतमित्यादि।** तच्च पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वं चेत्यर्थः। **तद्गमयतीति।** तत् पक्षीकृतशब्दानित्यत्वमिति तच्छब्दार्थः। विकल्पासहत्वादपाकुरुते—**तन्न। किमिदमिति।** महाविद्यासाध्यस्यानित्यत्वं विना अपर्यवसानं नाम किमिदमिति योजना। द्वेधा विकल्पयति—**प्रकृतसाध्यस्येति।** प्रकृतसाध्यस्य महाविद्यासाध्यस्य। **किमनित्यत्वेन व्याप्यत्वं।**

---

अब महाविद्यानुमानवादी यदि कहे कि बीजाभावात् व्याघात न भी हो प्रतीति अपर्यवसान तो होगा तद्बलात् पक्षीकृतशब्द में अनित्यत्व सिद्ध हो जायेगा। प्रतीत पदार्थ प्रत्ययविषय होता है। यहाँ प्रत्यय (ज्ञान) प्रकृत अनुमान है, उसका विषय पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वरूप महाविद्यासाध्य है। वह पक्षी कृतशब्द में अनित्यत्व के बिना पर्यवसित नहीं होता। अतः उक्तमहाविद्यानुमान पक्षीकृतशब्द में अनित्यत्व का गमक है। महाविद्यासाध्य का अनित्यत्व के बिना अपर्यवसान के विषय में दो कल्प कर रहे है। (१) प्रकृतमहाविद्यासाध्य का अनित्यत्व के साथ व्याप्य व्यापकभाव ही अनित्यत्व के बिना उक्तमहाविद्यासाध्य का अपर्यवसान है? व्यापक के बिना व्याप्य नहीं रहता। यहाँ पर उक्त महाविद्यासाध्य व्याप्य, अनित्यत्व व्यापक है। व्यापक के बिना व्याप्य नहीं रहता अतः पक्ष में अनित्यत्वसिद्ध होता है। (२) या अनित्यत्व के बिना उक्त साध्य का उपपादन न होने से पक्षीकृतशब्द में अनित्यत्वसिद्ध होता है?

**अनित्यत्वेन विना अनुपपद्यमानत्वं वा। नाद्यः। गगनादौ व्याप्तिभङ्गात्। नापि द्वितीयः। तेन विनापि भवतः तेन विनानुपपद्यमानत्वासिद्धेः। पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वपक्षीकृतसंसर्गोऽनित्यत्वव्याप्यः, अनित्यत्वेन विनानुपपद्यमानो वा इति चेत्। न। तस्यापि**

---

यत्र यत्र महाविद्यासाध्यं तत्र तत्रानित्यत्वमिति भावः। **अनित्यत्वेनेति।** अनित्यत्वं विना महाविद्यासाध्यं नोपपद्यते एवेत्यर्थः। प्राक्तनं प्रति जल्पति—**नाद्य इति।** गगनादौ महाविद्यासाध्यसत्त्वेऽप्यनित्यत्वस्य अभावाद्व्याप्तिभङ्गः इति हृदयम्। द्वितीयमपवदति—**नापीति।** युक्तिं खेटयति—**तेन विनेति।** तेन अनित्यत्वेन विनापि गगनादौ भवतो वर्तमानस्य महाविद्यासाध्यस्य तेन अनित्यत्वेन विना यदनुपपद्यमानत्वं तस्यासिद्धेः, अयमाशयः—अनित्यत्वेन विनापि गगनादौ महाविद्यासाध्यसद्भावान्महाविद्यासाध्यस्य अनित्यत्वेन विना अनुपपद्यमानत्वमसिद्धमिति। अथ परः आरेकते—**पक्षीकृतेति।** पक्षीकृतेत्यादिसाध्यस्य पक्षीकृतशब्देन सह संसर्गोऽनित्यत्वेन व्याप्यः, अनित्यत्वेन विनानुपपद्यमानो वेति परारेकार्थः। पूर्वपक्षिणोक्ते सिद्धान्ती आह—**न। तस्यापीति।** तस्यापि पक्षीकृतेत्यादिमहाविद्यासाध्यपक्षीकृतशब्दसंसर्गस्यापि उभयसंसर्गिणौ महाविद्यासाध्यपक्षरूपौ यत्र निष्ठतया, पक्षीकृतेत्यादिसाध्ये नित्ये शाश्वतेऽपि वर्तमानत्वेन अनित्यत्वेनाव्याप्यत्वात्, तेनानित्यत्वेन

---

प्रथम कल्प में दोष दे रहे है। जहाँ जहाँ उक्त महाविद्यासाध्य है, वहाँ वहाँ अनित्यत्व है। यह व्याप्ति व्यभिचरित है। महाविद्यासाध्य गगनादिनित्य पदार्थों में है। वहाँ अनित्यत्व नहीं है। इसी प्रकार द्वितीयकल्प भी दूषित हो गया अनित्यत्व के बिना गगनादि में उक्त साध्य की उपपत्ति हो रही है। यदि उक्तसाध्य तथा पक्षीकृतशब्द के सम्बन्ध को अनित्यत्व का व्याप्य या अनित्यत्व के बिना उक्त सम्बन्ध की अनुपपत्ति कहे, अर्थात् जहाँ जहाँ उक्तसाध्य तथा पक्षीकृतशब्द का संसर्ग है। वहाँ वहाँ अनित्य है। या अनित्यत्व के बिना उक्त सम्बन्ध अनुपपन्न है। सम्बन्ध सम्बन्धीद्वय में रहता है। उक्त सम्बन्ध के सम्बन्धी दो है। उक्तमहाविद्यासाध्य तथा पक्षीकृतशब्दवृत्ति अनित्यत्व महाविद्यासाध्य गगनादि में है, सम्बन्धी के रहने से उक्त सम्बन्ध भी है। परन्तु वहाँ अनित्यत्व नहीं है। अतः व्याप्ति व्यभिचरित हो गयी। उक्त सम्बन्ध के अनित्यत्व के बिना उपपत्ति भी हो गयी।

**उभयसंसर्गिनिष्ठतया पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वे नित्येऽपि वर्तमानत्वेन अनित्यत्वाव्याप्यत्वात्, तेन विनाप्युपपद्यमानत्वाच्चेति। पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वे सति पक्षीकृतशब्दत्वमनित्यत्वव्याप्यं, अनित्यत्वेन विनानुपद्यमानं वेति चेत्।**

---

विनाप्युपपद्यमानत्वाच्चेति पदाक्षरयोजना। अयं तत्त्वार्थः। संसर्गस्य द्विष्ठत्वान्नित्येऽपि महाविद्यासाध्ये वर्तनादनित्यत्वस्य च तत्रावर्तनाद्यत्र प्रकृतसंसर्गः तत्रानित्यत्वमिति व्याप्तिभङ्गात्प्रकृतसंसर्गस्यानित्यत्वेन व्याप्यत्वं न घटाकोटिमाटीकते। तथा अनित्यत्वं विनापि प्रकृतसंसर्गस्य अनित्ये महाविद्यासाध्ये वर्तनादनित्यत्वेन विना अनुपपद्यमानत्वमपि न जाघट्यादिति।

पूर्वपक्षी आक्षिपति—**पक्षीकृतेति।** पक्षीकृतेत्यादिमहाविद्यासाध्यवत्त्वे सति यत्पक्षीकृतशब्दत्वं तत् अनित्यत्वेन व्याप्यं, अनित्यत्वेन विना अनुपपद्यमानं वेत्यर्थः। अत्र हि शब्दस्यानित्यत्वं साध्यं, साध्येन च यो व्याप्यते स हेतुरिति पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वे सति पक्षीकृतशब्दत्वस्य अनित्यत्वरूपसाध्यासाधकत्वादवास्तवमपि अनित्यत्वसाध्यव्यापकत्वाद्धेतुत्वं मनसि निधाय पराचष्टे—**न। तस्येति।** तस्य पक्षीकृतेत्यादिसाध्यवत्त्वे सति पक्षीकृतशब्दत्वस्य, असाधारणानैकान्तिकत्वेन व्याप्यत्वानुपपद्यमानत्वयोर्विरहादित्यक्षरार्थः। भावार्थस्त्वयम्—सति सपक्षे सपक्षाप्रवेशी असाधारणानैकान्तिकोऽनध्यवसितो वा

---

अब यदि पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व विशिष्टपक्षीकृतशब्दवृत्तिधर्मशब्दत्व को अनित्यत्व का व्याप्य या अनित्यत्व बिना अनुपपद्यमानत्व कहे, तो नहीं कह सकते। यतः उक्त व्याप्य पक्षीकृत शब्दमात्र में रहेगा। अतः सपक्षविपक्षव्यावृतपक्षमात्रवृत्तिरूप असाधारण अनैकान्तिकव्यभिचार से व्यभिचरित होने से व्याप्ति नहीं हो पायेगी। यदि असाधारण अनैकान्तिकव्यभिचार के रहने पर भी व्याप्ति मानी जाय, तो उक्तसाध्यवत्त्वविशिष्टपक्षीकृतशब्दत्व को नित्यत्व का व्याप्य मान लिया जाय, या नित्यत्व के बिना अनुपपद्यमान कह दिया जाय, यह भी आपादन हो सकता है। अन्य दोष विशेषणवैयर्थ्य भी है। हेतु (व्याप्य) विशेषण यदि व्यभिचार दोष का वारक है। तभी उसकी सार्थकता है। अन्यथा व्यर्थ है। यहाँ पर अनित्यत्व का व्याप्य पक्षीकृतशब्दत्व यदि हो सकता है। तो पक्षीकृतशब्द में अतिरिक्तविशेषण व्यर्थ है।

**न। तस्य असाधारणत्वेन व्याप्यत्वानुपपद्यमानत्वविरहात्। अन्यथा तस्य नित्यत्वव्याप्यत्वनित्यत्वेन विनानुपपद्यमानत्वयोरप्यापत्तेः, पक्षीकृतशब्द-व्यतिरिक्तविशेषणवैयर्थ्याच्चेति। सेयमर्थान्तरता सकलमहाविद्यासु संचार-णीया। ये तु महाविद्याविशेषनिष्ठाःभङ्गिविशेषेण अर्थान्तरताविशेषाः, तेऽन्यत्र व्युत्पादयिष्यन्ते इति।**

**अथ अयं शब्दो नित्योऽनित्यो वेति विप्रतिपत्तौ यदा अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वादित्यादिमहाविद्या प्रयुज्यते,**

---

अनैकान्तिकभेदो वा। तत्र अस्य हेतोः सपक्षे घटादौ सत्यपि सपक्षाप्रवेशित्वेन असाधारणानैकान्तिकत्वात् यत्र पक्षीकृतेत्यादिसाध्यवत्त्वे सति पक्षीकृतशब्दत्वं तत्रानित्यत्वमिति व्याप्तेः क्वापि सपक्षे प्रसिद्धत्वाभावेन अनित्यत्वव्याप्यत्वाद्यनुपपत्तिरिति। विपक्षे बाधकमादिशति—**अन्यथेति।** अन्यथा असाधारणत्वेऽप्यनित्यत्वव्याप्यत्वाद्यभ्युपगमे तस्य पक्षीकृतेत्यादि-साध्यत्त्वे सति पक्षीकृतशब्दत्वस्य नित्यत्वब्याप्यत्वाद्यपि आपद्येत, युक्तेरुभयत्रापि साम्यादिति। न केवलमस्य हेतोरसाधारण्यं, व्यर्थविशेषणता-पीत्याह—**पक्षीकृतशब्दव्यतिरिक्तेति।** पक्षीकृतशब्दात् यद्व्यतिरिक्तं विशेषणं तद्वैयर्थ्यात्। चकारो दोषान्तरसूचकः। एतावता पक्षीकृतशब्दत्वमेव हेतुरस्तु, व्यर्थमन्यद्विशेषणमिति भावः। उक्तमितरत्रातिदिशति—**सेयमित्यादि।** ननु भवद्भिः सामान्येन महाविद्यानिष्ठार्थान्तरता प्रत्यपादि, न प्रत्येकं महाविद्या-विशेषनिष्ठेत्याशङ्क्याह—**ये तु महाविद्येति।** अन्यत्र ग्रथान्तरे इत्यर्थः।

**भुवन.**—अथ परारेका—**अथायं शब्द इति।** शब्दस्य नित्यत्वा-नित्यत्वविषये विवादे सति यदा महाविद्यिकोऽयं शब्दः स्वस्वेतरेत्यादिक-

---

इस प्रकार पक्षीकृतशब्द में अनित्यत्वसिद्धि के लिए प्रवृत्त अनुमानद्वारा पक्षीकृतशब्द में शब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व की सिद्धि हुई अर्थान्तरता। यह अर्थान्तरता सकल महाविद्यानुमानो में रहेगी। यदि इस पर महाविद्यानुमानवादी कहे कि आपने अर्थान्तरता सामान्य कहा महाविद्यानुमान भिन्न भिन्न होने के कारण एक अर्थान्तरता दोष सर्वत्र कैसे होगा। इस पर कह रहे हैं, कि महाविद्याविशेष में होने वाली अर्थान्तरता विशेष प्रतिपादन अन्यत्र करेगें।

अर्थान्तरतादोष के परिहार में महाविद्यानुमानवादी कह रहा है। कि अयं शब्दः नित्योऽनित्यो वा शब्द में नित्यानित्य के सन्देहावस्था में यदि

**तदा अस्तु नाम अर्थान्तरता। यदा पुनरयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं न वा इत्येव विवादः, तदा कथमर्थान्तरतेति चेत्। मा भवतु तदा अर्थान्तरता, प्राचीनदोषास्तु भविष्यन्त्येव।**

**किञ्च, अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं न वेत्यादिविवाद एव दुर्घटः। केवलान्वयित्वाभिमतधर्माभावस्याप्रसिद्धत्वेन न वेति पक्षानुत्थानात्।**

---

मनुमिमीते, तदा महाविद्यासाध्यं शब्दे सिध्यतु, अनित्यत्वं तु कुतस्त्यमित्येवंरूपार्थान्तरता भवतु। **यदा पुनरिति**। यदा त्वयं शब्दः स्वस्वेतरेत्यादिमहाविद्यासाध्यवान्न वेति विवादः, तदा कौतस्कुतीयमर्थान्तरता, अन्यस्यार्थस्यैवाभावादित्यक्षरार्थयोजना। प्रत्युतरं प्राह—**मा भवत्विति**। प्राचीनदोषाः उपाध्यनैकान्त्यादयः।

**भुवन.**—उक्तविवादमूरीकृत्य मा भवतु तदार्थान्तरतेत्यभिहितं, साम्प्रतमुक्तविवादः एव न सम्भवेदित्याह—**किं चेत्यादि**। किंच दूषणान्तरोक्तौ। हेतुमाह—**केवलान्वयीति**। केवलान्वयित्वेन सर्ववस्तुनिष्ठत्वेनाभिमतो यो धर्मः, तदभावस्याप्रसिद्धत्वेन न वेति पक्षः एव नोत्तिष्ठति। अयमभिप्रायः—महाविद्यासाध्यधर्मस्य त्वन्मते केवलान्वयित्वेन सर्वत्र सत्त्वान्न वेति पक्ष एव नोदियादिति।

---

स्वस्वेतरवृत्तित्वरहितानित्यत्वनिष्ठाधिकरणत्व साध्य की सिद्धि शब्द में की जाय तो अर्थान्तरतादोष होगा। यतः नित्यानित्य का सन्देह है, और स्वस्वेतर वृत्तित्वरहितानित्यनिष्ठाधिकरणत्व सिद्ध हो रहा है। यदि शब्द में स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व का सन्देह है, और उक्त साध्य (स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्व) की सिद्धि होती है। तो अर्थान्तरतादोष क्यों होगा जो साधनीय था वही सिद्ध हुआ। इस पर महाविद्याविडम्बनकार कह रहे हैं, कि अर्थान्तरतादोष भले न हो पूर्वोक्त व्यभिचारादिदोष तो होंगे ही। एवं यह शब्द स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरण है। या नहीं यह विवाद ही सम्भव नहीं है। केवलान्वयित्वेन अभिमतधर्म का अभाव अप्रसिद्ध होने से ऐसा विवाद सम्भव नहीं है।

यदि महाविद्यानुमानवादी केवलान्वयित्वेन अभिमत पक्षीकृत शब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वादि धर्म की पक्षवृत्तिता का शब्द में सन्देह मान कर उक्त साध्य पक्षनिष्ठ (पक्ष में है) या नहीं? इस विवाद

**अथ पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वादिः केवलान्वयित्वाभिमतः पक्षनिष्ठो न वेति विवादमुद्घाट्य, अयं शब्दः स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं मेयत्वादिति प्रयोगमारचयसि, तदा दुर्वारैवार्थान्तरता। न हि पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्यनिष्ठाधिकरणत्वमेव पक्षीकृतशब्दनिष्ठत्वम्। नापि तस्य व्यापकम्। तस्य त्वन्मते**

---

**भुवन.**—भङ्ग्यन्तरेण परः आक्षिपते—**अथ पक्षीकृतेति**। यदि पक्षीकृतेत्यादिसाध्यधर्मः केवलान्वयित्वेनाभिमतः पक्षे शब्दे निष्ठो न वेति विवादं प्रकटीकृत्य, महाविद्यासाध्यस्य पक्षनिष्ठत्वारोपणाय अयं शब्दः इत्याद्यनुमिमीषे। **तदेति**। तदा महाविद्यासाध्यं भवतु, महाविद्यासाध्यस्य पक्ष-शब्दनिष्ठत्वं तु कौतस्कुतमितिरूपा अर्थान्तरता दुर्वारैवेत्यर्थः। अर्थान्तर-तोपपादनाय युक्तीः प्रयुङ्क्ते—**न हि पक्षीकृतेति**। न हि पक्षीकृतेत्यादि-महाविद्यासाध्यमेव पक्षीकृतशब्दनिष्ठत्वं, किन्तु महाविद्यासाध्यस्य पक्षीकृत-शब्दनिष्ठत्वं धर्मः। धर्मधर्मिणोश्च **वैशेषिकादि**दर्शनभेदात्र तदेव तदित्यर्थः। **नापि तस्येति**। पक्षीकृतशब्दनिष्ठत्वं तस्य पक्षीकृतशब्दतदितरेत्यादिसाध्यस्य नातिव्यापकम्। कुतो न व्यापकमत्राह—**तस्येति**। तस्य पक्षीकृतेत्यादि-प्रकृतसाध्यस्येत्यर्थः। **पक्षीकृतशब्दनिष्ठत्वस्येति**। पक्षीकृतशब्दनिष्ठत्वं हि पक्षितशब्दनिष्ठे एव अस्ति, न तु गगनादाविति। यत्र पक्षीकृतेत्यादि साध्यं तत्र पक्षीकृतशब्दनिष्ठत्वमिति व्याप्तेरभावात् पक्षीकृतशब्दनिष्ठत्वं पक्षीकृते-त्यादिसाध्यस्य नापि व्यापकमित्यर्थः। पक्षीकृतशब्दनिष्ठत्वस्य गगनादावपि वर्तमानत्वोपगमे दोषं भाषते—**अन्यथेति**। तस्य पक्षीकृतशब्दनिष्ठत्वस्य योऽभावः, तदप्रसिद्धौ तत्रापि पक्षीकृतशब्दनिष्ठत्वेऽपि विवादानुपपत्तिः। अयं परमार्थः—यदि पक्षीकृतशब्दनिष्ठत्वं गगनादावपि स्यात्, तर्हि

---

स्थिति में यह शब्द स्वस्वेतरवृत्तित्वरहितानित्यनिष्ठाधिकरणं है, मेयत्व होने से इस अनुमान का प्रयोग करता है, तो अर्थान्तरता आवश्यंभावी है। यतः साधनीय है, अनित्यत्व। सिद्ध हो रहा पक्षीकृतशब्दतदितरवृत्तित्वरहितानित्य-निष्ठाधिकरणत्व वृत्तिता। यदि आप कहें कि पक्षीकृतशब्दतदितरवृत्तित्वरहिता-नित्यनिष्ठाधिकरणत्व ही पक्षीकृतशब्दनिष्ठत्व है। तो नहीं कह सकते। यतः धर्म और धर्मी का भेद वैशेषिकादिशास्त्रों में माना गया है।

उक्त साध्य का पक्षीकृतशब्दनिष्ठत्व व्यापक भी नहीं है। यतः साध्य केवलान्वयित्वेन अभिमत है। अतः सर्वत्र ही, विद्यमान है। साधनीय है,

**केवलान्वयित्वात्, पक्षीकृतशब्दनिष्ठत्वस्य च गगनादेर्व्यावृत्तत्वात्। अन्यथा तदभावाप्रसिद्धौ तत्रापि विवादानुपपत्तेः। नापि प्रकृतसाध्यवत्त्वापरपर्यायः प्रकृतसाध्यपक्षसंसर्गः पक्षनिष्ठत्वम्। प्रकृतसाध्यवत्त्वस्य त्वन्मते पक्षनिष्ठत्वात्। पक्षनिष्ठत्वस्य च पक्षनिष्ठत्वविरहात्। न च पक्षस्य**

---

केवलान्वयित्वेन महाविद्यासाध्यवत् तस्य सर्वत्र सद्भावात्, महाविद्यासाध्ये पक्षीकृतशब्दनिष्ठत्वमस्ति न वेति विवादः एव न भवेदिति। युक्त्यन्तरेण अर्थान्तरतामेव समर्थयते—**नापि प्रकृतेत्यादि**। नापि प्रकृतसाध्यं महाविद्यासाध्यं तद्वत्त्वापरपर्यायः, प्रकृतसाध्यं महाविद्यासाध्यं पक्षः शब्दः, तयोः संसर्गः एव महाविद्यासाध्यस्य पक्षनिष्ठत्वमित्यर्थः। हेतुमाह—**प्रकृतेति**। प्रकृतसाध्यं महाविद्यासाध्यम्। तद्वत्त्वं हि पक्षे शब्दे निष्ठमस्ति त्वन्मते। एवं च प्रकृतसाध्यवत्त्वस्य पक्षनिष्ठत्वं धर्मो जातः। धर्मधर्मिणोश्च तादात्म्याभावात्प्रकृतसाध्यत्वमेव पक्षनिष्ठत्वमिति न समीचीनमित्यर्थः। ननु प्रकृतसाध्यवत्त्वस्य पक्षनिष्ठत्वरूपस्यैव पक्षनिष्ठत्वं किं न स्यादित्याशङ्क्याह—**पक्षनिष्ठत्वस्येति**। एतत्तत्वम्—यदि प्रकृतसाध्यवत्त्वमेव पक्षनिष्ठत्वरूपं स्यात्, तदा प्रकृतसाध्यवत्त्वस्य पक्षनिष्ठत्वरूपस्य पक्षनिष्ठत्वं न भवेत्। स्ववृत्तिविरोधात्। तस्मात्प्रकृतसाध्यवत्त्वस्य पक्षनिष्ठत्वं धर्मः एव, न तु प्रकृतसाध्यवत्त्वमेव पक्षनिष्ठत्वमिति। प्रकृतसाध्यपक्षसंसर्गो यद्यपि न पक्षनिष्ठत्वं, तथाप्यपर्यवसानात्पक्षनिष्ठत्वं गमयेदिति महाविद्यासाध्यस्य पक्षनिष्ठत्वसिद्धिरित्याशङ्क्य वक्ति—**न च पक्षस्येति**। पक्षस्य शब्दस्य,

---

पक्षीकृतशब्दनिष्ठत्व जो गगनादि में नहीं है। यदि पक्षीकृतशब्दनिष्ठत्व को भी केवलान्वयित्वेन अभिमत मानेगें तो उसका अभाव कही प्रसिद्ध न होने के कारण वह शब्द में है। या नहीं एतादृश सन्देह ही नहीं होगा। इस प्रकार पक्षीकृतशब्दनिष्ठत्वाभाव के अधिकरण में उक्त साध्य की वृत्तिता होने से व्याप्तिव्यभिचरित होगी।

यदि महाविद्यानुमानवादी प्रकृतमहाविद्यासाध्यवत्ता यानी प्रकृतमहाविद्यासाध्य तथा पक्षीकृतशब्द के ससर्ग को ही पक्षनिष्ठत्व कहे तो नहीं कह सकता। यतः तुम्हारे मत में प्रकृतमहाविद्यासाध्यवत्ता पक्षशब्द में है ही। इस प्रकार प्रकृत महाविद्यासाध्यवत्ता में पक्षनिष्ठत्व भी है। यदि प्रकृतसाध्यवत्व को पक्षनिष्ठत्वरूप माने तो भी नहीं कह सकते। स्व में स्व की वृत्तिता का विरोध होने से प्रकृतसाध्यवत्व में पक्षनिष्ठत्व नहीं रहेगा।

**प्रकृतसाध्यवत्त्वसिद्धिरपर्यवसानात्प्रकृतसाध्यस्य पक्षनिष्ठत्वं गोचरयतीति युक्तम्। अपर्यवसानस्य प्रागेव प्रतिषिद्धत्वादित्यलमाराध्यविरोधेन।**

**इति दूषणपाषाणजर्जरीकृतमूर्तयः ।**
**महाविद्याः क्षणं स्थातुं न क्षमन्ते रणाङ्गणे ।।२१।।**

---

प्रकृतसाध्यं महाविद्यासाध्यं, तद्वत्त्वसिद्धिः। **अपर्यवसानादिति।** पक्षे प्रकृतसाध्यवत्त्वसिद्धिः तर्ह्येव, यर्हि महाविद्यासाध्यस्य पक्षनिष्ठत्वं स्यादित्यपर्यवसानबलात्प्रकृतसाध्यसय महाविद्यासाध्यस्य पक्षनिष्ठत्वं गोचरयतीति न च युक्तमित्यन्वयः। कस्मान्न युक्तमत्राह—**अपर्यवसानस्येति।** अपर्यवसानं नाम किं तेन व्याप्यत्वं, तेन विनानुपपद्यमानत्वं वा इत्यादिपूर्वोक्तयुक्तिभिरपर्यवसानस्य प्रागेव प्रतिषिद्धत्वादित्यर्थः। **आराध्यविरोधेनेति।** आराध्याः **सूत्रकारभाष्यकारा**दयः पूर्वाचार्याः तैश्च केवलान्वयित्वानङ्गीकारान्महाविद्यापि नोररीचक्रे इति महाविद्यावादिनां तदभ्युपगमे आराध्यविरोधः प्रकटः एवेत्याकूतम्।

**भुवन.**—पूर्वप्रतिपादितनिखिलदोषदूषितत्वं महाविद्याया निगमयति—**इति दूषणेत्यादि।** दूषणान्येव पाषाणाः, तैर्जर्जरीकृता मूर्तयो यासां तास्तथेति विग्रहः। वादरणाङ्गणे महाविद्याः क्षणमपि स्थातुं न क्षमन्ते, न समर्था भवन्तीत्यर्थः।।२१।।

---

यदि कहे कि प्रकृतसाध्यवत्व पक्ष में तभी सिद्ध होगा जब महाविद्यासाध्य का पक्षनिष्ठत्व सिद्ध हो, इस प्रतीति अपर्यवसान बलात् पक्ष शब्द में पक्षनिष्ठत्व की सिद्धि होती है। इस पर विडम्बनकार कह रहे हैं, कि प्रतीति अपर्यवसान का पूर्व में खण्डन किया जा चुका है। तथा सूत्रकार भाष्यकार आदि पूज्याचार्यों ने केवलान्वयी अनुमान मानते नहीं। महाविद्यानुमान केवलान्वयी होने से आराध्यविरोध भी है।

जिस प्रकार जर्जरशरीर (व्यथित) योद्धा एक क्षण भी युद्धस्थल में नहीं टिक पाता। उसी प्रकार दोषरूपी पाषाणों के प्रहार से जर्जर शरीर वाली महाविद्या वादरूप रणप्राङ्गण में एक क्षण भी नहीं टिक पायेगी। अर्थात् महाविद्यानुमान रूप योद्धा के बल पर वादी को विजय नहीं मिलने वाली।।२१।।

**अथ किमर्थं स्वाभिमतसकलप्रमेयसाधकमहाविद्यानिराकरणम्। जातीनामिव तासामाभासत्वख्यापनार्थम्। अन्यथा महाविद्याप्रयोक्तॄणां शिष्याणां प्रतिवाद्युदीरितप्राचीनदूषणैः पराजयादिति।**

---

**भुवन.**—अन्वयव्यतिरेक्यनुमानसाध्यस्य स्वाभिमतस्य महाविद्यया अनायासेन साधयितुं शक्यत्वात्तन्निरासः किमर्थमित्यारेकते—**अथ किमर्थ-मित्यादि।** स्वस्य अभिमतानि यानि सकलप्रमेयाणि नित्यत्वानित्यत्वादीनि तत्साधिकाः याः महाविद्याः तन्निराकरणं किमर्थमित्यन्वयः। प्रश्नं मत्वा सिद्धान्ती समाधत्ते—**जातीनामिवेति।** यथा जातीनां दूषणाभासत्वं, तथा महाविद्यानां हेत्वाभासत्वख्यापनार्थं महाविद्यानिराकरणमिति भावः। विपर्यये बाधकमभिधत्ते—**अन्यथा महाविद्येति।** अन्यथा यदि महाविद्यानामाभासत्वं न ख्याप्यते, तदा सम्यक् साधनत्वाच्छिष्या महाविद्याः प्रयुञ्जते। तथा च प्रति-वाद्युद्भावितदुष्परिहारपूर्वोक्तानैकान्तिकत्वादिदूषणैःशिष्याणां पराजयः प्रसज्येत। तस्मादाभासत्वख्यापनाय महाविद्यानिरासः समञ्जस एवेति हृदयाभिप्रायः। एवं च साधनाभासत्वान्महाविद्या कथायां न प्रयोक्तव्येति शिष्यानुशिष्टिरादिष्टा भवति।

---

यदि वादी कहे अन्वय व्यतिरेकि अनुमान द्वारा साधनीय शब्दानित्यत्ववादी के अभिमत सकलनित्यत्वानित्यत्व की साधिका महाविद्या का आप खण्डन क्यों कर रहे हैं। अर्थात् एतादृशमहाविद्यानुमान द्वारा अभिमत सकल नित्यत्वानित्यत्व प्रमेय की यदि सिद्धि हो सकती है। तो शब्दानित्यत्ववादी उक्त महाविद्यानुमान द्वारा शब्द में अनित्यत्व सिद्ध कर रहा है। आप भी महाविद्यानुमान द्वारा शब्द में नित्यत्व सिद्ध कर दीजिये महाविद्यानुमान का खण्डन करना कैसे उचित है। इस पर महाविद्याविडम्बन-कार कह रहे हैं, कि जिस प्रकार असदुत्तर जाति आभास है। उसी प्रकार महाविद्यानुमान भी हेत्वाभास है। यह सिद्ध करने के लिए। यदि महाविद्या में हेत्वाभासत्व नहीं बोधित किया जायेगा, तो महाविद्यानुमान को निर्दुष्ट अनुमान समझ कर शिष्यगण महाविद्यानुमान का प्रयोग करेंगे। तो प्रतिवादी उक्त महाविद्या में पूर्वोक्त अनैकान्तिकत्वादिदोष देगा तो महाविद्यानुमान का प्रयोग करने वाले शिष्यगण पराजित हो जायेंगे। यदि पूर्ण में यह ज्ञात रहेगा कि महाविद्यानुमान हेत्वाभास है। तो शिष्यगण प्रयोग ही नहीं करेंगे।

**किञ्च—**

**यत्र यत्र परः प्रौढिप्रकर्षमवलम्बते ।**

**श्लाघ्यस्तत्तन्निरासार्थः प्रज्ञाभ्यासवतां श्रमः ।।२२।।**

**योगीश्वरगुरोः शब्दविद्यामासाद्य तत्त्वतः ।**

**व्यधत्त भट्टवादीन्द्रो महाविद्याविडम्बनम् ।।२३।।**

---

**भुवन.**—महाविद्याप्रयोक्तारो वयं सर्वत्र विजयिनः इति गर्वपर्वताधिरूढानां दुरभिमानभङ्गार्थमपि महाविद्यानिरासः कार्यः इत्याह—**किंच यत्रेत्यादि।** किंच प्रकारान्तरोक्तौ। यत्र यत्र परः प्रौढिप्रकर्षं पाण्डित्याभिमानमवलम्बते तत्तन्निरासार्थः प्रज्ञाभ्यासवतां दुरधिगमग्रन्थादिविषयिणी या प्रज्ञा प्रतिभा गूढार्थविचारणादिरूपा तस्याः अभ्यासः पौनःपुन्येन परिशीलनं, तत्र तत्पराणां नराणां श्रमः श्लाव्यो भवतीति योजना। इह यत्र यत्रेत्यत्र यच्छब्दपरामृष्टं तत्तन्निरासेत्यत्र तच्छब्देन परामृश्यते। एतावता महाविद्यायां परस्य प्रौढिप्रकर्षं मत्वा महाविद्यानिरासाय श्रमः श्लाव्यः एवेत्यभिहितं भवति। तथा च महाविद्यानिरासेऽपरमपि प्रयोजनं प्रदर्शितमित्यर्थः।।२२।।

---

महाविद्यानुमान वादियों को जो अभिमान है, कि हम सर्वत्र महाविद्याप्रयोग द्वारा विजयी हो जायेगें। इस अभिमान के नष्ट करने के लिए भी महाविद्या का खण्डन आवश्यक है।

यत्र यत्र परः प्रौढ़िप्रकर्षमवलम्बते।

श्लाघ्यस्तत्तन्निरासार्थः प्रज्ञाभ्यासवतां श्रमः।।२२।।

जहाँ पर कोई वादी अपने पाण्डित्य के अभिमान का आलम्बन करता है। मैं अपने पाण्डित्य के बल पर कुछ भी सिद्ध कर सकता हूँ। वहाँ पर प्रतिवादी को गूढार्थविचाररूपप्रज्ञा का अभ्यास पौनः पौन्येन परिशीलन करके उसके मत का आवश्य खण्डन करना चाहिए। एतादृश श्रम स्तुत्य है।।२२।

योगीश्वरगुरोः शब्दविद्यामासाद्य तत्त्वतः।

व्यधत्त भट्टवादीन्दो महाविद्याविडम्बनम्।।२३।।

**इति श्रीहरकिङ्करन्यायाचार्यपरमपण्डितवादीन्द्रविरचिते महाविद्या-विडम्बने दूषणविवेको नाम तृतीयः परिच्छेदः।।३।।**

---

**श्रीसोमसुन्दरगुरूत्तमपादपद्म-**
संसेविना **भुवनसुन्दरसूरिणेयम्।**
वृत्तिः कृता स्वपरयोरुपकारहेतोः
सेव्या प्रमाणनिपुणैर्विजयोदयाय ।।१।।

**हर्षपुर**नामनगरे **देवश्रीपार्श्वनाथ**शुभदृष्टौ।
**व्याख्यानदीपि**केयं समर्थिता भवतु जयलक्ष्म्यै ।।२।।

षट्तर्कीपरितर्ककर्कशमति**श्चारित्रराजो** यति-
स्त्रैविद्योत्तम**रत्नशेखरमुनि**र्वादीन्द्रवृन्दाग्रणीः।
एतौ द्वावपि शुद्धबुद्धिविभवौ टीकामिमां सादरं
संशोध्य प्रथमप्रतौ गुणयुतौ संस्थापयामासतुः ।।३।।

ग्रन्थोऽयं विषमो मतान्तरगतो गूढार्थसार्थान्वितो
व्याख्या नैव पटुः स्फुटार्थघटने नो संप्रदायस्तथा।

---

योगीश्वरनामक विद्यागुरु से भलीभान्ति शब्दविद्या (व्याकरणशात्र) का अध्ययन कर भट्टवादीन्द्र ने इस महाविद्याविडम्बन ग्रन्थ की रचना की है। ऐसा अर्थ करने पर ग्रन्थ के अन्त में गुरुस्मरणमङ्गल बोधित होता है। अथवा-योगीश्वरभगवान् शङ्कर की आराधना से शब्दविद्या (व्याकरणशास्त्र) को प्राप्त कर भट्टवादीन्द्र महाविद्याविडम्बन ग्रन्थ की रचना की है। ऐसा अर्थ करने पर भगवान् शङ्कर का स्मरणबोधित होता है।।२३।।

यदविद्या जनेर्हेतुर्वियदादेः प्रचक्षते।
तन्मानमेयभिद्धेतु सच्चिदेकं वयं नुमः।।१।।
ग्रन्थग्रन्थिविघाटनेऽतिकुशला तत्त्वप्रकाशे क्षमा.
तथ्यातथ्यविचारचित्तनिषका सज्ज्योतिरेषा चिरम्।

---

तस्मान्मन्दमतिप्रबोधविधये स्पष्टार्थनिष्टङ्किनी
टीकेयं विहिता चिरं विजयतामन्विष्यमाणा बुधैः ॥४॥

इति श्रीजिनशासन-गगनाङ्गणनभोमणिषड्दर्शनीरहस्याभिज्ञशिरोमणि-सुविहिताचार्यचक्रचूडामणि-श्रीतपोगच्छशृंगारहारभट्टारक-प्रभुश्रीसोमसुन्दरसूरिशिष्यश्रीभुवनसुन्दरसूरिविरचितायां महाविद्याविडम्बनवृत्तौ व्याख्यानदीपिकायां दूषणविवेकव्याख्यानो नाम
तृतीयः परिच्छेदः समाप्तः॥

**॥ ग्रन्थश्च संपूर्णः ॥**

---

विद्वन्मानसचन्द्रवृत्तिविभवा रामेण संन्यस्तिता
भाषारूपमुपेत्य बोधकतनू राराजते चन्द्रिका॥२॥

**उत्तर प्रदेश के बाँदा जनपदान्तर्गत रमपुरवा ग्राम वास्तव्य श्रीमती रामावतारी व श्री रामरूचि त्रिपाठी के पुत्र व्याकरण वेदान्त आदि शास्त्रों निष्णान्त विद्वान् पं. श्री पारसनाथ द्विवेदी के शिष्य प्रो. रामकिशोर त्रिपाठी उपनाम चन्द्रिकाप्रसाद त्रिपाठी, कृत महाविद्याविडम्बन ग्रन्थ की 'चन्द्रिका' (भाषा टीका) समाप्त हुई।**



## अथ प्रशस्तिः।

श्रीवीरः श्रेयसे भूयाच्चित्रकृच्चरितः सताम् ।
सिद्धार्थमपि सिद्धार्थतनयं यं विदुर्बुधाः ।।१।।

तत्पट्टमुकुटं श्रीमान् सुधर्मगणभृद्बभौ ।
गङ्गेव द्वादशाङ्गीयं यतो हिमवतोऽजनि ।।२।।

अभूवंस्तस्य संताने श्रीजगच्चन्द्रसूरयः ।
तदीयानुक्रमे चाथ भूरिसूरिपवित्रिते ।।३।।

श्रीमत्तपागणसरोजसरोजिनीशा
भक्तिप्रकर्षविनमत्सकलावनीशाः ।
श्रीदेवसुन्दर इति प्रथिताभिधानाः
सूरीश्वराः समभवन्भुवनप्रधानाः ।।४।। (युग्मम्)

अन्यासाध्यविशुद्धतीव्रतपसा विश्वत्रयोद्द्योतकृ-
त्तत्ताद्दग्यशसा प्रतापमहसाऽपास्तार्यमज्योतिषा ।
संपूर्णागमधारणेन हरणे नोर्व्याः समग्राशिव-
प्रोद्भूतैश्च युगप्रधानपदवीमासादयन् ये भुवि ।।५।।

श्रीमच्चन्द्रकुले तदीयविलसत्पट्टोदयाद्रौ बुधा
नव्याः केऽप्युदिताः स्फुरन्निजगवा विश्वत्रयोद्द्योतिनः ।
भास्वन्नी:पतिमित्रतामुपगताः श्रीमङ्गलोल्लासिनः
श्रीगच्छाधिपसोमसुन्दरवराचार्या विराजन्त्यमी ।।६।।

वादीन्द्रव्रजनिर्जयानलभरैर्ब्रह्माण्डभाण्डे परि-
क्षिप्य प्रौढयशःपयो गुणसितायुक्तं यदीयं विधिः ।
पाचं पाचमचिन्तनीयरसतां निन्ये तथा कोविदाः
स्वादं स्वादमहर्निशं श्रुतिमुखैस्तृप्तिं यथा यान्ति न ।।७।।

तदीयकरमाहात्म्यजलवर्द्धिष्णुवैभवाः ।
श्रीसूरयस्त्रयो भान्ति सहकारतरूपमाः ।।८।।

आद्याः श्रीमुनिसुन्दराह्वगुरवस्तेषु स्फुरत्कीर्तय-
स्तर्कव्याकरणादिशास्त्रनिपुणा राजन्ति यैर्निर्मिताः ।
हस्ताष्टाग्रशतप्रमाणकलितो लेखः सकृज्जल्पित-
प्रोद्यन्नामसहस्रधारणकला[1] ।।९।।

---

१. अतोऽपूर्णैवेयं प्रशस्तिः।

## १ परिशिष्टम्

### श्रीभुवनसुन्दरसूरिविरचितं

# लघुमहाविद्याविडम्बनम्।

स्याद्वादवादप्रबलप्रणाद-
प्रणष्टदुर्वादिमदद्विपेन्द्राः ।
गीःसिंहका यस्य विभाति देवः
स वर्धमानः श्रियमातनोतु ।।१।।

इह हि केऽपि दुर्वाराहङ्कारप्राग्भारपूरिताः श्रीसर्वज्ञोक्तहेयोपादेयविचारचातुरीदूरिताः सकलस्वाभीष्टवस्तुसाधनाय परपक्षनिषेधाय च स्वकपोलकल्पितान्येवंविधान्यनुमानानि प्रकटयन्ति। तथाहि—आत्मा शब्देतरानित्यनित्यवृत्तित्वानधिकरणनित्यवृत्तिधर्मवान् मेयत्वात् घटवत्। अत्र पराहङ्कारप्राग्भारतिरस्कारायोपक्रम्यते।

हंहो वादिन्, किमेतदनुमानम्। महाविद्यासत्कमिति चेत्। मैवम्। विद्यात्वमपि सावद्यस्य अस्यानुमानस्य विचार्यमाणं न संजाघटीति, दूरेऽस्तु हेत्वाभासः। केवलान्वयित्वेन व्यतिरेकव्याप्तेरभावात्। तथा साध्यमत्र अनित्यत्वं परमार्थतः। ततो यद्यदनित्यत्वं तत्तदश्रावणं, यथा घटपटादयः इति साध्यव्यापकश्चायमुपाधिः। शब्दस्य चानित्यत्वमद्यापि विवादास्पदीभूतम्। तस्मात्तेन व्यभिचाराभावात्सोपाधिरयं हेतुः।

अथ अत्रानित्यत्वं साध्यं न भवति, किन्तु शब्देतरानित्यनित्येत्यादिकम्। तस्य चोपाधिना व्याप्तिर्नास्ति। शब्दत्वेन व्यभिचारादिति नायमुपाधिरिति चेत्। मैवम्। अस्य हनूमल्लोललाङ्गूललम्बस्यापि अनित्ये एव विश्रामात्। साध्यं च तदेव यद्विप्रतिपन्नं प्रति पक्षे मेयत्वेन साधयितुमभिप्रेतम्। तत्तु अनित्यत्वमेव।

अथ च विरुद्धतापिशाचीजठरपिठरीप्रक्षिप्तोऽयं हेत्वाभासः। यतोऽत्र साध्यमनित्यत्वम्। तद्विरुद्धं च नित्यत्वम्। तदपि चानेन साधयितुं शक्यते एव। तथाहि—घटः शब्देतरानित्यनित्यवृत्तित्वानधिकरणानित्यवृत्तिधर्मवान्।

अपरं च अनैकान्तिकत्वदुर्धरसिन्धुरकरप्रहारविधुरोऽप्ययं हेतुर्मेयत्वादिः। तथा हि—महाविद्यासाध्ये महाविद्यासाध्यं विद्यते न वा। विद्यते चेत्, आत्मा-

श्रयः। नो चेत्तर्हि महाविद्यासाध्ये मेयत्वहेतोर्वर्तनात् महाविद्यासाध्यस्य चावर्तनात्, तस्यैव विपक्षत्वेन अनैकान्तिकः एव अयं हेतुः। तदेवं,

**दोषत्रयत्रिपथगातरङ्गप्लाविते मुहुः ।**
**हेतुतृणे विलग्नोऽपि वादिन् मङ्क्ष्यसि निश्चितम् ।।२।।**

किञ्चेयं महाविद्या केवलान्वयिव्याप्तिजीवितव्या। सैव चतुरचेतोभिश्चिन्त्यमाना नोपपद्यते। तथाहि—यद्यत्प्रमेयं तत्तदनित्यं दृष्टमिति नियमो नास्ति। आकाशादौ प्रमेयत्वेऽपि नित्यत्वात्।

अन्यच्च, अत्र आत्मनः पक्षत्वमेव न संगच्छते। 'संदिग्धसाध्यवान्पक्षः' इति पक्षलक्षणम्। तच्चात्र नास्ति। अनित्यत्वस्य शब्दे साध्यत्वेन शब्दस्यैव संदिग्धसाध्यत्वात्। आत्मनो नित्यत्वेन उभयोः सिद्धस्य तथात्वाभावात्। न हि जले शैत्ये साध्यमाने अनलः शीतलः इति केनाप्युच्यते। ततश्चात्मादयोऽत्र पक्षत्वेनोपन्यस्ताः अपि अजागलस्तनकल्पत्वेन असत्कल्पाः एव।

एवं सपक्षोऽपि पक्षीकृतो निर्लोठयितव्यः। युक्तेः समानत्वात्। यच्च साध्यं पक्षीक्रियते तदप्युक्तम्। साध्यं हि सर्वैरपि धर्मिणि साध्यते, न तु साध्ये। साध्यस्य संदिग्धसाध्यवत्त्वपक्षलक्षणाभावात्। एवमपि साधने घटोऽपि घटे, पटोऽपि पटे साध्यताम्। तार्किकव्यवहारपरित्यागात्।

यथा साध्याभावमपि पक्षीकुरुते, तदप्यसमीचीनम्। सर्वथा असतो निरुपाख्यत्वेन पक्षीकर्तुमशक्यत्वात्। असदपि चेत् पक्षीक्रियते, तदा तुरङ्गशृङ्गगगनाम्भोरुहादयोऽपि पक्षीक्रियन्ताम्। युक्तेः समानत्वात्। तुच्छे साध्याभावेऽपि साध्यसाधने दरिद्रमेव विश्वं स्यात्।

**तत एषा महाविद्या पण्यस्त्रीव सविभ्रमा ।**
**बाह्याडम्बरमात्रेण मोहयेन्न तु तत्त्वतः।।३।।**

अपिच महाविद्याहेतुः केवलान्वयी त्वया उच्यते। केवलान्वयित्वमेव विचारं नाञ्चति। यतः केवलान्वयित्वं सकलवस्तुनिष्ठत्वं त्वया अभ्युपेयते। तथा च सति प्रमेयत्वहेतुः प्रमेयत्वेऽस्ति न वा। अस्ति चेदात्माश्रयः। न चेत्तर्हि स्वस्मिन्नस्यैव अवर्तनात्केवलान्वयित्वभङ्गः। तथा महाविद्यासाध्यमपि सकलवस्तुनिष्ठं स्वीचक्राणम्। तथात्वे च महाविद्यासाध्यं महाविद्यासाध्ये

विद्यते न वा। विद्यते चेत्तर्हि व्याघातः। न हि घटे घटो वर्तते एकस्मिन् तद्द्वयप्रसङ्गात्। नो चेत्केवलान्वयित्वभङ्गः एव। ततश्च—

**नानाभरणयुक्तापि दुर्भगस्त्रीव वीक्षिता।**
**बाह्ययुक्तिगुणाप्यन्ते मोह[1]............... ।।४।।**

अति प्रसङ्गदूषणमपि महाविद्यायां स्पष्टमेव। यतोऽनेन प्रकारेण **प्रमथनाथादी**नामपि अनित्यत्वादिसाधनदर्शनात् भवतः स्वमन्दिरोदरविदारणोपायप्रसङ्गः। तथाहि—ईश्वरः स्वस्वेतरवृत्तित्वानधिकरणासर्वव्यापकनिष्ठाधिकरणं मेयत्वात् घटवत्। अथवा आकाशस्य असर्वव्यापकत्वे एतदेवानुमानम्—आकाशः स्वस्वेतरवृत्तित्वानधिकरणासर्वव्यापकनिष्ठाधिकरणं मेयत्वात् घटवत्। अयं घटः एतद्घटान्योन्यसकर्तृकान्यः मेयत्वात् गगनवत्। अनेनानुमानेन तव भूभूधरादेः सकर्तृक (त्व) साधनाभिधाने अनेनैव चास्माभिरकर्तृकत्वमपि साध्यते। तथाहि—आकाशः आकाशाङ्कुरान्यान्याकर्तृकान्यो मेयत्वात् घटवत्। अपि च अनेनैव अनुमानेन ईश्वरस्यापि सकर्तृकत्वं साधयितुं शक्यते एव। तथाहि—अयं घटः एतद्घटेश्वरान्यान्यसकर्तृकान्यः मेयत्वात् घटवत्। एवं विधानुमानैश्च विप्रोऽपि शूद्रमुद्रावान् कर्तुं शाशक्यते एव। तथाहि—विप्रः स्वस्वेतरवृत्तित्वानधिकरणाशूद्रमुद्रावन्निष्ठाधिकरणं मेयत्वात् घटवत्। तदेवं सर्वानुमानानि शब्दपरावर्तेन विपरीतानि कृत्वा वितण्डावादी निर्लोठनीयः। ततश्च—

**आप्तप्रणीतसिद्धान्तमार्गविप्लावकत्वतः।**
**तमस्विनी महाविद्या सिद्धिसौधं न गच्छति ।।५।।**

अथ वादिनः प्रतिभाक्षये जाते सति प्रतिवादिनो वा प्रतिभाक्षये कर्तव्ये महाविद्या प्रयोक्तव्येत्युच्यते भवता। तत्र वादिनस्तव प्रतिभाक्षये जाते एवंविधानुमानवल्लीवितानालम्बनेऽपि प्रतिवादिद्विरदप्रचण्डवाक्शुण्डाकृष्यमाणस्य कौतस्कुती शुभंयुता। प्रतिवादिनश्च प्रतिभाक्षयाय महाविद्याविद्याप्रयोगेऽपि प्रतिवादिनी जैने स्याद्वादतनुत्राणपरित्राणे वाचस्पतेरपि प्रवीणकृपाणीगा (?) जर्जरीभवन्ति। दूरे भवन्ति भवन्महाविद्याकोमलकमलनालप्रयोगाः। न हि कपोलपालीपरिस्रवन्मदधारादुर्धरसिन्धुरयुवा दृढैरपि तन्तुप्रयोगैः रोद्धुं पार्यते। ततश्च—

---

१. अपूर्णोऽयं श्लोकोऽधिगतः।

असंभाव्येऽपि विद्यात्वे महाविद्येति यत्कृतम् ।
नामैतस्या अपार्थं तन्मनुजो देवराजवत् ।।६।।

महाविद्याप्रयोगाणां क्षेपणाय विचक्षणैः ।
सेव्यं लघुमहाविद्याविडम्बनमिदं सदा ।।७।।

सुपर्वाभमिदं यस्य कण्ठपीठे लुठिष्यति ।
सर्पिण्योऽमूर्महाविद्या न स्फुरिष्यन्ति तत्पुरः ।।८।।

श्रीसोमसुन्दरगुरोः शिष्यः श्रीभुवनसुन्दराचार्यः ।
कृतवानेतत्प्राज्ञावृद्ध्यै विजयदायी ।।९।।

इति श्रीभुवनसुन्दराचार्यविरचितं लघुमहाविद्याविडम्बनं समाप्तम् ।।



## २ परिशिष्टम्।

### श्रीकुलार्कपण्डितप्रणीतं
### षोडशानुमानात्मकं

# दशश्लोकीमहाविद्यासूत्रम्।

**१ अपक्षसाध्यवद्वृत्तिविपक्षान्वयि यन्न तत्।**
**साध्यवद्वृत्तितायुक्तं साध्यते साध्यवर्जिते ।।१।।**

आत्मा शब्देतरानित्यनित्यवृत्तित्वानधिकरणानित्यवृत्तिधर्मवान् मेयत्वात् घटवत्।।१।।

**२ अपक्षसाध्यवद्वृत्ति विपक्षे पक्षिते न यत्।**
**साध्यवद्वृत्तितायुक्तं साध्यते तद्विपक्षगम् ।।२।।**

आकाशः आकाशशब्देतरानित्यवृत्तित्वानधिकरणानित्यवृत्तिधर्मवान्।

**३ अपक्षसाध्यवद्वृत्तिविपक्षान्वयवर्जितः ।**
**नानाविपक्षवृत्त्यन्यभिन्नधर्मोऽस्ति पक्षिते ।।३।।**

शब्दः शब्दानित्यनित्यवृत्त्यन्यनानानित्यावृत्त्यशब्दधर्मवान्।

**४ पक्षापक्षगतादन्यत्साध्यवद्द्वैधवर्जितम् ।**

गन्धवन्तो गन्धवदगन्धावृत्तिगन्धवद्वृत्त्यवृत्त्यन्यवन्तः।

**५ पक्षापक्षगतादन्यत् साध्यवद्वृत्ति पक्षगम् ।।४।।**

शब्दः शब्दाशब्दावृत्त्यनित्यवृत्तिधर्मवान् ।

**६ तत्तादात्म्यनिषेधान्यतत्स्थाभावविरोधिता ।**

नित्यत्वं स्वप्रतियोगिकान्योन्याभावातिरिक्तशब्दगताभावप्रतियोगि।

**७ स्वीकृतानन्यवृत्तित्वसंपन्नान्यत्वसाधनम् ।।५।।**

शब्दाधिकरणं शब्दाधिकरणादन्यत्।

**८ पक्षापक्षविपक्षान्यवर्गादिकैकमुद्धृतम् ।**
**भिन्नं साध्यवतस्तद्वदुद्धृतावधिभेदिनः ।।६।।**

अयं घटः एतद्घटाङ्कुरान्यान्यसकर्तृकान्यः।

**९ तस्यैव तदवृत्तेन योगो वात्र प्रसाध्यते।**

अयं घटः एतद्घटाङ्कुरान्यान्यसकर्तृकावृत्तिमान्।

**१० तद्वृत्त्यवृत्तिरथवा प्रोद्धृतेऽत्र प्रसाध्यते।।७।।**

यथा—अयं घटः एतद्धटाङ्कुरान्यान्यसकर्तृकधर्मविरही।

**११ असाध्यान्यवियुक्तान्यव्यावृत्तिर्वा प्रसाध्यते।**

शब्दः साध्याभावान्यैतद्वियुक्तान्यव्यावृत्तिमान्।

**१२ असाध्यतद्वियुक्तान्यव्यावृत्तिर्वा प्रसाध्यते।।८।।**

शब्दः साध्याभावतद्वियुक्तान्यव्यावृत्तिमान्।

**१३ पक्षेषु ये सन्ति विवादहीनाः**
**विहाय तानन्यतरः प्रसाध्यः।**

शब्दः संप्रतिपन्नैतन्निष्ठान्यधर्मवान्।।

**१४ पक्षोऽथवा साध्यविनाकृतेन,**

शब्दः साध्यव्यतिरिक्तैतद्धर्मातिरिक्तधर्मवान्।

**१५ विच्छिद्य वाऽभाववदन्वितेन।।९।।**

शब्दः शब्दनित्यावृत्तिधर्मवान्।

**१६ अपक्षसाध्यवद्वृत्तिविपक्षान्वयि यन्न तत्।**
**साध्याश्रयविपक्षान्यविपक्षे व्यतिरेकभाक्।।१०।।**

यथा—शब्दः शब्देतरानित्यनित्यावृत्त्याकाशान्यनित्यमात्रवृत्तित्वानधिकरणाकाशधर्मवान्।

**इति षोडशानुमानात्मिकदशश्लोकीमहाविद्यासूत्रं समाप्तम्।।**



३ परिशिष्टम्।

# अथ महाविद्याविवरणम्।

श्रीभुवनसुन्दरसूरिविरचितटिप्पनसमेतम्।

श्रुतिमयतनु केचित्केचिदानन्दरूपं
विगलिततनु केचित्केचिदच्छस्वरूपम्।
अभिदधति यदेकं तन्नमामीह जन्म-
स्थितिलयपरितापारम्भहीनं स्वरूपम्।।१।।

श्रीभुवनसुन्दरसूरिविरचितं

## महाविद्याविवरणटिप्पनम्।

श्रियो धाम श्रीमज्जिनवरपदाम्भोजयुगलं
गिरं देवीं चेतोऽभिमतफलदाने सुरमणीम्।
नमस्कृत्यानन्दाद्गुरुचरणयुग्मं च विधिना
महाविद्यावृत्तेः किमपि करवै टिप्पनमहम्।।१।।

प्रायष्टीकाकृतैतस्या रहस्यं न प्रकाशितम्।
रहस्याख्यानपूर्वं तद्वृत्तिर्व्याख्यायते मया।।२।।

महाविद्याबृहद्वृत्तिर्व्याख्याता प्रायशो मया।
विडम्बनस्य टीकायां विलोक्या सा तदर्थिभिः।।३।।

अथ महाविद्या कथं समुत्पन्नेति वाच्यमार्याद्वयमुच्यते।

भाट्टा नित्यं शब्दं यौगाद्या वादिनस्त्वनित्यं च।
प्रतिजानते ततोऽयं जातस्तेषां विवादोऽत्र।।४।।

तत्तस्यानित्यत्वं प्रतिपादयितुं तु भाट्टवादीन्द्रान्।
यौगाचार्यो वर्यः कृतवानेतां महाविद्याम्।।५।।

अथ सामान्यतो महाविद्यास्वरूपप्रकाशकं पद्यत्रयमुच्यते। तथाहि—

**अन्वयव्यतिरेकित्वोपेतमूलानुमाविधौ ।**

**महाविद्यानुमानं तु प्रयोज्यं केवलान्वयि ।।६।।**

अथैतस्य व्याख्या। यत्र मूलानुमानं मुख्यानुमानं अन्वयव्यतिरेकि स्यात्, तत्र महाविद्यानुमानं प्रयोज्यम्। किंविशिष्टम्। केवलान्वयि। तथाहि—अनित्यः शब्दः कृतकत्वात् घटवत्। व्यतिरेके गगनमित्यत्रान्वयव्यतिरेकिणि मूलानुमाने महाविद्यानुमानं यथा—आत्मा शब्देतरानित्यनित्यवृत्तित्वानधिकरणेत्यादि। इदं च केवलान्वय्येवेति श्लोकार्थः।

महाविद्यानुमानेषु सर्वेष्वेते भावा विचार्याः। तथाहि—

**शब्दस्यास्थिरतोपलक्षणमिदं साध्यं तु चित्तेप्सितं**

**दृष्टान्ताय च केवलान्वयितया स्थाप्याः पदार्थाः समे।**

**सर्वत्रैव यथार्थसिद्धि युगलावृत्तिर्विचार्या त्रिधे-**

**त्याद्यं सर्वमवेक्षणीयमखिलप्रौढानुमानेष्विह ।।७।।**

अत्र महाविद्यानुमानेषु यत् शब्दस्यानित्यता साध्यते तदुपलक्षणम्। तेनानेन प्रकारेण स्वचित्तेप्सितं नित्यत्वानित्यत्वसत्त्वासत्त्वपौरुषेयत्वापौरुषेयत्वसकर्तृकत्वाकर्तृकत्वादि सर्वं साधनीयम्। तत्र शब्दस्यानित्यतासाधनाय विपक्षं पक्षीकृत्य महाविद्यानुमानं दर्श्यते। तथाहि—आत्मा शब्देतरानित्यनित्यवृत्तित्वानधिकरणानित्यवृत्तिधर्मवान् मेयत्वात् घटादिवत्। तथा अनेनैवानुमानेन श्रुतेः पौरुषेयत्वं साध्यते। तथाहि—आत्मा श्रुतीतरपौरुषेयापौरुषेयवृत्तित्वरहितपौरुषेयनिष्ठाधिकरणं मेयत्वात् घटादिवत्। एवमनेन प्रकारेणान्यदपि सर्वानुमानैः सर्वं साधनीयम्। **दृष्टान्तायेत्यादि।** अत्र महाविद्यानुमानेषु सर्वे नित्या अनित्याश्च पदार्थाः तद्धर्माश्च दृष्टान्तीकार्याः। पक्षं पक्षतुल्यं च वर्जयित्वा पक्षतुल्यानां पक्षवत्सन्दिग्धसाध्यवत्त्वात् पक्षे विवक्षितसाध्यसाधने पक्षतुल्येऽपि तत्साध्यसिद्धेश्च। अत्र च सर्वेऽपि सपक्षाः कुत इत्याशङ्कायां केवलान्वयितयेत्युक्तम्। महाविद्याहेतोः केवलान्वयित्वात्, केवलान्वयिनि च विपक्षाभावात्, सर्वेऽपि पदार्थाः सपक्षा एव। **सर्वत्रैवेत्यादि।** सर्वमहाविद्यानुमानेषु प्रायो युगलावृत्तिर्विचार्या त्रिधा। तथाहि—यो धर्मो नित्ये एव केवले वर्तते, न अनित्ये, सोऽपि नित्यानित्यरूपे युगले न वर्तते,। तथा अनित्ये एव केवले यो धर्मो वर्तते न नित्ये, सोऽपि नित्यानित्ययुगले न वर्तते।तथा यो नित्ये अनित्येऽपि च

न वर्तते, सोऽपि नित्यानित्ययुगले न वर्तते। आत्मा शब्देतरानित्यनित्यवृत्तित्वरहितानित्यवृत्तिधर्मवानित्यत्र चानुमाने पक्षीकृते आत्मनि साध्यो धर्मः शब्दात्मान्यान्यत्वादिः। स च नित्ये आत्मनि वर्तते, न शब्देतरानित्ये। ततः स शब्देतरानित्यनित्यरूपयुगलावृत्तिरुच्यते। अत्र च दृष्टान्ते घटादौ विचार्यमाणा घटत्वादयो धर्माः घटादिरूपेऽनित्ये एव वर्तन्ते, न नित्ये। तेऽपि शब्देतरानित्यनित्यरूपयुगलावर्तिनः उच्यन्ते। तथा क्वाप्युभयत्राप्यवर्तिनो ये भवन्ति तेऽपि युगलावर्तिनो भवन्तीत्यर्थः। इत्यादि सर्वं यथार्थसिद्धि अर्थसिद्ध्यनतिक्रमेण विचार्यमिति काव्यार्थः।

**एवंविधं साध्यमनित्यतां विना**
**शब्दस्य नोत्पद्यत एव तस्मात्।**
**शब्दोऽस्थिरः स्यादिति पारिशेष्यात्**
**सर्वानुमानेष्विह साध्यसिद्धिः ।।८।।**

एवंविधं शब्देतरानित्यनित्यवृत्तित्वानधिकरणानित्यवृत्तिधर्मवानित्यादिरूपं महाविद्यासाध्यं शब्दस्यानित्यतां विना पक्षीकृते आत्मनि न संभवति। तस्माच्छब्दोऽनित्यः स्वीकार्यः इत्येवंविधपारिशेष्याच्छब्दस्यानित्यत्वरूपसाध्यसिद्धिः स्यादिति। परिशेषलक्षणं च "**प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः परिशेषः**" इति ज्ञेयम्। एवं सर्वमहाविद्यानुमानेषु विवक्षितसाध्यसिद्धिर्विधेयेति पद्यार्थः।

इह हि सर्वः कोऽपि ग्रन्थारम्भे अभीष्टदेवतानमस्कारपूर्वं प्रवर्तते इति पूर्वपुरुषमार्गमनुस्मरन् **कुलार्कपण्डित**निर्मितमहाविद्यावृत्तिं चिकीर्षुर्वृत्तिकारः आदावभीष्टदेवतानमस्कारमाह—**श्रुतिमयतनु केचित्केचिदानन्दरूप**मित्यादि। तत्स्वरूपं परमात्मरूपं अहं नमामि। तत्किं। यदभिदधति। के कर्तारः। केचित् नित्यस्फोटवादिनो वैयाकरणाः किंविशिष्टम्। **श्रुतिमयेति।** श्रुतयो वेदाः ता एव रूपं यस्याः तन्वाः सा श्रुतिमयी, तथाविधा तनुर्यस्य तत्तथा। केचिद्वेदान्तादिमतानुसारिणः आनन्दरूपं आनन्दः एव रूपं स्वरूपं यस्य तत्तथा। केचिन्नैयायिकादयो विगलिततनु अशरीरमित्यर्थः। तथा केचित्सांख्यादयः अच्छं निर्मलमित्यर्थः। पुनः किंविशिष्टं। **जन्मेत्यादि।** जन्म जननं, स्थितिः सावधिकमवस्थानं संसारदशायामवस्थानमित्यर्थः। लयो विपत्तिः। तैः कृतो यः परितापः, तस्य यः आरम्भः, तेन हीनम्। एतावता

जन्मस्थिति-विनाशरहितमिति यावत्। एवंविधं च ब्रह्मस्वरूपं योगिनामेव गम्यं, न त्वस्मदादीनामित्यर्थः। ग्रन्थान्तरेऽपि चैवमेव परमात्मस्वरूपं प्रत्यपादि। तथाहि—

**'नेन्दोः कला न गिरिजा न कपालशक्ति-**
**र्नोक्षा न भस्म न जटा न भुजङ्गहारः।**
**यस्यास्ति नान्यदपि किञ्चिदुपास्महे त-**
**द्रूपं पुराणमुनिशीलितमीश्वरस्य।।'**

अन्यत्रापि। 'अपाणिपादो ह्यमनो ग्रहीता' इत्यादि। अपरत्र च 'निर्मलनिश्चलनिष्क्रियरूपमि'त्यादि। इतरत्र च—'न रूपं नो गन्धः' इत्यादि।।१।।

**महाविद्यानिगूढार्थदर्शनी दीपिका मया।**
**क्रियते धीमतामन्तस्तमोविच्छित्तिहेतवे।।२।।**

**भुवन.**—महाविद्यावृत्तिरीदृशी मया आरभ्यमाणास्तीति श्लोकं वृत्ति-कृदाह—**महाविद्यानिगूढार्थेत्यादि**। स्पष्टमेतत।।२।।

**पदाक्षेपः पूर्वं तदनु परिपाटीविघटनं**
**विपक्षव्यावृत्तिस्तदनु तदनु स्वार्थकथनम्।**
**ततस्तेषा वृत्तिः प्रतिभटमुपक्रम्य विरले**
**स्थले कार्येत्येवं विवरणमिदं नः प्रभवति।।३।।**

**भुवन.**—महाविद्यावृत्तौ ग्रन्थकारोऽभिधेयपरिपाटीमाह—**पदाक्षेपः पूर्वं तदनु परिपाटीविघटनमित्यादि**। पदाक्षेपः पदव्याख्यापदविग्रहपदयोजनादि-रूपः परिपाटी क्रमः, तस्या विघटनं व्यावृत्त्यचिन्तेत्यर्थः। व्यावृत्त्यचिन्तायाः पदक्रमविघटनारूपत्वात्। विपक्षस्य परोद्भावितस्य स्वयं शङ्कितस्य वा व्यावृत्तिरेतावता पराशङ्काया व्यावृत्तिः। स्वार्थस्य शब्दानित्यत्वाद्यपर्य-वसानलभ्यार्थस्य कथनम्। तेषां पदानां वृत्तिर्व्याख्या साध्यधर्मदृष्टान्त-धर्मकथनादिरूपा कार्येत्यन्वयः। प्रतिभटं प्रतिवादिनं प्रति उपक्रम्य विरले क्वापि क्वापि स्थले अधिकारविशेषे इत्यर्थः। इत्येवं प्रकारेण नः अस्माकं विवरणं वृत्तिरर्थव्याख्याविधौ समर्थं भवतीत्यर्थः। यतोऽन्यत्रापि विवरणलक्षणमेवमेव प्ररूपितम्—

उपोद्घातः पदं चैव पदार्थः पदविग्रहः ।
चालना प्रत्यवस्थानं व्याख्या तन्त्रस्य षड्विधा ।।—इति

विवक्षितप्रकरणसिद्ध्यर्थं या चिन्ता सा उपोद्घातः । तथा चोक्तम्—'चिन्तां प्रकृतसिद्ध्यर्थमुपोद्धातं प्रचक्षते'।—इति।। शेषं तु सुगमम् ।।३।।

**इह खलु केचित्संबन्धप्रयोजनाद्यनभिधानेन असमीचीनत्वमाक्षिपन्ति। तथाहि—प्रकरणेनापि प्रवर्तमानेन किमपि प्रतिपाद्यं संबन्धं वा कमप्यपेक्ष्य आदितः प्रवर्तनीयम्। यतः**

**भुवन.**—ननु संबन्धप्रयोजनाद्यभिधानाभावेन प्रकरणमेवेदं न स्यादित्याशङ्कते—**इह खलु केचित्संबन्धप्रयोजनाद्यनभिधानेनेत्यादि**। संबन्धो विषयविषयिभावलक्षणो वाच्यवाचकभावलक्षणो वा। प्रयोजनं अनन्तर-परभेदभिन्नं कर्तृश्रोत्रसंबन्धि, तयोरनभिधानेन असमीचीनत्वमाक्षिपन्ति उद्भावयन्ति। केऽपीति संबन्धः। **तथाहि—प्रकरणेनापीत्यादि**। प्रकरणेनापि प्रतिपाद्यमभिधेयं संबन्धं वा पूर्वोक्तमपेक्ष्य प्रवर्तनीयम्।

**'शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम् ।**
**आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः'**

**इति हि तल्लक्षणात्। अत्र च तस्याभावादिति। तदपि न विद्वन्मानसमानन्दयति। तस्य सर्वस्यात्र सत्त्वात्। तथाहि—शास्त्रप्रतिपादितार्थैकदेशसंक्षेपकं हि प्रकरणम्। इदमपि तथा। अतः शास्त्रीयैरेव तैरिदमपि तद्वत्। भिन्नोक्तौ ग्रन्थबाहुल्येन प्रकरणत्वव्याघातात्। तस्मात्साधुरेवारम्भः। अत्रापि छलप्रतिवादिनः सर्वमयथावन्मन्यमानस्य प्रमाणेन पूर्वं मुखमुद्रणार्थं पक्षस्य तावदनेकत्वमुदाहरणैरेव सूचितम्।**

**भुवन.—शास्त्रैकदेशसंबद्धमित्यादि**। प्रमाणप्रमेयादिसर्ववस्तुप्रति-पादकस्य शास्त्रस्य यः एकदेशः प्रमाणप्रतिपादनादिरूपः तेन संबद्धम्। यथा प्रमाणतद्भेदतदन्यलक्षणादिप्रतिपादनपरं **न्यायसारादि** प्रकरणम्। शास्त्रकार्यं मोक्षादि। शास्त्रस्य मुख्यत्वेन मोक्षार्थत्वात्। तस्मादन्यत्कार्यं शास्त्रकार्यान्तरं प्रमाणप्रमेयप्रतिपादनादिरूपम्। तस्मिन्स्थितम्। एवं विधं ग्रन्थभेदं विपश्चितो विद्वांसः प्रकरणं प्राहुरित्यर्थः।

**तस्य सर्वस्येति।** तस्य प्रकरणलक्षणस्येत्यर्थः। **शास्त्रीयैरेव तैरित्यादि।** शास्त्रीयैः शास्त्रसंबन्धिभिरेव तैः संबन्धप्रयोजनादिभिरिदमपि तद्वत् संबन्धप्रयोजनादिवत्। संबन्धश्चात्र विषयविषयिभावादिः। विषयो महाविद्यानुमानानि, विषयी चैतत्प्रकरणमेव, प्रयोजनं च शब्दानित्यत्वादिसाधनरूपमत्र मन्तव्यम्। तस्मात्तद्वत्त्वेन प्रकरणमेवेदम्। संबन्धप्रयोजनादीनां भिन्नोक्तौ पृथगुक्तौ ग्रन्थबाहुल्येन प्रकरणत्वव्याघातात्। संबन्धप्रयोजनादीनां तु पृथगुक्तौ शास्त्रमेवेदं स्यात्, न तु प्रकरणमित्यर्थः।

**यतः—**

**पक्षत्वं हि क्वचिदपि भजत्यत्र मिथ्या सपक्षः**
**पक्षीकार्यः क्वचिदपि विपक्षोऽपि वालीक एव।**
**पक्षः साक्षात्क्वचिदपि भजत्यन्यपक्षस्य कक्षा-**
**मेवं पक्षः श्रयति बहुधा रूपभेदं नवीनम्।।**

**विपक्षसपक्षयोस्तु पक्षीकरणमव्यभिचरणार्थमेव। तयोस्तव्द्याहतमितिचेत्। न। उपलक्षणत्वेन अविरोधात्।**

**भुवन.—पक्षत्वं हि क्वचिदपि भजत्यत्र मिथ्या सपक्षः इत्यादि।** मूलानुमानसपक्षो घटादिः क्वापि मिथ्यैव पक्षत्वं भजते। स्वाभिमतसाध्यस्य शब्दरूपे पक्षे एव सिद्धेः मिथ्येत्युक्तम्। एवमग्रेऽपि पदसाफल्यं स्वयं ज्ञेयम्। क्वचिदपि मूलानुमानविपक्षोऽपि गगनादिः पक्षीकार्यः। साक्षात्पक्षः शब्दरूपः क्वचिदप्यन्यपक्षस्य सपक्षादेः कक्षां प्रतिज्ञां भजते। सपक्षविपक्षादिकं वा पक्षीकृत्य प्रवर्तमानमहाविद्यासु शब्दरूपपक्षस्यापि सपक्षत्वात्। **विपक्षसपक्षयोस्तु पक्षीकरणमव्यभिचरणार्थमेवेति।** अत्र महाविद्यायां विपक्षसपक्षयोः पक्षीकरणमव्यभिचरणार्थम्। अयमर्थः—पक्षस्यैव पक्षीकरणे पक्षे विपक्षे सपक्षे च वर्तनाद्धेतोर्व्यभिचारः स्यात्। ततः तन्निवर्तनाय विपक्षसपक्षयोः पक्षीकरणम्। तथा च व्यभिचारस्थानं विपक्षोऽपि यदि पक्षीकृतः, तर्हि विपक्षाभावात् क्वापि व्यभिचारो न भवेदित्यर्थः। **तयोस्तव्द्याहतमिति चेदिति।** तयोः विपक्षसपक्षयोः तत्पक्षीकरणं व्याहतमिति चेत्, इत्युक्ते आचार्यः आह—**न। उपलक्षणत्वेनेत्यादि।** पक्षपक्षीकरणस्योपलक्षणत्वेन विपक्षसपक्षयोरपि पक्षीकरणस्याविरोधात्।

**ननु उपलक्षणत्वमपि कदाचित्संबन्धिनि भवति। विपक्षसपक्षयोस्तु पक्षत्वेन संबन्धाभावात्कथं तदिति चेत्। न। यद्रजतमभात् सैषा शुक्तिरित्यत्र रजतस्य शुक्तिकोपलक्षकत्ववदुपपत्तेः, लिप्यक्षराणां वर्णोपलक्षकत्वमिव वेदान्तिमते मायाया ब्रह्मोपलक्षकत्वमिवेति। न च रजतादीनां शुक्त्यादिविशेषणत्वात् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति वाच्यम्। विशेषणस्य विद्यमानत्वव्याप्तत्वात्, विद्यमानत्वव्यापकनिवृत्तौ निवर्तनादिति।**

**भुवन.**—नोदकः आह—**ननूपलक्षणत्वमपीति।** उपलक्षणत्वमपि कदाचित्संबन्धिनि कदाचिद्येन सह संबन्धः स्यात्तत्र भवति। 'कदाचित्संबद्धं व्यावर्तकमुपलक्षणमि'ति तल्लक्षणात्। **कथं तदिति।** तदुपलक्षणत्वं कथमित्यर्थः। आचार्यः आह—**न। यद्रजतमित्यादि।** यत्पूर्वं भ्रान्तावस्थायां रजतमभात्, प्रत्यभात्, सैषा शुक्तिरित्यत्र रजतस्य शुक्तिकोपलक्षकत्ववत् शुक्तिकाप्रत्यायनमिव पूर्वोक्तोपलक्षणत्वोपपत्तेः।

अयं भावः—यथा पूर्वप्रतिभातरजतेन शुक्तिकोपलक्ष्यते, तथा पक्षस्य पक्षीकरणेन विपक्षसपक्षयोरपि पक्षीकरणमुपलक्ष्यते इति। पुनरपि दृष्टान्तद्वयेनैतदेव द्रढयति—**लिप्यक्षराणां वर्णोपलक्षकत्वमिवेति।** लिप्यक्षराणां गौर्जरकार्णाटान्ध्रादिलिप्यक्षराणां पुस्तकादिलिखितानां श्रोतृग्राह्यज्ञानमयवर्णोपलक्षकत्वमिव। **वेदान्तिमते इत्यादि।** वेदान्तिमते संसाररूपमायायाः अविद्येपि नाम्न्याः यथा ब्रह्मोपलक्षकत्वं परब्रह्मोपलक्षकत्वमित्यर्थः। अयमत्र भावः। असत्यं हि सत्याधारे भवति, शुक्तिकायां यथा रजतप्रतिभासः। एवमत्रापि मायायाः प्रपञ्चरूपायाः असत्यत्वेन केनापि तदाधारेण सत्येन भाव्यम्। सत्यं च विचार्यमाणं ब्रह्मैव, अन्यस्य सर्वस्य प्रपञ्चान्तर्गतत्वादित्यनेन प्रकारेण मायाया ब्रह्मोपलक्षकत्वमित्यर्थः **न च रजतादीनामित्यादि।**

पक्षपक्षीकरणस्योपलक्षणत्वेन विपक्षसपक्षयोः पक्षीकरणं दार्ष्टान्तिकं, रजतस्य शुक्तिकोपलक्षकत्वं दृष्टान्तः, तत्र च यद्रजतमभात् सैषा शुक्तिरित्येवं रजतं विशेषणभूतं सत् शुक्तिकां गमयति, पक्षपक्षीकरणं चोपलक्षणत्वेन विपक्षसपक्षयोः पक्षीकरणं गमयति, अतो दृष्टान्तदार्ष्टान्तिकयोः वैषम्यमिति न च वाच्यम्। **विशेषणस्य विद्यमानत्वव्याप्तत्वादिति।** विशेषणस्य विद्यमानत्वेन व्यापकेन व्याप्तत्वात्। 'सर्वदा संबद्धं व्यावर्तकं विद्यमानं विशेषणमि'ति तल्लक्षणात्। व्याप्यत्वं च यद्यद्विशेषणं तत्तद्विद्यमानमिति तयोर्व्याप्तिसद्भावादित्यर्थः। **विद्यमानत्वव्यापकनिवृत्तौ निवर्तनादिति।**

विद्यमानत्वस्य व्यापकस्य निवृत्तौ विशेषणस्य व्याप्यस्य निवर्तनात्। विद्यमानत्वं हि व्यापकं रजतादेर्निवृत्तं सत् विशेषणत्वमपि रजतादेर्निवर्तयति। तस्माद्रजतादिकमुपलक्षणत्वेनैव स्वीकार्यं, न तु विशेषणत्वेन। उपलक्षणं वा अविद्यमानमपि स्यात्, न तु विशेषणम्। तस्माद्रजतादिवदुपलक्षणत्वेन विपक्षसपक्षयोः पक्षीकरणं युक्तमेवेत्यर्थः।

## (अथ प्रथमानुमानम्।)

**तत्र प्रथमं तावत् शब्दानित्यत्वानुमानम्। तत्रापि तस्यानुमानस्य संग्राहकः श्लोको यथा–अपक्षेति।**

**१ अपक्षसाध्यवद्वृत्तिविपक्षान्वयि यन्न तत्।**
**साध्यवद्वृत्तितायुक्तं साध्यते साध्यवर्जिते ।।१।।**

आत्मा शब्देतरानित्यनित्यवृत्तित्वानधिकरणानित्यवृत्तिधर्मवान् मेयत्वात् घटवत्।

**तस्यायमर्थः–अपक्षो यः साध्यवान् सः अपक्षसाध्यवान्। सपक्षः इत्यर्थः। तत्र सपक्षे वर्तमानं यत् तत् अपक्षसाध्यवद्वृत्ति। विपक्षे अन्वयो यस्य तत् विपक्षान्वयि। अपक्षसाध्यवद्वृत्ति च तत् विपक्षान्वयि च इत्यपक्षसाध्यवद्वृत्तिविपक्षान्वयि। तत् यत् न भवति तत् अपक्षसाध्यवद्-वृत्तिविपक्षान्वयि यन्न। सपक्षविपक्षावृत्तीत्यर्थः। तत्साध्यते इति संबन्धः। किंभूतम्। साध्यवद्वृत्तितायुक्तम्। साध्यवान् सपक्षः, तत्र वर्तते इति साध्यवद्वृत्ति, तस्य भावः इति यावत्।**

## (अथ प्रथमानुमानम्।)

**भुवन.**—तत्र प्रथमं तावच्छब्दानित्यत्वानुमानस्य सङ्ग्राहकं श्लोकं व्याचिख्यासुराह—**अपक्षेतीति।**

**'अपक्षसाध्यवद्वृत्तिविपक्षान्वयि यन्न तत्।**
**साध्यवद्वृत्तितायुक्तं साध्यते साध्यवर्जिते' ।।१।।**

अस्यायमर्थः—अपक्षो यः साध्यवान् सोऽपक्षसाध्यवान् . सपक्षः इत्यर्थः। तत्र सपक्षे घटादौ वर्तमानं यत्तत् अपक्षसाध्यवद्वृत्ति। विपक्षे गगनादौ अन्वयो यस्य तद्विपक्षान्वयि। अपक्षसाध्यवद्वृत्ति च तद्विपक्षान्वपि चेति

अपक्षसाध्यवद्वृत्तिविपक्षान्वयि। तद्यत्र भवति तदपक्षसाध्यवद्वृत्तिविपक्षान्वयि यत्र। सपक्षविपक्षावृत्तीत्यर्थः। तत्साध्यते इति संबन्धः। किंभूतम्। साध्यवद्वृत्तितायुक्तं साध्यवान्सपक्षः, तत्र वर्तते इति साध्यवद्वृत्ति। तस्य भावः साध्यवद्वृत्तिता, तया युक्तम्। ननु अपक्षसाध्यवद्वृत्तीत्यादिभणनात् महाविद्यानुमानसाध्यस्य सपक्षे विपक्षे च वृत्तिता निषिद्धा। ततस्तत्साध्यवद्वृत्तितेत्यादिभणनात् साध्यवद्वृत्तितायुक्तं साध्यवर्जिते विपक्षे यदि साध्यते, तदा सपक्षविपक्षवृत्तितैव तस्य स्यात्।

तथा च कारिकापूर्वार्द्धोत्तरार्द्धयोर्विरोधः एवापद्यते इति चेत् न। अत्र सपक्षविपक्षयोरवृत्तिता या प्रोक्ता सा युगलावृत्तित्वेन। तथा च सति यो धर्मो विपक्षे साध्यते स सपक्षे नास्ति। शब्दात्मान्यान्यत्वादेः शब्दात्मभ्यामन्यत्र घटादिसपक्षेऽवर्तनादिति स सपक्षविपक्षयुगलावृत्तिरुच्यते। एवंभूतश्च विपक्षे साध्यते। ननु तर्हि स धर्मः शब्दात्मान्यान्यत्वादिः साध्यवद्वृत्तिः कथम्। सत्यम्। अत्र शब्दात्मान्यान्यधर्मस्य शब्दात्मनोरन्यत्रावर्तनात् साध्यवद्वृत्तित्वं तदैव, यदि शब्दः साध्यवान्स्यादिति परिशेषप्रमाणेन शब्दः एव साध्यवान् जातः। तथा च स धर्मः साध्यवति शब्दे वर्तमानो भवतीति साध्यवद्वृत्तित्वं तस्य धर्मस्येति न कश्चिद्विरोधगन्धोऽपि बुद्धिमद्भिरपि शक्यते इति।

**इदानीं श्लोकानुमानपदयोजनिका–**

**अत्र शब्देतरानित्येत्यनेन अपक्षसाध्यवद्वृत्तीति व्याख्यातम्। नित्यवृत्तित्वेत्यनेन विपक्षान्वयीति। अनधिकरणेत्यनेन यत्रेति। अनित्यवृत्तिधर्मवानित्यनेन साध्यवद्वृत्तितायुक्तमिति। आत्मेत्यनेन च साध्यवर्जिते इति। इति पदयोजना।।**

**भुवन.—अथानुमानम्।** आत्मा शब्देतरानित्यनित्यवृत्तित्वानधिकरणानित्यवृत्तिधर्मवान् मेयत्वात् घटवत्। अत्र कारिकायां यादृक्षं लक्षणमुक्तं तादृगेवानुमानेऽपि दर्शयितुं श्लोकानुमानपदयोजनं विधत्ते—**इदानीं श्लोकानुमानेति।** श्लोकश्चानुमानं च श्लोकानुमाने, तयोः परस्परं पदयोजनिका। **अत्र शब्देतरानित्येत्यनेनेति।** वृत्तीत्यग्रेतनपदोक्तमपि द्वयोः संबन्धित्वादत्रापि संबध्यते। तेन शब्दादितरे ये अनित्याः तत्र वृत्तीत्येतावताऽपक्षसाध्यवद्वृत्तीति व्याख्यातम्। यतः शब्देतरानित्येषु यद्वर्तते तन्मूलानुमानापेक्षया सपक्षाः ये अनित्याः घटादयः तेषु वर्तते एव। **नित्यवृत्तित्वेत्यनेन विपक्षान्वयीति व्याख्यातम्।** यतो यन्नित्ये वर्तते

तन्मूलानुमानापेक्षया विपक्षे गगनादौ वर्तते एवेति। **अनधिकरणेत्यनेनेति।** शब्देतरानित्यवृत्तित्वस्य अनधिकरणमिति भणनात् श्लोकमध्यस्थं तन्त्रेति व्याख्यातम्। युगलावृत्तित्वेनोभयोर्न वर्तत एवेत्यर्थः। **अनित्यवृत्तिधर्मवानित्यनेनेत्यादि।** योऽनित्यवृत्तिधर्मवान् स धर्मः साध्यं मूलानुमानापेक्षयाऽनित्यत्वम्। तद्वाननित्यः तत्र वर्तते एवेति भावः। **आत्मेत्यनेनेति।** आत्मा तदैव पक्षीकृतो यदि साध्यमनित्यत्वं, तेन वर्जिते पक्षे साध्यं साध्यते इति योजना।

**अथ व्यावृत्त्यचिन्ता—**

**आत्मा अनित्यवृत्तिधर्मवानिति कृते सत्तया सिद्धसाधनम्। तदर्थं शब्देतरानित्यवृत्तिधर्मवानिति कृतम्। तथा च सत्ताव्यावृत्तिः। तस्याः शब्देऽपि वर्तमानत्वात्। तथापि द्रव्यत्वेन सिद्धसाधनम्। तदर्थं नित्यवृत्तित्वानधिकरणेति प्रक्षिप्तम्। द्रव्यत्वं नित्येष्वपि वर्तते। तथा चैवमनुमानं स्यात्, आत्मा शब्देतरानित्यनित्यवृत्तित्वानधिकरणधर्मवानिति। तथाप्येवंभूतधर्मस्य युगलावृत्तेरात्मनि आत्मत्वस्यैव संभवात्सिद्धसाधनम्। तदर्थमनित्यवृत्तीत्युक्तम्।**

**भुवन.—अथ व्यावृत्त्यचिन्तेति।** व्यावृत्त्यानि व्यावर्तनार्हाणि यानि पदानि तेषामेतत्पदं किमर्थं प्रक्षिप्तमित्यादिरूपा चिन्ता व्यावृत्त्यचिन्ता। एवं सर्वत्रापि ज्ञेयम्। **आत्मा अनित्यवृत्तिधर्मवानिति कृते सत्तया सिद्धसाधनमिति।** सत्ता नित्यानित्ययोर्धर्मः, स चात्मन्यपि विद्यते एव। आत्मनि सत्तासाधनेऽनुमानमप्ययुक्तम्। आत्मनि सत्तायाः उभयोरपि सिद्धत्वात्। **तदर्थं शब्देतरानित्येति।** ये शब्दे धर्माः सन्ति तेभ्यः इतरे ये अनित्यधर्माः तद्वानात्मा। एवं कृते सत्ताव्यावृत्तिः। सत्तायाः शब्देऽपि भावात्। **तथापि द्रव्यत्वेन सिद्धसाधनमिति।** द्रव्यत्वं शब्दे नास्ति। शब्दस्य **वैशेषिकादि**मतेनाकाशगुणत्वात्, अनित्येष्वपि वर्तमानत्वाच्च। तेन तद्वानात्मा स्यात्। तथा च सिद्धसाधनं स्यात्। द्रव्यत्वस्यात्मनि वादिप्रतिवादिनोरुभयोरपि सिद्धत्वादित्यर्थः। **तदर्थं नित्यवृत्तित्वानधिकरणेति प्रक्षिप्तम्। द्रव्यत्वं नित्येष्वपि वर्तते इति।** एवंविधो धर्मः नित्यवृत्तित्वानधिकरणं विलोक्यते, द्रव्यत्वं च नित्येष्वपि वर्तते। तस्मान्नित्यवृत्तित्वाऽनधिकरणेति ग्रहणेन तन्निषिद्धमित्यर्थः तथा चैवमनुमानं स्यात्, आत्मा शब्देतरानित्यनित्यवृत्तित्वानधिकरणधर्मवानिति। **तथाप्येवंभूतस्येति।** आत्मत्वं हि नित्यवृत्त्यस्ति,

न तु अनित्यवृत्तीति पूर्वोक्तयुगलावृत्तिप्रकारेण तत् शब्देतरानित्यनित्य-वृत्तित्वानधिकरणमुच्यते। अतः तेन सिद्धसाधनं स्यादेवेति। **तदर्थमनित्य-वृत्तीत्युक्तमिति।** एवंविधो धर्मः अनित्यवृत्तिर्विलोक्यते। आत्मत्वं चानित्यवृत्ति नास्ति। नित्ये एव आत्मनि तस्य वर्तनात्। तस्मात्तन्निषिद्धमित्यर्थः।

**ननु आत्मा शब्देतरधर्मवानिति क्रियतामिति चेत्। न आत्मत्वेनैव सिद्धसाधनात्। तस्य आत्मधर्मत्वेन शब्देतरधर्मत्वात्। तदर्थं नित्यवृत्ति-त्वानधिकरणेत्युक्तम्। तथापि विरोधः। आत्मवृत्तित्वे नित्यवृत्तित्वानधि-करणत्वानुपपत्तेः। तदर्थमनित्यपदग्रहणम्। तथाप्यात्मत्वादि युगलावृत्त्यपि भवति। आत्मन्येव वर्तनात्। तदर्थमनित्यवृत्तिधर्मवानिति कृतम्। स च धर्मः आत्मनि नित्ये बोधितः शब्दस्य अनित्यत्वमादाय पर्यवस्यति। स च धर्मःशब्दात्मनोरन्योन्याभाव एव।**

**भुवन.**—अथ आशङ्कामुखेन प्रकारान्तरेण व्यावृत्तिचिन्तां करोति—**नन्वित्यादि।** आत्मा शब्देतरधर्मवानित्यादि स्पष्टम्। **तथाप्यात्मत्वादि युगला-वृत्त्यपि भवतीति।** आत्मा शब्देतरानित्यनित्यवृत्तित्वानधिकरणधर्मवानिति-कृतेऽप्यात्मत्वमात्मनि नित्ये वर्तते, न अनित्ये। तेन युगलावृत्तित्वेन नित्या-नित्ययोरवर्तनादात्मधर्मत्वाच्च तेन सिद्धसाधनं स्यात्, तदर्थमनित्यवृत्ति-धर्मवानिति कृतमित्यर्थः।

अथैतस्यानुमानस्य व्याख्या—आत्मा पक्षः। अनित्ये वृत्तिः यस्य सोऽनित्यवृत्तिः। स चासौ धर्मश्चेति। शब्दादितरे शब्दव्यतिरिक्ता ये अनित्या घटादयो नित्याश्चाकाशादयः, तेषु ये वर्तन्ते धर्माः, तेषु शब्देतरानित्य-नित्यवृत्तित्वं धर्मः, तस्यानधिकरणमनाधारः। स चासौ अनित्यवृत्तिधर्मश्चेति समासः। अत्र शब्देतरानित्यनित्ययुगलवृत्तिः धर्मः सत्ताद्रव्यप्रमेयत्वादिः शब्दे-तरानित्यनित्यवृत्तित्वानधिकरणेतिपदेन निरस्तः। अथ च यो नित्ये एव केवले विद्यते नित्यत्वस्थिरैकस्वभावत्वादिः, स चानित्यवृत्तीतिपदेन निरस्तः। अथ चानित्ये एव केवले यो धर्मोऽनित्यत्वादिः विद्यते, स नित्ये आत्मनि पक्षीकृतेऽसंभावादेव निरस्तः। एतावता शब्देतरानित्यनित्ययुगलवर्ती एकैक-नित्यमात्रानित्यमात्रवर्ती च धर्मः साध्यरूपतया निषिद्धः। अवशिष्टश्च साध्यधर्मो विश्वप्रतियोगिकः शब्दात्मान्योन्याभावः शब्दात्मान्योन्यत्वादिर्वा पक्षे आत्मनि सिध्यति। ननु सिध्यतु विश्वप्रतियोगिकः शब्दात्मान्योन्याभावादिः पक्षे, परं शब्दस्यानित्यत्वं कथं सिध्यतीत्याशङ्क्य आह—**स च धर्म इति।**

स धर्मः शब्दात्मान्योन्याभावादिर्नित्ये आत्मनि बोधितः साधितः सन् शब्दस्यानित्यत्वमादाय पर्यवस्यति विश्राम्यति। यतः आत्मनि वर्त्तनेऽपि तस्य धर्मस्यानित्यवृत्तित्वं तदैव स्यात्, यद्यनित्यः शब्दः स्यात्। आत्मनो नित्यत्वात्। आत्मनित्यत्वे च वादिप्रतिवादिनोरविवादात्। तस्य धर्मस्य शब्दात्मभ्यामन्यत्र घटादौ चावर्तनात्। तस्मात्पारिशेष्याच्छब्दस्यैवानित्यत्वमायातम्। शब्दानित्यत्वे च तस्य धर्मस्य शब्दरूपेऽनित्ये वर्त्तनादनित्यवृत्तित्वमुपपन्नमेवेत्यर्थः। साध्यधर्ममाचष्टे—**स च शब्देति**। स च धर्मः शब्दात्मव्यतिरिक्तविश्वप्रतियोगिकः शब्दात्मान्योन्याभाव एवेत्यर्थः। उपलक्षणं चैतत्। तेन शब्दात्मान्यान्यत्वशब्दात्मान्यतरत्वादिः शब्दात्ममात्रवृत्तिरन्योऽपि साध्यधर्मो बोद्धव्यः।

**ननु तथापि दृष्टान्ते घटे तथाभूतधर्मस्य असंभवात् साध्यविकलत्वं। न। घटेऽपि शब्देतरानित्यनित्ययुगले न वर्तते अनित्यवृत्त्यपि घटत्वम्। अतस्तेनैव व्याप्तिरिति न दोषः। इति प्रथमोदाहरणम्।।**

**भुवन**—सपक्षधर्मं प्रतिपिपादयिषुराशङ्कते—**नन्विति**। परिहरति—**न घटेऽपीति**। अत्र च दृष्टान्तीभूते घटेऽपि घटत्वमस्तीत्यध्याहारः। तच्च शब्देतरानित्यनित्ययुगले न वर्तते। घटरूपानित्ये एव तस्य वर्त्तनात्। तत एव च तत् अनित्यवृत्यप्यस्ति। अतस्तेनैव घटत्वेनैव व्याप्तिरिति भावः। उपलक्षणं चैतत्। तेन पटादीनां दृष्टान्तत्वे पटत्वादयो धर्माः ज्ञेयाः। अत्र व्याप्तिश्चेत्थं विधेया—यत् यत् प्रमेयं तत्तच्छब्देतरानित्यनित्यवृत्तित्वानधिकरणानित्यवृत्तिधर्मवत् यथा घटादि। न चाकाशादिषु मेयत्वे सत्यपि शब्देतरानित्यनित्यवृत्तित्वानधिकरणानित्यधर्मवत्त्वं नास्तीत्यनैकान्तिकत्वमिति वाच्यम्। आकाशादीनां पक्षतुल्यत्वात्। अयमर्थः—यथा आत्मात्र पक्षीकृतस्तथाकाशादिकमपि पक्षीक्रियते। तथाहि—आकाशं शब्देतरानित्यनित्यवृत्तित्वानधिकरणानित्यवृत्तिधर्मवत् मेयत्वात् घटादिवत्। एवं च सति नहि पक्षे पक्षतुल्ये वा व्यभिचारः। ततश्च यथा पक्षे सन्दिग्धसाध्यत्वेन व्याप्तेरभावेऽपि व्यभिचारो नास्ति, तथा पक्षतुल्येऽपीत्यर्थः। ननु यादृशो धर्मः पक्षे साध्यरूपः तादृशः सपक्षे नास्ति। मैवम्। शब्दपरावर्तं विनैव शब्देतरेत्यादिभिरेव शब्दैः पक्षे शब्दात्मात्योन्याभावस्य दृष्टान्तीभूते घटे घटत्वस्य चोपपत्तेरिति प्रथममहाविद्याव्याख्या।।

(अथ द्वितीयानुमानम्)

**अथ प्रकारान्तरेण शब्दानित्यत्वसाधनं दर्शयितुमनित्यत्वानुमानसंग्राहिकां कारिकामाह–**

**२ अपक्षसाध्यवद्वृत्ति विपक्षे पक्षिते न यत्।**
**साध्यवद्वृत्तितायुक्तं साध्यते तद्विपक्षगम्।।२।।**

आकाशः आकाशशब्देतरानित्यवृत्तित्वानधिकरणानित्यवृत्तिधर्मवान्।

**अस्य च पूर्वस्मादयमेव भेदो यत्पक्षीकृतस्यैव विपक्षस्य व्यावृत्तिः, न सर्वस्य। पूर्वस्मिंस्तु यावद्विपक्षव्यावृत्तिरिति।**

**अयमर्थः—अपक्षो यः साध्यवान् सः अपक्षसाध्यवान्। तत्र यद्वर्तते तदपक्षसाध्यवद्वृत्ति, तद्यन्न भवति। विपक्षे आकाशादौ च पक्षिते पक्षीकृते यन्न वर्तते तत्साध्यते इति संबन्धः। किंभूतं साध्यते। विपक्षगं, विपक्षे इत्यर्थः। उपलक्षणपक्षीकृते इति यावत्।**

**अथ पदयोजना—अत्र आकाशेत्यनेन विपक्षे इति व्याख्यातम्। शब्देतरानित्येत्यनेन अपक्षसाध्यवद्वृत्तीति। अनित्यवृत्तीत्यनेन साध्यवद्वृत्तितायुक्तमिति। इति पदयोजना।।**

(अथ द्वितीयानुमानम्)

**भुवन**—अथ शब्दानित्यत्वसाधनायैव द्वितीयानुमानवाच्यां कारिकां व्याख्यातुमाह—**अपक्षेतीति।**

**'अपक्षसाध्यवद्वृति विपक्षे पक्षिते न यत्।**
**साध्यवद्वृतितायुक्तं साध्यते तद्विपक्षगम्' ।।२।।**

एतस्यार्थः पूर्ववत्। **अस्य चेत्यादि।** अयमर्थः। पूर्वस्मिन्ननुमाने आत्मा शब्देतरानित्यनित्येत्यत्र नित्यपदेन सर्वेऽपि नित्याः पदार्थाः वर्जिताः। आकाशः आकाशशब्देतरानित्यवृत्तित्वेत्यत्र तु नित्यपदस्थाने आकाशपदप्रक्षेपेण पक्षीकृतस्याकाशस्यैव व्यावृत्तिर्न तु सर्वनित्यपदार्थानामिति। अथानुमानम्—आकाशः आकाशशब्देतरानित्यवृत्तित्वानधिकरणानित्यवृत्तिधर्मवान् मेयत्वात् घटवत्। आकाशश्च शब्देतरानित्याश्च तत्र वृत्तिर्येषां तद्भावः तत्त्वम्। तदनधिकरणं चासौ अनित्यवृत्तिधर्मश्चेति विग्रहः।

**अथ व्यावृत्तिचिन्ता—आकाशोऽनित्यवृत्तिधर्मवानितिकृते सत्तया सिद्धसाधनम्। तदर्थं शब्देतरेतिपदम्। तथापि घटाकाशसंबन्धः शब्देतरानित्यघटे एव वर्तते इति तेन सिद्धसाधनम्। तद्व्यावृत्त्यर्थमनित्य-**

**वृत्तित्वानधिकरणेति पदोपादानम्। तथाप्याकाशपरमाणुसंयोगः शब्देतरानित्यवृत्तित्वानधिकरणो भवति, नित्ये परमाणावेव वर्तनात्। अतस्तेन सिद्धसाधनम्। तदर्थमनित्यवृत्तीतिपदग्रहणम्। तेनेदृशमनुमानं स्यात्—आकाशः शब्देतरानित्यवृत्तित्वानधिकरणानित्यवृत्तिधर्मवानिति। तथाप्येवंविधधर्मस्य अन्यत्र अदृष्टचरत्वादप्रसिद्धविशेषणः पक्षः। न हि अनित्ये वर्तते, शब्देतरानित्ये च न वर्तते इति धर्मः संभवति। यो हि अनित्यवृत्तिः स शब्देतरानित्ये वर्तते यथा घटत्वादि। तथा च सपक्षाभावेन अन्वयित्वमेव व्याहन्यते। तदर्थमाकाशग्रहणम्। तथा च न कश्चिद्दोषः। आकाशशब्देतरानित्यमेलके यो न वर्तते, (सः) अनित्यवृत्तिरपि भवति। एवंभूतश्च धर्मो दृष्टान्ते घटे घटात्मान्योन्याभावोऽपि संभवति। आकाशे त्वेवंभूतो धर्मस्तदा स्याद्यदि शब्दस्यानित्यत्वं स्यात्। स च शब्दाकाशान्योन्याभावः एव। इति द्वितीयोदाहरणम्।।**

**भुवन—आकाशोऽनित्यवृत्तिधर्मवानिति कृते सत्तयेति।** सत्तारूपस्य धर्मस्यानित्ये आकाशेऽपि च विद्यमानत्वात्सिद्धसाधनं स्यादित्यर्थः। **तदर्थं शब्देतरेति।** सत्तायाः शब्देऽपि विद्यमानत्वात्तन्निषेधः। **तथापि घटाकाशसंबन्धः इत्यादि।** घटस्याकाशेन संबन्धः घटाकाशसंबन्धः। तस्य च शब्देतरानित्यघटे आकाशे च विद्यमानत्वात्तेन सिद्धसाधनं स्यादित्यर्थः। **तद्व्यावृत्त्यर्थमनित्यवृत्तित्वानधिकरणेति पदोपादानम्। तथाप्याकाशपरमाणुसंयोगःइत्यादि।** अत्रायं भावः। आकाशः शब्देतरानित्यवृत्तित्वानधिकरणधर्मवान् इति कृतेऽप्याकाशपरमाणुसंयोगेन सिद्धसाध्यतैव। आकाशश्च परमाणुश्च आकाशपरमाणू, तयोः संयोगः आकाशपरमाणुसंयोगः। स च नित्यवृत्तिरेव। तस्मात्तेन सिद्धसाधनता। **तथाप्येवंविधधर्मस्येत्यादि।** अयमर्थः—आकाशः शब्देतरानित्यवृत्तित्वानधिकरणानित्यवृत्तिधर्मवानिति कृतेऽप्रसिद्धविशेषणः पक्षः। अन्यत्र दृष्टान्ते एवंविधस्य धर्मस्य अप्रसिद्धत्वात्। कथमप्रसिद्धविशेषणतेत्याशङ्क्याह—**नहि अनित्ये वर्तते इत्यादि।** स्पष्टम्। **तथा च सपक्षाभावेन अन्वयित्वमेव व्याहन्यते इत्यादि।** अन्वयित्वं केवलान्वयित्वं तस्यैव धर्मस्य स्यात्, यो दृष्टान्ते सिद्धः स्यात्। अत्र चैवंविधस्य धर्मस्य दृष्टान्ते अभावेन अन्वयित्वं व्याहन्यते इत्यर्थः। **आकाशशब्देतरानित्यमेलके इत्यादि।** आकाशे न वर्तते, शब्देतरानित्ये च वर्तते। तेन एवंविधो धर्मो युगलावृत्तिरनित्यवृत्तिश्च दृष्टान्ते घटादौ

घटात्मव्यतिरिक्तविश्वप्रतियोगिकघटात्मान्योन्याभावादिः घटत्वादिर्वा संभवति। **आकाशे त्वेवंभूतो धर्मस्तदा स्यादित्यादि।** पक्षीकृते आकाशे एवंविधो महाविद्यासाध्यविचारणायातो धर्मस्तदैव स्याद्यदि शब्दस्यानित्वं स्यात्। इदमत्रैदंपर्यम्—एवंविधो धर्मः शब्दाकाशान्योन्याभावः शब्दाकाशव्यतिरिक्त-विश्वप्रतियोगिकः, शब्दाकाशौ शब्दाकाशव्यतिरिक्तविश्वादन्यौ इति रूपः अवशिष्यते। तस्य च अनित्यवृत्तित्वं तदैव स्यात्, यदि शब्दोऽनित्यः स्यात्। आकाशस्य च नित्यत्वं वादिप्रतिवादिनोरविवादास्पदीभूतम्। तस्माच्छब्दस्यैव विप्रतिपन्नमनित्यत्वं पारिशेष्यात्सिध्यतीति द्वितीयानुमानव्याख्या।।

**(अथ तृतीयानुमानम्)**

**अथ पुनरप्यपेक्षितशब्दानित्यत्वसिद्धये भङ्ग्यन्तरमाचक्षाणः संग्राहिकां कारिकामाह—**

**३ अपक्षसाध्यवद्वृत्तिविपक्षान्वयवर्जितः ।**
**नानाविपक्षवृत्त्यन्यभिन्नधर्मोऽस्ति पक्षिते ।।३।।**

**शब्दः अशब्दानित्यनित्यवृत्त्यन्यनानानित्यावृत्त्यशब्दधर्मवान्।**

**पूर्वस्मादस्य अयमेव भेदो यदत्र वास्तव एव पक्षो न विपक्षादिः। पुनरप्यनेकविपक्षव्यावृत्तिश्चेति। अतएव पूर्वार्धं गतार्थमेवेति न व्याख्यातम्। उत्तरार्धस्य त्वयमर्थः। नानाविधा येऽस्य विपक्षाः ते नानाविपक्षाः, तत्र प्रवर्तते इति नानाविपक्षवृत्तिः। तस्मादन्यः नानाविपक्षवृत्त्यन्यः। अनेक-विपक्षावृत्तिरित्यर्थः। भिन्नस्य धर्मो भिन्नधर्मः। नानाविपक्षवृत्त्यन्यश्चासौ भिन्नधर्मश्चेति नानाविपक्षवृत्त्यन्यभिन्नधर्मः। सः पक्षिते पक्षीकृते वास्तवे वा पक्षेऽस्ति साध्यते इत्यर्थः। भिन्नधर्म इति। भिन्नस्य धर्मत्वं पक्षापेक्षया बोद्धव्यम्। पक्षाच्छब्दाद्भिन्नस्येत्यर्थः, न तु भिन्नश्चासौ धर्मश्चेति भिन्नधर्मः। एतदेव साध्यपर्यवसानाय भिन्नस्य धर्मः इति।**

**(अथ तृतीयानुमानम्।)**

**भुवन.**—अथ पक्षमेव पक्षीकृत्य प्रवर्त्तमानमहाविद्यावाच्यकारिकां व्याचिख्यासुराह—**अपक्षेतीति।**

**'अपक्षसाध्यवद्वृत्तिविपक्षान्वयवर्जितः ।**
**नानाविपक्षवृत्त्यन्यभिन्नधर्मोऽस्ति पक्षिते' ।।३।।**

**पूर्वस्मादित्यादि।** पूर्वस्मादनुमानादस्य अयमेव भेदो यदत्र वास्तवः सत्यः एव शब्दः पक्षो न आकाशात्मादिः। **पुनरप्यनेकविपक्षव्यावृत्तिश्चेत्यादि।** पुनरपि पूर्वस्मादनुमानादयं विशेषो यदनेकविपक्षव्यावृत्तिश्च। पूर्वस्मिन्ननुमाने तु पक्षितस्यैवैकस्य विपक्षस्य व्यावृत्तिरिति। **नानाविपक्षवृत्त्यन्यः इति।** नानाविपक्षेषु न वर्तते एकस्मिँस्तु वर्तते एव। **भिन्नधर्मः इति।** पक्षापेक्षया अपरो यो भिन्नः पदार्थः तस्य धर्मः **एतदेवेति।** भिन्नस्य धर्मः इति एतदेव साध्यपर्यवसानाय अनित्यत्वरूपसाध्यसिद्ध्यै भवति इत्यर्थः। अस्यां कारिकायामथवेति वक्तव्ये महाविद्याकर्तुरपक्षेति पदं प्रमादात्पतितम्। 'अथवा साध्यवद्वृत्तिविपक्षान्वयवर्जितः' इति तु पाठो युक्तः।

**इदानीमनुमानश्लोकपदयोजना—अत्र अपक्षसाध्यवद्वृत्तीति। अशब्दानित्येत्यनेन व्याख्यातम्। विपक्षान्वयवर्जितः इति नित्यवृत्त्यन्येत्यनेन। नानाविपक्षवृत्त्यन्येति नानानित्यावृत्तिरित्यनेन व्याख्यातम्। भिन्नस्य धर्मः इत्यशब्दधर्मवानित्यनेन। इति योजना।।**

**भुवन**—अथानुमानम्—शब्दः अशब्दानित्यनित्यवृत्त्यन्यनानानित्यावृत्त्यशब्दधर्मवान् मेयत्वात् घटादिवत्। **अपक्षसाध्यवद्वृत्तीति।** अत्रानुमाने अशब्देति तद्व्यर्थमपि कारिकायां अपक्षेति भणनादुक्तम्। अयं भावः। पूर्वत्र अपक्षेति कारिकायामुक्तं तदपेक्षया अनुमाने शब्देतरेत्युक्तम्। तत्र च साध्यो धर्मो विपक्षस्य पक्षीकृतत्वात् शब्दात्मान्योन्याभावादिः। स च शब्देतरेत्युक्तं यदि न स्यात्, तदा नित्ये आत्मनि अनित्ये च शब्दे तस्य धर्मस्य वर्तनात् वाद्यभिप्रायेण अनित्यनित्यवृत्तित्वानधिकरणत्वं न स्यात्। तेन शब्देतरेति भणितम्। अस्मिंश्चानुमाने साध्यो धर्मो वास्तवस्यैव पक्षस्य पक्षीकृतत्वादनित्यत्वादिः। स चानित्ये एव वर्तते न नित्ये। तस्मादत्राशब्देति पदं व्यर्थम्।

**अत्र शब्देतरानित्यनित्ययुगले यो न वर्तते, यो नानानित्येष्वपि न वर्तते, सः अशब्दधर्मः शब्देऽनित्यत्वमेव। तथाहि—अनित्यनित्ययुगले यो न वर्तते, तस्य प्रकारत्रयमत्र घटते। उभयत्र यो न वर्तते, सोऽपि युगले न वर्तते। नित्ये वा केवले यो न वर्तते, सोऽपि युगले न वर्तते। अनित्ये वा केवले यो न वर्तते, सोऽपि युगले न वर्तते। अत्र च अशब्दधर्मवानित्यनेन वृत्तिसाधनेन सर्वथा अत्र अवृत्तिस्तावन्निषिद्धा। अतः एकैकवृत्तिरवशिष्यते। तत्र नानाविपक्षवृत्त्यन्येत्यनेन नित्यवृत्तिः प्रत्युक्ता। अतः परिशेषादनित्यवृत्तिरेवावशिष्यते। तच्चानित्यत्वमेवेति साध्यसिद्धिः।**

**तस्य च इदमेव अशब्दधर्मत्वं यत्सकलानित्यसाधारण्यमिति न कश्चिद्दोषः।।**

**भुवन—अशब्दधर्मवानित्यनेन वृत्तिसाधनेनेति।** वर्तनं वृत्तिः। तत्साधनेन एवंविधो धर्मः क्वापि वर्तते एव। सर्वत्र न तस्य अवृत्तिरित्यर्थः। एतावता उभयत्रानित्यनित्ययोर्यो धर्मो न वर्तते, तस्य प्रथमप्रकारोक्तस्य निषेधः कृतः इति भावः। यद्यशब्दधर्मः तर्हि शब्दे कथं साध्यते इत्याशङ्क्याह—**तस्य चेदमेव अशब्दधर्मत्वमिति।** शब्दस्यैव स धर्मो न भवति किन्तु सकलानित्यानां धर्मः इत्यर्थः।

**अथ व्यावृत्त्यचिन्ता—अत्र शब्दः अशब्दधर्मवानितिकृते साधारण धर्मवानित्यर्थः स्यात्। तथा च सत्तया सिद्धसाधनं, तस्याः साधारणत्वात्। तदर्थं नानानित्यावृत्तिरित्युक्तम्। तथा चैवमनुमानं स्यात्—शब्दो नानानित्यावृत्त्यशब्दधर्मवान्। तथा च घटशब्दान्योन्याभावेन सिद्धसाधनम्। तदर्थमनित्यनित्यवृत्त्यन्येति प्रक्षिप्तम्। तथा सति एतावती प्रतिज्ञा स्यात्—शब्दोऽनित्यनित्यवृत्त्यन्यनानानित्यावृत्त्यशब्दधर्मवानिति। तथा च घटशब्दान्योन्याभावेन सिद्धसाधनता परिहृता। तस्य प्रतिवाद्यभिप्रायेण नित्ये शब्दे अनित्ये घटे च वर्तमानत्वान्न नित्यानित्यावृत्तित्वम्। एवं सति यद्यपि साध्यमनित्यत्वं सिध्यति, तथाप्याकाशादौ तथाभूतस्य धर्मस्य असंभवात्, अन्वयित्वव्याघातः। विपक्षस्य संभवात्। तदर्थमशब्देति पदम्। तथा सत्याकाशादौ शब्दाकाशान्योन्याभावः एवेत्यसौ यद्यपि नित्यानित्यवृत्तिर्न भवतीत्युच्यते, तथापि अशब्दानित्यनित्यवृत्तिर्भवतीति न व्यभिचाराशङ्कापि। इति तृतीयोदाहरणम्।**

**भुवन—तथा च सत्तया सिद्धसाधनमिति।** अशब्दा घटादयः, तत्र वर्तनादशब्दधर्मत्वं तस्याः। ततः सिद्धसाधनं तयेत्यर्थः। **तथा च घटशब्दान्योन्याभावेन सिद्धासाधनमिति।** शब्दो नानानित्यावृत्त्यशब्दर्मवान् इति प्रतिज्ञायां घटशब्दान्यविश्वप्रतियोगिको यो घटशब्दान्योन्याभावः तेन सिद्धसाधनं स्यात्। घटशब्दान्योन्याभावस्य नानानित्येष्ववर्तनात्, घटे वर्तमानत्वेन अशब्दधर्मत्वाच्चेत्यर्थः। अत्र च अनित्यत्वं साध्यो धर्मः, अथवा घटशब्दान्यतरत्वादिः। स च घटशब्दयोरेव वर्तनाच्छब्दस्यानित्यत्वे नित्यत्वे वा नानानित्येषु न वर्तते। अशब्दो घटादिस्तद्धर्मश्चास्ति, परं स धर्मः घटशब्दान्यतरत्वादिः अनित्यनित्यावृत्तिस्तदैव, यदि शब्दस्यानित्यत्वं स्यात्।

अन्यथा स धर्मो नित्ये शब्दे अनित्ये घटे च वर्तनादनित्यनित्यवृत्तिरेव स्यात्। तस्माच्छब्दः अनित्यः स्वीकार्यः। अत्र दृष्टान्ताः घटाकाशादयः तद्धर्माश्च सर्वेऽपि ज्ञेयाः। तत्र सर्वत्र च घटत्वाकाशत्वादीनां स्वस्वमात्र-निष्ठधर्मेण साध्यानुगमो द्रष्टव्यः। अत्रानुमाने नानेति पदमाकाशादिदृष्टान्तार्थम्। अन्यथा आकाशे आकाशत्वं यदस्ति तन्नित्ये आकाशे वर्तनान्नित्यवृत्त्येव स्यात्, न नित्यावृत्ति। नानेति पदोपादाने चाकाशत्वादि यद्यपि नित्यावृत्ति न स्यात्, तथापि नानानित्येष्ववर्तनान्नानानित्यावृत्ति भवत्येवेत्यर्थः। इति तृतीयानुमानम्॥

## (अथ चतुर्थानुमानम्।)

**एवं शब्दानित्यत्वसाधनव्याजेन अभीष्टार्थसाधकप्रकारत्रयमुपदर्शितम्। इदानीं पृथिवीत्वसाधनव्याजेन अभीष्टान्तरसाधकं प्रकारान्तरं दर्शयितुं संग्राहकं श्लोकार्धमाह—**

**४ पक्षापक्षगतादन्यत्साध्यवद्द्वैधवर्जितम् ।।४।।**

**गन्धवन्तो गन्धवदगन्धावृत्तिगन्धवद्वृत्त्यन्यवन्तः ।।**

**अयमर्थः—पक्षो वास्तवः, अपक्षो विपक्षः, तत्र मिलिते गतं गमनं यस्य तत्पक्षापक्षगतम्। तस्मादन्यत् पक्षापक्षगतादन्यत्। तद्धर्मान्तरं साध्यते इति संबन्धः। किंभूतम्। साध्यवद्द्वैधवर्जितम्। साध्यवान् पक्षः, तत्र यत् द्वैधं, तत्र वृत्तिः अवृत्तिश्च तद्वर्जितम्। वर्तमानावर्तमानत्वरहितमित्यर्थः।**

**अथ श्लोकपदानुमानयोजना—अत्र गन्धवदित्यनेन पक्षेति व्याख्यातम्। अगन्धेत्यनेन अपक्षेति व्याख्यातम्। अवृत्तीत्यनेन अन्यदिति, साध्यवद्द्वैधवर्जितमिति च गन्धवद्वृत्त्यवृत्त्यन्यधर्मवन्तः इत्यनेन, इति मिथो योजना।**

## (अथ चतुर्थानुमानम्।)

**भुवन**—अथ पृथिवीत्वसाधनव्याजेन अभीष्टान्तरसाधकं कारिकार्द्धं व्याचिकीर्षुः प्राह—**पक्षापक्षेतीति**। तथाहि—

**'पक्षापक्षगतादन्यत्साध्यवद्द्वैधवर्जितम्'** ।।४।।

**पक्षो वास्तवः इत्यादि**। पक्षो धर्मी, अपक्षो विपक्षः, मिलिते गतं गमनं यस्य तस्मादन्यद्धर्मान्तरं साध्यते। अयमर्थः—गन्धवन्तः पक्षः,

तदन्योऽपक्षः, तदुभयवृत्तिर्मेयत्वादिः तस्मादन्यदभिप्रेतं साध्य पृथिवीत्वं घटादौ साध्यते। **साध्यवद्द्वैधवर्जितमिति।** साध्यवान्पक्षः, तत्र यद्द्वैधं वृत्तिरवृत्तिश्च, तद्वर्जितं वर्तमानावर्तमानत्वरहितं, तत्पक्षेऽस्तीति वाक्यशेषः। यद्वा पूर्वश्लोकगतं 'अस्ति पक्षिते' इत्यनुवर्तते। तद्वा पक्षगमित्यग्रेतनं संबध्यते।

**अथ व्यावृत्त्यचिन्ता—गन्धवन्तो गन्धवद्वृत्तिमन्तः इति कृते तद्वृत्तिना धर्मेण सिद्धसाधनम्। तदर्थमगन्धवद्वृत्तिमन्तः इत्युक्तम्। एतावन्मात्रे च क्रियमाणे सत्तादिभिः साधारणैर्धर्मैः सिद्धसाध्यता, असाधरणैश्च विरोधः तदर्थमुभयपदग्रहणम्। तथापि उभयवृत्तिधर्मेण सिद्धसाधनम्। तदर्थमवृत्तिपदग्रहणम्। तथापि घटत्वादीनां गन्धवत्त्वनिष्ठानां तथात्वात् तैः सिद्धसाधनम्। तदर्थं गन्धवद्वृत्त्यवृत्तिमन्तः इत्युक्तम्। तथापि स्वव्यक्तिमात्रनिष्ठानां घटत्वादीनां पटादिष्ववृत्तिरपि विद्यते। तदर्थमन्येति पदम्। गन्धवद्वृत्त्यवृत्त्यन्यवन्तः इत्येतावन्मात्रे च क्रियमाणे द्रव्यत्वादिभिरेव सिद्धसाधनम्। तदर्थं गन्धवद्वृत्तीत्युक्तम्। तथा सति विरोधः एव स्यात्पौनरुक्त्यं वा। वृत्त्यवृत्त्यन्येति पदस्य उभयार्थत्वात्। तदर्थमगन्धेतिपदप्रक्षेपः। आकाशे च गन्धवदगन्धावृत्तिगन्धवद्वृत्त्यवृत्त्यन्यः शब्दः एव शब्दाश्रयभावो वा। यतो वृत्त्यन्येति पदस्यार्थो द्वैधानामुभयावृत्तित्वं विद्यते। तदर्थं गन्धवदगन्धावृत्ति वर्तते एव न वर्तते एव वा। शब्दस्तु गन्धवति न वर्तते एवेति सर्वमवदातम्। एवं तेजस्त्वाद्यनुमानमूह्यम्। तथाहि—'उष्णवन्तः उष्णवदनुष्णावृत्त्युष्णवद्वृत्त्यवृत्त्यन्यधर्मवन्तः मेयत्वात् घटवदित्यादि। इति चतुर्थोदाहरणम्।।**

**भुवन**—अथानुमानम्—गन्धवन्तो गन्धवदगन्धावृत्तिगन्धवद्वृत्त्यवृत्त्यन्यवन्तः मेयत्वात् आकाशवत्। **गन्धवन्तो गन्धवद्वृतिमन्तः इति कृते तद्वृत्तिनेत्यादि।** तद्वृत्ति गन्धवद्वृत्ति गन्धवत्त्वं। तेन सिद्धसाधनम्। **तदर्थमगन्धवद्वृत्तिमन्तः इत्युक्तमिति।** एवं च गन्धवन्तः अगन्धवद्वृत्तिमन्तः इति कृते सत्तादिभिः साधारणैर्धर्मैः सिद्धसाध्यता। गन्धवत्सु अगन्धवत्सु च सत्ताया विद्यमानत्वात्। **असाधारणैरिति।** असाधारणा ये जलधर्माः शीतस्पर्शवत्त्वादयः, तेजोधर्मा उष्णत्वादयः तैर्विरोधः गन्धवत्सु तेषामभावात्। **तथापि उभयवृत्तिधर्मेण सिद्धसाधनमिति।** अयमर्थः। गन्धवन्तो गन्धवदगन्धवृत्तिमन्तः इति कृते उभयवृत्तिना सत्तादिना सिद्धसाधनम्। तदर्थमवृत्तिपदग्रहणमिति। अवृत्तिग्रहणे कृते च गन्धवन्तो गन्धवदगन्धावृत्तिमन्तः इति

जातम्। **तथापि घटत्वादीनामित्यादि।** घटत्वं गन्धवति घटे वर्तमानं विद्यते, अगन्धवत्सु च जलादौ अवर्तमानम्। ततो युगलावृत्तित्वेन तस्य गन्धवदगन्धावृत्तित्वं विद्यते एव। तत्तेन सिद्धसाधनमित्यर्थः। **तदर्थं गन्धवद्वृत्त्यवृत्तिमन्तः इत्युक्तमति।** एवं चोक्ते गन्धवन्तो गन्धवदगन्धावृत्ति-गन्धवद्वृत्त्यवृत्तिमन्तः इति प्रतिज्ञा जाता। एवमप्युक्ते च घटत्वादिभिरेव सिद्धसाध्यता। तेषां गन्धवदगन्धयुगलावृत्तित्वात्। गन्धवत्सु घटादिसु वर्तनेन गन्धवत्सु एव पटादिषु च अवर्तनेन गन्धवद्वृत्त्यवृत्तित्वाच्च, तदर्थमन्येति। तथा च गन्धवन्तो गन्धवदगन्धावृत्तिगन्धवद्वृत्त्यन्यवन्तः इति सम्पूर्णा प्रतिज्ञा जाता।

अथ गन्धवदगन्धावृत्तीति पदं मुक्त्वा गन्धवद्वृत्त्यन्यवन्तः इति ग्रहणेन व्यावृत्तिचिन्तां करोति। तथा च करणे द्रव्यत्वेनैव सिद्धसाधनमित्याह— **द्रव्यत्वादिभिरेव सिद्धसाधनमिति।** द्रव्यत्वस्य गन्धवत्सु सर्वेषु वर्तनेन गन्धवद्वृत्त्यवृत्त्यन्यत्वात्, तदर्थं गन्धवद्वृत्तीति। एवं च कृते गन्धवन्तो गन्धवदवृत्तिगन्धवद्वृत्त्यवृत्त्यन्यवन्तः इति प्रतिज्ञा जाता। **तथा सति विरोध इति।** अत्र वृत्त्यवृत्त्यन्य इति पदस्यार्थद्वयम्। यो गन्धवत्सु वर्तते एव, यश्च न वर्तते एव, तौ द्वावपि वृत्त्यवृत्त्यन्यपदेन सङ्गृहीतौ भवतः। तत्र यो गन्धवत्सु वर्तते एव स गन्धवदवृत्तिरित्युच्यमाने विरोधः पौनरुक्त्यं चेति। यश्च गन्धवत्सु न वर्तते एव स गन्धवदवृत्तिरित्युच्यमाने पौनरुक्त्यं। गन्धवदवृत्ति-गन्धवद्वृत्त्यवृत्त्यवृत्त्यन्यपदयोर्मध्ये एकेनैव साध्यसिद्धेः। **आकाशे च गन्धवदगन्धावृत्तीत्यादि।** आकाशे च दृष्टान्तीक्रियमाणे एवंविधः शब्दः एव। तस्य गन्धवत्सु अवर्तनेन अगन्धवत्सु च वर्त्तनेन गन्धवदगन्धावृत्तित्वं विद्यते एव। तथा तस्य गन्धवद्वृत्त्यवृत्त्यन्यत्वं चाप्यस्ति। अगन्धवत्सु एव वर्तनात्। एवमात्मादिरपि गन्धवत्त्वरहितः सर्वोऽपि पदार्थो दृष्टान्तत्वेन ज्ञेयः **शब्दाश्रयभावः इति।** शब्दस्य आश्रयः आधारः शब्दाश्रय आकाशः। शब्दाश्रयस्य भावः स्वरूपं शब्दाश्रयभावः आकाशत्वमित्यर्थः।

अथैतस्यानुमानस्य व्याख्या। गन्धवन्तः सर्वे भूभेदाः। ते च जलानिलादिपदार्थाष्टकं वर्जयित्वा सर्वेऽपि ज्ञेयाः। तेषु भूभेदेषु धर्मो वर्तमानः जलादिषु अवर्तमानश्च स युगलावृत्तित्वेन गन्धवदगन्धावृत्तिः। पुनरपि च स क्विंविशिष्टः। गन्धवत्सु वृत्तिरवृत्तिश्च यस्य धर्मस्य ततोऽन्यः। ततो गन्धवदगन्धावृत्तिश्चासौ गन्धवद्वृत्त्यवृत्त्यन्यश्चेति विग्रहः। एवंविधो धर्मो

गन्धवत्सु साध्यते। स च धर्मः पृथिवीत्वमेव। तच्च गन्धवत्सु वर्तनेन अगन्धवत्सु चावर्तनेन गन्धवदगन्धयुगलावृत्ति। तथा गन्धवत्सु तस्य वर्तनावर्तनं नास्ति, किन्तु वर्तनमेव। एवं सति दृष्टान्ते जलादौ जलत्वादिः आकाशादौ शब्दाश्रयत्वादिश्च धर्मो ज्ञेयः। अत्र य यन्मुख्यानुमानमाश्रित्यैषा महाविद्या प्रवृत्ता तदुच्यते। तथाहि—पृथ्वी द्रव्यत्वावान्तरजातिमती मूर्तद्रव्यत्वात् जलवत् इति मुख्यानुमानम्। गन्धवत्त्वेन गन्धवन्निष्ठसङ्ख्यया गन्धवव्द्यतिरिक्तविश्वप्रतियोगिकात्यन्ताभावेन च सिद्धसाध्यतादोषादियं महाविद्या कुशलतरैः प्रयत्नतश्चिन्तनीया। **एवं तेजस्त्वाद्यनुमानमूह्यमिति।** यथा पृथिवीत्वं तथा तेजस्सु तेजस्त्वं साध्यम्। तथाहि—उष्णवन्तः उष्णवन्तः उष्णवदनुष्णावृत्युष्णवद्वृत्त्यवृत्त्यन्यवन्तः मेयत्वात् घटवत्। अत्रैवंविधो धर्मस्तेजस्त्वं औष्ण्यं वा साध्यम्। एवं वायौ वायुत्वं जले स्नेहादि च विप्रतिपत्तौ साध्यम्। इति चतुर्थानुमानव्याख्यानम्।।

**(अथ पञ्चमानुमानम्।)**

**पुनरपि शब्दानित्यत्वसाधनप्रकारमाचक्षाणां संग्राहकं कारिकोत्तरार्धमाह—**

**५ पक्षापक्षगतादन्यत्साध्यवद्वृत्तिपक्षगम् ।।४।।**

**शब्दः शब्दाशब्दावृत्त्यनित्यवृत्तिधर्मवान्।**

**अयमर्थः—पक्षो वास्तवः शब्दः एव। अपक्षः सपक्षविपक्षसाधारणः, तद्गतं तद्वृत्ति यद्धर्मान्तरं तस्मादन्यत् पक्षापक्षगतादन्यत्। तत्साध्यते इति संबन्धः। किम्भूतम्। साध्यवद्वृत्ति सपक्षवृत्ति। पुनः किम्भूतम्। पक्षगं वास्तवपक्षनिष्ठमित्यर्थः।**

**(अय पञ्चमानुमानम्।)**

**भुवन**—अथ जातिसाधनच्छलेन अभीष्टसाधकं प्रकारं प्रदर्श्य पुनरपि शब्दानित्यत्वादिसाधकं कारिकोत्तरार्द्धं व्याकर्तुमाह—**पक्षापक्षेतीति।**

**'पक्षापक्षगतादन्यत्साध्यवद्वृत्तिपक्षगम्' ।।५।।**

पक्षो वास्तवः शब्दः एव। अपक्षः सपक्षविपक्षसाधारणः, तद्वृत्ति यद्धर्मान्तरं तस्मादन्यत्। एतावता त्रये यन्न वर्तते द्वये तु वर्तते एव, तत्पक्षगं वास्तवपक्षनिष्ठं साध्यते इति संबन्धः।

**अथ योजना—शब्दाशब्दावृत्तीत्यनेन पक्षापक्षगतादन्यदिति व्याख्यातम्। अनित्यवृत्तीत्यनेन साध्यवद्वृत्तीति। एवं च पक्षसपक्ष-विपक्षमेलके न वर्तते, सपक्षे च वर्तते। पक्षनिष्ठं च तदनित्यत्वमेव पर्यवस्यति।**

**भुवन—तथापि ध्वनिशब्दयोरित्यादि।** शब्दः अशब्दावृत्त्यनित्यवृत्ति-धर्मवानिति प्रतिज्ञायां ध्वनिशब्दयोर्ध्वनिशब्दान्यविश्वप्रतियोगिको योऽन्यो-न्याभावः तेन सिद्धसाधनम्। तस्य अशब्दं शब्दव्यतिरिक्तं विश्वं तत्रावर्तनादनित्ये ध्वनौ वर्तनाच्च। अत्र ध्वनिशब्देनावर्णात्मकाः निर्झरझात्कार-चीत्कारपशुशब्दादयो गृह्यन्ते। ते चानित्या **भाट्टैरप्यङ्गीक्रियन्ते।**

**अथ व्यावृत्त्यचिन्ता—तत्र अनित्यवृत्तिधर्मवानिति कृते सत्तादिभिः सिद्धसाधनम्। तदर्थमशब्दावृत्त्यनित्यवृत्तिधर्मवानिति कृतम्। तथापि ध्वनिशब्दयोरन्योन्याभावः अशब्दवृत्तिर्भवति, अनित्ये ध्वनौ च वर्तते। अतस्तेन सिद्धसाधनम्। तदर्थं शब्देति पदं कृतम्। शब्दाशब्दावृत्ति-धर्मवानित्येतावन्मात्रे च क्रियमाणे शब्दत्वेनैव सिद्धसाधनम्। तदर्थमनित्य-वृत्तिपदग्रहणम्। इति पञ्चमानुमानम्।।**

**भुवन**—अथ अनित्यवृत्तिपदं विमुच्य शब्दपदं प्रक्षिप्य च व्यावृत्तिचिन्तां करोति—**शब्दाशब्दावृत्तिधर्मवानिति।** एवं च क्रियमाणे शब्दत्वेनैव सिद्धसाधनम्। तस्य युगलावृत्तित्वेन शब्दाशब्दावृत्तिधर्मत्वं विद्यते एव। तन्निवृत्त्यर्थमनित्यवृत्तिपदग्रहणम्।

अथानुमानम्—शब्दः शब्दाशब्दावृत्त्यनित्यवृत्तिधर्मवान् मेयत्वात् घटवत् आकाशादिवद्वा। अत्र अशब्दशब्देन नित्यानित्यरूपं विश्वम्। तत्र केवले शब्दे ये धर्माः, शब्दव्यतिरिक्ते केवले नित्यानित्यरूपे विश्वे च ये धर्मास्ते युगलावृत्तित्वेन शब्दाशब्दावृत्तयो भवन्ति। तत्र ये शब्दव्यतिरिक्तानां धर्मास्तेषां शब्दे साधने व्याघातः। तस्माच्छब्दधर्माः श्रावणत्वशब्दत्वादयोऽत्र साध्याः तेषां चानित्यवृत्तित्वं तदैव, यद्यनित्यः शब्दः स्यात्। दृष्टान्तीभूत-घटाकाशादौ तद्धर्मेषु च सर्वत्र शब्दान्यत्वधर्मेण व्याप्तिः। तस्य चाशब्दे वर्तनात्, शब्दे चावर्तनात्, शब्दाशब्दावृत्तित्वमनित्यवृत्तित्वं चास्ति। इति पञ्चमानुमानम्।।

(अथ षष्ठानुमानम्।)

एवमन्वयमुखेन अनित्यत्वसाधकप्रकारानुक्त्वा व्यतिरेकमुखेनाह—

६ तत्तादात्म्यनिषेधान्यतत्स्थाभावविरोधिता।

'नित्यत्वं स्वप्रतियोगिकान्योन्याभावातिरिक्तशब्दगताभावप्रतियोगि।'

तेन नित्यत्वेन सह तादात्म्यनिषेधोऽन्योन्याभावः। शब्दस्येति ज्ञेयम् शब्दो नित्यत्वं न भवतीति स्वरूपः। तस्मादन्योन्याभावात् अन्यो यः, तत्स्थाभावः संसर्गाभावः शब्दे नित्यत्वं नास्तीतिस्वरूपः, तद्विरोधिता तस्मिन् प्रतियोगिता साध्यते। नित्यत्वस्येति शेषः। इति कारिकार्थः।

इदानीं पदयोजना—अत्र स्वप्रतियोगिकान्योन्याभावातिरिक्तेत्यनेन तत्तादात्म्यनिषेधान्येति व्याख्यातम्। शब्दगताभावप्रतियोगीत्यनेन तत्स्थाभावविरोधितेति व्याख्यातमिति योजना।।

(अथ षष्ठानुमानम्।)

**भुवन**—एतमन्वयमुखेनानित्यत्वसाधकप्रकारानुक्त्वा व्यतिरेकमुखेन साध्याभावं पक्षीकृत्य प्रवर्तमानमहाविद्यावाचकं कारिकार्द्धं व्याख्यातुमाह—**तत्तादात्म्येतीति**।

**'तत्तादात्म्यनिषेधान्यतत्स्थाभावविरोधिता'** ।।६।।

एतद्व्याख्या वृत्तावुक्तैव। किञ्चित्सविस्तरा प्रोच्यते। तेन नित्यत्वेन सह शब्दस्य यस्तादात्म्यनिषेधोऽन्योन्याभावः शब्दो नित्यत्वं न भवतीतिरूपः। 'तादात्म्यनिषेधोऽन्योन्याभावः' इति तल्लक्षणात्। एतावता तादात्म्यनिषेधशब्देन अन्योन्याभावः उक्तः। तस्मादन्यः अभावः। स च कः इत्याह—**तत्स्थेति**। तत्र शब्दे तिष्ठतीति तत्स्थः। स चासावभावश्च तत्स्थाभावः। तत्तादात्म्यनिषेधान्यश्चासौ तत्स्थाभावश्च। एवंविधश्चाभावः कः इत्याह—**संसर्गाभावः। इति**। संसर्गाभावोऽत्यन्ताभावः। स च शब्दे नित्यत्वं नास्तीति स्वरूपः। **तद्विरोधितेति**। तस्मिन्प्रतियोगिता नित्यत्वस्य पक्षीकृतस्य साध्यते इत्यर्थः। इदमुक्तं भवति। नित्यत्वान्योन्याभावव्यतिरिक्तशब्दगताभावप्रतियोगित्वमनित्यत्वविरुद्धस्य नित्यत्वस्य साध्यते। अथैतदनुमानम्—नित्यत्वं स्वप्रतियोगिकान्योन्याभावातिरिक्तशब्दगताभावप्रतियोगि मेयत्वात् घटवत् आकाशादिवद्वा।

**अथ व्यावृत्त्यचिन्ता—अत्र नित्यत्वं शब्दगताभावप्रतियोगीति कृते अन्योन्याभावेन सिद्धसाधनम्। तदर्थमन्योन्याभावान्येति। तथापि घटः शब्दो न भवतीति घटप्रतियोगिकोऽन्योन्याभावस्तदतिरिक्तः शब्दगतोऽभावः शब्दनित्यत्वान्योन्याभावः एव भवति। तत्प्रतियोगित्वसाधने सिद्धसाधनम्। तदर्थं स्वप्रतियोगिकेति पदम्। नित्यत्वं स्वप्रतियोगिकान्योन्याभावातिरिक्तमित्युक्ते सिद्धसाधनम्। तदर्थं शब्दगताभावप्रतियोगीति कृतम्। श्लोकेऽन्येति पदं सामान्याभिप्रायेणेति बोद्धव्यम्। इति षष्ठानुमानम्।।**

**भुवन**—अथ व्यावृत्त्यानि। **नित्यत्वं शब्दगताभावेत्यादि।** शब्दगतान्योन्याभावं प्रति नित्यत्वस्य प्रतियोगित्वात् सिद्धसाधनम्। तदर्थमन्योन्याभावान्येति। तथा च सति अन्योन्याभावातिरिक्तशब्दगताभावप्रतियोगीति जातम्। **तथापि घटः इत्यादि।** घटः शब्दो न भवतीति घटप्रतियोगिकान्योन्याभावोऽपि शब्देऽस्ति। तस्माद्धटप्रतियोगिकान्योन्याभावादतिरिक्तो भिन्नः शब्दस्थोऽभावो नित्यत्वप्रतियोगिकान्योन्याभावः एव स्यात्। नित्यत्वस्य तत्प्रतियोगित्वसाधने सिद्धसाधनम्। तदर्थं स्वप्रतियोगिकेतिपदम्। तथा च सति स्वप्रतियोगिकोऽन्योन्याभावो निषिद्धः। अन्ततो व्यावृत्त्यचिन्ताकृता।

अथादितो व्यावृत्यचिन्तामाह—**नित्यत्वं स्वप्रतियोगिकान्योन्याभावेत्यादि।** नित्यत्वे नित्यत्वप्रतियोगिकान्योन्याभावादन्यत्वस्य स्वयमेव सिद्धत्वात् सिद्धसाधनमित्यर्थः। अत्र नित्यत्वस्य शाश्वतत्वात् प्रागभावप्रध्वंसाभावौ न सम्भवतः एव। स्वप्रतियोगिकान्योन्याभावातिरिक्तेतिपदेन चान्योन्याभावो निषिद्धः। शेषस्तु अत्यन्ताभावः एवावशिष्यते। अभावश्च प्रतियोगिनं विना न संभवति। 'प्रतियोगिज्ञानाधीनज्ञानः अभावः' इति वचनात्। ततश्च नित्यत्वस्य शब्दगतात्यन्ताभावप्रतियोगित्वे शब्दस्यानित्यत्वं सिद्धम्। अत्र नित्यत्वप्रतियोगिकान्योन्याभावातिरिक्तशब्दगतात्यन्ताभावप्रतियोगित्वं घटाकाशशब्दादिष्वपि विद्यते एव। शब्दत्वश्रावणत्वादिषु च शब्दगतान्योन्याभावप्रतियोगित्वमिति तेषां सर्वेषां सपक्षता **श्लोके अन्येतिपदं सामान्याभिप्रायेणेत्यादि।** अत्र कारिकायां तत्तादात्म्यनिषेधान्येत्यत्र अन्येति पदं यदुक्तं तत्सामान्याभिप्रायेण। तेनान्यपदस्थाने अतिरिक्तादयोऽपि शब्दाः। ज्ञेयाः। तस्मादेव स्वप्रतियोगिकान्योन्याभावातिरिक्तेति प्रोक्तमनुमाने। इति षष्ठानुमानम्।।

**(अथ सप्तमानुमानम्।)**

**इदानीं भेदसाधकं प्रकारं दर्शयति—स्वीकृतेति।**

**७ स्वीकृतानन्यवृत्तित्वसंपन्नान्यत्वसाधनम् ।।५।।**

शब्दाधिकरणं शब्दाधिकरणादन्यत्।

**अयमर्थः—अन्यत्र वर्तते इत्यन्यवृत्तिः। नान्यवृत्तिः अनन्यवृत्तिः। एकवृत्तिरित्यर्थः। तस्य भावोऽनन्यवृत्तित्वम्। स्वीकृतं च तदनन्यवृत्तित्वं चेति स्वीकृतानन्यवृत्तित्वम्। तेन स्वीकृतानन्यवृत्तित्वेन संपन्नं स्वीकृतानन्यवृत्तित्वसंपन्नम्। स्वीकृतं प्रतिवादिनैव। एकस्यामेवाकाशव्यक्तौ वर्तनात्। तस्मात्स्वीकृतानन्यवृत्तित्वसंपन्नादन्यत्वसाधनं क्रियते इत्यर्थः।**

**(अथ सप्तमानुमानम्।)**

**भुवन.—इदानीं भेदसाधकं प्रकारं दर्शयतीति।** अयमर्थः—एकत्वेनाङ्गीकृतस्याकाशादेः पदार्थस्य भेदं भिन्नत्वं दर्शयति कारिकार्द्धेन—**स्वीकृतेतीति।**

**'स्वीकृतानन्यवृत्तित्वसंपन्नान्यत्वसाधनम् ।।७।।**

यस्मात् शब्दः आकाशे एव वर्तते नान्यत्र, तस्मात् शब्दः अनन्यवृत्तिरुच्यते। तस्य भावः अनन्यवृत्तित्वम्। स्वीकृतमनन्यवृत्तित्वं यस्य शब्दस्य स स्वीकृतानन्यवृत्तित्वः, तेन सम्पन्नं यदाकाशं तस्मात् स्वीकृतानन्यवृत्तित्वसम्पन्नात्। अन्यत्वसाधनमाकाशबहुत्वसाधनं क्रियते इत्यर्थः।

अथानुमानम्—शब्दाधिकरणं शब्दाधिकरणादन्यत् मेयत्वात् घटवत्।

**अथ पदयोजना—शब्दाधिकरणादिति अनेन स्वीकृतानन्यवृत्तित्वसंपन्नेति। व्याख्यातम्। अन्यदित्यनेन अन्यत्वसाधनमिति व्याख्यातम्। अत्रैकैकपदोपादाने साकाङ्क्षत्वेन प्रतिज्ञाया निरर्थकत्वात् पदद्वयोपादानम्। न व्यावृत्त्यान्तरमस्ति। भेदप्रसाधनप्रकारदर्शनमात्रमेतत्, न तु भेदसाधनम्। अपसिद्धान्तप्रसङ्गात्। इति सप्तमानुमानम्।।७।।**

**भुवन.—अत्रैकैकपदोपादाने साकाङ्क्षत्वेनेत्यादि।** यदि शब्दाधिकरणमन्यदिति क्रियते, तदा शब्दाधिकरणमाकाशं कस्मादन्यदिति साकाङ्क्षता। तथा यदि शब्दाधिकरणमिति पदं विमुच्य शब्दाधिकरणा-

दन्यदिति क्रियते, तदा शब्दाधिकरणादाकाशात् किमन्यदित्यत्रापि साकाङ्क्षत्वम्। ततः साकाङ्क्षत्वेन प्रतिज्ञा निरर्थका भवेत्। अतः शब्दाधिकरणं शब्दाधिकरणादन्यदिति पदद्वयोपादानम्। **न व्यावृत्त्यान्तरमस्तीत्यादि।** अत्रानुमाने व्यावृत्तिः कृतैव, व्यावृत्त्यान्तरमन्यव्द्यावृत्त्यर्हं नास्तीत्यर्थः। **भेदसाधनप्रकारदर्शनेत्यादि।** अयं भेदसाधनस्य प्रकारः। यत्र कुत्रापि भेदः साध्यते तत्रायं भेदसाधनोपायः आकाशे तु भेदसाधने अपसिद्धान्तत्वं स्यात्। वैशेषिकादिसिद्धान्ते तत्राभेदस्यैव दर्शितत्वात्।

अथास्यानुमानस्य व्याख्या—अत्र शब्दाधिकरणं गगनमिति पक्षः। शब्दाधिकरणाद्गगनादन्यदिति साध्यो धर्मः। मेयत्वादिति हेतुः। यत्र यत्र मेयत्वं तत्र तत्र शब्दाधिकरणादन्यत्वम्। यथा घटपटादिषु। यथा घटपटादयो मेयाः सन्तः शब्दाधिकरणादन्ये, एवं शब्दाधिकरणमपि शब्दाधिकरणादन्यत्। अत्र च तदेव शब्दाधिकरणं तस्मादेव शब्दाधिकरणादन्यदिति व्याघातः। तस्माच्छब्दाधिकरणबहुत्वं पारिशेष्यात् सिद्धम्। आकाशे च मेयत्वं पुराप्युभयसिद्धं, भिन्नत्वं च प्रतिवादिनोऽसिद्धं अनेन अनुमानेन साध्यते। अत्राकाशं आकाशादन्यदेवमपि वदने अर्थस्य अनन्यत्वमेव, परं महाविद्यानुमानत्वेन किञ्चिद्वक्रच्छाययोक्तम्। एवं च सर्वेषामेकत्वेन अङ्गीकृतानामनेकत्वं साधनीयम्। अत्र च मुख्यानुमानमिदम्—दिक्कालाकाशाः अनेके, द्रव्यत्वात्, घटवत्। इयं च महाविद्या पक्षं पक्षयित्वा प्रवृत्ता। इति सप्तममनुमानम्।।

**(अथ अष्टमानुमानम्।)**

**अथ पुनरपि सकर्तृकत्वसाधनव्याजेन सर्वसाधकप्रकारान्तरदर्शनाय सङ्ग्राहकं श्लोकमाह—पक्षापक्षेतीति।**

**८ पक्षापक्षविपक्षान्यवर्गादेकैकमुद्धृतम् ।**
**भिन्नं साध्यवतस्तद्वदुद्धृतावधिभेदिनः ।।६।।**

**अयं घटः एतद्घटाङ्कुरान्यान्यसकर्तृकान्यः।**

**तस्य अयमर्थः—पक्षो वास्तवः संदिग्धकर्तृकः अङ्कुरादिः, अपक्षः सपक्षो निश्चितकर्तृको घटादिः, विपक्षोऽकर्तृकः आकाशादिः तदन्यवर्गात्पक्षापक्षविपक्षान्यवर्गात्। अन्यतमवर्गादेकैकमुद्धृतं भिन्नं साध्यते इति सम्बन्धः। कस्मात्। साध्यवतः सकर्तृकात्। ततः किम्भूतात्। तद्वदुद्धृतावधिभेदिनः। तद्वान्साध्यवान् यो घटादिरुद्धृतः (स एंव) प्रत्यवधित्वेन भेदो विद्यते यस्य साध्यवतः स तद्वदुद्धृतावधिभेदी तस्मात्।**

**एतेन सपक्षस्यैव पक्षत्वमिति सूचितम्। तथा च विपक्षवर्गादिकोद्धाराभावेन असङ्गतत्वं परिहृतम्। यतोऽप्यत्र अन्तत्वं अन्यतमत्वं विवक्षितम्। अन्यतमत्वं च त्रयोपेक्षया एकस्यापि भवति, द्वयोरपि भवति, व्यक्तिभेदेन त्रयाणामपि भवति। तत्र द्वयोरप्येकोद्धारः संभवत्येवेति न दोषः कश्चित्। एकैकेति वीप्सायाश्चरितार्थत्वात्। तथा चायमर्थः पर्यवसितः स्यात्। एतद्धटाङ्कुरादन्यद्विश्वं तस्मादन्यत्सकर्तृकम्। एतद्द्वयान्यतमत्। तदन्यत्वे साध्यत्वे घटः स्वरूपाद्भिन्नः इति विरुद्धम्। अतोऽङ्कुरात्सकर्तृकादन्यः इति परिशेषादागच्छति।**

**अथ पदयोजना—अत्र पक्षापक्षविपक्षान्यवर्गादिकैकमुद्धृतमिति एतद्धटाङ्कुरान्यान्येत्यनेन व्याख्यातम्। भिन्नमित्युद्धृतविशेषणेन उद्धृतयोरेव पक्षसपक्षयोरेव प्रतियोगित्वख्यापनान्मध्यगतान्यपदद्वयोपादानमपि सूचितमिति पदयोजना।**

**(अथाष्टमानुमानम्)**

**भुवन.—पुनरपि सकर्तृकत्वसाधनव्याजेनेत्यादि।** अयमत्र सकर्तृकत्वसाधनोपायो दर्श्यमानोऽस्ति। अनेन प्रकारेण अकर्तृकत्वपौरुषेयत्वापौरुषेयत्वाद्यपि सर्व साधनीयम्। **पक्षापक्षेतीति।**

**'पक्षापक्षविपक्षान्यवर्गादिकैकमुद्धृतम् ।**
**भिन्नं साध्यवतस्तद्वदुद्धृतावधिभेदिनः' ।।**

**भिन्नं साध्यते इत्यादि।** मूलानुमानापेक्षया पक्षादयो ग्राह्याः। अत्र पक्षमध्यादङ्कुरः सपक्षमध्यात् घटश्च द्वावुद्धृतौ। तत्रानेन अनुमानेन सकर्तृकत्वसाध्यवतः अङ्कुराद्धटस्य भिन्नत्वं साध्यम्। **तद्वदुद्धृतावधिभेदिन इति।** तद्वान् सकर्तृकत्वसाध्यवान् यो घटादिः, स एव प्रत्यवधित्वेन प्रतियोगित्वेन भेदो यस्य अङ्कुरादेः साध्यवतः, स तद्वदुद्धृतावधिभेदी, तस्मात्तद्वदुद्धृतावधिभेदिनः। **एतेन सपक्षस्यैव पक्षत्वं सूचितमिति।** यदि सकर्तृकादङ्कुरात् घटो भिन्नः साध्यते, तदा मूलानुमानसपक्षस्य घटस्य पक्षत्वं सूचितमेवेत्यर्थः।

**अथानुमानम्।** अयं घटः एतद्धटाङ्कुरान्यान्यसकर्तृकान्यः मेयत्वादाकाशादिवत्। **तथा चायमर्थः इत्यादि।** अयं घटः इति पक्षः। एतद्धटाङ्कुरादन्यद्विश्वम्, तस्मादन्यत्सकर्तुकं, एतद्द्वयान्यतमत्। तच्चैतद्धटो वा अङ्कुरो वा। तत्रायं घटः एतस्मात् घटादन्य इति घटते न। नहि कोऽपि स्वस्मात्

भिन्नः। परापेक्षयैव सर्वस्य भिन्नत्वात्। अतोऽङ्कुरात् सकर्तृकात् पक्षीकृताद्धटोऽन्यः इति परिशेषादागच्छति। सकर्तृकादङ्कुरादन्यत्वं घटस्य यदि च सिद्धं, तर्हि अङ्कुरः सकर्तृको जातः एव। अङ्कुरस्योपलक्षणत्वात्। भूभूधरादेरप्यनेनैवानुमानेन सकर्तृकत्वं साधनीयम्। तस्य च कर्ता स एव ईश्वर इतीश्वरसिद्धिः।

**अथ व्यावृत्त्यचिन्ता—घटः सकर्तृकादन्यः इति कृते पटाद्यन्यत्वेन सिद्धसाधनम्। तदर्थमेतद्धटान्यसकर्तृकान्य इति कृतम्। तथापि सिद्धसाधनं तथैव इत्यङ्कुरपदप्रक्षेपः। तथा चैवमनुमानं स्यात्-घटः एतद्धटाङ्कुरान्यसकर्तृकान्यः। तथापि पटाद्यन्यत्वेन सिद्धसाधनं तथैवेति द्वितीयान्यपदोपादनम्। अयं घटः एतद्धटाङ्कुरान्यान्यधर्मवानित्येतावन्मात्रे क्रियमाणे घटत्वेन सिद्धसाधनं, अङ्कुरत्वेन च व्याघातः। तदर्थमेतद्धटाङ्कुरान्यान्यसकर्तृकधर्मवानिति कृतम्। तथापि सिद्धसाधनं तदवस्थमेवेति अन्यपदप्रक्षेपः। इति व्यावर्त्यचिन्ता। अथवा प्रकारान्तरेणान्वयः क्रियते—एकैकमुद्धृतं भिन्नं साध्यते। किम्भूतम्। तद्वत् साध्यवत्। सकर्तृकत्वधर्मयुक्तमित्यर्थः। एतेन सपक्षस्य पक्षत्वमपि सूचितं भवति। इति अष्टमानुमानं समाप्तम्।।**

**भुवन.**—अथ व्यावृत्त्यचिन्ता। **घटः सकर्तृकादन्य इति**। यदि घटः सकर्तृकादन्यः इति कियते, तदा घटस्य सकर्तृकात्पटादन्यत्वेन सिद्धसाधनं स्यात्। **तदर्थमेतद्धटान्यसकर्तृकान्य इतीति**। एवं कृतेऽपि तथैव पूर्वोक्तप्रकारेणैव सिद्धसाधनम्। एतद्धटादन्यः सकर्तृकः पटः, तस्मादन्यत्वस्य घटे सद्भावात्। **तथापि पटाद्यन्यत्वेन सिद्धसाधनमिति**। एतद्धटाङ्कुराभ्यामन्यो यः सकर्तृकः पटः, तस्मादन्यत्वस्य घटे सद्भावात् सिद्धसाधनमित्यर्थः। **घटत्वेन सिद्धसाधनं अङ्कुरत्वेन च व्याघातः इति**। अयं घट एतद्धटाङ्कुरान्यान्यधर्मवानिति यदि क्रियते, तदैतद्धटाङ्कुराभ्यामन्यद्विश्वं, तस्मादन्यौ एतद्धटाङ्कुरावेव। तयोर्धर्माः घटत्वादयोऽङ्कुरत्वादयश्च। तत्र घटत्ववत्त्वे घटस्य साध्यमाने सिद्धसाधनम्। अङ्कुरत्ववत्त्वे च घटस्य साध्यमाने व्याघातः। अङ्कुरत्ववत्त्वस्य घटे अभावात्। **तदर्थमेतद्धटाङ्कुरान्यान्येत्यादि**। अत्र सकर्तृकपदक्षेपेऽपि सकर्तृकत्वस्याङ्कुरेऽद्यापि विवादास्पदीभूतत्वात् यद्यपि व्याघातो न सम्भवति, तथापि सकर्तृको यो घटस्तद्धर्मवत्त्वे घटस्य साध्यमाने सिंद्धसाध्यता स्यादेवेत्यर्थः। **अथवा**

**प्रकारान्तरेणान्वयः। इति।** अन्वयः। प्रकारान्तरेण सम्बन्धयोजनं क्रियते इत्यर्थः। **एकैकमित्यादि।** एकैकं उद्धृतं भिन्नं घटादि साध्यते। किम्भूतं। तद्वत् सकतृर्कत्वं यत् साध्यं तद्युक्तमित्यर्थः। पूर्वं तद्वदितिपदं 'उद्धृतावधिभेदिनः' इत्यनेन समस्तं कृतम्, अत्र तूद्धृतमित्येतस्य विशेषणं कृतमिति भेदः इत्यर्थः। अथ व्याप्तिः प्रदर्श्यते। यद्यत् प्रमेयं तत्तदेतद्धटाङ्कुरान्यान्य-सकर्तृकान्यत् यथा आकाशादि। घटान्यत्वस्य आकाशादौ सर्वत्र सद्भावात्। अस्या महाविद्यायाः मुख्यानुमानमिदम्—भूभूधराङ्कुरादिसकर्तृकं कार्यत्वात्, घटवत्। इयं महाविद्या सपक्षं पक्षयित्वा प्रवृत्ता। इति अष्टमानुमानम्।।

**(अथ नवमानुमानम्)**

**अस्यैवानुमानस्य पदान्तरकरणेन दर्शयति—**

**९ तस्यैव तदवृत्तेन योगो वात्र प्रसाध्यते।**

**अयं घटः एतद्धटाङ्कुरान्यान्यसकर्तृकावृत्तिमान्।**

**अयमर्थः—तस्यैवोपलक्षणस्य पक्षस्य घटस्य। तदवृत्तेनेति—एतद्ध-टाङ्कुरान्यान्यसकर्तृकावृत्तेन योगः संबन्धः साध्यते। वर्त्तनं वृत्तः(त्तिः)तेन वर्तनेन इत्यर्थः। अन्त्यस्य अन्यपदस्य स्थाने वृत्तिमानिति पदान्तरकरणेनेत्यर्थः। वाशब्दो भङ्ग्यन्तरसूचनार्थः। अत्रापि व्यावर्त्यानि पूर्वोक्तोदाहरणकथितान्येव। अर्थस्य अर्थ्यधीनत्वात्। इति नवममनुमानम्।।**

**(अथ नवमानुमानम्।)**

**भुवन.—तस्यैवेतीति।**

**'तस्यैव तदवृत्तेन योगो वात्र प्रसाध्यते' ।।९।।**

**तस्यैवोपलक्षणस्येति।** अङ्कुरस्य मुख्यानुमानापेक्षया पक्षत्वेऽप्युप-लक्षणत्वेन घटस्य सपक्षमध्यादुद्धृत्य पक्षीकृतस्येत्यर्थः। अथानुमानम्—अयं घटः एतद्धटाङ्कुरान्यान्यसकर्तृकावृत्तिमान् मेयत्वात् आकाशादिवत् वा। एतद्ध-टाङ्कुराभ्यामन्यद्विश्वं, तस्मादन्यौ एतद्धटाङ्कुरावेव सकर्तृकौ, तत्र यो न वर्तते तद्वान् पक्षीकृतो घटः साध्यते इत्यर्थः। तत्र घटे घटावृत्तिधर्मवत्त्वं विरुद्धं, तस्मात् सकर्तृकेऽङ्कुरे यो न वर्तते स एतद्धटाङ्कुरान्यान्यसकर्तृका-वृत्तिर्घटत्वादिधर्मः, तद्वान् घट इत्यायातम्। तथा च सति अङ्कुरस्य सकर्तृकत्वं पारिशेष्यात्सिद्धम्। शेषं पूर्ववत्। इति नवमानुमानम्।।

(अथ दशमानुमानम्)

पुनरप्येतदेवानुमानं पदान्तरोपादानेन भङ्ग्यन्तरेण दर्शयति—

१० तद्वृत्त्यवृत्तिरथवा प्रोद्धृतेऽत्र प्रसाध्यते ।।७।।

यथा–अयं घटः एतद्धटाङ्कुरान्यान्यसकर्तृकधर्मविरही।

अयमर्थः—तद्वृत्तिः यो धर्मः एतद्घटाङ्कुरान्यान्यसकर्तृकवृत्ति-रित्यर्थः। तस्य धर्मस्य या अवृत्तिः वर्तननिषेधः। स चात्र घटे प्रसाध्यते इत्यर्थः। अत्र अथवा शब्दो भङ्ग्यन्तरसूचनार्थः एव। व्यावृत्त्यानि च तानि पूर्वतनान्येव। इति दशमानुमानं समाप्तम्।।

(अथ दशमानुमानम्।)

भुवन.—तद्वृत्तीति।

'तद्वृत्त्यवृत्तिरथवा प्रोद्धृतेऽत्र प्रसाध्यते' ।।१०।।

अथानुमानम्—अयं घटः एतद्धटाङ्कुरान्यान्यसकर्तृकधर्मविरही मेयत्वात् गगनादिवत्। सकर्तृकघटाङ्कुरयोर्ये धर्मास्तेषां विरहो घटे साध्यते। तत्र घटे घटधर्मविरहस्तावत्संभवति न। तस्मात्सकर्तृकाङ्कुरधर्माः अङ्कुरत्वादयः तेषां विरहो घटे प्रसाध्यते। तथा च सति सकर्तृकाङ्कुरधर्मविरही घटः तदैव, यद्यङ्कुरः सकर्तृकः स्यादित्यर्थः। शेषं पूर्ववदेव ज्ञेयम्। इति दशमानुमानम्।।

(अथ एकादशानुमानम्।)

एवमेकस्मिन्नेवार्थे सर्वसाधकं प्रकारत्रयं दर्शितम्। इदानीं पुनः शब्दानित्यत्वसाधनं प्रकारान्तरं दर्शयितुं संग्राहकं कारिकार्धमाह—

११ असाध्यान्यवियुक्तान्यव्यावृत्तिर्वा प्रसाध्यते ।

शब्दः साध्याभावान्यैतद्वियुक्तान्यव्यावृत्तिमान्।

असाध्यं नित्यत्वं, तस्मादन्यत् अनित्यत्वम्। तस्मादसाध्यान्यात् अनित्यत्वात् वियुक्तोऽन्यो नित्यरूपः सोऽसाध्यान्यवियुक्तान्यः नित्यः। तस्माव्द्यावृत्तिर्वा व्यतिरेको वा प्रसाध्यते, शब्दे इति शेषः इति केचिव्द्याख्यातवन्तः। तदसंगतम्। तथा सति आकाशादौ सपक्षे तथाभूत-मित्यत्वलक्षणधर्मव्यतिरेकस्वीकारे अनिष्टापत्तिः स्यात्। अयं चार्थः—असाध्यात् नित्यादन्यत् एतद्वियुक्तं शब्दव्यतिरिक्तं विश्वं एतद्द्वयव्यतिरेकेण

**भवति। तस्मादन्यदेतद्द्वयमेव। तस्माद्व्यावृत्तिमत्त्वे साध्ये शब्दः शब्दव्यावृत्तिमानित्युक्ते विरोधः स्यात्। अतः परिशेषात् नित्यः शब्दो न भवतीति नित्यव्यावृत्तिरागच्छति। सति चैवमर्थे शब्दः आकाशो न भवतीति शब्दमादाय व्याप्तिः।**

**(अथ एकादशानुमानम्।)**

**भुवन.—असाध्यान्येतीति।**

**'असाध्यान्यवियुक्तान्यव्यावृत्तिर्वा प्रसाध्यते' ।।**

**इति केचिद्व्याख्यातवन्तः तदसङ्गतमिति।** अस्मिन्व्याख्याने नित्यव्यावृत्तिः प्रसाध्या। तथा च सति आकाशे दृष्टान्तीक्रियमाणे नित्यव्यावृत्तौ स्वीक्रियमाणायामनिष्टापत्तिः स्यात्। आकाशस्य नित्यत्वात्। ततोऽन्वयित्वव्याघातात् इदं व्याख्यानमसङ्गतमित्यर्थः। **अयं चार्थः इत्यादि।** अत्रानुमानमध्ये एतदः प्रोक्तत्वात् कारिकार्थव्याख्यानावसरे सोऽनुक्तोऽपि गृह्यते। एतस्माच्छब्दाद्वियुक्तमेतद्वियुक्तं शब्दव्यतिरिक्तं विश्वम्। तत् किंविशिष्टम्। असाध्यान्यत् असाध्यात् नित्यादन्यत् असाध्यान्यत्। ततश्च असाध्यान्यच्च तत् एतद्वियुक्तं च असाध्यान्यैतद्वियुक्तमिति कर्मधारयः। एतावता नित्येन शब्देन च विरहितं विश्वं जातम्। ततोऽसाध्यान्यवियुक्तादन्यौ असाध्यान्यवियुक्तान्यौ, तौ च नित्यशब्दावेव। तयोर्व्यावृत्तिर्भिन्नत्वं शब्दे साध्यते।

अथानुमानम्। शब्दः साध्याभावान्यैतद्वियुक्तान्यव्यावृत्तिमान् मेयत्वात् घटाकाशादिवत्। **अतः परिशेषान्नित्यव्यावृत्तिरागच्छतीत्यादि।** शब्दे शब्दव्यावृत्तिर्घटते न। तस्मान्नित्यव्यावृत्तिरायाति। तथा च नित्यव्यावृत्तौ सत्यां शब्दोऽनित्यो जातः एव। ननु एकस्माच्छब्दादपरः शब्दो व्यावर्तते इति शब्दव्यावृत्तिरपि शब्दे जाघटीत्येव, कस्मान्न घटते इत्युक्तम्। उच्यते। अत्र पक्षीकृतशब्दमध्ये सर्वे त्रिभुवनोदरविवरवर्तिनः शब्दाः गृहीताः। अयं शब्दः इत्यभणनात्। ततो न कश्चिद्दोषः। **सति चैवमर्थे शब्दः आकाशो न भवति इत्यादि।** अत्र साध्यतात्पर्ये द्वयमुद्धरितं शब्दनित्यरूपम्। तत्रान्यव्यावृत्तिरिति भणने शब्दनित्यरूपपदार्थद्वयाद् यदि व्यावृत्तिर्भवति, तदाप्यन्यव्यावृत्तिरुच्यते। द्वयोर्मध्ये एकस्माद्यदि व्यावृत्तिर्भवति तदाप्यन्यव्यावृत्तिरुच्यते। अन्यशब्दस्य साधारणत्वात्। ततोऽस्मिन्ननुमाने आकाशे दृष्टान्तीक्रियमाणे आकाशस्य

नित्यरूपत्वान्नित्यव्यावृत्तिर्न घटते। ततः शब्दः आकाशरूपो न भवतीत्याकाशस्य शब्दाव्द्यावृत्तिः क्रियते। एवमात्मघटादावपि ज्ञेयम्।

**अत्र पदयोजना सुगमैव।**

**भुवन.—अत्र पदयोजना सुगमैवेति।** अत्र साध्याभावान्येत्यनेन असाध्यान्येति, एतद्वियुक्तान्येत्यनेन वियुक्तान्येति च, व्यावृत्तिमानित्यनेन व्यावृत्तिः साध्यते इति च व्याख्यातमित्येवं पदयोजना कार्या।

**अथ व्यावृत्त्यचिन्ता—अयं शब्दः साध्याभाववानिति कृते विपरीतसाधनं स्यात्। तदर्थं साध्याभावान्यवानिति कृतम्। तथापि शब्दत्वेन सिद्धसाधनम्। तदर्थं साध्याभावान्यैतद्वियुक्तवानिति कृतम्। तथाप्येतद्द्वयातिरिक्तेन शब्दत्वादिना सिद्धसाधनम्। तदर्थं द्वितीयान्यपदोपादानम्। तथापि एतदुभयातिरिक्ताद्विश्वस्मादन्यत् नित्यत्वमेव भवति। तेन सिद्धसाधनं स्यात्प्रतिवादिनः तदर्थं व्यावृत्तिमानिति कृतम्। इति व्यावृत्त्यचिन्ता।। इत्येकादशोदाहरणम्।।**

**भुवन.**—अथ व्यावृत्त्यचिन्ता। **तथापि शब्दत्वेन सिद्धसाधमिनति।** अयमर्थः—यदि साध्याभावान्यवानिति क्रियते, तदा साध्याभावो नित्यत्वं तस्मादन्यच्छब्दत्वं, तद्वान् शब्दः स्यात्, तथा च सिद्धसाधनम्। **तथाप्येतद्द्वयातिरिक्तेन शब्दत्वादिनेति।** यदि साध्याभावान्यैतद्वियुक्तवानिति क्रियते, तदापि शब्दनित्यत्वद्वयव्यतिरिक्तं शब्दत्वमपि भवति। ततः शब्दत्वं शब्दे साध्यमाने सिद्धसाध्यतैव। **तदर्थं द्वितीयान्यपदोपादानमित्यादि।** तथा च सति साध्याभावान्यैतद्वियुक्तान्यः इति जातम्। तत्र साध्याभावो नित्यत्वं, तस्मादन्यद्यदेतद्वियुक्तं शब्दव्यतिरिक्तं विश्वम्। एतावता एतदुभयादन्यद्विश्वं सिद्धम्। ततोऽप्यन्यदेतद्द्वयमेव। तत्र शब्दः शब्दवानिति तु भवति न। आत्माश्रयबाधकतर्कसद्भावात्। नित्यत्ववानिति तु कृते तादृशस्य प्रतिवादिनः सिद्धसाध्यतैवेत्यर्थः। **तदर्थं व्यावृत्तिमानित्यादि।** तथा च शब्दः साध्याभावान्यैतद्वियुक्तान्यव्यावृत्तिमानिति संपूर्णा प्रतिज्ञा जाता। साध्याभावान्यैतद्वियुक्तान्यश्च शब्दो वा नित्यत्वं वा। तत्र शब्दव्यावृत्तिमत्त्वं शब्दे व्याहतत्वात् घटाकाशादिसर्वसपक्षोपयोगि। नित्यत्वव्यावृत्तिमत्त्वं तु शब्दे सिध्यत् परिशेषाच्छब्दानित्यत्वं साधयति। अत्र अनित्यः शब्दः कृतकत्वाद्घटवदिति मुख्यानुमानम्। इत्येकादशोदाहरणम्।

(अथ द्वादशानुमानम्।)

**पुनरप्येतदेव शब्दानित्यत्वानुमानं प्रथमान्यपदानुपादानेऽपि संभवतीति श्लोकार्धेन दर्शयति—असाध्येतीति।**

**१२ असाध्यतद्वियुक्तान्यव्यावृत्तिर्वा प्रसाध्यते ।।८।।**

**शब्दः साध्याभावतद्वियुक्तान्यव्यावृत्तिमान्।**

**अत्रापि तच्छब्देन पक्षपरामर्शः। अयमर्थः—असाध्येन नित्येन, तेन च शब्देन वियुक्तं असाध्यतद्वियुक्तम्। एतद्द्वयातिरिक्तं विश्वम्। तस्मादन्यदेतद्द्वयमेव। तद्व्यावृत्तिमानित्युक्ते स्वव्यावृत्तिर्विरोधेन अनुपपन्ना नित्यत्वव्यावृत्तिमानयाति। आकाशादौ शब्देन व्याप्तिः पूर्ववदेव। व्यावृत्त्यादीनि च पूर्वोक्तान्येवेति न पृथगभिहितानि। इति द्वादशानुमानम्।।**

(अथ द्वादशानुमानम्।)

**भुवन.**—अथैतदेवानुमानमाद्यान्यपदानुपादानेन कारिकामध्येऽध्याहारितैतदः स्थाने तच्छब्दं च प्रयुज्य प्रकारान्तरेण दिदर्शयिषुः शब्दानित्यत्वसाधनाय कारिकार्द्धं व्याख्यातुमाह—**असाध्येतीति।**

**'असाध्यतद्वियुक्तान्यव्यावृत्तिर्वा प्रसाध्यते' ।।१२।।**

**तद्व्यावृत्तिमानित्युक्ते इत्यादि।** शब्दः शब्दाव्यावर्तते इति तु घटते न। ततो नित्यत्वव्यावृत्तिः शब्दे परिशेषादागतैव। तथा च सति अनित्यत्वं सिद्धं शब्दस्य। शेषं सर्वं पूर्ववत्। इति द्वादशमुदाहरमम्।

(अथ त्रयोदशानुमानम्।)

**एवं शब्दानित्यत्वसाधकं प्रकारद्वयं प्रदर्श्य पुनरपि सर्वसाधकं प्रकारं दर्शयितुं संग्राहकं कारिकार्धमाह—**

**१३ पक्षेषु ये सन्ति विवादहीनाः**
**विहाय तानन्यतरः प्रसाध्यः ।**

**शब्दः संप्रतिपन्नैतन्निष्ठान्यधर्मवान्।**

**अयमर्थः—पक्षेषु संदिग्धसाध्यवत्सु शब्दादिषु ये विवादहीनाः उभयवादिसंमता धर्माः शब्दत्वादिलक्षणाः सन्ति, तान् धर्मान् विहाय परित्यज्य अन्यतरो विप्रतिपन्नः प्रसाध्यः साधनीयः। पक्षेष्विति**

**सामान्यपदोपादानेन वास्तवस्यैव पक्षस्य पक्षतेति सूचितम्। उदाहरणं च अतिसुगममेवेति न लेशतोऽपि व्याकृतम्। इति त्रयोदशानुमानम्।।**

**(अथ त्रयोदशानुमानम्।)**

**भुवन.—एवं शब्दानित्यत्वसाधकं प्रकारद्वयमिति।** पूर्वोक्तं ह्यनुमानद्वयं साध्यपदविपर्यासं विना अनित्यत्वादन्यसाध्यसाधकं न भवति। तेन शब्दानित्यत्वसाधकमित्युक्तम्। **पुनरपि सर्वसाधकमिति।** अग्रेतनमनुमानं साध्यपदविपर्यासं विनापि पक्षविपर्यासेनैव स्वाभिमतसाध्यसाधकं भवतीति सर्वसाधकमित्युक्तम्। एवमन्यत्रापि यथायोगं ज्ञेयम्। **पक्षेष्वितीति।**

**'पक्षेषु ये सन्ति विवादहीनाः**
**विहाय तानन्यतरः प्रसाध्य' ।।१३।।**

अनुमानं यथा—शब्दः संप्रतिपन्नैतन्निष्ठान्यधर्मवान् मेयत्वान् घटवत्। शब्दः पक्षः। संप्रतिपन्ना वादिना प्रतिवादिना चाङ्गीकृताः, एतस्मिन् शब्दे निष्ठाः एतन्निष्ठाः। संप्रतिन्नाश्च ते एतन्निष्ठाश्च संप्रतिपन्नैतन्निष्ठाः श्रावणत्वशब्दत्वादयः। तेभ्यो योऽन्यो धर्मः प्रतिवादिनो विप्रतिपन्नः अनित्यत्वलक्षणः, तद्वान् शब्दः इत्यर्थः। नित्यत्वं तु प्रतिवादिना प्रतिपन्नम्। तेन नित्यत्वं संप्रतिपन्नैतन्निष्ठान्यधर्मी न भवति, किन्त्वनित्यत्वमेवेति शब्दानित्यत्वसिद्धिः। अत्र व्याप्तिरेवम्—यद्यत् प्रमेयं तत्तत्संप्रतिपन्नैतन्निष्ठान्यधर्मवत् यथा घटः आकाशं वा। शब्दे ये संप्रतिपन्नाः श्रावणत्वादयः तेभ्योऽन्ये घटत्वनित्यत्वादयः, तद्वत्त्वस्य घटाकाशादिष्वपि सत्त्वात्। इति त्रयोदशोदाहरणम्।।

**(अथ अचतुर्दशानुमानम्।)**

**अथ पुनरस्यैव श्लोकस्य तृतीयपादेन भङ्ग्यन्तरमस्यैव प्रकारस्य कथयति—**

**१४ पक्षोऽथवा साध्यविनाकृतेन् ।**

**शब्दः साध्यव्यतिरिक्तैतद्धर्मातिरिक्तधर्मवान्।**

**अथवा भङ्ग्यन्तरसूचनार्थः। अथवा पक्षः शब्दादिः साध्यविनाकृतेन साध्येन विनाकृतेन साध्यव्यतिरिक्तेन धर्मेण साध्यते। किम्भूतः साध्यते इत्याकाङ्क्षायामेतद्धर्मातिरिक्तधर्मवानिति पूर्वार्द्धादनुवर्तते। श्लोकस्यैकत्वा-**

दिति। अत्रापि उदाहरणं सुगममेवेति पूर्ववन्न व्याख्यातम्। इति चतुर्दशानुमानम्।

(अथ चतुर्दशानुमानम्।)

**भुवन.—पक्षोऽथवेतीति।**

**'पक्षोऽथवा साध्यविनाकृतेन' ।।१४।।**

साध्येन विनाकृतेनेति भणनात् साध्यव्यतिरिक्तेति पदं जातम्। तदग्रे एतद्धर्मातिरिक्तधर्मवानिति पूर्वार्द्धादनुवर्तते। ततः इत्थमनुमानं जातम्—शब्दः साध्यव्यतिरिक्तैतद्धर्मातिरिक्तधर्मवान् मेयत्वात् घटाकाशादिवत्।।

अत्रानुमानपदव्याख्या—शब्दः पक्षः, साध्यमनित्यत्वं, तस्माद्व्यतिरिक्ताः अन्ये ये एतद्धर्माः शब्दधर्माः श्रावणत्वसत्त्वादयः, तेभ्योऽतिरिक्तः साध्यव्यतिरिक्तेति पदेन पृथक्कृतोऽनित्यत्वधर्मः एव शब्दे आयाति। तद्वान् शब्दः साध्यते। अत्रापि साध्यव्यतिरिक्ता ये शब्दधर्माः तेभ्योऽतिरिक्ताः अन्ये घटत्वाकाशगतैकत्वादयः, तद्वत्त्वेन घटाकाशादिषु व्याप्तिः। इति चतुर्दशानुमानम्।।

(अथ पञ्चदशानुमानम्।)

**अथ पुनरस्यैव श्लोकस्य चतुर्थपादेन वास्तवपक्षस्य प्रतिज्ञान्तःप्रक्षेपेणापि अभीष्टसाधकः प्रकारः संभवतीति दर्शयति—विच्छिद्येति।**

**१५ विच्छिद्य वाऽभाववदन्वितेन ।।९।।**

**शब्दः शब्दनित्यावृत्तिधर्मवान्।**

**अयमर्थः—विच्छिद्य भिन्नीकृत्य प्रतिज्ञान्तर्गतं कृत्वा। पक्षमित्यर्थः। अभाववदन्वितेति। अभावः साध्याभावः। साध्यमनित्यत्वं, तस्य अभावो नित्यत्वं, तद्वत् तद्युक्तम्। साध्याभाववन्नित्यमित्यर्थः। तत्र साध्याभाववदन्वितेन नित्येन साध्यते। किम्भूतः साध्यते इत्याकाङ्क्षायां पूर्ववव्द्यावृत्तधर्मवानिति श्लोकैकत्वादनुवर्तते।**

**अथ योजना—अत्र प्रतिज्ञान्तर्गतेन शब्दपदेन श्लोकगतं विच्छिद्येति पदं व्याख्यातम्। नित्यवृत्तिधर्मवानित्यनेन अभाववदन्वितेनेति व्याख्यातम्। इति योजना।।**

(अथ पञ्चदशानुमानम्)।

**भुवन.**—**वास्तवपक्षस्येति।** शब्दस्य। **विच्छिद्येतीति।**

'विच्छिद्य वाऽभाववदन्वितेन' ।।१५।।

**विच्छिद्य भिन्नीकृत्येत्यादि।** पक्षं शब्दरूपं प्रतिज्ञान्तः साध्यमध्ये निक्षिप्येत्यर्थः। अयमर्थः—विच्छिद्येतिपदेन शब्दस्य पक्षाद्बहिष्करणाच्छब्देति पदं प्रतिज्ञायां लब्धम्, अभाववदन्वितेनेति कथनात् शब्दस्याग्रे नित्येतिपदं च। ततः पक्षशब्दस्याग्रे शब्दनित्येति जातम्। ततस्तदग्रेऽवृत्तिधर्मवानिति पूर्वश्लोकादनुवर्त्य योजितम्। तथा च सत्येवमनुमानं जातम्—शब्दः शब्दनित्यावृत्तिधर्मवान् मेयत्वात् घटाकाशादिवत्। शब्दश्चासौ नित्यश्च शब्दनित्यः, तत्र यो न वर्तते धर्मः तद्वान् शब्दः। एवंविधश्च शब्दत्वश्रावणत्वादिः साध्यो धर्मः। अत्र यदि शब्दो नित्योऽङ्गीकियते, तदा शब्दत्वादिर्धर्मः शब्दनित्यावृत्तिर्न भवति, शब्दरूपे नित्ये वर्तनात्। तस्माच्छब्दस्यानित्यत्वमङ्गीकार्यमिति परिशेषाच्छब्दानित्यत्वसिद्धिः।

**अथ व्यावृत्त्यचिन्ता—शब्दोऽवृत्तिधर्मवानिति कृते व्याघातः। तदर्थं नित्यावृत्तिधर्मवानिति कृतम्। तथापि नित्ये आत्मादौ न वर्तते यत् शब्दत्वादि तेन सिद्धसाधनम्। तदर्थं शब्दपदं प्रक्षिप्तम्। तथापि शब्दत्वं शब्दे नित्ये आत्मादौ च न वर्तते इति सिद्धसाधनम्, शब्दे एव वर्तनादिति न च वाच्यम्। नित्यपदसमानाधिकरणं शब्दपदं स्वनिष्ठामनित्यतां व्यावर्तयति, शब्दनित्ये वर्तयति। शब्दनित्ये वर्तनात्तु शब्दनित्यावृत्तीति न सिद्धसाधनमिति सर्वमनवद्यम्। इति पञ्चदशानुमानम्।।**

**भुवन.**—अथ व्यावृत्त्यचिन्ता। **शब्दोऽवृत्तिधर्मवानितीति।** वर्तनं वृत्तिः, न विद्यते वृत्तिः यस्य सोऽवृत्तिः, स चासौ धर्मश्च, तद्वान् शब्द इति व्याघातः। **तदर्थं नित्यावृत्तीत्यादि।** व्याघातस्य पूर्वोत्पादितस्य निवृत्त्यर्थं नित्यपदं प्रक्षिप्तम्। तथा सति नित्यावृत्तिधर्मवानिति जातम्। तथापि शब्दत्वेन सिद्धसाधनम्, तदर्थं शब्दपदं प्रक्षिप्तम्। अथ पराशङ्कामुद्भाव्य तां निराकुरुते—**तथापि शब्दत्वमित्यादि।** तथापि एवं क्रियमाणेऽपि शब्दत्वं शब्दे वर्तते, नित्ये आत्मादौ च न वर्तते इति युगलावृत्तित्वेन शब्दनित्यावृत्ति भवति। तस्मात्तेन सिद्धसाधनमिति न च वाच्यम्। **नित्यपदसमानाधिकरणमित्यादि।** शब्दश्चासौ नित्यश्चेत्येवं नित्यपदेन समानाधिकरणं

नित्यपदसमानाधिकरणम्। किं तदित्याह—**शब्दपदम्।** तत् किं करोतीत्याह—**व्यावर्तयति।** कां कर्मतापन्नाम्। **स्वनिष्ठामनित्यताम्।** अयमर्थः—यदि शब्दनित्यपदयोर्विशेषणविशेष्यभावो जातः, तदा शब्दः स्वस्मादनित्यतां व्यावर्तयत्येव। **शब्दनित्ये वर्तयतीत्यादि।** अत्र पूर्वप्रस्तुतं शब्दत्वं कर्म नित्यपदसमानाधिकरणं शब्दपदं कर्तृ शब्दनित्ये वर्तयति। तथा च सति शब्दत्वं शब्दरूपे नित्ये यदि वर्तते, तदा शब्दनित्यावृत्ति तन्न स्यात्। अनुमाने च शब्दनित्यावृत्तीत्युक्तम्। तस्मान्न सिद्धसाधनमिति सर्वमनवद्यमित्यर्थः। अथ व्याप्तिः—यः यः प्रमेयः स स शब्दनित्त्यावृत्तिधर्मवान् घटाकाशादिरित्यर्थः। इति पञ्चदशोदाहरणम्।।

**(अथ षोडशानुमानम्।)**

**अथ पुनरपि प्रथममेवानुमानं साध्याश्रयविपक्षव्यावर्तनेन भङ्ग्यन्तरेण दर्शयति—अपक्षेति।**

**१६ अपक्षसाध्यवद्वृत्तिविपक्षान्वयि यन्न तत्।**
**साध्याश्रयविपक्षान्यविपक्षे व्यतिरेकभाक् ।।१०।।**

यथा—शब्दः शब्देतरानित्यनित्यावृत्त्याकाशान्यनित्यमात्रवृत्तित्वानधिकरणाकाशधर्मवान्।

इति षोडशानुमानात्मकदशश्लोकीमहाविद्यासूत्रं समाप्तम्।।

**अस्यायमर्थः—अपक्षः पक्षादन्यो यः साध्यवान् सपक्षः। तद्वृत्ति विपक्षवृत्ति च यन्न भवति, यच्च साध्याश्रयो यो विपक्षः आकाशः तस्मादन्यो यो विपक्षो नित्यमात्रं तद्वृत्ति न भवति। तथाभूतं धर्मान्तरं वास्तवे पक्षे साध्यते इति संबन्धः।**

**अथ पदयोजना—अत्र शब्देतरानित्येत्यनेन अपक्षसाध्यवद्वृत्तीति व्याख्यातम्, नित्येत्यनेन विपक्षान्वयीति, अवृत्तीत्यनेन यन्नेति, आकाशान्येत्यनेन साध्याश्रयविपक्षान्येति। नित्यमात्रवृत्तित्वानधिकरणेत्यनेन विपक्षे व्यतिरेकभागिति योजना।**

**(अथ षोडशानुमानम्।)**

**भुवन.—साध्यश्रयविपक्षेत्यादि।** अत्र साध्यः पक्षीकृतः शब्दः। तदाश्रयो विपक्षः आकाशः। तस्य व्यावर्तनेन निषेधनेनेत्यर्थः। **अपक्षेतीति।**

'अपक्षसाध्यवद्वृत्तिविपक्षान्वयि यत्र तत्।
साध्याश्रयविपक्षान्यविपक्षे व्यतिरेकभाक्' ।।१६।।

**अपक्षः पक्षादन्यः इत्यादि।** अपक्षः पक्षादन्यो यः साध्यवान्, सपक्षो घटादिः। तत्र विपक्षे आकाशादौ च युगलावृत्तित्वेन यत्र वर्तते। **यच्च साध्याश्रयो यो विपक्षः इत्यादि।** साध्यते इति साध्यः पक्षः शब्दः। तदाश्रयो विपक्षः आकाशः। तस्मादन्यो विपक्षो नित्यमात्रं, तत्र व्यतिरेकभाक् अवृत्तिभाक्, न वर्तते इत्यर्थः। अत्राकाशव्यतिरिक्तात्मादिनित्येषु वृत्तिनिषेधादाकाशवृत्तित्वमनुज्ञातमेव। विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात्। अत एव आकाशधर्मवानिति कारिकायामनुक्तमप्यनुमाने गृहीतम्। एवंविधं धर्मान्तरं पक्षे साध्यते इत्यर्थः। अथानुमानम्। शब्दः शब्देतरानित्यनित्यावृत्त्याकाशान्यनित्यमात्रवृत्तित्वानधिकरणाकाशधर्मवान् मेयत्वात् घटाकाशादिवत्।

**अथ व्यावृत्त्यचिन्ता—आकाशधर्मवानिति कृते नित्यत्वेन विपरीतसाधनं स्यात्। तदर्थं नित्यमात्रवृत्तित्वानधिकरणेति। तथापि द्रव्यत्वेन व्याघातः। तदर्थमाकाशान्येति। तथापि द्रव्यत्वेन व्याघातस्तदवस्थः एव। तदर्थमनित्यनित्यावृत्तीति। तथापि न विवक्षितसिद्धिरिति शब्देतरेति पदं प्रक्षिप्तम्। इति सर्वमनवद्यम्। इति षोडशानुमानम्।।**

**महाविद्यादशश्लोकी विवृतापि चिरन्तनैः।
मन्दधीवृद्धिसिद्ध्यर्थं विवृतेयं यथागमम्।।**

**इति महाविद्याविवणं समाप्तम्।**

**भुवन.**—अथ व्यावृत्त्यचिन्ता। **आकाशधर्मवानित्यादि।** यदि शब्दः आकाशधर्मवानिति क्रियते, तदा साध्यमनित्यत्वं तत्र न सिद्ध्यति, किन्तु नित्यत्वम्। तथा च सति विपरीतसाधनं स्यादित्यर्थः। **तदर्थं नित्यमात्रवृत्तित्वेत्यादि।** शब्दो नित्यमात्रवृत्तित्वानधिकरणाकाशधर्मवानिति यदि क्रियते, तदा द्रव्यत्वेन व्याघातः। ततो द्रव्यत्वं नित्यमात्रे एव न वर्तते, किन्तु अनित्ये घटपटादावपि वर्तते, ततो नित्यमात्रवृत्तित्वानधिकरणम्। आकाशेऽपि वर्तनात्। 'आकाशधर्मश्च द्रव्यत्वम्। तच्चेत् शब्दे साध्यते, तदा व्याघातः स्यादेव। शब्दस्य गगनगुणत्वात्। गुणे च द्रव्यत्वाभावात्। तदर्थमाकाशान्येत्यादि। तथाच आकाशान्येति पदे प्रक्षिप्ते आकाशान्यनित्यमात्र-

वृत्तित्वानधिकरणाकाशधर्मवानिति जातम्। एवं चोच्यमाने द्रव्यत्वेन व्याघात: तदवस्थ: एव। द्रव्यत्वस्य घटादिष्वनित्येष्वाकाशेऽपि च वतर्नात्। आकाशान्यनित्यमात्रवृत्तित्वानधिकरणत्वस्याकाशधर्मत्वस्य च विद्यमानत्वात्। तदर्थमनित्यनित्यावृत्तीत्युपात्तम्। **तथापि न विविक्षितसिद्धिरिति।** विवक्षितमत्र शब्दानित्यत्वं, तन्न सिद्ध्यति।

यत: एवंविध: शब्दाकाशान्यतरत्वादि: साध्यो धर्म: उपद्यते। तस्य च धर्मस्य शब्दानित्यत्वे स्वीक्रियमाणे सति, अनित्ये शब्दे नित्ये चाकाशे वर्तनादनित्यनित्यावृत्तित्वं न स्यात्। तस्माच्छब्दो नित्य: एवाङ्गीकर्तव्य: स्यात्। तथा च न विविक्षितानित्यत्वसिद्धि:। तदर्थं शब्देतरेति पदं प्रक्षिप्तम्। तथा च सत्येवंविध: साध्यो धर्म: शब्दाकाशान्यतरत्वादि: स च शब्देतरस्मिन् अनित्ये न वर्तते, नित्ये चाकाशे वर्तते। तेन तस्य शब्देतरानित्यनित्ययुलावृत्तित्वं आकाशे वर्तनादाकाशधर्मत्वं च तस्य विद्यते एव। स च धर्म: आकाशान्यनित्यमात्रवृत्तित्वानधिकरणं तदैव, यद्यनित्य: शब्द: स्यात्। शब्दस्य च नित्यत्वेऽङ्गीकियमाणे तस्य धर्मस्य आकाशान्यनित्यमात्रवृत्तित्वाधिकरणत्वमेव स्यात्, न तु तदनधिकरणत्वम्। तस्य धर्मस्य आकाशान्यनित्ये शब्देऽपि वर्तनात्।

तस्मात्पारिशेष्याच्छब्दस्यानित्यत्वं स्वीकर्तव्यम्। अत्र च घटे दृष्टान्तीक्रियमाणे घटशब्दाकाशान्यतरत्वादिधर्मो ज्ञेय:। स च शब्देतरानित्यनित्यवृत्तित्वरहितोऽस्ति, शब्देऽपि वर्तनात्। एतावता शब्देऽनित्ये घटे, नित्ये चाकाशे वर्तते न तु शब्दादितरदेव यदनित्यं नित्यं च तयोर्युगले तथा। स चाकाशान्यनित्यमात्र एव न वर्तते, अनित्ये घटेऽपि वर्तनात्। स चाकाशे वर्तनादाकाशधर्मोऽपि भवति। आकाशे चाकाशत्वादि:, आत्मादौ च घटशब्दाकाशात्मान्यतरत्वादि:। स च शब्देतरानित्यनित्यवृत्तित्वरहितोऽस्ति, शब्देऽपि च वर्तनात्। आकाशान्यनित्यमात्रवृत्तित्वरहितोऽप्यस्ति, घटेऽपि वर्तनात्। इदमत्राकूतम्—स धर्म: आकाशादन्यस्मिन्नित्यमात्र एव न वर्तते, किन्त्वनित्ये घटेऽपि वर्तते एव। आकाशधर्मत्वं च तस्य प्रकटमेष। एवं चान्यस्मिन्नपि दृष्टान्तीक्रियमाणे यथायोगं धर्मयोजना कार्या इति सर्वं सुयौक्तिकम्।

एषा च महाविद्या अनेकदोषदुष्टत्वेन चिन्त्येत्युक्तं महाविद्याबृहद्-वृत्तिकृता। प्रस्तुतलघुवृत्तिकृतानेनापि च साध्यधर्मदृष्टान्तधर्माद्यकथनेन विशेषतो न व्याचक्रे केनापि हेतुना। तथापि वाचयितृविनेयजनमनः-स्थिरीकरणाय अर्थगमनिकामात्रं कृतमस्तीति ज्ञेयम्। इति षोडशोदाहरणव्याख्यानं समाप्तमिति।।

**श्रीदेवसुन्दरगुरुप्रथितप्रतिष्ठ—**
**पट्टोदयाचलसहस्रकरोपमानाः ।**
**श्रीमत्तपागणमहार्णवपूर्णचन्द्राः**
**श्रीसोमसुन्दरगुरुप्रवरा जयन्ति ।।१।।**

**तेषां गुरुत्तमानां शिष्यः श्रीभुवनसुन्दरः सूरिः।**
**तनुतेस्म महाविद्याविवृतेर्जयकारि टिप्पनकम्।।**

**इति श्रीभुवनसुन्दसूरिविरचितं महाविद्याविरणटिप्पनं समाप्तम्।**



# परिशिष्टम्

## I

### महाविद्याविडम्बनग्रन्थोल्लिखितानां ग्रन्थकारप्रभृतीनां नामानि

| नामानि | पृष्ठ |
|---|---|
| वादीन्द्रः (महाविद्याविडम्बनप्रणेता)। | ३ |
| कुलार्कपण्डितः (दशश्लोकीमहाविद्याकारिकाकर्ता) | ३८ |
| उदयनः (प्राचीनन्यायाचार्यः) | १७९ |
| वैशेषिकाः (कणादमुनिप्रणीतवैशेषिकदर्शनानुयायिनः) | २१३ |
| सूत्रकारः (कणादमहर्षिः) | २१३ |
| भाष्यकारः (वैशेषिकसूत्रभाष्यकर्ता प्रशस्तपदाचार्यः) | २१३ |
| टीकाकाराः (कन्दलीकिरणावल्यादिटीकाकाराः) | २१३ |
| शिवादित्यः, शिवादित्यमिश्रः (सप्तपदार्थीप्रभृतिन्यायग्रन्थप्रणेता प्राचीनन्यायाचार्यः) | २१४ |
| श्रीसिंहः (यस्य सभायां वादीन्द्रः धर्माध्यक्षः आसीत् स भूपतिः) | २१५ |
| पूर्वाचार्याः (प्रशस्तपाद-श्रीधर-उदयनादिप्राचीनन्यायाचार्याः) | २३७ |

## II

### भुवनसुन्दरसूरिकृतमहाविद्याविडम्बनवृत्तौ उल्लिखितानां ग्रन्थकर्त्रादीनां नामानि

| नामानि | पृ. | नामानि | पृ. |
|---|---|---|---|
| श्रीगुणरत्नः | २ | शास्त्रकाराः | १९५ |
| सोमसुन्दरः | २ | श्रीपतिः | १९९ |
| भट्टवादीन्द्रः | २ | शिवादित्यादितार्किका | २१५ |
| महाविद्या | २ | श्रीसिंहनरेश्वरः | २१५ |
| कुलार्कपण्डितः | १२ | गुरवः | २९८ |
| विडम्बनकारान्तरम् | १४ | प्राभाकराचार्याः | २९८ |
| वैशेषिकाः | ८५ | हर्षपुरं (पत्तनम्) | ३२७ |
| भाट्टाः | १३५ | रत्नशेखरमुनिः | ३२७ |
| शिवादित्यमिश्राः | १६२ | | |

### महाविद्याविवरणटिप्पणे

| | |
|---|---|
| महाविद्याबृहद्वृत्तिः | ३३६ |
| न्यायसारः (भासर्वज्ञकृतः) | ३४० |

# III

## भुवनसुन्दरसूरिणा महाविद्याविडम्बनवृत्तौ उद्धृतानां लक्षणादीनां संग्रहः

## IV

## महाविद्याविडम्बनग्रन्थगतानां पारिभाषिकशब्दानां सूचीपत्रम्।

# V

## महाविद्याविडम्बनादिग्रन्थचतुष्टयगतश्लोकानां वर्णानुक्रमणिका।

